# सागरिका

## त्रैमासिकी



द्वितीयवर्षे प्रथमाङ्कः
२०२० वि० सं०

प्रकाशिका
संस्कृतपरिषद्, सागरविश्वविद्यालयः
सागरम् ( म० प्र० )

# सूचीपत्रम्


| विषयः | लेखकः | | पृष्ठसंख्या |
|---|---|---|---|
| १—आधुनिकशिक्षानीतिः | —रामजी उपाध्यायः | ... | १ |
| २—राजेन्द्रस्य युद्धोद्योगः | —श्री भोजराजः | ... | ६ |
| ३—संख्यानां साक्षी | —शिवचन्द्रभट्टाचार्यः | ... | ९ |
| ४—गीतम् | —दिनेशः ... | ... | १२ |
| ५—सरस्वती | —कुमारी शशिबाला ... | ... | १३ |
| ६—नवावतारिका | —तेलकपल्ले विश्वनाथ शर्मा | ... | २४ |
| ७—महाभारतीयतीर्थयात्राविश्लेषणम् | —कु० अर्चनावसु | ... | २८ |
| ८—आचार्यः सिद्धसेनो दिवाकरः | —हरीन्द्रभूषणो जैनः | ... | ४० |
| ९—नाटकीयं वृत्तप्रपञ्चनम् | —विश्वनाथभट्टाचार्यः | ... | ५० |
| १०—सद्गुरुस्तवनम् | —डा० वनमाला भवालकर | ... | ६२ |
| ११—संस्कृतपत्रकारिता | —रामगोपालमिश्रः | ... | ६५ |
| १२—सम्पादकीयम् | — ... | ... | ८५ |
| १३—ग्रन्थ समालोचनम् | —विश्वनाथभट्टाचार्यः | ... | ८८ |


----

# आधुनिकशिक्षानीतिः

रामजी उपाध्यायः

भारतदेशोऽधुना स्वतन्त्रो वर्तते किन्तु देशेऽस्मिन् स्वातन्त्र्यं नाममात्रमेव दृश्यते। तथा हि— अधुनाऽपि सर्वासु राष्ट्रीयप्रवृत्तिषु वयं परमुखापेक्षिणः। प्रादेशिकभाषाणां राष्ट्रभाषाया वा अभ्युदयाय वयं न तावन्मात्रं प्रयत्नशीला यावन्मात्रमांगलभाषायाः प्रसाराय उत्थानाय वा वर्तामहे। पारतन्त्र्ययुगेऽपि आंग्लभाषाया अध्ययनं प्राथमिकशालासु अनिवार्यो नाभवत् किन्तु तदेव स्वतन्त्रे भारते सर्वैर्विद्यार्थिभिरनिवार्यरूपेण ग्रहणीयम्। सर्वासु शिक्षणसंस्थासु न केवलमध्ययनविषया अपि तु विद्यार्थिनां शिक्षकाणां च वेश-भूषा प्राक्तन-तोऽप्यधिकतरं योरपीयपद्धतिमनुसरन्ति। पूर्वं तावत् भारते समुद्भवानां महा-पुरुषाणां आदर्शभूतानि नामानि सुचरितानि वचनानि च प्रेरणाप्रदायीनि आसन्। अधुना तानि सर्वाणि विस्मृतानि एव। न दृश्यते कर्हिचित् भारते भारतीयता नाम। तर्हि क्व वर्तते भारते स्वतन्त्रता इति वितर्कः। हा कष्टं खलु, भारतराष्ट्रस्य नीतिविशारदानामौदासीन्यमेषु विषयेषु वर्तते।

कस्यचिद्राष्ट्रस्य निर्माणे शिक्षणसंस्थानां महत्त्वपूर्णं भागदानं वर्तते। दुर्भाग्य-वशादाधुनिकयुगे भारतीयशिक्षणसंस्थानां संचालनं तैरेव महाभागैः प्रायशः क्रियते येषां दृष्टिः आर्षपथाद्विमुखी वर्तते। स्वयमेव ते वैदेशिकशिक्षापरायणाः वैदेशिक-संस्कृतौ सुस्नाताः आत्मीयां नैसर्गिकीमपि भारतीयतां परित्यक्तुकामाः योरपीय-पटवासैः समलङ्कृताः सन्तः भारतभारतीं बोद्धुमपि आत्मानमसमर्थान् प्रदर्शयन्ति।

यत्र कुत्रचित् भारतीयतायाः संरक्षणाय उपायबीजं निर्दिष्टं तदेव विश्व-विद्यालयप्राङ्गणेषु निक्षिप्तमनङ्कुरितमेव विनष्टम्। तथा हि 'युनिवर्सिटी—कमीशन-रिपोर्ट' इति नामके ग्रन्थे विश्वविद्यालयेषु भारतीयतायाः प्रतिष्ठापनाय समुपबृं-हितोऽयं विषय ईदृशो वर्तते —

'यदि विशेषज्ञसमूहानुबन्धिनी समाजस्य विच्छिन्नता अनपेक्षिता तर्हि युवकेषु भारतीयसंस्कृतेः मूलादर्शाः प्रतिष्ठापयितव्याः। वैशिष्ट्यानुबन्धातिशयेन विशकलितप्रायोऽस्माकं समाजः उपर्युक्तविधिना पुनः संश्लिष्टिमर्हति।'...

'शताब्दात् किञ्चिदधिकवर्षं यावत् प्रचलितायाः शिक्षानीतेः महानयं दोषो निगद्यते यत् सम्यगुपेक्षितं वर्ततेऽस्यां पूर्वकालीनभारतम्। अपरञ्च विद्यार्थिनां कृते भारतीयसंस्कृतेः परिचयार्थं किञ्चिदपि निर्धारितं नास्ति। फलतः कतिपयेषु विद्यार्थिषु भावनेयं वर्तते यद्वयं मूलहीनाः स्याम। अपरेषु च हीनतरा मानसी वृत्तिः सञ्जायते यत् स्वकीयमूलादानेन तावद्वयं वर्त्तमानविश्वप्रवृत्तेः किञ्चिद् भिन्नाभिः-वृत्तिभिः विनिबद्धा भवामः।'...

अस्मदधःपाततमोयुगेष्वपि भारतीयसंस्कृतेः प्रकाशः कदापि न व्यलुप्यत। प्रकाशोऽयं क्वचिदस्थिरोऽभवत् किन्तु निर्वाणं न गतः। सस्नेहं परिपालितोऽयं प्रकाशोऽधुनापि द्विगुणितप्रभया समुद्भासते भारते संस्कृतिप्रकर्षानुभाविनी समीहा चेत् तर्हि अस्माभिः अस्य पूर्वकालीनगौरवं समकालीनमूल्यं चावधारणीयम्।[1]

---

1. If society is not to disintegrate into an aggregate of individual specialists, we should endow the youth with a central core of values, transmit to them a cultural heritage. It alone can serve as a cohesive force in a society which is getting splintered by over specialisation.

One of the serious complaints against the system of education which has prevailed in this country for over a century is that it neglected India's past, that it did not provide the Indian students with a knowledge of their own culture. It has produced in some cases the feeling that we are without roots, in others, what is worse, that our roots bind us to a world very different from that which surrounds us.

Even in the darkest days of degradation, the light of India's culture never failed. It may have flickered but it has never extinguished. There were loving hands which cherished and tended it. To day it is burning with renewed glow. If it is to become a cousuming flame, we must become aware of its past greatness and its contemporary value.

University Commission Report pp. 55–56,

न कस्मिंश्चिदपि विश्वविद्यालये उपर्युक्तनिर्देशानुसारं कार्यं सम्पादितम्'। किमिदं न ज्ञातं यत् भारतीयानां चरित्रोत्थानस्य महती आवश्यकता इदानीं वर्तते, तथापि विश्वविद्यालयानामधिष्ठातारः न प्रवर्तयन्ति सच्छिक्षासूत्रम्। अत्र कोऽपराद्ध इति स्पष्टमेव।

गीतादिग्रन्थानामस्माकं पाठ्यक्रमे स्थानं न भवेत् तेषां तथाकथित-हिन्दुत्वपरायणत्वात्। तथापि किं नास्माकं राष्ट्रपितुः महात्मगान्धिनः उपदेशपूराणि पुस्तकानि विद्यार्थिनां कृते बालकालत एव सर्वासु कक्षासु निर्धारयितव्यानि। तेषां पुस्तकानामध्ययनेन विद्यार्थिषु सदाचारः, उत्साहः, देशभक्तिः, सत्यम्, उपकारवृत्तिः, आर्जवम्, सच्चरितं इत्येतेषामात्मगुणानामभिवृद्धिः समुपजायेत। भूयो भूयो भृशं प्रार्थितैरपि एभिः शिक्षाधिकारिभिः विद्यार्थिनां चरित्रविकासाय न समीहितं समारब्धम्। चरित्रे विनष्टे राष्ट्रश्रीरपगता एव भवति इति सर्वेषां विदितम्।

विश्वविद्यालयेषु अध्ययनव्ययाः नित्यमेव संवर्धते। तत्र विद्यार्थिनः उच्चाट्टालिकामयेषु छात्रावासेषु कतिपयवर्षं वसन्ति, भोजन-परिधानमनोरञ्जनादिषु शतप्रायाणि रूपकाणि व्यययन्ति। स्पष्टमेव विद्यार्थिनां जीवनस्तरः पर्याप्तं उच्चैर्गच्छति। उपाधिं गृहीत्वा गृहस्थो भूत्वा च न ते तावन्मात्रं धनमर्जयन्ति येन पूर्ववत् तेषां उच्चजीवनस्तरः प्रचरेत्। तस्यां स्थितौ विवशाः परवशा इव ते अधिकधनेच्छव उत्कोचादिभ्रष्टाचारेणात्मानं पातयन्ति। तेषां कामः 'हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते'।

न केवलं विद्यार्थिनां उपर्युक्तविधिना चरित्रभ्रंशो जायते अपितु तेषामभिभावका अपि स्वपुत्रादिभ्य उच्चशिक्षां प्रदातुकामाः तेषामर्थे क्वचित् भ्रष्टाचारविधिना धनमर्जन्ति। इयं कथा विलासपूर्णायाः विश्वविद्यालयीनसरस्वत्याः सम्पादनस्य। सर्वमत्र चाकचक्यं चारित्र्यविलोपि जातम्।

वृत्तिरत्र शिक्षणसंस्थासु न पूर्णतो महनीया वर्तते। शिक्षकाः अन्ये वा

कर्मचारिणस्तत्र मलिनोपायैः स्वकीयामुन्नतिं पारयन्तीति धारणा बहूनां मनसि वर्तते। अधिकारिणोऽपि चाटुवाक्यैः उपहारादिभिर्वा तावन्मात्रं सुप्रसन्ना भवन्ति यावन्न भवन्ति कर्मनिष्ठया। तेषां विचारधारणा न प्रायशो निराधारे-त्यपि दृश्यते। तर्हि नास्त्यवसरः सदाशयतायाः अस्मिन्युगे इति विचारयन्तः अध्यापकाः कथं कथंचित् वेतनोपायं कुर्वन्त एव जिजीविषन्ति न हि ते शिक्षण-प्रणालीं सद्ज्ञानजीवननिर्भरां विधातुमुत्कायन्ते।

कतिपयशिक्षणसंस्थासु निर्वाचनविधिना पदाधिकारिणः सदस्याश्च निर्भ्रियन्ते। निर्वाचनविधौ असत्कल्पानां साहाय्यं नाविदितं क्वचित्। प्रायशः निर्वाचन-पद्धतिमनुगन्तुकामाः शिक्षका अपि अनर्हकौटिल्यपथमनुसरन्ति। तर्हि का चरितगाथा तेषां विद्यार्थिनां भविष्यतीत्यस्मिन्विषये मौनावलम्बनमेवोचितम्। याः काश्चित् शिक्षणसंस्थाः बहुजनहिताय वा दरिद्राणामपि कृते वा उन्मुक्तद्वाराः सन्ति तासां सौभाग्यविपर्यासो परिलक्ष्यते सर्वत्र। तासामुपाधीनां मान्यता न स्वीकृता शासनाधिकारिभिः। परिणामतः विद्वांसोऽपि तत्रोपाधिधारिणः विशकलितमनोरथा एव परिभ्रमन्ति ऐश्वर्यविहीना। हा हन्त स्वातन्त्र्यो-पलब्धिरपि भारतीयविद्यानां संस्कृतपाठशालादीनां च पुनरुत्थानं विना असिद्धा। परतन्त्रेऽपि भारते देशिराज्येषु क्वचित् संस्कृतविद्यायाः अभ्युत्थानं महाविद्यालयादिषु बभूव किन्तु तेषु राज्येषु विलयं गतेषु तत्रत्याः संस्था विनशनं प्राप्ता इत्यस्माकं पुरतः एव प्राचीनपाठशालानां हृदयविदारिपरलोकगमनदृश्यं कस्य सहृदयस्य हृदयं न दुनोति।

सार्वत्रिकसहानुभूतेः समुत्पादनं यदि शिक्षायाः परमोद्देश्यं वर्तते तर्हि आधुनिकशिक्षानीतिः सर्वथा विफला वर्तते। विज्ञानायातिशयमाहात्म्यप्रदानेन कलादीनां संक्षयः विपरिणमितः। विश्वविद्यालयेषु केवलं विज्ञानाध्ययनेनोच्च-विद्यार्थिनां सौरस्यं हृदयस्य न विलसति। किमियं न महती हानिर्यद् यन्त्रीकरणं नाम मानवव्यक्तित्वस्य। तद्यथा कथमपि विज्ञानाध्ययनस्य कलाविहीनत्वं परि-हरणीयमित्यलं बहुविवेचनेन।

भारतदेशे भारतीयतायाः संरक्षणाय शिक्षानीतिः निर्धारयितव्येति विचार्य वर्त्तमानशिक्षाप्रणाल्याः कतिपयदोषाः निर्दशिताः। विपुलोऽयमस्माकं देशः। विविधशिक्षाक्रमादीनां विलसनमेवास्य देशस्य शोभाधानम्। न सर्वं प्राचीनं विवर्जनीयमेव। देशस्य सर्वाङ्गीणविकासायाचिरमेव प्राचीनशिक्षणनिधेरपि समुज्ज्वलानि रत्नानि ग्रहणीयानि। अन्यथा विस्मृतेषु तेषु पुनरन्वेषणं व्यर्थः श्रमो भविता।

——

# राजेन्द्रस्य युद्धोद्योगः

श्री भोजराजः

विश्ववन्द्यभारतदेशः ।
हिंसां प्रति निष्कामः ।
न भवेत् सेना ।
आदर्शः संस्थाप्यः ।
मैत्र्यं साहाय्यं सर्वेषाम् ।
सदा करिष्यति भारतदेशः ।
व्रतमिदं पुरातनसारम् ।
पुनः पुनः स्मरणीयम् ।

चीनाः सन्तु सदा मित्राणि ।
भव्यभारतीधारा ।
पञ्चशीलरक्षासूत्रेण ।
बान्धवपदे नियुक्ताः ।

विश्वासपरा भारताः ।
सुप्ताः सुखनिद्रया ।
नास्ति भयं कुतोऽपि ।
हिमवानेव रक्षकः ।

स एवाद्य क्रान्तश्चीनपापैः ।
न विश्वसिति मे मनः !
किं सत्यमिदम् ।
सत्यमिदम् ।

धरणीयं युद्धव्रतम् ।
देयं सर्वस्वम् ।
अद्य भारतं रक्षणीयम् ।
भवतु प्राणार्पणम् ।

राजेन्द्रेण

दत्तमाभरणं प्रियायाः ।
राष्ट्ररक्षाकोश एषः ।
वर्धतामिति वर्धताम् ।
पुनः स्वीयमङ्गुलीयम् ।
अपि विसृष्टुमुन्मनाः ।
स कथंञ्चित् ।
साधुभृत्यैः रोधितः ।

दाता

आगतोऽहम् ।
स्वर्णदानमहं करिष्ये ।

राजेन्द्रः

किं नाम को ग्रामः ।
लिख लिख देशबन्धो ।
काकिणी हि दत्ता ।
राष्ट्रपतिना सुमनेति स्वीकृता ।
आभरणानि तोलितानि ।
मूल्यानि टङ्कितानि ।
प्राप्तिसूचकपत्राणि ।
क्षिप्रमेव दत्तानि ।

शयनं विहाय।
दातॄणां सान्निध्यमागतः।

न पुनः तुष्टः।
स तु स्वर्गे गतः।
देवानामाह्वानाय।
भारतभूमिरक्षणाय॥

—— ——

# सांख्यानां साक्षी

शिवचन्द्र भट्टाचार्यः

"तस्माच्च विपर्यासात् साक्षित्वमस्य पुरुषस्ये"ति सांख्यकारिकायामीश्वरकृष्णेन पुरुषस्य साक्षित्वमुक्तं, तद्धि साक्षित्वं कीदृशम्? कस्य विषयस्य च साक्षी पुरुषः? साक्षात्कारिज्ञानमन्तरेण पुरुषस्य साक्षित्वमुपपद्यते न वा? लोके हि यः साक्षाच्चक्षुषा पश्यति अथवा इंद्रियेण जानाति स एव साक्षी कथ्यते, तद्वत् किं सांख्यैः पुरुषस्यैन्द्रियकं ज्ञानं स्वीकृत्य पुरुषस्य साक्षित्वमुक्तमुताहो यथा वेदान्तिभिरान्तरज्ञानादिरूपाणां विषयाणामनैन्द्रियकप्रत्यक्षेणात्मनः साक्षित्वं स्वीकृतं तद्वत् सांख्यैरपि स्वीकृतं इत्येते प्रश्ना जायन्ते। तत् समाधानं अस्माभिः वाचस्पतिकृततत्त्वकौमुदीटीकानुसारेण क्रियते। पूर्वोक्तकारिकाव्याख्याने वाचस्पतिनैवमभिहितम्—"साक्षी च दर्शितविषयो भवति, यस्मै प्रदर्श्यते विषयः स साक्षी, यथाहि लोकेऽर्थिप्रत्यर्थिनौ विवादविषयं साक्षिणे दर्शयतः। एवं प्रकृतिरपि स्वचरितं विषयं पुरुषाय दर्शयतीति पुरुषः साक्षीति"। अयम्भावः, यथा उत्तमर्णाधमर्णौ विवादसम्भावनाऽपाकरणार्थं कस्मैचिदुदासीनाय पुरुषाय ऋणदानग्रहणादिकं सर्वं स्वस्वचरितं दर्शयतः, येनोत्तरकाले विवादे सति स्वानिष्टं न स्यादिति। एवं प्रकृतिरपि महदादिपरिणामेन कृतं कार्यजातं निर्लेपाय उदासीनाय पुरुषाय दर्शयति, तेन हि प्रकृतिप्रसूतानां महदादीनां मध्ये केन कियत् कार्यजातं कृतमिति प्रकाशमानं सद् विवादसम्भावना लुप्यते एवं च प्रकृतिचरितप्रदर्शनोद्देश्यभूतत्वं पुरुषस्य साक्षित्वमिति साक्षित्वनिर्वचनं वाचस्पतिवचनादवगम्यते।

कस्य साक्षीत्ययमपि प्रश्न इदानीं समाहितो भवति, यतो वाचस्पतिवचनानुसारेण "प्रकृतिचरितविषयाणां साक्षी पुरुषः" इत्युत्तरं सुलभम्। इदानीं विचार्यते तस्य पुरुषस्य साक्षात्कारिज्ञानमन्तरेण ऐन्द्रियकज्ञानमन्तरेण वा साक्षित्वमुपपन्नं न वेति? प्रथमं तावत् इदमेव विचार्यं, यत् साक्षात्कारिज्ञानं प्रत्यक्षापरपर्यायं

  

ऐन्द्रियकं ज्ञानं च समानार्थकम्, अर्थतो विलक्षणं वेति। न्यायमते लौकिक-प्रत्यक्षं ऐन्द्रियकं ज्ञानं च समानार्थकं न वैतयोरर्थलक्षण्यमस्ति, तन्मते प्रत्यक्षशब्द-स्यार्थः ऐन्द्रियकं ज्ञानं, अलौकिकमनैन्द्रियकं प्रत्यक्षमपीति।

वेदान्तिमते ऐन्द्रियकं ज्ञानं, अनैन्द्रियकं साक्षिप्रत्यक्षं चेति द्वयं प्रत्यक्ष-शब्दार्थः। सांख्यमते पुनः ऐन्द्रियकं ज्ञानं योगिप्रत्यक्षं चेति द्वयं प्रत्यक्षमित्यु-च्यमाने बुध्यते न तु वेदान्तिसम्मतसाक्षिप्रत्यक्षं तैः स्वीक्रियते। तन्मते हि प्रत्यक्षलक्षणं "प्रतिविषयाध्यवसायो दृष्टमित्यादिकारिकोक्तं, तच्च प्रत्यक्षप्रमाण-स्यैव लक्षणं, न तु प्रत्यक्षात्मिका प्रमा सांख्यमते स्वीकृताऽस्ति। सांख्यमते सर्व-मेव प्रत्यक्षं प्रमाणात्मकं, न्यायवेदान्तिमते प्रमाणातिरिक्तं प्रमाणफलभूतमपि प्रत्यक्षमस्ति यत् खलु "प्रत्यक्षप्रमे" त्युच्यते। सांख्यमते प्रमाणफलभूता प्रमाऽ-स्ति, परं सा न प्रत्यक्षात्मिका, नापि अनुमित्याद्यात्मिका, किन्तु बुद्धेस्तृतीयप्रकार-परिणतिविशेषरूपा, तत्र प्रत्यक्षशब्दवाच्यतैव नास्ति। प्रमाणफलभूतायां प्रमायां सांख्यैः "उपलब्धिः" इति "पौरुषेयबोध" इति च शब्दद्वयं व्यवह्रियते। "प्रति-विषयाध्यवसायोदृष्ट"मित्यनेन हि योगिप्रत्यक्षं विहाय केवलं लौकिकप्रत्यक्षस्यैव लक्षणं प्रदर्शितमस्ति। तदर्थश्च अर्थसन्निकृष्टेन्द्रियाश्रितं ज्ञानं प्रत्यक्षं प्रमाण-मिति। न्यायमते इन्द्रियमेव यदा प्रत्यक्षप्रमायाः करणं भवति तदा "प्रत्यक्ष प्रमाण" मित्युच्यते, यदा च भ्रमकरणं तदा अप्रमाणमपि कथ्यते। सांख्यैः पुनरेकस्यैव वस्तुनः प्रामाण्याऽप्रामाण्ये नेष्येते, अतस्तन्मते यज्ज्ञानं अर्थसन्नि-कृष्टेन्द्रियाश्रितं भवति, तत् सर्वदैव प्रत्यक्षप्रमाणात्मकं, कदापि तन्न "अप्रमाण"-मिति व्यवहारो न भवति। न्यायमते प्रत्यक्षप्रमायाः करणं, प्रत्यक्षप्रमाणमित्य-स्यार्थः। सांख्यमते प्रमायाः करणं यदा प्रत्यक्षात्मकं = अर्थसन्निकृष्टेन्द्रियाश्रित-मित्यर्थः भवति, तदैव प्रत्यक्षप्रमाणमित्याख्यायते। तच्च प्रत्यक्षं सर्वदा वहिर्विष-यकमेव, न कदाचिन्न्यायवेदान्तिभिर्यथाऽन्तरप्रत्यक्षमिति व्यवह्रियते, तथा सांख्यै-र्व्यवह्रियते, यतस्तन्मते आन्तरविषयको बोधः उपलब्धिः सा च प्रत्यक्षात्मिकैव नेति प्रागुक्तम्।

एवं "प्रतिविषयाध्यवसायोदृष्ट" मितिसांख्यकारिकोक्तलक्षणलक्षितं प्रत्यक्षं

तावत् प्रमाणात्मकं ऐन्द्रियकज्ञानमेवेति सर्वटीकाकृत्प्रसिद्धम् । तादृशं च प्रत्यक्षं ज्ञानं साक्षिणः पुरुषस्य सांख्यमते नास्त्येव । उक्तं हि प्राक् साक्षिणः पुरुषस्य बोधः सांख्यमते प्रमेति पौरुषेयबोध इति उपलब्धिरिति च कथ्यते । तत्र सांख्यानां प्रत्यक्षमिति व्यवहारो नास्त्येव । प्रकृतिश्च साक्षिणे पुरुषाय स्वचरितप्रदर्शनार्थं तादृशबोधानुकूलव्यापारमेव करोतीति स्थितौ पुनरयं प्रश्नस्तदवस्थो यत् प्रत्यक्षज्ञानमन्तरेण कथं पुरुषस्य सांख्योक्तं साक्षित्वं निर्वहेदिति । अत्रोत्तरं प्रत्यक्षप्रमाणद्वारा लब्धबोधः पुरुषो लोके साक्षीति कथ्यते । एवं सांख्यमतेऽपि पुरुषः अपि प्रत्यक्षप्रमाणद्वारा घटमहं जानामीति पौरुषेयं बोधं प्रकृतिचरितविषयस्य लभते, अतस्तस्य प्रत्यक्षज्ञानवत्त्वाभावेऽपि प्रत्यक्षप्रमाणजन्यबोधवत्तया साक्षित्वमुपपद्यते । एतदेव "घटमहं जानामीति" बोधः, वेदान्तिमते "साक्षिप्रत्यक्षम्" । तच्च न ऐन्द्रियकं नैयायिकमते स बोधः मनोरूपेन्द्रियजन्यः मानसप्रत्यक्षात्मकः, अनुव्यवसायश्च कथ्यते । स बोध. केवलं "उपलब्धिः" पौरुषेयबोधः प्रमेति च कथ्यते, न स बोधः प्रत्यक्षात्मकः, इन्द्रियाश्रितत्वाभावात्, नापि तज्ज्ञानमिति सांख्यैर्व्यवह्रियते । ज्ञानं हि तन्मते विषयाकारो बुद्धेः परिणामः । तादृशपरिणामेन सह चेतनसम्बन्धावगाहिबुद्धिपरिणामविशेषः पौरुषेयबोध उच्यते । स हि न्यायवेदान्ताभिमताद् यथाक्रममनुव्यवसायस्वरूपात् साक्षिप्रत्यक्षस्वरूपाच्च विलक्षणस्वरूप एवेति । यद्यपि तेन बोधेन सह पुरुषस्य न कश्चित् परमार्थतः सम्बन्धः तथापि चेतनसम्बन्धावगाहितया पुरुषमधिकृत्य प्रवृत्तो बोधः पौरुषेय उच्यते इति शम् ।

— —

# गीतम्

दिनेशः

आमंत्रयते त्वां हे ! हिमालयो वीरप्रवर !
स्वीकुरु कुङ्कुमतिलकं क्षिप्रं शत्रून्नाशय ।।
प्रज्वलितो हिमशिखरः
पद्दलितं मानसरः
शरसन्धानं रणाय कुरु कुरु, शत्रून् प्रहर ।।
धरणी पुण्याक्रान्ता
ह्रियमाणा स्वतन्त्रता
खण्डशो विदीर्य चीनदानवान् त्वं संहर ।।
रणढौला दुन्दुभयः
सैन्यविलासे बलयः
डमरुनादताण्डवं च कुरु कुरु हे प्रलयंकर !!

——

# सरस्वती

कुमारी शशिबाला

वैदिका ऋषयः निसर्गस्य सुरम्यासु उपयोगिनीषु च विभूतिषु देवत्वं प्रास्थापयन्। मानवजीवनाय नदीनामुपयोगिता प्रत्यक्षमेव। तासां तटप्रदेशान् समाश्रित्य मुनीनां नागरिकाणां च वसतयः संवर्धिताः। नदीनां जलं स्नानाय, पानाय, जलविहारादिमनोरञ्जनाय चाभवत्। नदीनां व्यापारिकमहत्त्वमपि विशिष्टमासीत्। अतः तासामिमान् गुणान् पर्यालोच्य वैदिकयुगे नदीनां महत्त्वमासीत्। आसु नदीषु सरस्वत्याः सर्वोत्कृष्टं स्थानं मतम्। प्राचीनकालादेव सरस्वत्याः द्विविधं स्वरूपं कल्पितम्—व्यावहारिकमाध्यात्मिकं च। नदीरूपेण सरस्वत्याः व्यावहारिकत्वं स्पष्टमेव। तस्मिन् युगे सर्वे जना प्रत्यक्षरूपेण अस्या नद्याः भौतिकस्वरूपमपश्यन्, तया च लाभान्विताः अभवन्। फलतः सरस्वतीनदी वैदिकयुगे मानवीकरणद्वारेण देवीनां श्रेण्यां प्रतिष्ठापिता। अस्या आध्यात्मिकस्वरूपमपि ऋषिभिः कल्पितम्। तदनुसारं सा वाचः अधिष्ठात्री देवी मानवानां बुद्धिमुद्बोधयति, तेभ्यश्च ज्ञानप्रकाशं प्रयच्छति। शनैः शनैः ज्ञानप्राप्त्यर्थं प्रार्थिता पूजिता च सा देवी व्यञ्जनया विद्यायाः देव्याः पदे अधिष्ठिता दृश्यते। परवर्तियुगे सरस्वत्याः देवीरूपमुपास्यमभवत्।

ऋग्वेदे नदीरूपेण सरस्वत्याः प्रतिष्ठा प्रायः दृश्यते। सा वैदिकऋषिभिः अनेकेषु सूक्तेषु समादृता स्तुता च। अस्याः निसर्गवैभवमधिकृत्य कथितम्—

—'इयं शुष्मेभिर्बिसखा इवारुजत्सानु गिरीणां तविषेभिरूर्मिभिः।'

**अपरं च—**

—'यस्या अनन्तो अह्रुतस्त्वेषश्चरिष्णुरर्णवः अमश्चरति रोरुवत्।

ऋग्वेदे ६. ६१. २, ८

अन्यत्र सा 'अम्बितमे नदीतमे देवितमे' इत्यादि विशेषणैः सम्बोधिता। इयं वैदिकयुगस्य महती देवी वर्तते।

विविधप्रकारेण गरिमास्याः कविभिः उद्गीतः—

—'प्र या महिम्ना महिनासु चेकिते
द्युम्नेभिरन्या अपसामपस्तमा।
रथ इव बृहती विभ्वने कृतोपस्तुत्या
चिकितुषा सरस्वती॥

ऋग्वेदे ६. ६१. १३

कामनापूर्त्यर्थं सरस्वती प्रार्थिता भक्तगणैः। यज्ञसाफल्याय देवीं प्रति कविर्निवेदयति—

—'पावका नः सरस्वती वाजेभिर्वाजिनीवती
यज्ञं वष्टु धियावसुः।

ऋग्वेदे १. ३. १०

क्वचित्सरस्वती ज्ञानस्य प्रकाशिका इति स्तुता।

**तद्यथा**—

महो अर्णः सरस्वती प्रचेतयति केतुना।
धियो विश्वा विराजति।

**अथवा—**

—'चोदयित्री सूनृतानां चेतन्ती सुमतीनाम्।
यज्ञं दधे सरस्वती।

ऋग्वेदे १. ३. ११, १२

यद्यपि सरस्वती अत्र 'सुमतीनां चेतन्ती' इति कथिता, तथापि स्पष्टमिदम् यत् तस्मिन् काले तस्याः ज्ञानेन वाचा वा सह न कोऽपि विशिष्टः अभिप्रायः आसीत्। वस्तुतः अथर्ववेदे ब्राह्मणग्रन्थेषु च प्रथमं स्पष्टरूपेण वाचा सह तस्या योगः वर्णितः। तत्र सरस्वती अनेकशः वाचा सह उल्लिखिता। तद्यथा शतपथब्राह्मणे—

—'अथ सारस्वतम्। वाग्वै सरस्वती वाचैव तत्प्रजापतिः पुनरात्मानमाप्यायत वागेनुपसमावर्तत...।

३. ६, १, ७

अथर्ववेदानुसारम्—

—'सूर्याच्चक्षुरन्तरिक्षाच्छ्रोत्रं पृथिव्याः शरीरम्।
सरस्वत्या वाचमुपह्वयामहे मनोयुजा।

५. १०. ८

एतेभ्यः प्रसंगेभ्योऽतिरिक्तं 'वागेव सरस्वती' इति कथनं ब्राह्मणग्रन्थेषु अनेकशः वर्तते। कीथमहोदयानुसारं सरस्वत्याः वाचा सह सम्बन्धस्य कारणमीदृशं स्थापितम् -

—"वैदिककालस्य प्रारम्भिकयुगे सरस्वतीतटप्रदेशे स्थितेषु नगरेषु, पवित्रस्थलेषु, आरण्यकेषु च आर्याणां संस्कृतिः काव्यसाहित्यं च विशेषतया समृद्धं समुन्नतं चाभवत्। अतएवार्याणां कृते तस्याः विशेषमहत्त्वं वर्तते स्म। सम्भवतः अनेनैव कारणेन परवर्त्तियुगे सा शनैः शनैः वाचा, सुवक्तृतया, ब्रह्मणा च सार्धं सम्बद्धा दृश्यते।"

कालान्तरे सरस्वत्या वाग्देवीस्वरूपं महत्त्वपूर्णं प्रतिष्ठापितम्। यद्यपि अस्या नदीरूपं न कदापि विस्मृतम्, तथापि शनैः शनैः इयं मान्यता प्राचीनपरम्परायाः अवशेषमात्रमभवत्। नदीरूपे अस्याः कल्पनायाः आधारः स्थूलः आसीत्, यतः जना नदीं प्रत्यक्षरूपेण द्रष्टुं शक्नुवन्ति। कालान्तरे सरस्वत्याः एतद् भौतिकं प्रत्यक्षं च रूपं न दृश्यते। मरुस्थले अस्याः लोपः प्राचीनग्रन्थेषु बहुशः उल्लिखितः। अतः प्रत्यक्षाधाराभावे तद्रूपमपि विस्मृतमभवत्। ज्ञानस्य देवीरूपे

---

—'But in the Brahmaṇas she is connected with speech, perhaps because Vedic culture and poetry flourished specially there and in the Post Vedic literature she is the goddess of eloquence and the wife of Brahman.'

'Religion and Philosophy of the Veda'—P. 173.

इयं मनुष्याणां मनसा वाचा वा सम्बद्धा, न तथा केनापि स्थूलपदार्थेण सह। मनसः वाचः वास्तित्वं शाश्वतमेव। अतएव स्वरूपमिदमस्याः सनातनमभवत्।

महाभारते सरस्वत्याः द्विविधं रूपं निहितम्, स्पष्टतः वर्णितं च। इन्द्रियाणां वर्णनप्रसंगे वाक् वैश्वदेवी कथ्यते। अत्र सरस्वती वाग्रूपा वाचः वाधिष्ठात्री देवी अस्ति। सा वेदमाता, ब्रह्मपुत्री, सत्यस्वरूपा, परमपुरुषकृष्णस्य च वाणी कथिता। लोकानामीश्वरः हरिः स्वमनसा इमां रचयामास। तार्क्ष्यमुनेः सरस्वत्याः च संवादप्रसंगे सरस्वत्याः स्वरूपं गुणाश्च निर्दिशिताः। मुनिः तस्याः परिचयं पृच्छति—

क्षेत्रज्ञभूतां परलोकभावे कर्मोदये बुद्धिमतिप्रविष्टाम्।
प्रज्ञां च देवीं सुभगे विमृश्य पृच्छामि त्वां का ह्यसि चारुरूपे॥

आरण्यकपर्व १८४. १६

मुनेः संशयसमाधानार्थं विप्राणामग्निहोत्रादागता सा प्रश्नानुसारं स्वरूपं प्रस्तुतवती –

—'श्रेष्ठानि यानि द्विपदां वरिष्ठ यज्ञेषु विद्वन्नुपपादयन्ति।
तैरेवाहं संप्रवृद्धा भवामि अप्यायिता रूपवती च विप्र।

आर० १८४. १६

एवंविधिनात्र सा यज्ञेनापि सम्बद्धा दृश्यते। तार्क्ष्यमुनेः अनुसारं साऽद्वितीया, तया सदृशी न काचिदस्ति। सा श्रीमती अतिमात्रं विभ्राजते। रूपं च तस्याः दिव्यमनन्तकान्तियुक्तं च वर्तते। सा दिव्यां प्रज्ञां धारयति।

सरस्वती भक्तवत्सला वर्णिता। मन्त्रवित् श्वेतकेतुः साक्षात् मानुषदेहरूपां सरस्वतीं दृष्टवान्। ज्ञानस्य देवीभूतत्वात् सरस्वती अनेकशः शास्त्रकाराणां प्रेरणा इव प्रतिभाति। ज्ञानप्रदानमत्रास्याः प्रधानं कर्म। यदा सूर्येण निर्दिष्टो याज्ञवल्क्यः वाङ्मयीं सरस्वतीमचिन्तयत्, तदा स्वरव्यञ्जनभूषिता मंगलमयी देवी सा सरस्वती ओंकारमादितः कृत्वा तस्य सम्मुखे प्रकटीभूता। तस्याः आराधनेनाशीर्वादेनैव च याज्ञवल्क्यः कृत्स्नस्य शतपथस्य संकलने समर्थो बभूव। याज्ञवल्क्यस्य विवृते मुखे सरस्वत्याः प्रवेशानन्तरमेव सूर्येण कथितम्—

प्रतिष्ठास्यति ते वेदः सखिलः सोत्तरा द्विज ।
कृत्स्नं शतपथं चैव प्रणेष्यसि द्विजर्षभ ।

शान्तिपर्व ३०६. १०-११

अत्र सरस्वती वेदज्ञानस्य साकारप्रतिमा इव दृश्यते । अन्यत्रापि याज्ञवल्क्येन गन्धर्वराजविश्वावसोः प्रश्नानामुत्तराणि सरस्वत्याः चिन्तनं कृत्वैव उपलब्धानि । चित्रशिखण्डिनामकाः सप्तर्षयः अनया देव्या ज्ञानं लब्धवन्तः । मानवानां शरीरेषु इन्द्रस्य विष्णोः चातिरिक्तं सरस्वत्याः निवासः कल्पितः ।

महाभारतस्य विश्वामित्रवसिष्ठप्रसंगे सरस्वती नदीरूपेणास्माकं समक्षं प्रस्तुता । अत्र सा मानवरूपधारिण्याः सजीवदेव्याः सदृशं सुखदुःखभयात्मिका दृश्यते । वसिष्ठेन सा स्तुतात्र एवं विधिना—

पितामहस्य सरसः प्रवृत्तासि सरस्वति ।
व्याप्तं चेदं जगत्सर्वं तवैवाम्भभिरुत्तमैः ॥
त्वमेवाकाशगा देवि मेघेषूत्सृजसे पयः ।
पुष्टिर्द्युतिस्तथा कीर्तिः सिद्धिर्वृद्धिरुमा तथा ॥
त्वमेव वाणी स्वाहा त्वं त्वय्यात्तमिदं जगत् ।
त्वमेव सर्वभूतेषु वससीह चतुर्विधा ॥

शल्यपर्व ४१. २६, ३१

अत्र सरस्वत्याः द्विविधानि रूपाणि समन्वितानि दृश्येते । अयं समन्वयः एवं तस्याः वाणीरूपस्य नदीरूपस्य चाभिन्नतां द्योतयति ।

तीर्थप्रसंगेषु सरस्वत्याः सरितः महिमा शाश्वतः वर्तते । दधीचमुनेः वरदानानुसारं— सरस्वत्याः जलेन तर्प्यमाणाः सपितरः विश्वेदेवाः गन्धर्वाप्सरसां गणाः च तृप्तिं प्राप्नुवन्ति । तत्प्रसादादेव हि सा पुण्यासु नदीषु सदा पुण्यतमा वर्तते । सरस्वत्याः उद्गमस्थाने प्लक्षप्रस्रवणं तीर्थप्रवरं कल्पितम् । सारस्वत-तीर्थानां यात्रया उत्फुल्लमनाः बलरामः विप्राणां सन्निधौ तीर्थफलं श्रुत्वा श्लोकमगायत्—

सरस्वतीवाससमा कुतो रतिः
सरस्वतीवाससमाः कुतो गुणाः ।
सरस्वती सर्वनदीषु पुण्या
सरस्वती लोकसुखावहा सदा ।
सरस्वतीं प्राप्य जनाः सुदुष्कृताः
सदा न शोचन्ति परत्र चेह च ।

शल्यपर्व ५३. ३४-३५

अनेन प्रकारेण महाभारते सरस्वत्याः स्वरूपं निर्धारितम् । यद्यपि पौराणिक-युगे सरस्वत्याः अस्मिन् स्वरूपे न किमपि विशिष्टपरिवर्त्तनं परिलक्ष्यते तथापि सा तत्र विविधब्राह्मोपकरणैः अलंकृता दृश्यते । तस्याः विशिष्टा वेशभूषा निर्धारिता तस्मिन्युगे । सा हंसवाहिनी, ब्रह्मपुत्री, ब्रह्मपत्नी, वीणावादिनी, श्वेताम्बरी च कथिता । सेयं सरस्वती नदी पुरा हंसै मण्डितेति हंसवाहिनीरूपेण सरस्वती देवी कल्प्यते । अपरं चोपाध्यायानां मतेन सरस्वत्याः ब्रह्मणः कन्यात्वं पत्नीत्वं च व्याख्यातम् । तद्यथा वाक् पत्नीरूपेण स्वान्तःसुखाय रमणीया स्यात् कन्या-रूपेण च योग्येभ्यो वरेभ्यो वा शिष्येभ्यो दातव्येति सरस्वत्याः पौराणिकी रहस्य-मयी गाथा विश्लेषणीया ।

सरस्वत्याः अप्रतिमलावण्यस्यालौकिकत्वं पुराणेषु प्रायशः निर्दर्शितम् । स्वकीयपुत्र्याः सरस्वत्याः सौन्दर्येण ब्रह्मापि मोहितः इति इयं कथानेकेषु पुराणेषु उपलब्धा भवति । तद्यथा भागवतानुसारम्—

वाचं दुहितरं तन्वीं स्वयम्भूर्हरतीं मनः ।
अकामां चकमे क्षत्तः सकाम इति नः श्रुतम् ॥
नैतत्पूर्वैः कृतं त्वद्ये न करिष्यन्ति चापरे ।
यत्त्वं दुहितरं गच्छेरनिगृह्याङ्गजं प्रभुः ॥
स इत्थं गृणतः पुत्रान्पुरो दृष्ट्वा प्रजापतिम् ।
प्रजापतिपतिस्तन्वं तत्याज व्रीडितस्तदा ॥

भागवत ३. १२, २८, ३३

तद्रूपेण मत्स्यपुराणेऽपि वर्णितोऽयं प्रसंगः। तदनुसारं प्रदक्षिणां कुर्वन्तीं सरस्वतीमेव द्रष्टुं ब्रह्मा चतुर्मुखः अभवत्।

मत्स्यपुराण ३. ३२-४०

कविनास्याः सुपरिचितं स्वरूपं प्रतिष्ठापितम्—

या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रावृता
या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना।
या ब्रह्माच्युतशङ्करप्रभृतिभिर्देवैः सदा वन्दिता
सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा॥

बाणभट्टेन स्ववंशस्य परम्पराप्राप्तामुत्कृष्टां विद्वत्तां प्रकाशयितुकामेन सरस्वतीविषये पौराणिकी कथोल्लिखिता। तदनुसारम्—

पुरा कदाचित् परमेष्ठी ब्रह्मा स्वसभायां इन्द्रप्रमुखैः देवैः, मनुदक्षचाक्षुषप्रभृतिभिः प्रजापतिभिः, सप्तर्ष्यादिभिः ऋषिगणैः परिवृतः सेवमानः च पद्मासने समुपविष्टः आसीत्। केचित् मुनिजनाः ऋचः यजूंषि सामानि च समुदचारयन्। अपरे धार्मिकविषयानधिकृत्य विवादमकुर्वन्। तत्राभूत् एमनभीष्टं वृत्तम्, तद्यथा बाणेन हर्षचरिते वर्णितम्—

विद्याविसंवादकृताश्च तत्र तेषामन्योन्यस्य विवादाः प्रादुरभवन्। अथातिरोषणः प्रकृत्या महातपा मुनिरत्रेस्तनयस्तारापतेर्भ्राता नाम्ना दुर्वासा द्वितीयेनोपमन्युना मुनिना सह कलहायमानः साम गायन्क्रोधान्धो विस्वरमकरोत्। सर्वेषु च तेषु शापभयप्रतिपन्नमौनेषु मुनिष्वन्यालापलीलया चावधीरति कमलसंभवे भगवती कुमारी......देवी सरस्वती श्रुत्वा जहास। दृष्ट्वा च तां तथा हसन्तीं......( सभायामुपस्थितैः देवैः मुनिगणैः ब्रह्मणा च निवार्यमाणोऽपि ) रोषावेशविवशो दुर्वासा—'दुर्विनीते, व्यपनयामि ते विद्याजनितामुन्नतिमिमाम्, अधस्ताद्गच्छ मर्त्यलोकम्' इत्युक्त्वा तच्छापोदकं विससर्ज। अथ तां तथा शप्तां सरस्वतीं दृष्ट्वा पितामहः ( दुर्वाससं निन्दन् ) आहः—'वत्से सरस्वति, विषादं मा गाः। एषा त्वामनुयास्यति सावित्री।......आत्मजमुखकमलावलोकनावधिश्च ते शापोऽयं भविष्यति' इति......। अन्येद्युरुदिते भगवति त्रिभुवनशेखरे.....

सरस्वती......परित्यज्य वियोगविक्लवं स्वपरिजनं......त्रिः प्रदक्षिणीकृत्य चतुर्मुखं......ब्रह्मलोकतः सावित्रीद्वितीया निर्जगाम। ततः क्रमेण ......सप्तसागर-राजमहिषीं मन्दाकिनीमनुसरन्ती मर्त्यलोकमवततार। अपश्यच्चाम्बरतलस्थितैव पितामहस्यापत्यं हिरण्यवाहनामानं महानदम्, यं जनाः शोण इति कथयन्ति। दृष्ट्वा च तं रामणीयकहृतहृदया तस्यैव तीरे वासमरचयत्। ...... एकस्मिंश्च शुचौ शिलातलसनाथे तटलतामण्डपे गृहबुद्धिं बबन्ध।"

तत्र सावित्र्या सह मुनिव्रतेन निवसन्ती सा विविधनियमव्रतेषु संलग्ना बभूव। अतीतेषु बहुदिवसेषु तत्रैव सा मातृगृहात् पितृगृहं गच्छन्तमष्टादशवर्षदेशीयं दधीचमद्राक्षीत्। प्रथमदर्शन एव सा तं प्रति अनुरक्ता बभूव। दधीचः अपि तामेवावस्थां प्राप्तवान्। फलतः दधीचेन सा पत्नीरूपे गृहीता, तद्यथा कथितं हर्षचरिते—

"आगत्य ( पितुः आश्रमात् ) च हृदयगतदयितानूपुरवविमिश्रयेव हंसगद्गदया गिरा कृतसंभाषणो ...... तामभिरामां रामामरमयत्। .... तेन तु सार्धमेकदिवसमिव संवत्सरमधिकमनयत्।

अथ दैवयोगात् सरस्वती बभार गर्भम्। असूत चानेहसा सर्वलक्षणाभिरामं तनयम्। तस्मै च जातमात्रायैव—'सम्यक्सरहस्याः सर्वे वेदाः सर्वाणि च शास्त्राणि सकलाश्च कला मत्प्रभावात्स्वयमाविर्भविष्यन्ति' इति वरमदात्। सद्भर्तृश्लाघया दर्शयितुमिव हृदयेनादाय दधीचं पितामहादेशात्समं सावित्र्या पुनरपि ब्रह्मलोकमारुरोह।

गतायां च तस्यां दधीचोऽपि ह्लादिन्येवाभिहतो भार्गववंशसंभूतस्य भ्रातुर्ब्राह्मणस्य जायामक्षमालाभिधानां मुनिकन्यकामात्मसूनोः संवर्धनाय नियुज्य विरहातुरस्तपसे वनमगात्। यस्मिन्नवसरे सरस्वत्यसूत तनयं तस्मिन्नेवाक्षमालापि सुतं प्रसूतवती। तौ तु सा निर्विशेषं सामान्यस्तन्यादिना शनैः शनैः शिशू समवर्धयत्। एकस्तयोः सारस्वताख्य एवाभवत्, अपरोऽपि वत्सनामासीत्। आसीच्च तयो सोदर्ययोरिव स्पृहणीया प्रीतिः।

अथ सारस्वतो मातुर्महिम्ना यौवनारम्भ एवाविर्भूताशेषविद्यासंभारस्तस्मिन्स-वयसि भ्रातरि प्रेयसि सुहृदि वत्से वाङ्मयं समस्तमेव संचारयामास। आत्म-नाप्याषाढ़ी, कृष्णाजिनी, अक्षवलयी, वल्कली, मेखली, जटी च भूत्वा तपस्यतो जनयितुरेव जगामान्तिकम्।" हर्षचरित-प्रथमोच्छ्वासः।

वत्सात् विमलो वंशः प्रावर्तत। तस्मिन्नेव वंशे कालान्तरे बाणस्य जन्म बभूव। अतः बाणस्य बुद्धिसौष्ठवं, कलाप्रेम, कवित्वं च स्वाभाविकमेवासीत्।

काव्यमीमांसायां सरस्वती विशेषतः सम्मानिता दृश्यते। सा तत्र राजशेखरेण काव्यपुरुषस्य माता कल्पिता, तद्यथा—

"पुरा पुत्रीयन्ती सरस्वती तुषारगिरौ तपस्यामास। प्रीतेन मनसा तां विरिञ्चिः प्रोवाच—पुत्रं ते सृजामि।

अथैषा काव्यपुरुषं सुषुवे। सोऽभ्युत्थाय सपादग्रहं छन्दस्वतीं वाचमुदचीचरत्—

यदेतद्वाङ्मयं विश्वमर्थमूर्त्या विवर्त्तते।<br>सोऽस्मि काव्यपुमानम्ब! पादौ वन्देय तावकौ॥

काव्यमीमांसा, तृतीयाध्याये।

सरस्वत्यां निहितस्य ज्ञानस्यासीमतां परिलक्ष्य कविना उद्घोषितम्—

'या दुग्धाऽपि न दुग्धेव कविदोग्धृभिरन्वहम्।<br>हृदि नः सन्निधत्तां सा सूक्तिधेनुः सरस्वती॥'

काव्यमीमांसा तृतीयाध्याये.

श्रीहर्षप्रणीते नैषधमहाकाव्ये प्रस्तुतं सरस्वत्याः ज्ञानमयस्वरूपमलौकिकमद्भुतं च वर्तते। दमयन्तीस्वयंवरे नानाभुवनागतानां राज्ञां चरित्रगोत्रप्रतीष्ठादीनां परिचयं दातुं न कोऽपि मानवः समर्थः आसीत्। तदा विष्णुः तस्मिन् नियोगे सरस्वतीं नियुक्तवान्। नैषधानुसारं सरस्वत्याः शरीरे सकलाः विद्याः सन्निहिताः। नानाविधविद्याभिः एवास्याः विभिन्नानि अंगानि विरचितानि, तद्यथा—

मध्येसभं साऽवततार बाला गन्धर्वविद्यामयकण्ठनाला ।
त्रयीमयीभूतवलीविभङ्गा साहित्यनिर्वर्तिततट्कृतरङ्गा ॥
आसीदथर्वा त्रिवलित्रिवेदी-मूलात् विनिर्गत्य वितायमाना ।
नानाभिचारोचितमेचकश्रीः श्रुतिर्यदीयोदररोमरेखा ॥

१०. ७४–८८.

वेदांगेषु शिक्षा एवात्र सरस्वत्याः चरितमभूत् । कल्पसूत्राण्येव तस्याः भूषणानि । जात्या वृत्तेन च द्विधाभूतः छन्दोग्रन्थः तदीयं भुजद्वयं निर्दिष्टम् । तस्याः काञ्ची व्याकरणेन रचिता । नक्षत्रप्रधानं ज्योतिःशास्त्रमेवास्याः ज्योतिर्मयी हारलता बभूव । स्वपक्षविजयग्रहार्थे प्रसिद्धौ पूर्वपक्षोत्तरपक्षौ तस्याः द्वौ ओष्ठौ बभूवतुः । नामनिर्देशस्य लक्षणनिर्देशस्य चावसरे द्विधाकथितैः षोडशभिः पदार्थैः उपलक्षिता तर्कविद्या एवास्याः द्वे दन्तपंक्ती कथ्यते । कल्पान्ते अपि स्थायि विच्छेदविवर्जितं च धर्मशास्त्रं तस्याः कण्ठोपरि स्थितः मूर्द्धास्ति । प्रसंगान्ते सम्पूर्णं देहयष्टिमुपलक्ष्य कविः वर्णयति—

'या सोमसिद्धान्तमयाननेव शून्यात्मतावादमयोदरेव ।
विज्ञानसामस्त्यमयान्तरेव साकारतासिद्धिमयाखिलेव ॥

१०. ८८.

वर्णनमीदृशं प्रकारान्तरेण मानवानां ज्ञानवृद्धेः साधनं भवति, कवेः विद्वत्तां च प्रकाशयति ।

वैदिका ऋषयः ऋग्वेदे प्रथमं सरस्वतीं नदीरूपे स्तुवन्ति स्म । तस्याः विविधामुपयोगितामनुभूय तैः सा देवीरूपेण प्रतिष्ठापिता । तत्त्वचिन्तनपरायणा मुनिजनाः तपस्विनः च सरस्वतीनद्याः तटप्रदेशे स्वाश्रमान् चक्रुः । तटमाश्रित्य तस्याः नागरिकजनैः स्ववसतयः संवर्धिताः । यज्ञादिधार्मिककार्याणामनुष्ठानार्थमस्याः तटप्रदेशा अभिमताः । एवंविधिना सरस्वत्याः तटप्रदेशेषु आर्याणां संस्कृतिः काव्यसाहित्यं च विशेषतया समृद्धं समुन्नतं चाभवत् । सम्भवतः अनेनैव कारणेन ब्राह्मणग्रन्थेषु सा वाचा सह सम्बद्धा दृश्यते । तस्या जलपानेन बुद्धिवैशद्यं

वाणीनैपुण्यं चानुभूय सरस्वत्याः विद्यादेवीत्वं प्रकल्पितम् । कालान्तरे सा वाग्देवी, विद्यादेवी, ज्ञानविज्ञानस्य सकलललितकलायाः च संरक्षिकाभवत् । महाभारते पुराणेषु च तस्या इदमेव रूपमुपलब्धं भवति । यद्यपि परवर्तियुगे तस्या इदमेव स्वरूपमुपास्यं बभूव, तथापि तस्याः नदीरूपमपि न कदापि विस्मृतम् । कालान्तरेऽपि तामधिकृत्य कवीनां कल्पनाः मण्डिताः । कालिदासबाणराजशेखरश्रीहर्षादिकवयः नानाविधं तस्या महिमानमगायन् । विद्वज्जनसमाजेषु अद्यापि सा ज्ञानप्राप्तये सद्बुद्धिप्रकाशनार्थं च प्रार्थ्यते अर्च्यते च ।

वसन्तपञ्चमीतिथिः सरस्वत्याः शुभावतरणकाल इति विद्यावतां महोत्सवदिवसो मन्यते ।

———

# नवावतारिका

तेलकपल्ले विश्वनाथ शर्मा

अस्मत्प्राचीनैर्भारतीयैर्ब्रह्मर्षिभिर्योगशक्त्या साक्षात्कृतस्सृष्ट्यवतारप्रकारश्छाया-मात्रेण वा नवीनवैज्ञानिकानामभिप्रायेण संवदतीति निरूपणमेवास्मत्कविताकलाखण्डस्य प्रयोजनम् । नैष प्रज्ञावादो वा काकतालीयश्च संवादः । किमर्थमेवमपि वा संवादवता भाव्यमित्येवास्माकं साक्षात्प्रश्नः ।

नितम्बे शेषाद्रेरुपकपिलतीर्थाग्रसरितं
निषीदन् सासारैर्मलयजवनीवातमुकुलैः ।
स्मराम्येतन्मात्रं तदनु यदभूत्तत्प्रतिभया
समुन्नेयं नेयञ्जडमतिरवैत्याकलयितुम् ॥१॥

पदार्थविज्ञानम्परार्थविज्ञानायात्यन्तावश्यकमिति सम्भावितवतां सर्वस्यामपि जगति सर्वप्रथमः कपिलः, इति तस्यात्र प्रथमस्मरणम् । भूगोलस्य यावद्दू-रमाकर्षणशक्तिः प्रसरति, तदस्योपरितलमितिग्रहणे, मानवस्सर्पाकारः कुण्डलिनी-शक्त्या, पातालस्थानीये वायुसमुद्रान्तस्तले वसन् शेष एव ।

अलोकम्प्राप्तोऽहं दिशिदिशि विवृत्तान् विदितवान्
महःपारावारान्विकटपुटभेदैर्विलुठतः ।
बभुर्याते दूरं क्रमिगतवसालेशवदमी
विराजो भूतस्य प्रविसृमरमेदोहृदसमाः ॥२॥

आंग्लभाषायां galaxy इतिख्यातान् योगदृष्टौ भासाभासतया अस्पष्टं दृष्टान् अस्मत्प्राक्तना आनन्त्याद्धावल्याच्च पयःपारावारान्सम्भावितवन्तस्स्युरिति भावः । मेदिनीनामुपादानत्वान्मेदोहृदसाम्यम् । जीवनिदानत्वाद्वसालेश (Plasm) साम्यम् ।

अथैषु प्रत्येकं बहुसवितृनारायणगणाः
करालार्चिः क्वाथैर्जगदिदममाथं विदधते ।
अमीष्वास्माकीनस्समविशदहो ! विश्ववलितो
जटालो ज्वालैस्स्वैः फणिपतिफणा भोगसुभगैः ॥३॥

नराणां समूहो भावो वा तदयनं गम्यस्थानं यस्य स सविता तेषां गणाः । येषु निरन्तरं सम्भवन्तः पुटभेदाः समुद्रमथनवदुद्भाविताः । अत्राप्यास्माकीन इत्यहो = आनन्दः, अहः = अहि समविशत् अशेत, सम्यगविशच्च ।

ततो नाभिस्थानादियमवनिराविर्भवमया-
द्विकासं विन्दन्ती कमलमिव चेतांसि हरति ।
अमुष्यां चैतन्यं प्रथममयमासीत्कमलजो
बिभर्त्येतां वृत्वा भुजगपतिहारी मरुदसौ ॥४॥

उद्भिज्जस्वेदजाण्डजजरायुजरूपित्वेन चतुर्मुखतयोद्गतं चैतन्यं ब्रह्म ब्रह्मा । "यया प्राणिनः प्राणवन्तः" इतिदिशा भुजगपतिवन्मनोहारी मरुत् = देवो वायुः तादृशः ।

बहोः कालादस्यां प्रथममवतारं स भगवा-
नधार्षीन्मीनाङ्कं;—प्रतिनवविवर्तप्रवणता ।
भवेतां यद्बीजे निखिलजगतां जङ्गमिषुता;—
चराणामत्राद्यं प्रणववचनं यश्च भवति ॥५॥

जङ्गममिव भवति क्विप्, सन्-उत्वं-तल् । इच्छाशक्तिर्निमित्तमित्यर्थः । मीनं ॐ आकारेण भुग्नं कर्तुं शक्यते । सृष्टावादित्वान्मीनस्य तदङ्कत्वं सृष्टि-सन्धुक्षकस्य मन्मथस्य, "आत्मा वै पुत्रनामासी"ति तत्पुत्रत्वञ्चेति प्रागल्भ्यम् । "स्त्रीणामाद्यं प्रणयवचन" मिति कालिदासीयस्य प्रणवीकरणञ्च ।

जले वा भूमौ वा विगलितभिदं प्राणितुमना
बभूवादौ कूर्मः प्रथमपरिणामो महिजुषाम् ।
स चाधारो भूमेरिति मुनिमनः प्रस्तुतिमगाद्-
द्वितीयं तद्रूपं महिकमलजाण्डे विजयते ॥६॥

अद्याप्यभेद्यकवचो विजयते इत्यर्थः ।

वराहो वाराहीवरललितलास्यं वरमह-
श्चरित्रे जीवानामपि परममूढो जनिमधात् ।
वरारोहो भूमीरुहवनवरारोहकलया
तृतीयं यद्रूपं व्यतिक्रतमहाहंसमहसः ॥७॥

परमं ऊढः परं अमूढः परम-मूढः । परम-मूढत्वाद्भूचरेष्वस्य प्राथम्यम् । वरं-अहः वर-महः । "कराङ्गुलिनखोद्भिन्ननारायणदशाकृतिः" इति वाराही-सम्बन्धः । वरारोह एव गच्छता कालेन वराह आसीदिति । ( Fun upon Philology )

नरस्यार्धं लब्धं यदधिगमपारायणमिदं,
ततः पूर्णोऽप्येषोऽङ्गुलिदशकमानेन निमितः ।
महादेहायामः परशुवदतिक्रूरहृदयो
बभूवुस्सौम्योऽपि प्रवरजनतान्धानुकरणः ॥८॥
तदा प्रादुर्भूतः प्रतननवनीतप्रवयिता
तथाऽऽगच्छन्नूत्न मननविधिमार्गं बुबुधिषुः ।
नरस्यार्धोत्पत्तेः प्रभृति विकृतीष्षरामुखतया
परिप्राप्याद्यापि प्रकृतिरमणीया न हि नराः ॥९॥

प्रकृत्या, प्रकृत्यै च रमणीया इत्यर्थः । षड्भावविकृतिमन्तः कथं प्रकृति-रमणीं याः = यातारो भवेयुरित्यपि । विकृतिभाजां प्रकृतिरमणीयता न कदापि सिध्येदित्याद्यूह्यम् । षरामुखस्य कुमारस्य मानवोपलक्षकत्वम् । कौ = भूमौ, मारः = मर्त्य इत्यर्थः । जगतिपित्रोः पुत्रत्वाच्च । अतएव स्वकवितया मानवसमाजमारा-धितवतः कालिदासस्य कुमारे प्रीतिः गुप्तकालिकराज्ञां च कुमारगुप्तस्कन्दगुप्त इत्यादिना ।

भिदाभावं त्यक्त्वा चरणचरणभूकल्कशकलान्
स्वदेहान् मन्वानास्सुकृतरतचित्तास्सहृदयाः ।

यदैते जायेरन् तदवधि महीब्रह्मकमलं

न पारम्यं याति क्वचिदपि नरावाप्तिफलितम् ॥१०॥

एतत्कल्क्यवतारोपलक्षकम् । यश्च भावी ।

कल्कं = रसायनं तदस्यास्तीति कल्की । अद्यतनस्वविज्ञानवेगाभ्युदयेन यदा रासायनिकमानवस्सम्पद्य, विश्वान्तराले स्वेच्छासञ्चरणपटुर्भवति तदा मानवता साफल्यमृच्छतीत्यर्थः । ( Our bodies are nothing but the pieces made up of earth that is chemically affected in that manner by which those are capable to move.)

अथैवं दिध्यासाविरतकरणश्चाकलितवा-

न्महीकल्कप्रायां मम तनुमपि प्रस्थनिकटे ।

सुसंस्कारो भूमावतिलुलित आस्तेऽद्य-कवयो !

वयं याता युष्मान् शरणमवतास्मान् करुणया ॥११॥

---

# महाभारतीयतीर्थयात्राविश्लेषणम्

कु० अर्चनावसु

महाभारतयुगे मोक्षपरायां जीवनपद्धतौ विशुद्धजीवनचर्यायाः सम्यक् प्रतिष्ठा समासादिता। शौचस्य महत्त्वविशेषात्तदर्थं चतुर्विधशुद्धेः धारणा कृता—वृत्त-शुद्धिः, मनः शुद्धिः, तीर्थशुद्धिः ज्ञानशुद्धिश्च। उपर्युक्तसर्वासु शुद्धिषु तीर्थशुद्धेरनु-ष्ठितस्वरूपस्य सिद्धेर्वा प्रत्यक्षत्वात्, निश्चयात्मकत्वात् सहजगम्यत्वाच्च प्रायः सा साधारणैः अतिशयपुण्यावहाभिमता। वैदिकार्यैः तीर्थयात्रा धार्मिककृत्येषु न प्रतिष्ठापिता; तथापि ऋग्वेदे 'तीर्थम्' इति शब्दो बहुशः नानार्थेषूल्लिखितः। यथा—

'तीर्थे नार्यः पौंस्यानि तस्थुः।' I. 169.6

अथवा—

'करन्न इन्द्रः सुतीर्थाभयं च' IV. 29.3

इत्यत्र तीर्थशब्दो मार्गस्यार्थे प्रयुक्तः। क्वचित् शब्दोऽयं नदीतटस्यार्थे लक्ष्यते यथा—

'सुतीर्थं अर्वतो यथानु नो नेषथा सुगम्' VIII. 47.11

तथा च—

'अरित्रं वा दिवस्पृथुतीर्थे सिन्धूनां रथः' I. 46.8

एकस्मिन्नेव प्रसङ्गे पवित्रस्थानं व्यज्यते तीर्थपदेन

'तीर्थे न दस्ममुप यन्त्यूमाः' X. 31.3

निरुक्ते 'सुवास्त्वा अधि तुग्वनि' इत्यस्य ऋग्वेदस्योद्धरणस्य स्पष्टीकरणे तीर्थस्यार्थः पवित्रस्थानं नदीतटं वा निर्धारितः।

तैत्तिरीयसंहितायाम्—

'अप्सु स्नाति साक्षादेव दीक्षातपसी अव रुन्धे तीर्थे' VI I. 1, 1–2.

अपरञ्च—

'ये तीर्थानि प्रचरन्ति सृकावन्तो निषङ्गिणः' IV 5.11.1–2

अत्र शब्दैकान्तरेण वाजसनेयिसंहितायामपि तीर्थशब्दः प्रयुक्तः। शांखायन-ब्राह्मणे समुद्रतटस्यार्थे प्रयुक्तस्यास्य शब्दस्योल्लेखो द्रष्टव्यः—

'समुद्रो वा एष सर्वहरो यदहोरात्रे तस्य हैते अगाधे तीर्थे यत्सन्ध्ये तद्यथा अगाधाभ्यां तीर्थाभ्यां समुद्रमतीयात्तादृक् तत्' II.9.

गौतमसूत्रे तीर्थप्रदेशानां विस्तृतनामावलिः विवृता; तथापि बहवः तीर्थविशेषा वैदिकयुगमनु एव समुपजाता इति निःसंदिग्धम्। हॉपकिन्समहोदयैः तदेव तथ्यं समर्थितम्।[1]

महाभारते 'तीर्थयात्रा' इति धार्मिककृत्यप्रकरणे मोक्षात्मकव्यक्तित्वस्य व्याख्यानं दृश्यते। सैद्धान्तिकव्यावहारिकरूपेण व्यक्तित्वविकासस्य आयोजनमासीत्। तीर्थयात्राकाले कृत्यकर्मसु उच्चवृत्तस्य सद्गुणानाञ्च महती प्रतिष्ठा वर्त्तते। यत्र यत्र स्नानस्य निर्देशः लभ्यते तत्र तत्र विविधप्रकारैः प्रत्यक्षमेव शमदमादिगुणानामावश्यकताऽनिवार्यता वा प्रतिपादिता। स्थूलरूपेण स्नानोपवासादीनां ग्रहणमनुष्ठानं वा निरर्थकमिति प्रदर्शयन् धार्मिकप्रवृत्तीनां प्रणिधानमेवाहितम्। अनेन विधिना प्राक्तनमनीषिभिः मोक्षसाधकव्यक्तित्वस्य विकसनं सम्पादितम्।

परवर्त्तियुगे यज्ञादिकर्मकाण्डानां नीरसत्वात् परोक्षफलत्वाद् वाऽऽर्येतरसमाजेषु प्रतिष्ठा नाभवत्। पृथिव्यां कतिपयविशिष्टगुणसम्पन्नानि स्थानानि तीर्थस्थानानीति निर्धारितानि। तत्र स्थानविशेषस्य नैसर्गिकवैभवं देवानां ऋषीणां वा तपोभूमित्वं च कारणतां जग्मतुः।

परिग्रहाच्च साधूनां पृथिव्याश्चैव तेजसा।
अतीव पुण्यभागास्ते सलिलस्य च तेजसा॥ अनु० १०८.१८

नदीनां समृद्धतटानि, समुद्रः, रमणीकपर्वतप्रदेशा अरण्यादीनि निसर्गतः

---

1. E. W. Hopkins—The Religions of India p. 371

पुण्यायतनम्[1], तपोवनम्, यज्ञभूमिः, मुनीनामाश्रमस्थलादीनि च मनीषिणां प्रभावात् तीर्थीकृतानि। कतिपयतीर्थानि देवानां निवासस्थानानि यदा कदा च देवानां ऋषीणाञ्च समागमस्थलानीति प्रकल्पितानि।

तीर्थस्थानेषु यात्रिकाः विविधव्रतनियमानामनुष्ठानं कुर्वन्ति स्म। व्रतचरितेन पुण्यार्जनस्य विधिरासीत्। तत्राचरणीयेषु बहुसंख्यकव्रतेषु पवित्रनद्यां स्नानमवगाहनं वा सुप्रचलितविधानमासीत्। तीर्थवासकाले पवित्रनदीषु स्नानं विशेषपावित्र्यप्रदमभिमतम्। यमनियमपरायणानां स्नानादीनि स्वर्गफलप्रदायीनि सम्मतानि। पवित्रनद्यां स्नानादनन्तरमुपवासपूर्वकं तत्र निवासेन मरणोत्तरसद्गतिः प्राप्याऽऽसीत्। तीर्थेषु पितृतर्पणम्, अस्थिविसर्जनम्, तपः, देवपूजनम्, यजनञ्च विशेषफलप्रदमभिमतम्। कतिपयतीर्थप्रदेशेषु मरणं सद्गतिप्रदं सम्मतम्।

तीर्थवाससमये आचरितेभ्यः व्रतेभ्यः यथा जीवनकाले पुण्यलाभस्य योगकौशलस्य पापपरिमार्जनस्य चावाप्तिर्नियता तथैव तैः यशसो ज्ञानस्यैश्वर्यस्य भोगस्य सुवर्णरूपयोश्च प्रत्यक्षोपलब्धिः शास्त्रानुसारमभियोजिता। तीर्थान्यवाप्य निर्धारितव्रतनियमानां पालनेन च पापमोक्षस्य नियमः सर्वत्र वर्णितः। तीर्थानां पापप्रक्षालकस्वरूपं संलक्ष्य महाभारते प्रोक्तम्—

कीर्तनाच्चैव तीर्थस्य स्नानाच्च पितृतर्पणात्।
धुनन्ति पापं तीर्थेषु ते प्रयान्ति सुखं दिवम्॥ अनु० १०८. १७

तेषां पवित्रतायाः प्रणयनपूर्वकमिवाख्यातञ्च 'पुण्यदेशाभिगमनं पवित्रं परमं स्मृतम्'। (शा० १४८.८ अ०) युगपदेव सर्वात्मिकां प्राप्तिं प्रकल्प्य धारणा कृता 'इदं मेध्यमिदं पुण्यमिदं स्वर्ग्यमनुत्तमम्'। अनु० २५, ६७

तीर्थगौरवशालिनीनां नदीनां निःश्रेयसकरस्वरूपं निर्दिशितम्। तद्यथा गङ्गाविषये—

योनिर्वरिष्ठा विरजा वितन्वी
शय्या चिरा वारिवहा यशोदा।

---

१. आर. ८६. १६, ६२, १३.

विश्वावती चाकृतिरिष्टसिद्धा
गङ्गोद्धितानां भुवनस्य पन्थाः ॥ अनु० २६. ६१

आरण्यकपर्वणि तीर्थप्रवासेन ब्राह्मणेतरवर्णानां द्विजत्वप्राप्तेविधानमधिकृत्य कतिपयप्रसङ्गाः दृश्यन्ते। प्रकारान्तरेण वर्णोत्कर्षप्राप्त्या सम्पूर्णव्यक्तित्वस्याभ्युदय एव सूच्यते यतः सद्गुणालंकृतानामेव महाभारते वर्णोत्कर्षः समर्थितः।

महाभारते बहुशः तीर्थयात्रया, तत्र वासेन संवृत्तैः व्रतैः वा परलोके पुण्यलोकानां प्राप्तिः वर्णिता। तथा हि—

कालिकाश्रममासाद्य विपाशायां कृतोदकः।
ब्रह्मचारी जितक्रोधस्त्रिरात्रं मुच्यते भवात्॥ अनु २५ २४

मरणोत्तरलाभानामप्रत्यक्षत्वादनिश्चितत्वाच्च ते गौणाः।

सर्वत्र तीर्थस्थानेषु महतां ऋषिमहर्षीणां देवानाञ्च समागमो नित्यमेव सम्भावितः। अभीक्ष्णं प्रव्रजनपरायणाः मनीषिणः तीर्थस्थानानि पर्यटितवन्तः। तत्र विदुषां सत्सङ्गेनोपदेशेन च सनाथीकृताः। अभ्युदयपथपरिचयायोत्कृष्टोऽयं विधिः। तद्यथा–संयतः सुसमाहितः जम्बूमार्गेऽहोरात्रेण सिद्धिं समधिगच्छति[1]। प्रभासक्षेत्रस्य गरिमाणं प्रतिपादयतोक्तम्—

तस्मिंस्तीर्थवरे स्नात्वा शुचिः प्रयतमानसः। आर० ८०. ७८ गंगाह्रदे ब्रह्मचर्यपालनपूर्वकमेकाग्रचित्तेन स्नानेन राजसूयाश्वमेधयोः फलं लभ्यम्। विधिपूर्वकमुत्तमव्रतानां पालनम्, चित्तस्य संयमः, समाहितत्वञ्च स्नानक्रियापुरस्सरं सर्वं पुण्यप्रदानि। प्रसङ्गेऽस्मिन् सद्वृत्तीनां संनिवेशं कुर्वता निर्दिष्टम्—

कामं क्रोधं च लोभं च यो जित्वा तीर्थमावसेत्।
न तेन किंचिन्न प्राप्तं तीर्थाभिगमनाद् भवेत्॥ अनु० २५.६५

काणेमहोदयैश्चेदृशानि तथ्यानि विवृण्वद्भिः परिणमितम्—

The traditions associated with holy places, the discipline through which the pilgrims passed, association with holy and philosophical men and the

१. अनु० २५,५१,५५,६२

 

whole atmosphere and environment at Tirthas made easy for pilgrims to remain at a high spiritual level and inculcated in them a mood of reverence that lasted long even after they returned from the pilgrimage. Pilgrimages supplied the much needed stimulus to draw ordinary men away from selfish pursuits and to make them think of the higher and more enduring moral and spiritual values.[1]

तीर्थेषूपदेष्टारः श्रद्धार्हा अभिमताः। जीवनस्य विविधपक्षानधिकृत्य तत्र प्रश्नाः पुरस्कृताः। तेषां प्रश्नानां समाधानाय शुद्धधर्मोपदेशैः सहितं प्रासङ्गिकोपाख्यानानां श्रावणस्य क्रमोऽभ्यस्तः। परिणामतः जनानां धार्मिकाभिरुचिः स्फुरिता। जीवनस्य दैनन्दिनकृत्यकर्मभ्यः जनानपवार्य प्राकृतिकैश्वर्यस्योत्सङ्गे मोक्षघटकधार्मिकजीवनं प्रति प्रवर्त्तनस्य लोकपक्तेश्च योजना सुसंयोजिता। कतिपयतीर्थभूताश्रमाः ऋषीणां स्थाय्यावासा आसन। तत्र यात्रिकाः पर्य्यटनाय गच्छन्ति स्म। अनेन विधिना गृहस्थानां परिव्राजकानां वा कृते निःशुल्कमेव ज्ञानं वितरितम्। दुर्बोधाः धार्मिकविषयाः धारणाश्च सुबोध्यतया सोदाहरणं तेषां समक्षं विन्यस्ताः। ईदृशं सर्वसामान्यस्य धर्मनिष्ठाऽधिकाधिकं सवर्धिता सुपोषिता च।

उपाख्यानाख्यायिकादिद्वारेण तीर्थस्थानानां महत्त्वं निरूपयद्भिरानुषंगिकरूपेण देवानामन्येषाञ्च महात्मनामादर्शाः जनमानसे प्रतिष्ठापिताः। तीर्थानां वैशिष्ट्यसूचनाय प्राक्तनयुगे तत्र देवैः ऋषिभिश्च तपोयज्ञादिकृत्यैः सिद्धिः प्राप्ता, इति पुराकल्पः विरचितः। बहुसंख्यकतीर्थप्रदेशाः देवानां यज्ञभूमिः यज्ञवेदी चासन्नित्युक्तम्।[2] देवानां नाम्ना चरित्रेण वा समीकृतास्ते प्रदेशाः। दिव्यादर्शानां पद्धतौ चरित्रस्य संघटनं विकासः उन्नयनञ्चोद्दिष्टानि। एतदेव तथ्यं मनसि निधाय सर्वत्र दिव्यसंस्मरणैः मनुष्याणामादर्शजीवनेभ्यो मार्गदर्शनं कृतम्। देवपितृपूजयोर्विधानैः पूर्वपुरुषचरितं प्रति श्रद्धाकरणाय प्रोत्साहनं समुद्भावितम्।

---

1. P. V. Kane—History of Dharmaśāstra, Vol. IV P. 553.

२. आरण्यक प० ७०. १३३; ८३. ७७; ८५. ३, ४; ६३. ५।

बहूपकरणापेक्षो यज्ञः निर्धनानां कृते दुष्करोऽभवत् तदनुसृत्य स्पष्टमुक्तमारण्यकपर्वणि—

न ते शक्या दरिद्रेण यज्ञाः प्राप्तुं महीपते ।
बहूपकरणा यज्ञा नानासंभारविस्तराः ॥
प्राप्यन्ते पार्थिवैरेते समृद्धैर्वा नरैः क्वचित् ।
नार्थन्यूनोपकरणैरेकात्मभिरसंहतैः ॥
यो दरिद्रैरपि विधिः शक्यः प्राप्तुं नरेश्वर ।
तुल्यो यज्ञफलैः पुण्यैस्तं निबोध युधां वर ॥
ऋषीणां परमं गुह्यमिदं भरतसत्तम ।
तीर्थाभिगमनं पुण्यं यज्ञैरपि विशिष्यते ॥ ८०. ३५–३८

तीर्थयात्रायाः फलानि राजसूयाश्वमेधाग्निष्टोमादियज्ञानां फलानि इव सम्मतानि ।

तीर्थप्रकल्पनेन सार्वजनिककल्याणं सुसाध्यमासीत् । सरित्सु स्नानं पुण्यायतनगमनं ऋषीणामाश्रमेषु गत्वा धर्मश्रवणं दानमित्येतानि सर्वेभ्यो ग्राह्याणि बभूवुः । तीर्थेषु वर्णपरमुच्चावचत्वं तिरोहितमेव यतः तीर्थयात्रायाः सर्वेषां समानाधिकार आसीत् । तद्यथा—

ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा राजसत्तम ।
न वियोनिं व्रजन्त्येते स्नातास्तीर्थे महात्मनः ॥ आर० ८०. ५१

क्रुकमहोदयैः एतदेव तथ्यं प्रतिपादयद्भिः प्रोक्तं प्रवासेषु वर्णावराणां सदस्यानां संसर्गस्य संभावनेनानिश्चितस्थानेभ्यः भोज्यपदार्थानां प्राप्त्या च वर्णभेदस्य रूढीनामनिर्बन्धता भवति ।[1]

---

1. W. Crooke—Pilgrimage ( Indian ) P. 27. in Encyclopaedia of Religion and Ethics edited by James Hastings.

......the possibility of meeting an outcaste in a crowded railway carriage weakens caste-restrictions while the need of food from uncertain sources diminishes some of the precautions which the Hindu by the rules of his caste is compelled to adopt.

३

पुराकालीनदानवृत्तेः माहात्म्यं विशिष्टमासीत्। तीर्थप्रवासकाले एषा वृत्तिः सम्यक्प्रकारेण यात्रिकैः समाश्रिता। बहवः विद्वांसः दार्शनिकाश्च परिग्रहविहीना एव तीर्थेषु यात्रिकाणामन्नादिभिः जीवनयापनं कुर्वन्ति स्म। बलरामस्य तीर्थ-यात्राप्रसङ्गे निगदितम्—

बुभुक्षितानामर्थाय क्लृतमन्नं समन्ततः ॥ शल्य० ३४. २०

अद्यतनस्य सततं प्रकल्पितस्य राष्ट्रियैक्यस्य सांस्कृतिकैक्यस्य च समर्थनं तीर्थयात्रासु दृश्यते। प्राचीनकालेऽपि धर्मदर्शनविचारादिभेदेभ्यो विविधसम्प्रदाया उपसम्प्रदायाश्चाभवन्। तीर्थयात्राद्वारेण सर्वेषामेतेषां सम्प्रदायानां वर्गाणां श्रेणीनां वा जनानां परस्परं सम्मेलनं सम्भावितम्। तदनुसृत्य सिस्टरनिवेदितया तीर्थयात्रां परिलक्ष्य निवेदितम्—

Yet it was unity and not disunity that impressed us as we looked from one end of the camp to the other the same simple way of life, the same sacramental reverence for food and bathing, the same gentleness and courtesy, the same types of fate and character and above all one great common scheme of thought and purpose.[1]

प्रत्येकं तीर्थं संक्षिप्तं भारतमेवासीत्।

महाभारतयुगे अनिकेताः पर्य्यटनपरायणाः मुनयः संन्यासिनः तीर्थेषु पर्यभ्रमन्। तेषामुपदेशेन सर्वे समागता धनिकाः दरिद्रा वा समुत्थापिताः। वस्तुतः मनीषिणामाश्रमरूपेण बहुसंख्यकाः विद्यापीठाः संस्थापिताः यत्र दर्शकानां लाभः सम्भावितः।

तीर्थयात्राभिरतान् विदुषोऽनुसरन्तः बहुजनाः तेषां सहगमनं कृतवन्तः। अस्याः सङ्गतेः महती प्रतिपत्तिः प्रत्यक्षमेव।

उपनिषत्कालादेव दार्शनिकविचारधाराणां विकासक्रमः समारब्धः। दार्शनिकचिन्तनस्येयं पद्धतिः महाभारतयुगे भूयः पल्लविता। परिणामतः बहवः

1. The Web of Indian Life P. 273.

सूक्ष्मविचारा आविर्भूताः। महाभारतस्य मानसतीर्थविषयकधारणा आदर्शजीवन-विन्यासक्रमे अभिनवपरिपक्वतां द्योतयति। तद्यथाऽनुशासनपर्वणि वर्णितम्—

मानसश्च पृथिव्याश्च पुण्यास्तीर्थास्तथापरे।
उभयोरेव यः स्नायात् स सिद्धिं शीघ्रमवाप्नुयात्॥ १०६. १६

मानसतीर्थभूतचारित्रिकगुणानधिकृत्य तैर्थमान्यता दार्शनिकदृष्ट्या समीहिता। तीर्थशब्दस्य कश्चिद्विशिष्टोऽर्थः ज्ञानिनां कृतेऽभिव्यक्त एव।

अनुशासनपर्वणि परोक्षतः ब्रह्मज्ञानमेव मानसतीर्थमिति निदर्शयिता सिद्धान्तः प्रतिपादितः—

अगाधे विमले शुद्धे सत्यतोये धृतिह्रदे।
स्नातव्यं मानसे तीर्थे सत्त्वमालम्ब्य शाश्वतम्॥
तीर्थशौचमनर्थित्वमार्जवं सत्यमार्दवम्।
अहिंसा सर्वभूतानामानृशंस्यं दमः शमः॥
निर्ममा निरहंकारा निर्द्वन्द्वा निष्परिग्रहाः।
शुचयस्तीर्थभूतास्ते ये भैक्ष्यमुपभुञ्जते॥ १०८.३-५

किन्तु—

तत्त्ववित्त्वनहंबुद्धिस्तीर्थप्रवरमुच्यते। अनु० १०८।६

अन्यच्च—

रजस्तमः सत्त्वमथो येषां निर्धौतमात्मनः।
शौचाशौचसमायुक्ताः स्वकार्यपरिमार्गिणः॥
सर्वत्यागेष्वभिरताः सर्वज्ञाः समदर्शिनः।
शौचेन वृत्तशौचार्थास्ते तीर्थाः शुचयश्च ये॥ १०८.७, ८

अनेन प्रकारेण निष्कामकर्मयोगी एव तीर्थप्रवरः निर्धारितः। शान्तिपर्वणि हृदयं प्रशस्ततमं तीर्थमभिमतम्। तुलाधारः जाजलिमुपदिष्टवान्—

जाजले तीर्थमात्मैव मा स्म देशातिथिर्भव। शान्ति० २६३.४३

तीर्थेषु सत्प्रवृत्तिजुषां कृते विविधसिद्धीनां प्रस्तावः दृश्यते। तद्यथा—

ततो वै ब्राह्मणीं गत्वा ब्रह्मचारी जितेन्द्रियः ।

पद्मवर्णेन यानेन ब्रह्मलोकं प्रपद्यते ॥ आर० ८२।५२

तथैव च—

विन्ध्ये संताप्य चात्मानं सत्यसंधस्त्वहिंसकः ।

विनयात्तप आस्थाय मासेनैकेन सिध्यति ॥ अनु० २५।४६

तीर्थप्रदेशेषु नदीसरोवराणां तोये मज्जनमाप्लावञ्च बहुमतं । चरित्रगुण-हीनैर्जनः न वर इति मतं व्याख्यातम् । तद्यथारण्यकपर्वणि—

नानृजुर्नाकृतात्मा च नाविद्यो न च पापकृत् ।

स्नाति तीर्थेषु कौरव्य न च वक्रमतिर्नरः ॥ ६०।११

ईदृश्याः निन्दायाः विकल्पेन स्नानकर्त्तृषु सद्गुणानामाधानं कृत्वा नियमो विहितः-

स्वाध्यायशीलः स्थानेषु सर्वेषु समुपस्पृशेत् । शान्ति १४८।१२

स्वाध्यायरताः स्वभावतो ऐन्द्रियकविषयेभ्यः विरता भवन्ति । अस्मात् कारणात् स्वाध्यायस्य महती उपयोगिता प्रतिपादिता मनीषिभिः । शारीरिकस्नानेनैव पुण्यार्जनस्य भ्रान्तेर्निराकर्त्तुं निर्दशितम् —

नोदकक्लिन्नगात्रस्तु स्नात इत्यभिधीयते ।

स स्नातो यो दमस्नातः स बाह्याभ्यान्तरः शुचिः ॥ अनु० १०८।६

क्वचित् ज्ञानशुद्धेः विशेषमहत्त्वं निधाय सिद्धान्तितम्—

ज्ञानोत्पन्नं च यच्छौचं तच्छौचं परमं स्मृतम् ॥ अनु० १०८.१२

उत्कृष्टस्नानं निरूपयता निगदितम्—

मनसा च प्रदीप्तेन ब्रह्मज्ञानजलेन च ।

स्नाति यो मानसे तीर्थे तत्स्नानं तत्त्वदर्शिनः ॥

समारोपितशौचस्तु नित्यं भावसमाहितः ।

केवलं गुणसम्पन्नः शुचिरेव नरः सदा ॥ अनु० १०८. १३, १४

तदित्थं मानसतीर्थादुपलब्धशौचस्य प्रतिष्ठा कृता । निस्पृहता निरपेक्षत्वञ्च प्रशस्यं निर्धार्य तत्कृतं शौचं परमिति निर्देष्टुकामेन ऋषिणा विज्ञापितम्—

अतीतेष्वनपेक्षा ये प्राप्तेष्वर्थेषु निर्ममाः ।
शौचमेव परं तेषां येषां नोत्पद्यते स्पृहा ॥
प्रज्ञानं शौचमेवेह शरीरस्य विशेषतः ।
तथा निष्किंचनत्वं च मनसश्च प्रसन्नता ॥ अनु० १०८. १०, ११

तीर्थफलार्थिनां व्यक्तित्वं कीदृशं भवत्विति विचक्षणवता मुनिना प्रोच्यते--

यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ।
विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते ॥
प्रतिग्रहादुपावृत्तः संतुष्टो नियतः शुचिः ।
अहंकारनिवृत्तश्च स तीर्थफलमश्नुते ॥
अकल्कको निरारम्भो लघ्वाहारो जितेन्द्रियः ।
विमुक्तः सर्वदोषैर्यः स तीर्थफलमश्नुते ॥ आर० ८०

तदनुसृत्य काणेमहोदयैः सुष्ठु समर्पितम्—ये एतैः सद्गुणैः संयुक्ताः ते पापमुक्ता अवश्यमेव भवन्ति स्म, किन्तु साकमेव ते विशिष्टपुण्यस्याधिकारिण आसन् । ये गुणहीना आसन् तेऽपि मुक्तपापा बभूवुः किन्तु आध्यात्मिकोत्कर्षः न तैरवाप्तः ।[1]

आपाततः तीर्थस्थानस्य विशिष्टतायाः सूचनेभ्यः प्रकारान्तरेण तीर्थयात्रिकाणां चारित्रिकविकास एव प्रस्फुरितः । यथा, शल्यपर्वणि सप्तसारस्वततीर्थस्य महिम्नः संसूचनाय प्रोक्तम्—

अहिंस्रैर्धर्मपरमैर्नृभिरत्यर्थसेवितम् । ३६. ६२

महाभारते तीर्थानां महिम्नो विशदं वर्णनं प्राप्यते । तीर्थानां विस्तृतसूच्यः आदिपर्वणोऽर्जुनवनवासप्रसङ्गे, आरण्यकपर्वणः तीर्थयात्रा इत्युपपर्वणि, शल्यपर्वणो गदापर्वनामप्रकरणेऽनुशासनपर्वणि च समुपलक्षिताः । तद्यथा, नदीषु गंगायमुनासरस्वतीगोदावरीसिन्धुवितस्ताचर्मण्वतीन्द्रतोयाकरतोयाप्रभृतयः, नदी-

---

1. P. V. Kane—History of Dharmaśāstra P. 562 The idea seems to be that pilgrimages may help to remove the sins of men who are not possessed of the above characteristics while those who possess these acquire a great store of merit in addition.

तटवर्त्तितीर्थेषु पुष्करप्रभाससप्तसारस्वतवाराणसीप्रयागप्लक्षप्रस्रवणकृत्तिकाङ्गारकवैमानिकविनशनचमसोद्भेदावसानस्वर्गमार्गादयः, तीर्थभूताश्रमेषु अगस्त्याश्रममहाश्रमकिंकिणोकाश्रमकालिकाश्रमकृत्तिकाश्रमाञ्जलिकाश्रमकण्वाश्रमतन्दुलिकाश्रमादयः, पुण्यारण्येषु नैमिषधर्मारण्य देवदारुवनोत्पलवनादीनि, पर्वतेषु विन्ध्याचलनीलपर्वतार्बुदपर्वतनिरविन्दगन्धमादनचित्रकूटमैनाकप्रभृतयः, ह्रदेषु सलिलह्रददेवह्रदषष्टिह्रदगङ्गाह्रदमहाह्रदादयः, परशुरामकुण्डनन्दिकुण्डमतङ्गवापीकन्याकूपब्रह्मसरोवरागस्त्यसरादयः, समुद्रेषु दक्षिणसमुद्रपश्चिमसमुद्रयोः तटेषु सौभद्रपौलोमागस्त्यकारन्धमभारद्वाजतीर्थानि नदीसमुद्रयोः सङ्गमेषु चापि वरुणतीर्थसरस्वतीसागरसंगमादयः बहुसंख्यकानि तीर्थानि व्यावृत्तानि ।

कतिपयतीर्थानां स्थितयोऽधोलिखिताः—

पुष्करतीर्थं राजस्थानेऽजमेरनगरात् षष्ठक्रोशार्धं दूरं[1], प्रभासतीर्थं काठियावाडप्रान्ते दक्षिणप्रदेशे[2] स्वर्गद्वारं पुरीनगर्याः दक्षिणभागे उत्कलप्रदेशे[3] नैमिषारण्यमधुना 'निम्सर' इति स्थानमुत्तरप्रदेशे सीतापुरनगरे गोमत्याः तटे[4] कनखलतीर्थमुत्तरप्रदेशे हरिद्वारात् द्वियोजनं पूर्वदिशि गङ्गानीलधारयोः संगमे[5] गङ्गाद्वारमधुनाहरिद्वारमुत्तरप्रदेशे[6] कुमारीतीर्थं मद्रासप्रान्तस्य केपकामोरिननामनि स्थाने[7], कामाख्यातीर्थमसमप्रान्ते गौहाटीनगरात् सकाशमवस्थितानीति निर्धारितानि । अर्बुदपर्वत इति राजस्थानेऽरावलिपर्वतश्रेण्याः माउन्टआबूनाम पर्वतः ।[8] नदीषु गङ्गायमुनागोदावराद्योऽद्यापि दृश्यन्ते । सरस्वतीनद्याः

1. B. C. Law— Holy Places of India p. 29.
2. Do—Historical Geography of Ancient India p. 293.
3. Do—Holy Places of India p: 16,
4. Do—p 22.
5. Do—Holy Places of India. p. 21.
6. B. C. Law—Holy Places of India. p. 20.
7. Do—Histo. Geography of Ancient India. p. 160.
8. Do—Holy Places of India. p. 11.
9. Do—Histo. Geo. of India p, 304.

उद्गमं हिमालयपर्वतश्रेण्याः सिरसुर नाम्न्याः पर्वतावल्याः सेवालिकशाखातः इत्युक्तम् । वर्त्तमानसरस्वतीनदी शतद्रुयमुनयोर्मध्यात् वहति ।[1] पयोष्णी नदी विदर्भदेशे विद्यमाना इति महाभारते प्रोक्तम् । कनिङ्घममहोदयैरेषा यमुनानद्याः पहोज-नाम शाखा मता, यदन्यैः विद्वद्भिः न स्वीकृतम् । ला महोदयैः सर्वेषां प्राचीनजनपदपर्वतादीनां भौगोलिकस्थितयः परिशोधिताः सुष्ठु च प्रतिपादिताः ।

निसर्गतः सुरम्यप्रदेशेषु स्थितेषु तीर्थेषु प्रवासिनां यात्रिकाणां स्वास्थ्यसंवर्द्धनं समभवत् । तीर्थस्थानानां पुण्यपरिवेशे कतिपयान्येतादृशानि तत्त्वान्यासन् यैः जनानां सर्वविधं स्वास्थ्यं समजायत । पुराकल्पानुसारं प्रभासतीर्थे चन्द्रमाः राजयक्ष्मायाः आरोग्यमलभत ।

महाभारतानुसारं तदित्थं परिणमति तीर्थयात्राणां साफल्यम् । यात्रिकाणां व्यक्तित्त्वस्य सर्वथा विकासोऽभवत्, राष्ट्रियैक्यं सांस्कृतिकसमूहनञ्च सम्भावितम्, मनीषिणां ज्ञानविज्ञानात्मकानुसन्धानानां सार्वजनिकप्रचारः समजायत ।

— —

1. B.C. Low Histo. Geo. of India. p. 121-

# आचार्यः सिद्धसेनो दिवाकरः

हरीन्द्रभूषणो जैनः

आचार्यः सिद्धसेनो दिवाकरः संस्कृतप्राकृतभाषयोः पण्डितप्रकाण्ड आसीत्। मालवदेशस्य कविपरम्परायां सुगृहीतनामायं महाकविर्नैयायिकत्वेन तर्कशास्त्रज्ञत्वेन चाप्रतिमं यशो लेभे ।

दशमखिस्ताब्दादारभ्य चतुर्दशखिस्ताब्दपर्यन्तं रचितेष्वनेकप्रबन्धकथाग्रन्थेषु तेषां जीवनसम्बन्धिविविधप्रसङ्गानामुल्लेखः प्राप्यते ।[१] एवंविधेष्वनेकप्रसङ्गेष्वाचार्यसिद्धसेनेन प्रभावितस्य महाराजविक्रमादित्यस्य चर्चा दृश्यते। राजशेखरसूरिरचितायां विधिकौमुद्यामाचार्यसिद्धसेनो विक्रमादित्यस्योपाध्यायो निर्दिष्टः।

अनेकेऽर्वाचीनविद्वांसः सिद्धसेनं महाराजविक्रमादित्यस्य नवरत्नेष्वन्यतमं मन्यन्ते[२]। नवरत्नेषु स 'क्षपणक' इति नाम्ना स्मृतः[३]। पं० ईश्वरचन्द्रविद्या-

---

१. दशमैकादशखिस्ताब्दयोर्मध्ये भद्रेश्वरेण रचितायां कथावल्याम्; १२७७ तमे खिस्ताब्दे प्रभाचन्द्राचार्येण रचितस्य प्रभावकचरितस्य वृद्धवादिसूरिनाम्नि प्रकरणे ( सिंघी ग्रन्थमाला, १९४० ई० ); १३०४ तमे खिस्ताब्द आचार्यमेरुतुङ्गरचितस्य प्रबन्धचिन्तामणेर्विक्रमार्कप्रबन्धनाम्नि प्रकरणे ( सिंघीग्रन्थमाला, १९३३ ई० ; १३४८ तमे खिस्ताब्दे राजशेखरसूरिणा रचितस्य प्रबन्धकोशस्य 'वृद्धवादिसिद्धसेनयोः प्रबन्ध' इति नाम्नि प्रकरणे ( सिंघी ग्रन्थमाला १९३५ ई० ) ।

२. धन्वन्तरिक्षपणकामरसिंहशङ्कुवेतालभट्टघटखर्परकालिदासाः ।
ख्यातो वराहमिहिरोनृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य ॥
ज्योतिर्विदाभरणम्, २२, १०

3. 'History of Indian Logic' by सतीशचन्द्रविद्यालङ्कारः ।

सागरोऽपि सिद्धसेनं विक्रमार्कस्य नवरत्नेषु क्षपणकमेव मन्यते[१]। जैनशास्त्रेषु क्षपणकशब्दो जैनमुनीनां कृते प्रयुज्यते।

ज्योतिर्विदाभरणे राज्ञो विक्रमादित्यस्य सभाया येषां ज्योतिश्शास्त्रविदुषां कालतन्त्रकवीनामुल्लेखस्तेषु श्रुतसेननामैको विद्वानपि वर्तते[२]। ज्योतिर्विदाभरणस्य टीकाकारो भावरत्नश्रुतसेनं सिद्धसेनं मन्यते। तेन निर्दिष्टं यत् छन्दोयोजनयैव सिद्धसेनश्श्रुतसेननाम्नोल्लिखितः[३]। ज्योतिश्शास्त्रपारङ्गतः वराहमिहिरोऽपि बृहज्जातके सिद्धसेनं तत्कालीनज्योतिश्शास्त्रविदुषां मध्ये गणयति।

महाराजविक्रमादित्यवदाचार्यसिद्धसेनस्यापि कालो विवादास्पदं वर्तते। डा० सतीशचन्द्रविद्याभूषणस्तेषां कालं ५३० खिस्ताब्दमभितः (४९० ई०–५५० ई०), येन विक्रमेण च सिद्धसेनस्य सम्बन्धस्तं मालवराजं यशोधर्मदेवं मन्यते[४]। डा० हीरालालजैनमहोदयस्तेषां कालं चतुर्थसप्तमखिस्ताब्दयोर्मध्ये स्थापयति येन विक्रमेण च सिद्धसेनस्सम्बद्धस्तं गुप्तवंशीयं द्वितीयं चन्द्रगुप्तविक्रमादित्यं मन्यते[५]। डा० पी० एल्० वैद्यमहोदयस्य मतानुसारं तेषां कालस्स-

---

१. संस्कृतिकेन्द्र—उज्जयिनीदर्शन, व्रजकिशोर चतुर्वेदी (इण्डियन प्रेस लिमिटेड, प्रयाग) पृ० ११७–११८.

२. सत्योवराहमिहिरश्श्रुतसेननामा श्रीबादरायणमणित्थकुमारसिंहाः।
श्रीविक्रमार्कनृपसंसदि सन्ति चैते श्रीकालतन्त्रकवयः ······॥
(ज्योतिर्विदाभरणम्, २२, ६)

3. Śrutasena according to prosodic and grammatical rules is a regular substitute for Siddhasena, has been pointed out by Bhāvaratna, the commentator of Jyotirvidābharaṇam.' Vikram Volume ( Sindia Ortental Instituie, 1948 ) page 213–280.

4. The History of Indian Logic. page 174.

5. 'A Contemporary Ode to Candragupta Vikramāditya' in the 'मध्यभारतीपत्रिका' Bulletin No. 1., of the Institute of Language and Research, University of Jabalpur.

तमखिस्ताब्दस्यान्तिमश्चरणो विद्यते[१]। श्रीमुनिजिनविजयस्तेषां कालं खिस्त-पूर्वप्रथमखिस्तोत्तरपञ्चमशताब्दस्य च मध्ये निश्चिनोति। जर्मनदेशीयप्राच्य-विद्याविशारदस्य श्रीयाकोबीमहोदयस्य मतानुसारं तेषां कालः ६७० खिस्ताब्द-मभितो वर्तते[२]। संक्षेपेणास्माभिर्वक्तुं शक्यते यत् सिद्धसेनस्य कालस्य पूर्वापरमर्यादे क्रमशः खिस्तपूर्वप्रथमा शताब्दी खिस्तोत्तरसप्तमी शताब्दी च वर्तेते।

अवन्तिकापुरी सिद्धसेनस्यावासभूमिरासीत्। जन्मना ब्राह्मणोऽयं महाकवि-रवन्तिराजस्य महाराजविक्रमादित्यस्य कुलपुरोहितस्य कात्यायनगोत्रावतंसस्य श्रीदेवर्षेः पुत्र आसीत्। देवश्रीः ( देवसिका ) तेषाम्मातुर्नाम। सिद्धश्रीनाम्नी महाविदुषी तेषां भगिन्यासीत्। बाल्यादेवोभाभ्यां वेदवेदाङ्गोपनिषत्पुराणगीता-षड्दर्शनादयः प्रगाढमधीताः। उभावपि काव्यप्रणयने सम्यक् समर्थावास्ताम्। काव्यनैपुण्येन सिद्धश्रीः सिद्धसारस्वतीति प्रख्याता बभूव।

सिद्धसेनश्शैशव एव प्रतिज्ञातवान् 'येन वादे जीये तस्याहं शिष्यस्स्याम्' इति। एकदा जैनाचार्येण श्रीवृद्धवादिसूरिणा शास्त्रार्थे जितः सिद्धसेनः प्रतिज्ञा-नुसारं श्रीवृद्धवादिनश्शिष्यत्वं स्वीचकार। आचार्योऽपि तं जैनसाधुपदे दीक्षया-मास। दीक्षाकाले कुमुदचन्द्रो नाम सिद्धसेन आचार्यपदमधितिष्ठन् सिद्धसेन दिवाकरो बभूव[३]।

सिद्धसेनोऽवन्तिकायामेकदा कमपि धार्मिकं चमत्कारमदर्शयत्। तेन प्रभा-वितो महाराजविक्रमो जैनधर्मं स्वीकृतवानपरिमितञ्च धनराशिं तेभ्यः समार्प-

---

1. Nyāyavatāra of Siddhasena Divākara, Edited by Dr. P. L. Vaidya. श्री जैनश्वेताम्बर कान्फ्रेंस, २० पायधुनी बम्बई, १६२२।

२. संस्कृतिकेन्द्र — उज्जयिनीदर्शन, पृ० ११७–११८।

३. प्रबन्धकोशे वृद्धवादिसिद्धसेनयोः प्रबन्धः, पृ० १५–१६।

यत्[१]। किन्तु तेन न स्वीकृतं निर्लोभत्वात्। राज्ञापि न पुनः स्वीकृतम्। तत् आचार्यानुज्ञया स संघपुरुषैर्जीर्णोद्धारे व्ययितः[२]।

सिद्धसेनस्सर्षपहेमविद्ययोः प्रज्ञाताऽऽसीत्। सर्षपविद्यया युद्धकाले मान्त्रिकः समन्त्रं यावतस्सर्षपान् जलाशये क्षिपति तावन्त एवाश्ववारा द्विचत्वारिंशदुपकरणोपेतास्तस्माज्जलाशयादुत्थिताश्शत्रुसेनां ध्वंसयन्ति। हेमविद्यया च येन केनापि धातुना कोटिपरिमितं सुवर्णं निर्मातुं शक्यते।

सिद्धसेनो जैनधर्मं द्योतयन्नेकदा दक्षिणदिशि पृथिवीस्थानपुरं (प्रतिष्ठानपुरं) विहरन् गतः। तत्रायुरन्तं ज्ञात्वा सल्लेखनापूर्वकं स्वर्गलोकमध्यवात्सीत्[३]।

स्वकीयेनाप्रतिमज्ञानेन सिद्धसेनः 'सर्वज्ञपुत्र' इति प्रथितोऽभवत्। स वादेषु परं प्रवीण आसीत्। 'वादीन्द्र' इति तस्यालङ्कारः। स्वजीवनकालेऽनेकप्रतिवादिनस्स पराजयते स्मेति प्रतीयते। श्रूयते सिद्धसेनस्य स्वर्गारोहणानन्तरमेको विद्वान् दक्षिणतोऽवन्तिकामागत्य तेषाम्मृत्योस्समाचारं न्यवेदयत्—स्फुरन्ति वादिखद्योताः साम्प्रतं दक्षिणापथे' इति उपर्युक्तं श्लोकस्यार्धभागं स पुनः पुनरपठत् परं तत्रस्थो न कोऽपि तस्यार्थं सम्यग्ज्ञातवान्। सभायामुपस्थिता सिद्धश्रीस्तस्य गूढार्थं विज्ञाय तत्क्षणं श्लोकं पूरयन्त्यवादीत्—'नूनमस्तङ्गतो वादी सिद्धसेनो दिवाकरः' इति।

सन्मतितर्को द्वात्रिंशद्द्वात्रिंशिकाः कल्याणमन्दिरस्तोत्रं न्यायावतारञ्चेति निर्विवादं सिद्धसेनस्य कृतयः। बहवो विद्वांसः कल्याणमन्दिरस्तोत्रं न्यायावतारञ्च

---

१. धर्मलाभ इति प्रोक्ते दूरादुच्छ्रितपाणये।
सूरये सिद्धसेनाय ददौ कोटिं नराधिपः॥
प्रबन्धकोशः, पृ० १६

२. प्रबन्धचिन्तामणेः विक्रमार्कप्रबन्धे 'सिद्धसेनसूरिसमागमवर्णनम्' पृ० ७.

३. प्रबन्धकोशः, पृ० २१

द्वात्रिंशिकामध्य एव गणयन्ति । आचार्येणोमास्वामिना विरचिते तत्त्वार्थाधिगमसूत्रेऽपि स एकां टीकाञ्चकार[१] ।

सन्मतितर्कः ( सम्मऽसुत्तं = सन्मतिसूत्रम् ) १६७ प्रमाणासु गाथासु निबद्ध एको लघुग्रन्थः । नयकाण्डो जीवकाण्डोऽनेकान्तकाण्डश्चेति त्रयोऽध्याया अस्य । अत्र जैनदृष्ट्या तर्कशास्त्रस्य तत्त्वज्ञानस्य च विवेचनमस्ति । अभयदेवरचित-टीकासहितस्यास्य ग्रन्थस्य प्रकाशनमहमदाबादनगरस्थगुजरातविद्यापीठेन पं० सुखलालबेचरदासयोस्सम्पादकत्वे पञ्चभागेषु कृतम् १६२१–३१ तमे वर्षे । सप्तमशताब्द्या आरभ्य नवमशताब्दीपर्यन्तं वीरसेन—हरिभद्र-जिनदासगणि-जिनभद्रक्षमाश्रमणप्रभृतिभिरनेकजैनाचार्यैस्स्वस्वग्रन्थेषु सन्मतितर्कस्योद्धरणं कृतम्[२] ।

सिद्धसेनो द्वात्रिंशत् स्तुतीर्व्यरचयत् । प्रत्येकं द्वात्रिंशत् पद्येषु निबद्धास्ता द्वात्रिंशद्द्वात्रिंशिका इति नाम्ना प्रसिद्धा अभवन् । आसु केवलमेकविंशतिद्वा-त्रिंशिका एवाद्योपलभ्यन्ते । १६०८ तमे खिस्ताब्दे तासां प्रकाशनं भावनगरस्थ-जिनधर्मप्रसारकसमयैकस्मिन् ग्रन्थे कृतम् ।

उपलब्धानामेकविंशतिद्वात्रिंशिकानां केवलं पञ्चदशद्वात्रिंशिकास्वेव साम-स्त्येन द्वात्रिंशत् पद्यान्युपलभ्यन्ते पञ्चदश्यां ( बौद्धसन्तानद्वात्रिंशिकायां ) एको-नविंश्यां द्वात्रिंशिकायां न्यायावतारे च प्रत्येकमेकत्रिंशत् पद्यान्युपलभ्यन्ते । अष्टम्यां दशम्यामेकादश्यां ( गुणवचन० ) एकविंश्याञ्च द्वात्रिंशिकायां प्रत्येकं क्रमशष्षड्विंशतिश्चतुस्त्रिंशदष्टाविंशतिस्त्रयस्त्रिंशच्च पद्यानि समुपलभ्यन्ते ।

एता द्वात्रिंशिकाश्श्रेष्ठसंस्कृतभाषया विभिन्नेषु लौकिकवृत्तेषु विरचिताः । गुणवचनद्वात्रिंशिकां परिहृत्य प्रायः सर्वा अपि द्वात्रिंशिका जैनतीर्थङ्कराणां, प्रामुख्येन महावीरस्य स्तुतिरूपेण रचिताः । विभिन्नभारतीयदर्शनानां समीक्षा तेषां खण्डनं जैनधर्मसिद्धान्तानां विशदीकरणं जैनन्यायस्य विवेचनञ्च तत्र वर्तन्ते ।

---

१. संस्कृतिकेन्द्र—उज्जयिनीदर्शन, पृ० ११७ ।

२. मध्यभारती, Bulletin No. 1. page 1.

'वेदवादद्वात्रिंशिका' अर्थगाम्भीर्यपूर्णा रचना वर्तते। अस्यां प्रायस्सर्वेषामपि भारतीयदर्शनानामालोचनात्मकं विवेचनमस्ति। इयमेकैव द्वात्रिंशिका सिद्धसेनस्य वेदोपनिषत्पुराणगीतादीनां विद्वत्त्वं प्रमाणयति।

शुद्धाध्यात्मिकदार्शनिकस्तुतिरूपाणां द्वात्रिंशिकानां मध्य एका पृथक्स्वभावा 'गुणवचनद्वात्रिंशिका' वर्तते या धर्मनिरपेक्षापि स्तुतिपरा। अस्यां कस्याप्याश्रयदातू राज्ञो गुणानां वर्णनं वर्तते। अलङ्काराणां विशेषतश्श्लेषस्य साहाय्येनात्र वैशेषिकदर्शनस्यापि विवरणं कृतम्। अत्र गुणशब्दः प्रायः द्व्यर्थे प्रयुक्तः—योग्यतायां वैशेषिकाभिमतसप्तपदार्थानामेकस्मिन् गुणपदार्थे च। यथा—

गुणो नाम द्रव्यं भवति गुणतश्च प्रभवति
गुणापेक्षं कर्माप्यनुशयमनारम्भविषयम्।
विभुः स्यात् किं द्रव्यं गुणजमुत वान्यः पदविधि-
र्यशो दिक्पर्यन्तं तव किमितशक्यं गमयितुम्॥[1]

अस्या द्वात्रिंशिकाया ऐतिहासिकं महत्त्वमपि वर्तते। अवन्तिकास्थितसिन्दिया-ओरियन्टल-इन्स्टीट्यूटनामकसंस्थाया भूतपूर्वा प्रबन्धाध्यक्षा ( क्यूरेटर ) डा० शार्लोटे क्राउजे महोदया गुणवचनद्वात्रिंशिकामधीत्यैतन्निष्कर्षमाप्नोत् यत् सिद्धसेनस्स्वाश्रयदातुर्विक्रमादित्योपाधिधारिणो राज्ञस्समुद्रगुप्तस्य गुणानां वर्णनायैवैतामरचयत्। क्राउजेमहोदयया गुणवचनद्वात्रिंशिकामाधारं विधाय समुद्रगुप्तस्य तस्योत्तराधिकारिणश्चन्द्रगुप्तद्वितीयस्य वा शासनकाल एव सिद्धसेनस्य समयो निर्धारितः। तया विस्तृतभूमिकया सह गुणवचनद्वात्रिंशिकाया आङ्गलभाषानुवादपूर्वकं प्रकाशनमपि विक्रमशताब्दीसमारोहग्रन्थे कृतम्[2]।

जबलपुरविश्वविद्यालयस्य संस्कृतपालिप्राकृतविभागाध्यक्षो डा० हीरालालजैनमहोदयोऽपि १९६२ तमवर्षस्य जुलाईमासे प्रकाशितायां स्वविभागीयायां

---

१. गुणवचनद्वात्रिंशिका, २८।

2 Vikrama Volume, 'Siddhasena divākara and Vikramāditya.' page 213—280.

मध्यभारतीनाम्न्यामनुसंधानपत्रिकायां लघुभूमिकयाऽऽङ्गलभाषानुवादेन च सह गुणवचनद्वात्रिंशिकायाः प्रकाशनं कृतवान्[१]।

कल्याणमन्दिरस्तोत्रं प्रौढा श्रेष्ठा च रचना वर्तते। अस्मिन् स्तोत्रे वसन्ततिलकाछन्दसा चतुश्चत्वारिंशत्पद्यैस्त्रयोविंशस्य जैनतीर्थङ्करस्य श्रीपार्श्वनाथस्य स्तुतिर्वर्तते। एतत् स्तोत्रमद्यापि जैनसंप्रदाये नित्यं श्रद्धाभक्तिपूर्वं पठ्यते।

न्यायावतारो जैनन्यायस्य प्रथमो ग्रन्थः। अत्र प्रमाणप्रत्यक्षपरोक्षानुमानपक्षदृष्टान्तपक्षाभासदृष्टान्ताभासादीनां जैनन्यायस्य विभिन्नानां तत्त्वानां सलक्षणपरीक्षणं विवेचनं वर्तते। न्यायावतारस्य अन्ते नयस्याद्वादयोरपि विवेचनमस्ति–

नयानामेकनिष्ठानां प्रवृत्तेः श्रुतवर्त्मनि।
सम्पूर्णार्थविनिश्चायि स्याद्वादश्रुतमुच्यते॥

सिद्धसेनः काव्यरचनायामत्यन्तं निपुण आसीत्। 'कविवासव' इत्यस्योपाधिरवर्तत। अनेकशताब्द्यनन्तरं कलिकालसर्वज्ञो हेमचन्द्रस्स्वकीये सिद्धहेमव्याकरण एकं व्याकरणप्रयोगमुदाहरन्नलिखत्—'अनुसिद्धसेनं कवय' इति।

सिद्धसेनस्य कविता विविधालङ्कारैर्विभूषिता। उपमा रूपकमर्थान्तरन्यासो दृष्टान्तो व्याजस्तुतिश्श्लेषो यमकश्चेति तस्य प्रिया अलङ्काराः। उपजातिः पुष्पिताग्रा वैतालीयं वंशस्थश्शालिनी भुजङ्गप्रयातं वसन्ततिलका पृथ्वी हरिणी मन्दाक्रान्तेत्येषां छन्दसां कविना बाहुल्येन प्रयोगः कृतः। कल्याणमन्दिरस्तोत्रस्य वसन्ततिलकाछन्द एवं प्रसिद्धमभूद् यत्तदनन्तरमनेकैः कविभिस्स्वस्तोत्राणां तेन छन्दसैव रचना कृता। नैतावदेव परं कल्याणमन्दिरस्तोत्रस्य नामानुकृत्य परवर्तिकविभिः स्वस्तोत्राणां नामापि स्तोत्रस्य प्रथमं पदमाधारं विधाय कृतम्। भक्तामरस्तोत्र-स्वयंभूस्तोत्रैकीभावस्तोत्रप्रभृतीन्यनेकानि स्तोत्राणीदृशान्येव सन्ति।

भाषायास्सौष्ठवेन भावानामप्रतिमाभिव्यक्त्या च सिद्धसेनस्य स्तोत्राण्यत्यन्तं प्रथितान्यासन्। एतानि स्तोत्राणि काव्यदृष्ट्या परमभिनन्दनीयानि सन्ति। एतेषां कविताऽतिनैसर्गिकी प्रासादिकी च वर्तते। कवेरुक्तिषु महाँश्चमत्कारः—

१. मध्यभारती, Bulletin No. 1. 'A Contemporary Ode to Candragupta Vikramaditya.'

आस्तामचिन्त्यमहिमा जिन संस्तवस्ते
नामापि पाति भवतो भवतो जगन्ति ।
तीव्रातपोपहतपान्थजनान्निदाघे
प्रीणाति पद्मसरसः सरसोऽनिलोऽपि ॥[1]

सिद्धसेनस्स्तुत्या सह व्याजस्तुतेरपि रचनायां परं प्रवीण आसीत् । महाराजविक्रमादित्यस्य स्तुत्यर्थमधोलिखितानि चत्वारि पद्यानि व्याजस्तुतेश्श्रेष्ठ-निदर्शनानि सन्ति—

अपूर्वेयं धनुर्विद्या भवता शिक्षिता कुतः ।
मार्गणौघः समभ्येति गुणो याति दिगन्तरम् ॥१॥
सरस्वती स्थिता वक्त्रे लक्ष्मीः करसरोरुहे ।
कीर्तिः किं कुपिता राजन् येन देशान्तरं गता ॥२॥
कीर्तिस्ते जातजाड्येव चतुरम्भोधिमज्जनात् ।
आतपाय धरानाथ गता मार्तण्डमण्डलम् ॥३॥
सर्वदा सर्वदोऽसीति मिथ्या संस्तूयते जनैः ।
नारयो लेभिरे पृष्ठं न वक्षः परयोषितः ॥४॥[2]

एकदा द्वात्रिंशिकां श्रुत्वा परमसन्तुष्टो राजा विक्रमादित्यस्सिद्धसेनमेवम-स्तावीत्—

अहयो बहवः सन्ति भेकभक्षणदक्षिणाः ।
एक एव स शेषो हि धरित्रीधरणक्षमः ॥१॥
पदं सपदि कस्य न स्फुरति शर्करापाकिमम्
रसालरससेकिमं भणितिवैभवं कस्य न ।
तदेतदुभयं किमप्यमृतनिर्झरोद्गारिमै-
स्तरङ्गयति यो रसैः स पुन एक एव क्वचित् ॥२॥

---

१. कल्याणमन्दिरस्तोत्रम् , ७ ।
२. प्रबन्धकोशः, 'वृद्धवादिसिद्धसेनयोः प्रबन्धः' पृ० २० ।

न नाम्ना नो वृत्या परिचयवशाच्छन्दसि न वा
न शब्दव्युत्पत्त्या निभृतमुपदेशान्नच गुरोः ।
अपि त्वेताः स्वैरं जगति सुकवीनां मधुमुचो
विपच्यन्ते वाचः सुकृतपरिमाणेन महता ॥३॥[1]

सिद्धसेनस्य द्वात्रिंशिकानां परवर्तिकविष्वेतादृशः प्रभावोऽभूद् यदनेक-शताब्दीपर्यन्तं संस्कृतभाषायां द्वात्रिंशिकापद्धत्या विविधा रचनाः कृताः । आचार्य-हेमचन्द्र[2] रामचन्द्र सूरिप्रभृतयोऽनेके जैनकवयो न केवलं द्वात्रिंशिका एवारचयन्नपि तु ते विंशिका-पञ्चविंशिका-षट्त्रिंशिकाप्रभृती अनेका रचनाः कृतवन्तः ।[3]

जैनेतरकविभिरपि द्वात्रिंशिकापद्धत्या सिंहासनद्वात्रिंशिका भरटकद्वात्रिंशिका वेतालपञ्चविंशिका ( शिवदासेन ) होराषट्पञ्चाशिका ( वराहमिहिरपुत्रेण पृथुयशसा ) विरूपाक्षपञ्चाशिका ( विरूपाक्षनाथेन ) अनेका रचनाः कृताः । कश्मीरजः कवी रत्नाकरः शङ्करस्तुतये वक्रोक्तिपञ्चाशिकामरचयत् ।

---

१. प्रबन्धकोशः, 'वृद्धवादिसिद्धसेनयोः प्रबन्धः' ।

२. बलदेव उपाध्यायः, 'संस्कृतसाहित्य का इतिहास' पृ० २७७ ।

३. कलिकालसर्वज्ञो हेमचन्द्रः — अयोगव्यवच्छेदद्वात्रिंशिकामन्ययोगव्यवच्छेदद्वात्रिंशिकाञ्च; जयशेखरसूरिः—महावीरद्वात्रिंशिकां शत्रुञ्जयस्थादिजिनद्वात्रिंशिकाञ्च; दलपतिरायः—सिद्धविंशिकास्तोत्रम्; रामचन्द्रसूरिः—जिनद्वात्रिंशिकां भक्त्यतिशयद्वात्रिंशिकां प्रसादद्वात्रिंशिकां व्यतिरेकद्वात्रिंशिकां युगादिदेवद्वात्रिंशिकां परमालद्वात्रिंशिकां शान्तिद्वात्रिंशिकाञ्च; यशोविजयसूरिः—परमज्योतिपञ्चविंशतिकाम्; धनपालः—ऋषभपञ्चाशिकाम्; मुनिसुन्दरसूरिः—जिनपतिमहार्थद्वात्रिंशिकाम्; अज्ञातनामा—गिरिराजजिनद्वात्रिंशकाम्; महिमेरुः—जिनस्तुतिपञ्चाशिकाम्; सिद्धसेनसूरिः—महावीरद्वात्रिंशिकाम्; मुनिचतुरविजयः—वर्धमानषट्त्रिंशिकाम् ।

( जैनस्तोत्र संदोहः प्रथमो भागः – अहमदाबादः )

काव्यक्षेत्रेऽमरां कीर्तिं लभमानस्सिद्धसेनो जैनन्यायस्येतिहास-क्षेत्रेऽपि सदैव स्मृतो भविष्यति। सिद्धसेनात् प्राग् जैनन्यायो जैनतत्त्वज्ञान एव समाविष्टोऽवर्तत। जैनन्यायो जैनतत्त्वज्ञानस्य बन्धनाद् मुक्तः एव स्वतन्त्रसिंहासने प्रतिष्ठितस्तस्य प्रथमश्रेयोभागी सिद्धसेनो वर्तते।

सिद्धसेनस्य काव्यं गुणरीत्यलङ्कारार्थगौरवपदलालित्यप्रभृतिभिश्श्रेष्ठैः काव्य-गुणैरेतावत् परिपूर्णं यत् स महाकविसंस्कृतसाहित्यस्य कस्यापि श्रेष्ठमहाकवेस्सम-कक्षं प्रतिष्ठापयितुं शक्यते।

मालवमेदिन्या महामनीषिणमाचार्यसिद्धसेनदिवाकरमभिलक्ष्याचार्यहेमचन्द्रेण प्रयुक्तेनाधस्तनेन कथनेन सम्भाविता वयम्—

क्व सिद्धसेनस्तुतयो महार्था-<br>
अशिक्षितालापकता क्व चैषा।<br>
तथापि यूथाधिपतेः पथस्थ-<br>
स्स्खलद्गतिस्तस्य शिशुर्न शोच्यः।[1]

———

१. अयोगव्यवच्छेदद्वात्रिंशिका।

# नाटकीयं वृत्तप्रपञ्चनम्

विश्वनाथ भट्टाचार्यः

रूपकेषु मुख्यवृत्तस्य प्रधानपुरुषः स्वय नायक एव यथा अभिज्ञानशाकुन्तले दुष्यन्तः, इतरे विषया यथा तत्रैव दुर्वासस: शापप्रदानं धीवराङ्गलीयकव्यतिकर इत्यादयः प्रासङ्गिकवृत्तेऽन्तर्भवन्ति। आधिकारिकस्य मुख्यस्य वा वृत्तस्य स्वरूपं निर्णेतुं नाट्यदर्पणकृदाह—इह तावन्न निसर्गतः किञ्चिच्चरितं मुख्यमङ्गं वा, किन्तु बहुष्वपि फलेषु कविर्यस्यात्यन्तमुत्कर्षमभिप्रैति तत्फलमिष्टम्। अनेन च यत् फलवद्वृत्तं तदिह मुख्यम्। (ना० द० I) फलवत्त्वं चेत्थं वृत्तस्य प्रामुख्ये हेतुः।

नायकसम्बद्धस्य वृत्तस्य मुख्यत्वे सत्यपि तत्प्रदर्शनाय कानिचिद् वृत्तान्तराणि नाट्यकारेणावश्यमेव संग्राह्याणि। आदावेव नाट्यकृत् मुख्यप्रासङ्गिकयोर्निश्चयं कुर्यात्। वृत्तस्य प्रासङ्गिकत्वं कथं निरूपणीयमित्यत्र शास्त्रेषु प्रतिपादितम् यत्तदेव वृत्तं प्रासङ्गिकं गौणं वा यत्केवलं मुख्यवृत्तस्यैव सरसत्वमुत्कर्षं च साधयतीति। तथाहि भरतः—'परोपकरणार्थं तु कीर्त्यते ह्यानुषङ्गिकम्।' (ना० शा० XX 1,5) रामचन्द्रगुणचन्द्रावपि स्पष्टमाहतुः—'नाट्ये हि तदेवावान्तरं वृत्तमायोज्यं यत्पारम्पर्येण प्रधानफलसाधकमिति। (ना० द० I) प्रधानफलसाधकत्वं गौणवृत्तस्य दशरूपके (I, 13), साहित्यदर्पणे (VI, 44), भावप्रकाशने (VII, पृ० 201) च भरतमनुसृत्य प्रदर्शितम्। शारदातनयेन दृष्टान्तोऽपि प्रदर्शितः—

"आजन्मनोऽभिषेकान्तं रामस्यैवाधिकारिकम्।
प्रासङ्गिकं तु सुग्रीवविभीषणविचेष्टितम्॥"

(भा० प्र०, VII, पृ० 201)

एवं च वृत्तस्य मुख्यप्रासङ्गिकभेदौ कल्पनीयौ। ततः कथं नाटकीयवृत्तं अखण्डितैकरूपेण प्रतिपादनीयमिति भवति नाट्यकृता समाधेयः प्रश्नः। वृत्तं

तेनांकेषु वितत्य स्थापनीयम्। ते चाङ्कास्तथा कल्पनीया यथा आद्यन्तवत्त्वेन खण्डित अपि तेऽभिनयदशायां पाठकाले वा तथा न प्रतीयेरन्। कथमेतत्संसाध्यमित्यत्र भरतेन पञ्चार्थप्रकृतयः कल्पिताः। एताः पञ्च अंकविभाजितस्य वृत्तस्याखण्डत्वं साधयन्ति। एते खलु—

> बीजबिन्दुपताकाश्च प्रकरी कार्यमेव च।
> अर्थप्रकृतयः पञ्च ज्ञात्वा योज्या यथाविधि॥

(ना० शा० XXI, 22)

सागरनन्दी अपि नाटकीयवृत्ते एतेषां पञ्चतत्त्वानामवश्यम्भावित्वं, तदभावे च वृत्तस्य वृत्तत्वमेव न स्यादिति चाभिप्रैति। एषु बिन्दुरेव प्रधानं यतो ह्यसौ विच्छिन्नांशानां सन्धानग्रन्थिर्भवति। अस्मिन् विषये सागरनन्दी भरतमुनेः

> 'प्रयोजनानां विच्छेदे यदविच्छेदकारणम्।
> यावत्समाप्तिं कार्यस्य स बिन्दुरिति कथ्यते॥'

(ना० शा० XXI, 24)

इति श्लोकमुल्लिख्य नाटकीयवृत्तस्य निर्वहणं यावद् बिन्दोरुपयोगं प्रदर्शयति। अन्यदीयमपि किञ्चिन्मतं तेनोल्लिखितम्--'अन्ये तु। यद्धि नाटकार्थस्य प्रकृतिभूतमवमानोत्साहाभ्यां प्रत्यङ्कं परिकीर्त्यते स बिन्दुः।..................स च कार्यस्य समाप्तिं यावत् प्रवर्तयितव्यः।' (ना० ल० र० को० पृ०—8) अज्ञातकर्तृकमपि बिन्दुलक्षणमिदं बिन्दोः परमावश्यकत्वं प्रमाणयति, तस्य च आसमाप्ति प्रयोगमुपदिशति। वस्तुतस्तु मूलवृत्तस्य कथाशानां योजनार्थं बिन्दुरपरिहार्यः। अविशिष्टास्वर्थप्रकृतिषु बीजमपि महत्त्वं भजते। कथावस्तुनोऽतश्च कथावस्थाया अपि तदेव निदानम्। पञ्च कार्यावस्थास्तत एव प्रसरन्ति। पताकाप्रकर्यौ पुनः प्रासङ्गिकवृत्तस्य भेदौ। एते च प्रत्यूहस्थापनेन मुख्यवृत्तस्योपादेयत्वमुत्कर्षं च साधयतः कार्यमन्तो वृत्तस्य।

नाट्यकारो वृत्तस्यैतत्तत्त्वपञ्चकं निरूपयेत् प्रयोजनानुसारं च तत्प्रयुञ्जीत। न हि सर्वा अर्थप्रकृतयस्तुल्यमावश्यकत्वं भजन्ते, तासां प्रयोज्यत्वे नाट्यकार एव प्रमाणम्। यथाह भरतः

'एतेषां यस्य येनार्थे यतश्च गुण इष्यते ।
प्रधानं तत्प्रकर्तव्यं गुणभूतान्यतः परम् ॥'

ना॰ शा॰ XXI. 28

सर्वैरेव नाट्यकारैरासु बीजबिन्दुकार्याणि वस्तुगत्या अवश्यमेव प्रयोज्यानि भवन्ति ।

बीजबिन्दुपताकाप्रकरीकार्य-लक्षणा अर्थ-प्रकृतयोऽङ्कविभक्तस्य वृत्तस्याखण्ड-रूपेण प्रतिपादने नाट्यकारस्य साहायकमाचरन्तीति प्रदर्शितम् । केचन प्रश्नाः पुनरपि नाट्यकारेण समाधेयाः शिष्यन्ते । क्षेत्रं संकुचितमिति नाट्यकारेण नायकसम्बन्धितं पूर्णं विवरणं रूपकेषु नैव प्रतिपादयितुं शक्यते, अतश्च तत्स-म्बन्धिन्यस्ता एव 'रञ्जका' घटनास्तेनोपादीयन्ते या नायकस्य जीवनकालं केवलमंश-मात्रेण व्याप्नुवन्ति । अस्मादेव नायकतदितरपात्राणां विषये सामाजिकानां बोध-सौकर्यार्थमावश्यकसूचनाः कथं निवेदनीया इति प्रश्नः समुदेति । न केवलं निवेदनमात्रमेव विचार्यमपि तु सर्वदैव नाट्यकारेण सर्वस्यैव प्रतिपाद्य-वस्तुनः सरसत्वरञ्जकत्वविषयेऽवहितेन भवितव्यम् । भवन्ति चानेकाः सूचनाः आवश्यका अरञ्जकाश्च । ईदृशे स्थले कथं ताः सूचनाः प्रकाश्या इत्यत्र शास्त्र-कारैर्मार्ग एकः कल्पितः । नाट्यदर्पणे एतदर्थं वृत्तस्वरूपं चतुर्धा विभक्तम्—

'सूच्यं प्रयोज्यमभ्यूह्यमुपेक्ष्यं तच्चतुर्विधम् ।'

ना॰ द॰ I

नाटकीयमिति निश्चितस्य वृत्तस्य सूच्यत्वादिविचारो नाट्यकृतावश्यं करणीयः ।

नाट्यदर्पणकर्तारावत्र रूपकेषु वृत्तप्रतिपादनविधिं सम्यक् प्रदर्शितवन्तौ । रामायणमहाभारताद्याकरग्रन्थेभ्यः सम्पूर्ण एव कथाभागो नाट्यकारेण नैवादेयः किन्तु त एव भागाः प्रयोगार्थं समादेया ये विच्छित्तिविशेषवत्त्वात्सामाजिकानां मनोरञ्जने समर्थाः । नाट्यदर्पणोक्तानां चतुर्णां विभागानां अभ्यूह्योपेक्ष्यौ वृत्त-भागौ नैव महत्त्वं भजेते । यथा कश्चिदमात्यो राज्ञाज्ञप्तो राज्यान्तरं समागच्छतीत्यत्र राजादेशप्रतिपादनेनैव कार्यं सिध्यति, अमात्यस्य गमनं नाट्यकारेण नैव भवति

प्रदर्शनीयम्। किन्त्वत्रापि नाट्यकारस्य कौशलपरीक्षा भवति। न कश्चिदपि महत्त्वपूर्णो व्यापारो नाट्यकारेणोपेक्ष्यः। तथाहि—उपर्युक्त एवामात्यस्य राज्यान्तरगमनव्यापारः सर्वथा नाट्ये प्रयोगार्हो भवेत् यद्यसौ रसनिष्पत्तेः सहायकः, परवर्तिघटनासु वा माधुर्यसमर्थकः स्यात्। राजादेशश्रवणानन्तरं सामाजिकैरनायासमभ्यूहितुं शक्यत्वादीदृशा व्यापारा अभ्यूह्याः। उपेक्ष्यभागोऽपि एवमेव, प्रयोगं नार्हति। यतो हि नाट्यदर्पणानुसारं—'उपेक्ष्यं तु जुगुप्सितम्'। जुगुप्सितस्य च प्रदर्शनं वैरस्याय।

एवं नाट्ये प्रयोज्यं वृत्तं सूच्यप्रयोज्यभागात्मकं शिष्यते। तत्रापि प्रयोज्यभागस्यैव मुख्यत्वं कल्पनीयम्। सूच्यप्रयोज्ये चैवं लक्षिते—'नीरसानुचितं सूच्यं प्रयोज्य तद्विपर्ययः'। (ना० द० I, 11) तत्रत्यं व्याख्यानं च—'नीरसमरञ्जकम्। अनुचितं सरसमप्यनर्हम्—आलिङ्गनचुम्बनादि, तत्सूच्यं विष्कम्भकादिभिर्ज्ञाप्यम्। तस्य नीरसानुचितस्य सूच्यस्य विपर्ययः सरसमुचितं च प्रयुज्यते वाचिकादिभिरभिनयैः सामाजिकानां साक्षादिव क्रियते इति प्रयोज्यम्।' (तत्रैव) अस्माच्च स्पष्टीभवति यन्मुख्यवृत्तमेव भवति प्रयोज्यम्। नायकसम्बन्धित्वे सति सारस्येनौचित्येन च प्रदर्शनयोग्यत्वं खलु मुख्यवृत्तस्य लक्षणम्। अतश्च रूपकेषु नायकस्यैव चेष्टादयो भवन्ति प्रदर्शनीयाः प्राधान्येन, सूच्यविषयाश्च नायकोद्देश्यपूरकत्वेन समायोज्यन्ते।

एवं हि स्पष्टमेतत्—नाट्यरचनार्थं विशिष्टवृत्तस्य निश्चयानन्तरं नाट्यकारेणैताः स्थितयः पर्यालोचनीयाः। प्रागेवासौ मुख्यं वृत्तं निश्चिनुयात् तत आवश्यकतानुसारं किमपि प्रासङ्गिकवृत्तं कल्पयेत्। उभयत्रैव तयोः प्रयोज्यत्वं, सरसत्वरञ्जकत्वे इत्यर्थः, तयोरुपादेयत्वे बीजम्। सरसत्वरञ्जकत्वसाम्ये स्थितेऽपि मुख्यवृत्ताद् गौणवृत्तमुपसर्जनीकृतस्वार्थत्वेन भिद्यते। गौणवृत्तनायकस्य भवत्येव स्वकीयं फलं किन्तु तदपि मुख्यनायकफलमङ्गत्वेनोपकरोति। मुख्यवृत्तं ततः सूच्यप्रयोज्यविभागदृष्ट्या विभावनीयम्। अत्रैव चान्यल्लक्षणीयम्। मूलकथायां नायकस्य रसस्य वा विरोधि किमप्यस्ति वा न वेति नाट्यकारः सावधानं निरूपयेत्। सति तादृशे किमपि नाट्यकारस्तत्परित्यजेद् वा तदन्यथा परिवर्तयेत्। अत्र शास्त्रकाराः नाट्यकृतां पूर्णं स्वातन्त्र्यं निर्दिशन्ति। तथा हि दशरूपके—

यत्तत्रानुचितं किञ्चिन्नायकस्य रसस्य वा ।
विरुद्धं तत्परित्याज्यमन्यथा वा प्रकल्पयेत् ॥ ( III, 24-5 )

साहित्यदर्पणे (VI, 50) तथैव प्रतिपादितम् । पुराणप्रसिद्धस्यापि वृत्त-स्यैतादृशमन्यथाप्रकल्पनं प्राचुर्येण दृश्यते रूपकेषु, प्रसिद्धतमं निदर्शनं पुनर्भव-भूतिना महावीरचरिते रामचन्द्रस्य चौर्यवधायशःपरिहाराय बालिन आततायि रूपेण प्रतिपादनम् ।

सूच्यप्रयोज्यभागावधिकृत्य दशरूपके दृश्यते--
द्वेधा विभागः कर्तव्यः सर्वस्यापीह वस्तुनः ।
सूच्यमेव भवेत्किञ्चिद् दृश्यश्रव्यमथापरम् ॥ ( I ,56;
तथाच भावप्रकाशनं, VII पृ॰ 214 )

स्पष्टमेव प्रतिभाति यदत्र दृश्यश्रव्यनाम्ना यो विभागः कथितः स एव नाट्य-दर्पणे 'प्रयोज्य' शब्देन निर्दिष्टः । यद्यप्यापातदृष्ट्या सूच्यं प्रयोज्यात् लघुतरं भाति तथापि वस्तुगत्या नाट्यकारस्य तदेव विशेषतो विचारणीयं भवति । यथा हि खलु सामाजिकाः प्रधानघटनाः ससन्दर्भं बोद्धुं प्रभवेयुस्तदर्थं स्थानकालपात्र-सम्बन्धिन्यः सर्वा आवश्यकसूचनाः प्रकाश्याः । एताश्च सूचना नावश्यं सरसाः किन्तु ताः प्रधानघटनानां द्वारीभूता अतश्चानुपेक्ष्याः । विरसा अप्युनपेक्षणीया एताः कथं प्रकाशनीया इति नाट्यकारस्यैषाः समस्या विकटा । समाधानार्थं तस्याः शास्त्रकाराः पुनर्मार्गप्रदर्शनं कुर्वन्ति । पुनः पुनराह भरतः—'बह्वाश्रयमप्यर्थं प्रवेशकैः संक्षिपेच्च सन्धिषु च ।' ( XX, 35 ) इति । वृत्तसंक्षेपार्थं चाव-लम्बनीयानामुपायानामवश्यम्भावित्वं बहुशो निर्दिशति च । भरतस्यैषा उक्तिर्ना-टकलक्षणरत्नकोशे एवं व्याख्याता--'आख्यानकं न सर्वमङ्के प्रणेतव्यम् । संक्षेपाङ्के दिवसकृते दिवसार्धकृते मासकृतं वर्षकृतं वा सकलमुपदर्शयितुमशक्यं संक्षेपार्थः प्रवेशकः कर्तव्यः । अतः प्रवेशकेन कथा संग्रहणं कार्य' मिति । ( पृ॰ 14-15 ) कथायाः संग्रहणार्थं, संक्षेपार्थमिति यावत्, भरतेन, बहव उपाया प्रदर्शिताः । एते चोपायाः सर्वैः शास्त्रकृद्भिः 'अर्थोपक्षेपक' इति वर्णिताः । दशरूपके अर्थोपक्षेपकलक्षणम्--

अर्थोपक्षेपकैः सूच्यं पञ्चभिः प्रतिपादयेत् ।
विष्कम्भचूलिकाङ्कास्याङ्कावतारप्रवेशकैः ॥ (I, 58)

एतैश्च पञ्चार्थोपक्षेपकैः नाट्यकारः सूच्यं वस्तु प्रतिपादयति ।

पञ्चार्थप्रकृतीनां विस्तरेण विवेचनात्पूर्वमर्थोपक्षेपकाणां स्वरूपं कथं चैते नाट्यकारस्य साहाय्यमाचरन्तीति परीक्षणमुचितम् ।

आदित एव सरसं चेद्वस्तु तर्हि अर्थसंक्षेपार्थं सूचकदृश्यं नैव भवत्यपेक्षितं यथाह धनञ्जयः—

यदा तु सरसं वस्तु मूलादेव प्रवर्तते ।
आदावेव तदाङ्कः स्यादामुखाक्षेपसंश्रयः । (द० रू० III, 29-30)

ईदृशस्थले सूत्रधारनिर्गमसमनन्तरमेव प्रधानघटनाः प्रदर्श्यन्ते । अन्यादृशस्थले, यत्र प्रधानघटनाप्रदर्शनार्थं काचिद्भूमिका अपेक्ष्यते तत्रेत्यर्थः, विष्कम्भकप्रवेशकयोरन्यतरो नाट्यकृता प्रयोज्यः । तथा च दशरूपकम्—

अपेक्षितं परित्यज्य नीरसं वस्तुविस्तरम् ।
यदा सन्दर्शयेच्छेषं कुर्याद्विष्कम्भकं तदा ॥ (III, 28-29)।

पञ्चानामेतेषामन्योन्यं तारतम्यं नाट्यदर्पणे दृश्यते । तत्र विष्कम्भकप्रवेशकअङ्कास्य-चूलिका-अङ्कावतारान् क्रमेणोल्लिख्योक्तम्—

'आद्यौ सूच्ये बहावन्ये क्रमादल्पे तरे तमे ।' इति । व्याख्यातं च—'अन्ये अङ्कास्यचूलिकाङ्कावताराः । बहौ बहुकाले च सूच्ये आद्यौ विष्कम्भकप्रवेशकौ । अल्पे अल्पकाले च अङ्कास्यम्, अल्पतरे अल्पतरकाले च चूलिका, अल्पतमकाले च अङ्कावतार इति ।' (ना० द० I, 17) एतन्मतानुसारं बहुकालव्यापिनि सूच्ये विष्कम्भक-प्रवेशकाभ्यां वृत्तसंग्रहणं कार्यम्, अङ्कास्यादित्रयाभ्यां च क्रमेणाल्पाल्पतराल्पतमकालव्यापिनां वृत्तानाम् । अर्थोपक्षेपकपञ्चकस्य प्रयोगविषयेऽन्यत्रैवं विचारो न दृश्यते । नाट्यदर्पणकर्त्तारौ सूक्ष्मेक्षिकया एतेषां प्रयोगविधिं दर्शयन्ताववश्यमेव स्तुत्यौ ।

विष्कम्भकप्रवेशकौ—

अर्थोपक्षेपकेषु विष्कम्भकप्रवेशकावितरत्रयापेक्षया अधिकतरं प्रयुज्यमानत्वान्मुख्यत्वं भजेते। विष्कम्भकलक्षणमाह भरतः—

'मध्यमपुरुषनियोज्यो नाटकमुखसन्धिवस्तुसञ्चारः।
विष्कम्भकस्तु संस्कृतपुरोहितामात्यकञ्चुकिभिः॥
शुद्धः संकीर्णो वा द्विविधो विष्कम्भकस्तु ज्ञेयः।
मध्यमपात्रैः शुद्धः संकीर्णो नीचमध्यमैः कृतः॥'

(ना० शा० XXI, 109-10)।

प्रयुक्तपात्राणां प्रकृत्यनुसारं शुद्धसंकीर्णभेदवतो विष्कम्भकस्य लक्षणमेतत् सर्वैरुत्तरकालिकाचार्यैः स्वीकृतम्। नीचमध्यमपात्रप्रयोज्यत्वादेतयोः सूच्यसूचनार्थमुत्तमपात्राणि नैव प्रयुज्यन्ते, भाषायाश्च संकेतः कृतः। मध्यमपात्राणां संस्कृतेन सहात्र नीचपात्राणां प्राकृतमपि दृश्यते। तत्सम्बन्धिदृश्येषु पात्राणामाधिक्यं च वर्जनीयं भवति।

प्रवेशकोऽपि भरतेन विस्तरशो लक्षितः। धनञ्जयकृते लक्षणेऽस्य पूर्णं स्वरूपं स्फुटं दृश्यते, तच्च—

'तद्वदेवानुदात्तोक्त्या नीचपात्रप्रयोजितः।
प्रवेशोऽङ्कद्वयस्यान्तः शेषार्थस्योपसूचकः॥

(द० रू० I, 60-61)

विष्कम्भकप्रवेशकयोः साध्य-स्वरूपसाम्यं स्पष्टम्। अनयोरन्तरं केवलं भाषागतं पात्रगतं च। प्रवेशके संस्कृतं न प्रयुज्यते पात्राणि च नीचकोटिकानि। किन्त्वस्ति किञ्चिन्मतं यदनुसारं प्रवेशकेऽपि मध्यमपात्राणां संस्कृतस्य च प्रयोगो युज्यते। भावप्रकाशने शारदातनयः उल्लिखति—

'विटतापसवृद्धाद्यैर्मुनिकञ्चुकिभिस्तथा।
प्रवेशकमपीच्छन्ति सन्तः संस्कृतभाषिभिः॥'

(VII., I 9-10)

वस्तुतश्च नाटकेषु संस्कृतभाषानिबद्धाः प्रवेशका अपि केचन दृश्यन्ते।

एतयोरन्यदन्तरं प्रवेशकस्य प्रथमाङ्कादौ प्रयोगनिषेधः। अस्मिन् विषये भरतः किमपि स्पष्टं न निर्दिशति। नाट्यदर्पणधृतात् कोहलमताज्ज्ञायते यदसौ प्रथमाङ्कादावेव विष्कम्भकप्रयोगं वाञ्छति। ('कोहलः पुनरेतं प्रथमाङ्कादावेवेच्छति'। ना० द० I पृ० 38) एवं च कोहलः प्रयोगस्थानमाश्रित्यानयोर्भेदं दर्शयति—प्रथमाङ्कादौ विष्कम्भकः, इतराङ्कादौ प्रवेशक इति।

उभयोः प्रयोगविषये प्रायः सर्वसम्मतो नियमो धनञ्जयेन कल्पितः। तन्मते नाटकप्रकरणयोः सर्वत्रैव विष्कम्भकः प्रयोगमर्हति प्रवेशकस्तु प्रथमाङ्कादनन्तरम्।

सर्वाणि चैतान्यर्थोपक्षेपकाख्यानि सूचकदृश्यानि नाटक-नाटिकाप्रकरणभेदेष्वेव दृश्यन्ते। एतेषु वृत्तस्य विस्तृतत्वाज्जटिलत्वाच्च बोधसौकर्यार्थं वृत्तसंग्रहणं भवत्यावश्यकम्। नाट्यदर्पणकृदनुसारं रूपकस्यान्यभेदेषु वृत्तस्य संक्षिप्तत्वात्तत्प्रतिपादनार्थं प्रयुक्तेऽर्थोपक्षेपके घटनाप्रवाहः सबाधः स्यात्। अतोऽन्यभेदेषु नैते दृश्यन्ते।

## चूलिका-अङ्कास्य-अङ्कावताराः

एते त्रयोऽप्यर्थोपक्षेपकाः। क्वचित् चूलिका चूलेति अङ्कास्यं चाङ्कमुखमिति निर्दिष्टे। विष्कम्भकप्रवेशकवदेतेऽपि नाट्यकारस्य सूच्यसूचने सहायकाः।

तत्र चूलिका। भरतकृतं चूलिकालक्षणं सर्वे अनुहरन्ति।

तच्च—

> 'अन्तर्जवनिकासंस्थैरुत्तमाधममध्यमैः।
> अर्थोपक्षेपणं यत्र क्रियते सा हि चूलिका॥'

(ना० शा० XXI, 111;

तथाच नाटकलक्षणरत्नकोशः पृ० 18; द० रू० I, 61, ना० द० I, 26 सा० द० VI, 38; भावप्रकाशनम् VII, 277)

एवं हि जवनिकान्तः स्थितेन पात्रेण सामाजिकेभ्यो निवेद्यमाना सूचना चूलिका। एतदर्थमादीयमानानि पात्राणि सर्वकोटिगतानि भवितुमर्हन्ति। प्रायशश्चूलिकया पात्रप्रवेशः सूच्यते। यथा दृश्यते भवभूतेरुत्तररामचरिते। तत्र द्वितीयाङ्कादौ जवनिकान्तरालात् स्वागतं तपोधनाया इति कश्चित्स्वरः श्रूयते, समनन्तरं च कस्याश्चित्तपस्विन्याः प्रवेशो भवति। नवीनपात्रस्यैवं परिचयप्रदानमेव चूलिकायाः साध्यम्।

जवनिकान्तरालवर्तिभिः सूचनं स्वभावत एव सामाजिकानामरुचिं भजते, अतश्च पूर्वोक्तमल्पतरकालव्यापिवृत्तसूचनार्थं चूलिका प्रयुज्यत इति नाट्यदर्पणमतं सुसङ्गतम् चूलिका च सामान्येन शास्त्रकृतां 'असूचितस्य पात्रस्य प्रवेशो नैव विद्यते' इति सिद्धान्तानुसरणार्थं नाट्यकृद्भिः प्रयुज्यते। (सिद्धान्तमेनं सागरनन्दी स्वकीये नाटकलक्षणरत्नकोशे समुल्लिखितवान्—पृ॰ 15)

एवं च चूलिका प्रायशः सामान्यपात्रैः क्वचित्प्रधानपात्रैरपि सूच्यार्थसूचनस्य कश्चिदुपायः॥

**अङ्कास्यम्—**

भरतेनास्यार्थोपक्षेपकस्य लक्षणमुक्तम्—

विश्लिष्टमुखमङ्कस्य स्त्रिया वा पुरुषेण वा।<br>
यत्र संक्षिप्यते पूर्वं तदङ्कमुखमिष्यते॥

ना॰ शा॰ XXI, 16

एवं च परिवर्तिनोऽङ्कस्य भूमिकारूपं यत् किञ्चित्प्रस्तूयते तदङ्कमुखमङ्कास्यं वा। अङ्कान्ते काचित्स्त्री वा पुरुषो वा रङ्गं प्रविश्य यद्वक्ति तद्वशादत्र उत्तराङ्कार्थः सूच्यते, अङ्कयोश्चान्योन्यसम्बन्धः प्रतीयते। अस्योदाहरणं भवभूतिरचिताद् वीरचरिताद् दशरूपके संगृहीतम्। तत्र द्वितीयाङ्कान्ते सुमन्त्रः प्रविशति। स च जनकशतानन्दपरशुरामान् वसिष्ठविश्वामित्रौ द्रष्टुमाह, ते च तथा कुर्वन्ति। एवं तत्रोत्तराङ्कः एभिरेव पात्रैरारभ्यते। अत्रापि सूच्यं वस्तु स्वल्पं भवति। चूलिकावदेतदपि 'असूचितस्य पात्रस्य प्रवेशो नैवे'ति सिद्धान्तपालने नाट्यकारस्योपकरोति।

नाटकलक्षणरत्नकोशेऽङ्कास्यलक्षणमन्यदेव। सागरनन्दी लक्षणमाह—'सूत्रणं सकलाङ्कानां ज्ञेयमङ्कमुखं बुधै' रिति। व्याख्यातं च तेन—येनैकत्र सकलानामङ्कानां सूत्रणं क्रियते तदङ्कमुखं यथा कामन्दक्यवलोकितयोः' इति। (पृ० १७) तन्मतेन मालतीमाधवस्य प्रथमाङ्के कामन्दक्यवलोकितयोः संलापोऽङ्कमुखस्य निदर्शनं यतो हि तत्र नायक-कथावस्तुसम्बन्धिन्यः सर्वा सूचना लभ्यन्ते। विश्वनाथोऽपि एतन्मतं स्वीकरोति। द्वितीयलक्षणानुसारं अङ्कमुखं सर्वेषां उत्तराङ्कार्थानां समासेन सूचकं भवति। नाट्यदर्पणे पुनः प्रथममेव लक्षणं दृश्यते द्वितीयस्यो-ल्लेखो नास्ति।

अङ्कावतारः

अर्थोपक्षेपकेषु अङ्कावतारस्तावत्पञ्चमः। सूच्यसूचनस्यैष उपायो विशेषतो मनोहारी संक्षिप्तेनैकेन दृश्येन सूच्यघटनानामुद्भेदोऽनेन क्रियते। तद्दृश्यं च मूलकथया सम्बन्धरहितमपि उत्ताराङ्कार्थं सूचयति। भरतकृतमस्य लक्षणम्—

'अंकान्तरेऽथवाङ्के निपतति यस्मात् प्रयोगमासाद्य।
बीजार्थयुक्तियुक्तो विज्ञेयोऽङ्कावतारोऽसौ॥ (ना० शा० XXI, 115)

अस्माल्लक्षणात् स्पष्टं भवति यदङ्कावतारो नाटकीयवृत्तस्य बीजेन सम्बद्धो भवति, अंकान्ते अङ्कमध्ये वासौ स्थाप्यते चेति। इतरार्थोपक्षेपकवदस्यापि सूच्यवस्तुसूचनमेव लक्ष्यम्।

धनञ्जयकृतं लक्षणं भिन्नमेव। तदनुसारं अङ्कास्याङ्कावतारयोः: स्पष्टो भेदो न प्रतीयते। तल्लक्षणं तु—

'अङ्कावतारस्त्वङ्कान्ते पातोऽङ्कस्याविभागतः' इति। (द० रू० I.62)

अस्य टीकानुसारं यत्र पूर्वाङ्कपात्रैरेवोत्तराङ्कः प्रारभ्यते तत्राङ्कावतारो भवति। निदर्शनं च मालविकाग्निमित्रनाटकाद् गृहीतम्। तत्र प्रथमाङ्कान्ते यदा सर्वे संगीतस्पर्धां द्रष्टुं प्रेक्षागृहं गन्तुमुद्यतास्तदा विदूषकः कथयति मृदङ्ग-शब्द एव तत्र गन्तुं योग्यं कालं सूचयिष्यतीति। ततश्च प्रथमाङ्कस्य समाप्तिर्भवति, मृदङ्ग-शब्देन सह च द्वितीयाङ्कः प्रारभ्यते। प्रथमाङ्कस्थपात्रैरेवमत्र द्वितीयाङ्कः प्रारभ्यते,

अतश्चैतदङ्कावतारोदाहरणम् । किन्त्वेतदनायासमेवाङ्कास्यस्यापि भवितुमर्हत्युदाहरणम् । वस्तुतस्तु वीरचरिताद् अङ्कास्यनिदर्शनेन मालविकाग्निमित्रादङ्कावतारनिदर्शनमभिन्नमिव भाति ।

तथापि, विश्वनाथं विहाय सर्वे नाट्यशास्त्रिणो धनञ्जयमनुसरन्ति । नाट्यदर्पणे कस्यचिन्मतान्तरस्य समुल्लेखमात्रमुपलभ्यते, तच्च साहित्यदर्पणे स्पष्टं प्रतिपादितम् । विश्वनाथसम्मतमङ्कावतारलक्षणम् —

अङ्कान्ते सूचितः पात्रैस्तदङ्कस्याविभागतः ।
यत्राङ्कोऽवतरत्येषोऽङ्कावतार इति स्मृतः ॥

सा०द० VI, 58-59

तेन चासौ अभिज्ञानशाकुन्तलस्य पञ्चमाङ्कान्तस्थेन धीवरव्यतिकरेण निर्दिशितः । अत्रार्थोपक्षेपकस्य नवीनमेकं स्वरूपं दृश्यते । नायं विष्कम्भकप्रवेशकादिवद् वृत्तवर्तिष्यमाणघटनामात्रं सूचयति । अत्र वर्णितधीवरेणाङ्गुरीयकसम्प्राप्तिः मूलकथया नैव सम्बन्धिता । यानि च पात्राण्यत्र प्रयुक्तानि न तैरङ्गुरीयकप्राप्तिमहत्त्वं ज्ञायते । ततश्चासौ विष्कम्भकयोः स्वरूपत एव भिद्यते । अस्मिन्नुदाहरणे भरतोक्त 'प्रयोगमासाद्य' इति वक्तव्यमपि संगच्छते । अस्य दृश्यस्य प्रयोगयोग्यत्वमस्त्येव । स्वसम्पूर्णं दृश्यमिदं पुनर्गौणरूपेण शकुन्तलाप्राप्तिरूपं बीजं पुरतः स्थापयति, समनन्तरं च शकुन्तलायै स्वकीयं रूढमाचरणं सखेदं विमृशन् नायको दुष्यन्तः प्रदर्शितः ।

एवमङ्कावतारविषये मतद्वयं दृश्यते । द्वितीयं साहित्यदर्पणसम्मतं मतंअधिकतरं भारतीयं प्रतिभाति । एकेनैतदुदाहरणेन चायं अर्थोपक्षेपकेषु निश्चयमेव सरसतमः । नाट्यदर्पणानुसारमीदृश अर्थोपक्षेपको गर्भाङ्कनाम्नापि व्यपदिश्यते ।

सूच्यसूचनायैते पञ्च अर्थोपक्षेपका नाट्यकारस्य सहायका इत्युक्तम् । प्रश्नोऽयमत्र भवति किमेतैः पञ्चभिरर्थस्योपक्षेपः क्रियते वा न वेति । अस्योत्तरमेवं कल्प्यते ।

प्रभूतानां वृत्तघटनानां भाविघटनानां वा सूचनेन विष्कम्भकप्रवेशकाव-वश्यमेवार्थोपक्षेपकौ। पूर्ववर्णनानुसारं, अङ्कावतारोऽपि विशिष्टसरण्या बीजं व्यञ्जयति तद्वशाच्च कथांशानां योजनं संसाध्यते। इतरे द्वे—अङ्कास्यचूलिकेऽपि रङ्गे नवीनपात्रप्रवेशे नाट्यकृतः साहाय्यमाचरतः, यद्यप्याभ्य वृत्तघटनानां तादृशं सूचनं न भवति। वीरचरितस्य चतुर्थेऽङ्के चूलिकायां प्रयोगो दृश्यते। तत्र नेपथ्यपात्रै रामचन्द्रेण परशुरामविजयः सूचितः। एतादृश्यः सूचनाः स्पष्टत एवारञ्जका अतश्च विरलतर एवास्याः प्रयोगो नाट्यकारैः कृतः। साम्यातिशया-दनयोर्वैशिष्ट्यं न तथा स्पष्टं न वा प्रयोगेण नाट्यकृद्भिरेतयोर्वैशिष्ट्यं सुष्ठु प्रतिपादितम् ॥

——

# सद्गुरुस्तवनम्

रामदासकृतदासबोधे प्रथमदशके चतुर्थसमासस्य भावानुवादः

डा० वनमाला भवालकर

सद्गुरो स्तोतुकामस्ते स्वरूपं मन्दधीरहम् ।
मायाया अगतिर्यत्र केन तद्गुण-वर्णनम् ॥ १ ॥
नेति नेतीति वाग्यत्र श्रुतीनामपि कुण्ठिता ।
मूढस्तत्र तु वाचालो विवेकोऽयं कुतो मम ॥ २ ॥
अविज्ञातं दुरापं स्वं नमस्कुर्वे तु दूरतः ।
मोहान्धं पारय त्राहि मां गुरो शरणागतम् ॥ ३ ॥
स्तुवे मायाबलेनेति मनो विश्वसितं दृढम् ।
मायापि लज्जते यावत् करणीयं किमतः परम् ॥ ४ ॥
स्तवने ते दुराशोऽहं माययाऽपि च वञ्चितः ।
यथासि त्वं तथैवेधि त्वमेव शरणं मम ॥ ५ ॥
मनुते मनसा यन्न स्वरूपं परमात्मनः ।
सगुणप्रतिमा तस्य प्राप्तेः साधनमिष्यते ॥ ६ ॥
मायया कल्पितं रूपं वर्ण्यते ते गुरो यदा ।
यथा भावस्तथा देव इति स्तौमि च भावतः ॥ ७ ॥
नमस्ते सद्गुरो स्वामिन् पुरुषोत्तम मोक्षद ।
विश्वंभरस्त्वमेवासि विश्वबीजं चिरंतनम् ॥ ८ ॥
मायामोहभयापास्तिस्तवाभयंकरः करः ।
यथादित्यप्रकाशोऽस्ति तमोराशिविदारकः ॥ ९ ॥
न सूर्येणोपमा ते वा दिवा तद्वारितं तमः ।
विश्वव्यापि पुनर्नक्तं, प्रसादस्ते निरंतरः ॥ १० ॥

स्पर्शमणेः प्रभावेण सुवर्णीभूतमायसम् ।
न मणेर्गुणमादत्ते हिरण्मयीकरणे पुनः ॥ ११ ॥
पादस्पर्शेन शिष्यस्तु गुरोस्तद्गुणतां भजन् ।
तद्रूपश्चापरार्थेऽपि महतीयं परम्परा ॥ १२ ॥
गंगासंगमपूता या गङ्गात्वं प्रापिता सरित् ।
तस्यास्तु लाघवं पूर्वं गङ्गया न प्रमार्जितम् ॥ १३ ॥
वरं शिष्यस्तु यो भाति गुरोः संसर्गपावितः ।
आमूलाग्रं गुरूभूतः सत्वरं युगपत्तथा ॥ १४ ॥
क्षारस्तु सागरः क्षीणः कल्पान्ते क्षीरसागरः ।
अमृतत्त्वाक्षयत्वाभ्यां कथं तौ गुरुणा समौ ॥ १५ ॥
उन्नतस्तु गिरिर्मेरुः कठोरोऽतिजडस्तथा ।
गौरवेऽपि गुरुर्नित्यं चिद्रूपः करुणामृदुः ॥ १६ ॥
गगनं निर्गुणं गौणं महाभूतमशाश्वतम् ।
सगुणनिर्गुणातीतो गगनादधिको गुरुः ॥ १७ ॥
वसुन्धरा क्षमा धीरा प्रलये साऽपि न स्थिरा ।
कथं क्षान्त्या च धैर्येण गुरुतुल्या मता भवेत् ॥ १८ ॥
गुरुर्ज्ञानप्रकाशेन नैव सूर्यसमप्रभः ।
अमर्यादं गुरोर्ज्ञानं सूर्यतेजस्तु सीमितम् ॥ १९ ॥
शेषेणाप्युपमा नास्ति भारवाही स केवलम् ।
कुत्राऽस्ति गुरवे भारः परेषां भारमोचकः ॥ २० ॥
अमृतेनामराणां किं सत्यं दूरीकृतं भयम् ।
भयातीतोऽमरः शिष्यो गुरुकृपामृतेन तु ॥ २१ ॥
कल्पवृक्षः कथं प्रार्थ्यः कल्पितेच्छाप्रदायकः ।
ददाति कल्पनातीतं निर्विकल्पपदं गुरुः ॥ २२ ॥
चिन्तामणिः किमर्थोऽयं कास्ति चिन्ता गुरौ स्थिते ।
निष्कामत्वप्रतीकेऽस्मिन् कामधेन्वा क्रियेत किम् ॥ २३ ॥

नाशवच्चञ्चला लक्ष्मीर्मोक्षलक्ष्मीः स्थिरा गुरौ ।
स्वर्गमिन्द्रपदं नैव गुरोः कृपा तु शाश्वती ॥ २४ ॥
ब्रह्महरिहरादीनां किमर्थं पदमर्थ्यते ।
सद्गुरोः पदमेकान्तमविनाशि सुखाय च ॥ २५ ॥
अनित्या निखिला सृष्टिः पाञ्चभौतिक-क्रीडनम् ।
कथं तत्रोपमानं स्याद् यदि वर्ण्येत सद्गुरुः ॥ २६ ॥
नेति नेतीति भाव्यन्ते स्वांतर्निष्ठेन यद्गुणाः ।
अवर्ण्यो वागतीतो यस्तस्मै सद्गुरवे नमः ॥ २७ ॥

---

# संस्कृतपत्रकारिता

रामगोपालमिश्रः

( १९२०-१९३० )

**संस्कृतसाकेतः**

संस्कृतभाषामयं साप्ताहिकमेतत्पत्रं १९२० ई० तमे वर्षे धार्मिकाध्यात्मिक-साकेतविद्यालयान्तर्गत-अखिलभारतीयविद्वत्समितेः मुखपत्ररूपेण साकेतनाम्ना प्रकाशितम्। पत्रमिदमधुनापि नियमतः प्रकाश्यते तथापि पाक्षिकरीत्या प्रचलति। पत्रस्यास्याद्यसम्पादकः ब्रह्मदेव शर्ममहोदय आसीत्। स पत्रनिमित्तं पर्यटनमपि कृतवान्। तेन महाभागेन रमेश-आर्ट-मुद्रणालये मुद्रण-व्यवस्था कृता। विद्वान-यमखिलभारतीयसमितेरध्यक्ष आसीत्। मरणकालेऽपि अयं महाभागः 'राधेश्याम' इति भूमौ लिखन् शरीरं पातयामास।

ब्रह्मदेव शास्त्रिमहोदयस्य ( १९१७-१९५८ ) सम्पादन-कर्मणि पत्रस्य महती उन्नतिः दरीदृश्यते। पत्रेऽस्मिन् लघुकथाः, बालानां लेखाः बालानां कृते वा लेखाः तथा च लघुकवितादयः प्रकाश्यन्ते। साम्प्रतं तामेव सरणीमवलम्ब्य सम्पादकसंघेन निरन्तरमस्मिन्पत्रे रचनानां वैविध्यं निर्वाहितम्। हास्यकथानां प्रका-शनं क्रियते। गीताजयन्तीत्यादिधार्मिकमहोत्सवानां सूचना तेषां विषये गभीरार्थ-विवेचनं गीतादयश्च प्रकाश्यन्ते। यत्र कुत्रापि हिन्दीभाषाऽपि स्थानमधुना लभते। सारगर्भितसंक्षिप्तसमाचाराः सूच्यन्ते। 'सूक्तिसुधा' सर्वदा निस्सरति। संस्कृतं मृतभाषा नास्ति' इत्यस्मिन्विषये बहुवारं निबन्धाः विदुषां भाषणानि च प्रकाशि-तानि। 'प्रलपन्तु नामेदानीं केऽपि कूपमण्डूका निधनं गतेति भगवती देववाणी, अमरा या वाणी सा कथमपि न मृता अपितु मरणधर्मरहिता दिनानुदिनं प्रोल्लसति संस्कृतभाषा गीर्वाणवाणी। ये निरर्थकं प्रलपन्ति 'संस्कृतं मृतभाषा' तेषां कथन-मेवास्त्याश्चर्यकरमिति। 'संस्कृत शिक्षाप्रणाली' इति विषयमवलंब्य निबन्धाः

प्रकाश्यन्ते। चीनभारतयोः सीमाविवादः सम्प्रति विश्वस्य एका समस्यास्ति। अत एव तद्विषयं प्रति यस्मिन्पत्रे कवितानिबन्धादयश्च प्रकाशिताः। नित्य-नैमित्तिककार्याणां विवेचनं भवति। 'विज्ञानचमत्काराः' विज्ञान-संसारः'' संस्कृतस्य दयनीयावस्था' संस्कृतभाषाप्रचारणे अस्माकं कर्तव्यादीनां विवेचनं क्रियते।

संस्कृतसाकेतपत्रं प्रादुर्भावकालादारभ्याधुनापि संस्कृतभाषायाः प्रचारं करोति। 'अस्योत्थानं प्रतिगृहं प्रतिजनं भवतु' इति उद्दिश्य निरन्तरमग्रे प्रचलिष्यति प्रमुखं लक्ष्यमस्य 'संस्कृतं राष्ट्रभाषा भवेदिति। भारतवर्षे संस्कृतभाषायाः प्रचारः भवतु, समाजे वैदिकधर्मस्य पुनरुत्थानस्य यत्नो विधेयः'' इत्यस्य उद्देश्यं वर्तते। सुख-शान्त्यर्थं मानवजीवनमस्ति तथा च तयोरुपलब्धिः संस्कृतभाषाप्रचारेणैव कर्तव्या।

समाचारप्रधानं धार्मिकं पत्रमेतत्। सामयिक-समाचाराः, राजनीतिविषयाश्च प्रमुखपृष्ठे एव विशेषतः स्थानं लभन्ते। स्वागतसमारोहः वैदेशिकानां गमना-गमनं च प्रकाश्यते। यदा विशेषसमारोहावसरे पत्रमिदं न प्रकाश्यते, तदा तस्य सूचना पूर्वाङ्के प्रदीयते। धार्मिकायोजनानां सूचना, महोत्सवानां तिथिः वा प्रकाश्यते। महोत्सवानां विषये गीतादयः स्फुटरचनाश्च प्रकाश्यन्ते। रामायणस्य प्रकाशनं सततं भवति तथैव पुराणान्तर्गतानां महाभारतादीनां च कथाः साररूपेण प्रकाश्यन्ते तेन बालकानां ज्ञानवर्धनमप्रयासेन भवति—इति पत्रस्य वैशिष्ट्यम्।

पत्रस्यास्य भाषा सामान्या सरला च। मुद्रणं साधारणमेव। विज्ञापनं दीयते। २५ न० पै० प्रत्यङ्कस्य मूल्यमस्ति। संस्कृत-साकेतकार्यालयः अयोध्या इति प्राप्तिस्थानमस्ति। पं० रूपनारायण मिश्रः प्रधानसंपादकस्तथा सूर्यनारायण मिश्रः प्रकाशकोऽस्ति। शा० नो० गर्दे (नागपुर)—गोपीकान्त झा—अनन्त-गोविन्द उपाध्याय—गणेशरामादीनां कथा-प्रहसननिबन्धानां प्रकाशनं दृश्यते। सम्पादकीये टिप्पणे बहुविषयाः स्थानं लभन्ते। अतः—

जयन्तु साकेतवचः सुधाश्रियो<br>
जयन्तु साकेत - निकेतनश्रियः।<br>
तमोटवीपार - विहारशालिनां<br>
जयन्तु साकेतमुपेत्यसद्गुणाः॥

## सुप्रभातम्

वाराणसीतः १९२३ ई० तमे वर्षे 'सुप्रभातं' मासिकं पत्रं प्रकाशितम्। पत्रमिदमखिल-भारतवर्षीय-साहित्य-सम्मेलनस्य मासिकं-मुखपत्रमासीत्। श्री केदारनाथ शर्मा सारस्वतः सम्पादक आसीत्। एतदधिकृत्य म० म० नारायण-शास्त्री खिस्ते महोदयेन लिखितम्—

अथ नव्यैः प्रभूतोत्साहैर्विपश्चित्प्रवरैः प्रवर्तितस्य संस्कृतसाहित्यसमाजस्य मुखपत्रात्मना प्रचलितं 'सुप्रभातं' नाम संस्कृतमासिकपत्रं कियन्तिचिद्वर्षाणि सुललितेन लेखजालेन विनोदयच्चेतो रसिकानां शोभनायतिसम्भावनां जनयति स्म चेतसि। वर्तमानकालानुरूपां सर्वतोमुखीं ख्यातिं कामयमानैस्तदधिकारिभिः प्राच्यपथप्रदूषणैर्जनतायां जागरायां जनितायामपि साहाय्यविरहान्मध्ये कश्चित्कालं विश्रान्तिराश्रिता सुप्रभातेन। प्रभूतोत्साहस्तदीय सम्पादको नूनमसङ्ख्याम् धन्य-वादानर्हति यत्तेन तथाभूतेऽप्यवस्थान्तरे पयत्नातिरेकैर्धनिकेभ्यः किमपि साहाय्य-मासाद्य सम्प्रति पाक्षिकं सुप्रभातं प्रचाल्यते[१] इति।

पत्रमिदं १९३४ ई० खिस्ते पाक्षिकमभवत् तथापि ग्राहकसंख्यानामभिवृद्धिः यथेष्टं नाभवत्। समर्थाः प्रार्थिता अपि न तदर्थं प्रार्थनानुसारमाचरन्ति। ये केचित्स्वल्पा एवानुग्राहका भवन्ति तेऽपि आदौ देयत्वेन घोषितमपि सामान्यं वार्षिकमूल्यं न समये प्रेषयन्ति। बहवो हि मध्य एवाऽनुग्राहकतां परित्यजन्ति। कतिपयमहानुभावास्तु वर्षान्तं यावत् सर्वा अपि संख्याः निःशङ्कमङ्गीकृत्य, मूल्य-प्रेषणाय मुहुर्मुहुः कृतं प्रार्थनाशतमपि अगणयित्वा, अन्ते विषयतया वी० पी० द्वारा प्रेषितामन्तिमां संख्यामविनिरनुरोधं परावर्तयन्ति। गच्छतु लाभकथा, प्रापणव्ययोऽपि निजकोषागारतः प्रत्युत देयो भवतीति[२] त्वासीत् सामान्यदशा ग्राहकाणाम्। याः पत्र-पत्रिकाः तस्मिन्काले प्रचलिताः तास्तु ग्राहकसाहाय्ये-नैव चिरं प्रचलिताः।

---

१. अमरभारती १।१.२

२. संस्कृतरत्नाकर ८।१

वार्षिकं सुप्रभातस्यमूल्यमासीत् मुद्राद्वयम् । सुप्रभातस्य प्रचारः प्रायः सर्वेष्वपि प्रान्तेषु आसीत् । मद्रासप्रान्ते, पञ्जाबप्रान्ते, गुर्जरप्रान्ते च विशेषतोऽभवत् । युक्तप्रान्ते, बिहारप्रान्ते तु एकमात्रमेवेदं संस्कृत-पत्रम् । भारताद्बहिः लङ्का-द्वीपे शर्मण्यदेशे ( जर्मनी ) अस्य ग्राहकाः सन्ति"[1] इत्यनेन ज्ञायते यत्पत्रस्य प्रचारः भारताद्बहिरप्यभवत् । "सम्पादकः, सुप्रभातम्, टेढ़ीनीम काशी' इत्यासीत्पत्र-व्यवहारसंकेतः । विज्ञापनमपि प्रकाशितम् । संस्कृतविषयकं समाचारप्रधानं विज्ञापनं विनामूल्यं प्रकाश्यते स्म ।

पत्रेऽस्मिन् मधुसूदनशर्मा अग्निहोत्री-विद्यावाचस्पति श्रीशालग्रामशास्त्रि—गोपालशास्त्रि दर्शनकेसरी—डा॰ मंगलदेवशास्त्रि—अमरनाथशास्त्रि—अम्बिकादत्त व्यास—जगन्नाथ शास्त्रि होशिङ्ग—कवितार्किक चक्रवर्ती महादेव शास्त्रि-म॰ म॰ नारायणशास्त्रि खिस्ते—कविहरिहरनाथशास्त्रि सीताराम झा—इत्यादिकवि-निबन्धकारपादानां कृतयः प्रकाशिताः । म॰ म॰ नारायणशास्त्रि खिस्ते महोदयस्य 'कमा-कमलिनी' आख्यायिका अस्मिन्नेव पत्रे प्रकाशिता[2] । मथुरा-नाथ शास्त्रि दीक्षितमहाभागस्य 'भारतविजयम्' नाम नाटकं प्रकाशितम्[3] । उमा-पतिद्विवेदि महोदयस्य 'गंगाशिखरिणी' नारायण पतेः 'काशीशतकमिति बहवः काव्य-नाटक-चम्पू-गीतादयः प्रकाशिताः तेषामाकलनमत्यावश्यकमिति प्रतिभाति । समस्यापूर्तयः प्रकाश्यन्तेस्म ।

यदा कदा सुप्रभातं न प्रकाशितम् । पत्रमिदं प्रभावशालि ज्ञान-विज्ञान-संयुक्तम् परमोपयुक्तमासीत् । केवलमेकया मुद्रयापि सुप्रभात-सदृशस्य, सौष्ठव-सम्पन्नस्य, सुन्दरतरस्य पत्रस्य, कदापि बहु-वितरणं न पारितम् । केवलं संस्कृत-प्रचिचारयिषैव सारस्वतमहाभागेन पत्रस्यास्य मूल्यं न्यूनतमं कृतम् । पत्रस्य भाषा सामान्या दृश्यते । सम्पादकीयलेखेषु सम्पादकस्य बहुज्ञता प्रतीयते । सारस्वतमहोदये स्वर्गं प्रस्थिते पत्रस्यापि प्रकाशनं विरतम् ।

---

१. सुप्रभातम् ८।३

२. सुप्रभातं १३।४

३. सुप्रभातं १२।१

स्व० पं० केदारनाथ शर्मा सारस्वतमहाभागस्य पत्रस्य प्रकाशने विशेषायोगोऽभवत्। संस्कृत-साहित्यसम्मेलनस्य विकासार्थं किं किं न कृतं तेन? प्रान्तेषु नगरेषु ग्रामेषु वा सम्मेलनस्य परिचय-प्रदानार्थं भ्रमणं कृतम्। सम्मेलन-सन्देश-प्रसाराय, परस्पर-स्नेह-सम्वर्द्धनाय, संस्कृतभाषाप्रसाराय, अर्वाचीन-कवि-लेखकानां प्रोत्साहनार्थं सुप्रभातस्य प्रकाशनं तेन प्रारब्धम्। महता प्रयासेन विराम-गत्यापि सुप्रभातस्य प्रकाशनं कृतं तेन मासद्वयाभ्यन्तर एव विविधदेशवासिनः पण्डितानाहूय सभां कृत्वा संस्कृतभाषां प्रति श्रद्धा दर्शिता। अस्मिन्कार्ये स कदापि शिथिलो नाभवत्। सम्मेलनस्येतिहास एव न केवलममरत्वमाप अपितु संस्कृतभाषाप्रचारक्षेत्रे, अर्वाचीनकविलेखकानां नूतनरचना-प्रणयनेऽपि अमरत्व-मसौ प्राप्तवान्। तस्य महाभागस्य निधनेन महती हानिरभवत् संस्कृतस्य।

विविध-वाङ्मयप्रकाशनेन पत्र-पत्रिकासु सुप्रभातस्य स्थानं प्रथमं विद्यते। अस्य पत्रस्य प्रमुखपृष्ठे नित्यं प्रकाशितोऽयं श्लोकः—

'तिमिरततिमुदस्यद् भेदतारा विलुम्पन्,
नयदधिसुरभाषा-भावि जागर्ति भावम्।
विबुध-विहग-वादैराह्वयद् भाग्य-भानुम्,
विलसतु भुवनेऽस्मिन् सर्वतः 'सुप्रभातम्।'

**सूर्योदयः**

भारतधर्ममहामण्डलस्य छत्रच्छायायां १६२४ ई० तमे वर्षे निरर्गलं प्रचरन् सनातनधर्मानुसारिणां प्राच्यपथाध्वगानां मतमनुवदन् 'सूर्योदयः' नाम पाक्षिकं पत्रं प्रकाशितम्। पत्रमिदमधुनाऽपि वाराणसीतः (तस्मिन्नेव विभागतः) निस्सरति। इदमखिलभारतवर्षीय संस्कृतविश्वविद्यालयस्य मुखपत्रमस्ति। वार्षिकमूल्यं रूप्यकत्रयम्। पूर्णिमायां तिथौ प्रकाश्यते। पाक्षिकपत्रमिदं श्री-महाराजकाशिराजेन स्वयं संचालितम्। महाराजः स्वकोषतः धनं दत्वा प्रकाशनार्थं अन्नदाचरण-तर्कचूडामणिं प्रेरितवान्। अन्नदाचरण-तर्कचूडामणेः सम्पादकत्वे वाराणसीतः सर्वप्रथमं पत्रमिदं प्रकाशितम्। प्रथमं तावत्पत्रमिदं केवलं संस्कृत-

  

भाषायां प्रकाशितम् । ततो द्वैभाषिकमधुना त्रैभाषिकं संजातम् । यदा पत्रमिदं हिन्दी-संस्कृतभाषयोः प्रकाशितं तदा संस्कृतभाषायाः स्थानं महत्त्वपूर्णं आसीत् परञ्च यस्मात् कालात् आङ्गलभाषाऽपि स्थानं लब्धवती तदा कस्याः स्थानं महत्त्वपूर्णं विद्यते इति ज्ञातुं न पार्यते ।

१९३४ ई० तमे वर्षे पत्रमिदं मासिकमभवत् । मासिकरीत्या प्रचलिते पत्रेऽस्मिन् संस्कृतभाषायाः गुरुत्वं शालीनत्वं च सुष्ठु प्रतिपादितम् । समये व्यतीते सति पत्रमिदं च पुनः त्रैमासिकं त्रैभाषिकं सत् प्रकाशितम् । अधुनापि पत्रमिदं वाराणसीतः तथैव निरन्तरं प्रकाश्यते । यदा न प्रकाशमानीतं तदा तस्य सूचना विरतिकारणं च प्रकाशिते ।

दशवर्षपर्यन्तमस्य पत्रस्य सम्पादकोऽन्नदाचरण-तर्कचूडामणिः आसीत् । अस्य महाभागस्य बहवः कृतयः 'विद्योदये' संस्कृतचन्द्रिकायां च प्रकाशिताः । एते महाभागाः काशी हिन्दू-विश्वविद्यालयस्य सांख्ययोगविभागयोः प्रधानाध्यापक आसीत् । 'सुप्रभात' पत्रस्यापि किञ्चित् कालं सम्पादक आसीत् । यौवनदशायामस्य महाभागस्य व्यसनमासीत् लेखनम् । 'प्रणतिकाव्यप्रार्थनाकाव्य-आशा-आत्मनिवेदनम् इत्यादीभिः गीतिकाव्यानि, रामाभ्युदयमहाप्रस्थाने-महाकाव्ये, सुमनोऽञ्जलि-ऋतुचरित-काव्यचन्द्रिका इत्यादयः स्फुटरचनाः काव्यशास्त्र ग्रन्थाः प्रणीताः । अन्नदाचरण-तर्कचूडामणेः (१८६२—१९३६) तर्कशक्तिः प्रख्याता । भावप्रधाना गीतयः सुतरां प्रख्याताः अप्पाशास्त्री राशिवडेकर महाभागस्यासौ मित्रामीत् । तेनैव उद्घोषितं यत् चूडामणिमहाभागस्य गीतरचनाचातुरी भावप्रधाना सरसा अतिनिपुणा च । 'कल्पना-निद्रा-आशा-क्षणप्रभा-इत्येताः गीतिग्रन्थाः चन्द्रिकायां प्रकाशिताः । गीतिकाव्यानां भाषा सरला मनोरमपदविन्यासयुता अस्ति । यथा—

"निद्रे ! जगत्यत्र नु शान्ति हेतो<br>
याच्यातियाच्ये भवती शरण्या ।<br>
त्वदङ्कमासाद्य भवन्ति नित्यं<br>
सुस्था निरीहा अपि देहिनोऽमी ॥"

"हे कल्पने ! मानसराज्यदेवि,
त्वत्सेवकानां हृदयेषु नित्यम् ।
तमो निकृत्योज्ज्वल-चन्द्रिकाभिः
प्रदर्श्यतां रम्यपदार्थसार्थः ॥"

अन्नदाचरण-तर्कचूडामणिमहाभागस्य सम्पादकत्वे पत्रस्योन्नतिरभूत् । स तु सततं परिश्रमेण पत्रं प्रकाशितवान् सम्पादकीयलेखेषु भाषा प्रवाहमयी मनोहारिणी च ।

पत्रस्य त्रयोदशवर्षे म० म० श्री पञ्चानन तर्करत्नभट्टाचार्यः सम्पादकोऽभवत् । विद्वानयं 'अमरमंगल' नाटकस्य प्रणेता, 'विष्णुविक्रम' काव्यस्यकर्ता, ब्रह्मसूत्रस्य शक्तिभाष्यकर्ता च प्रख्यातः । पश्चाद् विन्ध्येश्वरीप्रसाद–अवधेशशर्म—गोविन्दनरहरि वैजापुरकरः क्रमशः सम्पादका अभवन् । विन्ध्येश्वरीप्रसादशर्ममहोदयस्य 'सद्गुरुस्मृतिः' गीतकाव्यं प्रख्यातं प्रकाशितं च ।

डा० मगलदेवशास्त्रि—अनन्तशास्त्रिफडके—वटुकनाथशास्त्रिखिस्ते–माधव प्रसादशर्म—गोपालदत्त त्रिपाठि नारायणपति त्रिपाठि—रामविलासचतुर्वेदि गोपीनाथकविराज—बालबोधमिश्र—मुकुन्दझा—देवीप्रसाद शुक्ल—श्रीगिरीशशर्मा—गणपतिशास्त्रि—कृष्णदत्त—राजधरझा—कृष्णमणि त्रिपाठी—रघुनाथ शर्म—रामस्वरूपशास्त्रि—शिवदत्त चतुर्वेदि—को० अ० सुब्रह्मण्य अय्यर—नारायणप्रसाद-बलूनी—डा० सातकडि मुखोपाध्यायः—ब्रजनाथझा—शङ्कर गोपाल-नेने रामचन्द्र-दीक्षित—इत्येतेषां विदुषां काव्य-निबन्धादयोः निरन्तरं प्रकाशिताः । पञ्चानन-तर्करत्न भट्टाचार्यस्य 'कलङ्कमोचनम्' नाम नाटकं प्रकाशितम् । 'संन्यासगीता' काश्मीरदर्शनं च प्रकाशितम् ।

'सूर्योदय' पत्रे संस्कृतविश्वविद्यालयस्य परीक्षातिथिः महोत्सवः—परीक्षाफलादयोऽपि सूच्यन्ते । 'संस्कृतभाषा सर्वभाषाजननी' इत्यस्मिन्विषयेऽपि बहुप्रकाशितम् । प्रकाशनपरम्परायामस्य पत्रस्य गतिर्निरवरोधा । भाषा सरला भावार्थप्रकाशिनी विद्यते । प्रमुखपृष्ठे सदुपदेशाः मुद्रयन्ते । सूर्योदयस्य केचन विशिष्टाङ्काः प्रकाशिताः, तेषु भक्तिविशिष्टाङ्कः सर्वश्रेष्ठः विषयानुकूलश्च ।

"शृण्वन्तु संस्कृतज्ञाः
निद्रां त्यजन्तु विज्ञाः"

इत्येतादृशमुद्बोधनं निरन्तरमुपलभ्यते। साहित्यिक-धार्मिक-राजनीतिक-वैज्ञानिकार्थिक-प्रगतिविषयकाः कवितादयः प्रकाश्यन्ते। सूर्योदयस्य प्रकाशनेन अन्नदाचरणमहाभागैः अर्वाचीनलेखकानां प्रोत्साहनं दत्त्वा संस्कृतभाषायाः प्रचारः प्रसारश्च कृतः। शिक्षासमीक्षा मृदुमधुरपदभासुरा समुल्लसति। पत्रमिदं—

रागद्वेषनिशाटनं विधुरयम् मोहं तमो नाशयन्
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन्।
विद्वत्कोकमशोकयन् नयसुधीरोलंबमुन्मीलयन्
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र "सूर्योदयः"

**श्रीमन्महाराजसंस्कृतकालेजपत्रिका**

महीशूरस्थश्रीमन्महाराजसंस्कृतपाठशालाध्यक्षः जनवरी १९२५ ई० तमे खिस्ते पण्डितरत्नं लक्ष्मीपुरं श्रीनिवासाचार्य-महाशयेन त्रैमासिकी संस्कृतपत्रिका 'श्रीमन्महाराजसंस्कृतकालेजपत्रिकेति नाम्ना सम्पादिता। सेयं त्रैमासिकी पत्रिका न केवलं सम्पादकस्यैव अपि तु गीर्वाणवाणी धुरन्धर-श्रीमतो महीशूराधिपतेरपि संस्कृतभाषासेवाप्रवणत्वं प्रवीणत्वं विद्याविलासित्वं च नितरां प्रथयति इति नास्ति सन्देहः। कारणं त्विदं यत्तेन महाराजेन संस्कृतपत्रिकाप्रकाशनाय, प्राचीनार्वाचीनसंस्कृत-वाङ्मयप्रकाशनाय, संस्कृतभाषाप्रसाराय श्रीनिवासाचार्यमहाभागं प्रणोद्य स्वयमपि निरन्तरमनुकूलधनादिदानेन पत्रिकां समचालयत। तस्मिन्काले बहवः पत्र-पत्रिकाः राजकीय साहाय्येन प्रकाश्यतां गताः। 'धनं विना न किमपि कर्तुं पार्य्यते' इति सत्यं प्रतिभाति। धनं विना बहवः पत्र-पत्रिकाः प्रकाशनाद्विरताः।

पत्रिकेयं बहुकालपर्यन्तमविरतगत्या प्रकाशिता। न कदापि एकस्याप्यङ्कस्य हानिः दृश्यते। पत्रिकेयं 'श्रीमन्महाराजसंस्कृतपाठशालाध्यक्षः, मैसूरतः' लभ्याऽऽसीत्। वार्षिकं मूल्यं सार्धद्विरूप्यकमासीत्। विद्यार्थिनां कृते केवलमेक-

रूप्यकम्। येषां विदुषां कृतयः प्रकाश्यन्ते स्म तेभ्यः पत्रिका विना मूल्यं प्रदीयते स्म।

एकादशवर्षस्य प्रारम्भे १६३५ ई० शताब्द्या श्री एस० वी० कृष्णमूर्ति एम० ए० पाठशालाध्यक्षोऽभवत्। विद्वानयं पत्रिकायाः सम्पादकः समजनि। अस्य महाभागस्य सम्पादकत्वे पत्रिकेयं सविशेषमुन्नतिं गता। देशान्तराणां ग्राहकाः समजायन्त। पत्रिकायाः चित्रार्हपत्रे मुद्रणं प्रारब्धम्। सञ्चिकासमवलोकनेन ज्ञायते यत्पत्रिकायामस्यां बहवः काव्य-नाटकचम्पू-गीत-निबन्धादयः प्रकाश्यन्ते स्म। तेषां सुतरां बाहुल्यं प्राप्यते। समाचाररहिता भारतीय-विचारानुकुला गवेषणात्मिका काव्यप्रधाना पत्रिकेयमुल्लेखनीयाभवत्। पत्रिकायामस्यां न कदापि समाचाराः प्रकाशिताः। तत्र केवलं संस्कृतभाषायां रचित-ग्रन्थाः स्थानं लभन्ते स्म। सुभाषितानि-तद्देशीयसंस्कृतविद्याभ्युदयश्च यदा-कदा प्रकाशितानि।

कृष्णनृपोदयप्रबन्ध (कुक्के सुब्रह्मण्यशास्त्री) हयशीर्षविलास—सुधाकरी (हम्यवेङ्कटसुधी) इत्येते काव्यग्रन्थाः, अधर्ममोटनम्--अमीलिया गलेत्ति—जर्मननाटकस्यानुवाद) मुखरमुखमुकुरम् - (कुक्के सुब्रह्मण्यशास्त्री) वल्लीशाला (काशीप्राणेशाचार्य) यादवविलासः—(एन् नरसिंहाचार्य) मञ्जुलमञ्जीरं--(जग्गूकुलभूषण) गुरुपरीक्षणम्—(एच० वी० नारायण) पार्थविजयम्—(गणपतिशास्त्री) बलिविजयनाटकं—इत्येतानि रूपकाणि, श्रीकृष्णराजयशोविलासचम्पूमहीसूरदेशाभ्युदचम्पू--(सीतारामशास्त्री) गुरुराज चम्पू—(वरदाचार्य) हयवदनाविजयचम्पू—(वेङ्कटराघवसूरि) चेतः प्रसादः—(सुब्रह्मण्यशास्त्री) प्रमत्तोल्लासचम्पू—इत्येताः चम्पवः, श्रवणानन्दं भारतषोडशी—हंसमानिनीसंवादे (कुक्के सुब्रह्मण्यं) वाणीकर्णाभरणं (कृष्णमूर्ति)--नरसिंहजटालक्षणम्--करुणरसतरङ्गिणी—स्वर्णमुक्तासंवादः—इत्येते गीतकाव्यानि प्रकाशितानि।

श्रीनिवासाचार्यस्य 'वेदतत्त्वम्', आजि रामानुजय्यगार्यस्य 'शाकुन्तलनाटकविमर्शः' डा० आर० रामशास्त्रिमहोदयस्य 'भाषातन्त्रम्' मनस्तत्त्वं च चक्रवर्ति

राजगोपालाचार्यस्य 'कविकाव्यविचारः', पी० आर० शिवसुब्रह्मण्यं शास्त्रिणः 'काव्यजिज्ञासा' काशीप्राणेशाचार्यस्य 'दर्शनतत्त्वम्', ति० स० श्रीनिवासदेशिकाचार्यस्य वादभूमिः—ताम्बूलमीमांसा—साहित्यतत्त्वम्—योगवादः—भौतिकविज्ञानम्—समस्यापूर्तयश्च प्रकाशिताः। अनन्ताचार्यमहाभागेन ब्रह्मसूत्रस्य प्रत्येकं सूत्रं गृहीत्वा 'श्रीशारिकाराधनम्' काव्यं विरचितम्। हस्तलिखितपुस्तकानां सूची प्रकाशिता। पञ्चाङ्गविषयेऽपि यत्र तत्र चर्चाभवत्। पत्रिकां दृष्ट्वा कथनमिदं सत्यं 'यन्निास्त्यत्र' सर्वेऽपि निबन्धाः पाण्डित्यपूर्णाः सन्ति। नूनमियं पत्रिका अर्वाचीनसंस्कृतविद्यायाः मूलभित्तिः।

अर्वाचीनसंस्कृतवाङ्मयस्योन्नतिं पत्र—पत्रिका-पठनेनैव ज्ञातुं शक्यते। प्रचुरवाङ्मयं पत्र-पत्रिकायामेव प्रकाशितम्। तत्र भाषा अतीवसरला मधुमधुरा भावप्रकाशिनी च, पदशय्या नितरां सुकोमला ध्वनिपूर्णा अलङ्कारमयी च। शैली रमणीया गाम्भीर्यार्थप्रकाशनसमर्था दृश्यते। चित्रकाव्यानामप्यभावः न विद्यते। तद्यथा विलोमानुलोमचित्रम्—

'ज्यां वाराहहरावज्यां<br>
तां ततां हि हितां तताम्।<br>
नोष्णोऽकृतान्तां कृष्णोनो<br>
विभुरेककरेभुवि ॥[1]

(श्रीकृष्णयशोराजकाव्ये)

एकाक्षरचित्रम्—

'लोलालले ललल्लोले<br>
लोलेले लालले लले।<br>
लीलालोले लोललीले<br>
लालालोल लले लल ॥[2]

(हयशीर्षविलासकाव्ये)

---

१. श्रीमन्महाराजकालेजपत्रिका १२।१-२<br>
२. श्रीमन्महाराजकालेजपत्रिका १६।४

करुणरसतरङ्गिण्यां प्रारम्भे एव ध्वन्यात्मपदावलि प्रयुक्ता—

तिलककलितकाला लोलवालालिजालं,
ललितलुलितचेलं बाललीलाविलोलम् ।
परिमलसुममालं नीलभृन्नीलनीलं
सकलसुरभिपालं नौमि गोपालबालम् ॥

श्रीनिवासाचार्य–कृष्णमूर्ति–सुब्बाराय-उपाध्याय वेङ्कटरमणाचार्य–एम० जी० पाटिल–सि० आर० नरसिंह–करुशेषाचार्य–पी० आर० शिवसुब्रह्मण्य–काशीप्राणेशाचार्य–कुक्के सुब्रह्मण्यशास्त्रि–श्रीनिवासदेशिकाचार्य–आस्थानकवि जग्गूकुलभूषण–वेङ्कटराघवसूरि-कृष्णमूर्तिशास्त्रि-टि० श्रीनिवासरङ्गाचार्य–वरदाचार्य–आर० शामशास्त्रि–एन्० नरसिंहाचार्य–सीतारामशास्त्रि के० गोपाल-कृष्ण–एच्० योगाग्निनरसिंह–वेङ्कटाध्वरिनारायणशास्त्रि–शिवशंकर–नीलकण्ठ-दीक्षित–तिम्मण्णाचार्यपादानां कृतयः प्रकाशिताः पत्रिकायाम् । सामाजिक-धार्मिकनिबन्धादीनां प्रकाशनं भवति स्म । पत्रिकेयं श्रेष्ठा पठनीया चास्ति ।

### उद्यानपत्रिका

आर० कृष्णमाचारियर, आर० वि० कृष्णमाचारियर महोदययोः सम्पादकत्वे दक्षिणभारते प्रकाशितानां संस्कृत-पत्र पत्रिकाणां मूर्धन्यतमा 'सरसचारुपदक्रमभासुरा' विपुलभावविलासमनोहरा मानप्रकर्षवती 'सहृदया' नाम मासिकी पत्रिका 'तिरुवायूरमद्रासतः १८९५ ई० तमे वर्षे प्रकाशिता । तत्र आर० कृष्णमाचारियर ( १८६६–१९२४ ) महाभागस्य रचितग्रन्थाः—'पातिव्रत्यम् , पाणिग्रहणम् , वररुचिः. सुशीला'—प्रकाशिताः । पत्रिकायामस्यां विक्रमकविराजस्य 'श्रीकृष्णाभ्युदय काव्यं, शंकर सुब्रह्मण्यस्य 'नारदनैपुणी', यज्ञनारायण दीक्षितमहोदयस्य 'रघुनाथविलासनाटकं' राजचूडामणिदीक्षितस्य 'कमलिनीकल हंसनाटकं' गरुडवाहनपण्डितविरचितं 'दिव्यसूरिचरितं महाकाव्यं, वासन्तिक-स्वप्ननाटकं—प्रकाशितम् । पत्रिकायां भारतीयकवीनां निष्पक्षसमालोचना प्रकाश्यते स्म । यद्यप्यधुना 'सहृदया तिरोहिता तथापि सहृदयानां चेतांसि

दुनोत्येव। पत्रिकेयं विंशतिवर्षपर्यन्तमविच्छिन्नप्रवाहेण प्रकाशिता आसीत्। पश्चात्सहृदयायाः स्थानं 'उद्यानपत्रिकया गृहीतम्।

१९२९ ई० तमे वर्षे मीमांसार्णव-मीमांसाकेसरि-श्रीताताचार्य शिरोमणि-महोदयेन 'उद्यानपत्रिका' नाम मासिकी पत्रिका प्राकाशि। पत्रिकेयं दक्षिण भारतस्य तिरुवाडिनगरीतः प्रकाशिता। श्रीनिवासमुद्रणालये मुद्रिता। प्राप्तिस्थानं सम्पादकः, उद्यानसंस्कृतपत्रिका, श्रीवेंकटेश्वर ओरियन्टल इन्स्टीट्यूट, तिरुपति' अस्ति। पत्रिकेयमधुनाप्यविरतगत्या तथैव प्रकाश्यते। अस्या वार्षिकं मूल्यं द्वे रूप्ये। सानुबन्धायाः त्रीणि रूप्याणि। विद्यार्थिनां कृते केवलं रूप्यमेकम्। कन्यामासे साधारणसञ्चिका अनन्तरमासेशास्त्रानुबन्धसञ्चिका इत्येवं क्रमेण षट्सु मासेषु साधारणसञ्चिकाः षट्सु मासेषु अनुबन्धसञ्चिकाश्च प्रकाश्यन्ते।

शास्त्रानुबन्धसञ्चिकायां दशपृष्ठाः भवन्ति। अस्यां केवलं कस्यचिद्ग्रन्थस्यांशाः प्रकाश्यन्ते। अद्यावधिप्रकाशितायां शास्त्रानुबन्ध सञ्चिकायां न्यायप्रभा—भाव्यदिशः—कुवलयानन्दः ( बधरञ्जनीटीका समेतः ) श्रीगीतार्थदीपश्च मुख्याः विंशतिपृष्ठात्मिकायां साधारणसञ्चिकायां काव्य-नाटक-चम्पू-कथा-हास-परिहास-पुस्तकसमालोचनादीनां प्रकाशनं क्रियते।

साधारणसञ्चिका अपि द्वयोर्विभागयोः विभजिता। प्रथमविभागे केवलं पद्यमयीरचना प्रकाश्यते। द्वितीयो विभागः केवलं गद्यमयः। श्रीनिवासताताचार्यस्य 'सुभाषितनीवी' कडयस्थ—नाणुशास्त्रिमहोदयस्य 'उपदेशसूक्तिमाला' य० महालिंगशास्त्रिणः 'व्याजोक्तिरत्नावली' 'भ्रमरसन्देश, शृङ्गारनारदीयं च, प्रथमविभागे एते ग्रन्थाः प्रकाशिताः। कौण्डिन्यप्रहसनम्—मेनका–सौदामिनी ( के० यस० कृष्णन–उपन्यास )—विजयरञ्जननाटकं ( के० आर० राम चन्द्राचारियर) वरदाभ्युदयचम्पू कृष्णाभ्युदयकाव्यं–मन्मथोन्मथन-नाटकं–उदयनकथा–द्रौपदीपरिणयचंपू ( चक्रकविः ) सालवाभ्युदयकाव्यं ( डिण्डिमकवि )—श्रीसतीकमला ( चिदम्बर शर्मा ) मदिरेक्षणा—दधिभाण्डोपाख्यानं ( एस० यन० श्रीरामदेशिक )—यथभिमतं नामनाटकं[1] इत्येते ग्रन्थाः प्रधानरूपेण

1. As you like it ( Shakespeare )

उल्लेखनीयाः। व्याकरणशास्त्रस्यापि प्रकाशनं भवति। पाठशुद्धिः—प्रकीर्णम्—पाठसंशयः—पाठसमर्थनम्—पाठविमर्शः—विषयसूचयः प्रकाश्यन्ते। हयग्रीवनक्षत्र-माला (पद्ये) देशवृत्तान्ताः—परशुरामचरितं—वेदप्रामाण्यम्—मार्जनी (गीत-काव्य—एम० पी० ओका) मृन्मयम्—रावणप्रणतिः—नाटककथासारः—जाजलि-चरितम्—मिथ्यागौरवम्—वृद्धभाषितम्—वनलता (महालिंगशास्त्री)—राघवेन्द्र-चरितामृतम्—मुकुन्दमाला—कलिप्रादुर्भावम्—इत्येते लघुग्रन्थाः प्रकाशिताः। 'संस्कृतदुर्दशां' संसूच्य तस्य पुनरुज्जीवनं कथं सुष्ठुतरं संपादनीयमिति आर० राजगोपालन (बंगलौर) महाशयेन प्रतिपादितम्।

रामचन्द्रशास्त्रि शिरोमणि—के० यस० कृष्णन्—श्रीनिवासताताचार्य—टी० रामचन्द्र—के० आर० रामचन्द्राचारियर—नीलकण्ठशर्म—हरिहर स्वरूपशर्म—चक्रकवि—के० ह्वी० सुब्रह्मण्यशास्त्रि—म० म० लक्ष्मणसूरि—के० ए० रामलिङ्गशास्त्रि—चिदम्बर शर्म डिण्डिमकवि—रामशास्त्रि—शंकर सुब्रह्मण्य-केशवशर्म - ह्वी० आर० श्रीनिवासताताचार्य शिरोमणि—यस० यन श्रीनिवास-देशिक—दूरेस्वामी अयंगर—टी० ई० वीरराघवाचार्य—यू० वेंकटकृष्णनराव-उत्ताम्मूर टी० वीरराघवाचार्य—श्री वेंकटाध्वरि—पं० सप्तर्षि दीक्षित—ह्वी० अनन्ताचार्य—यू० महालिङ्गशास्त्रि—आरः राममूर्ति—इत्यादीनां कविलेखकानां कृतयः प्रकाश्यन्ते स्म प्रकाश्यते च।

डी० टी० ताताचार्य शिरोमणि (१८९२) महोदयस्य 'कवीनामुपवासः' 'मुग्धाञ्जलिश्च द्वौ ग्रन्थौ प्रख्यातौ। विद्वानयं मीमांसाक्षेत्रे प्रसिद्धिं भजते। उद्यानपत्रिकाप्रकाशनाय सततं परिश्रमं करोति। संस्कृतभाषाविषये लिखितमनेन—

"The Udyanā patrikā is not language-mad. It has equal love to all languages. But it has taken the cause of Sanskrit because it is the language that is most neglected now-a-days and we can ill afford to allow it to decay and disappear. If there is any one who thinks that the Sanskrit Literature is an

antiquated one and what is taught in it is of no use to day, he is miserably ignorant of the truth about it. The Patrikā is very anxious to show how this is so. It is very anxious to serve the people by making them first understand fully and clearly the ideal life and factors responsible for it, depicted in the literature and then persuading them to make an attempt to live such a life."[1]

पत्रिकायाः आर्थिकदशा न सन्तोषप्रदा । अतः ताताचार्येण महता प्रयासेनास्याः प्रकाशनं क्रियते । संस्कृतज्ञाः विषयेऽस्मिन् अवधानं कुर्वन्तु अन्यथा कथमपि संस्कृतभाषायाः पुनरुज्जीवनं न सम्भाव्यते । पत्रिका कथमप्यधुना प्रचरति इत्येव सन्तोषजनकम् । उद्यानपत्रिकायाः कामनेयं सर्वदा प्रमुखपृष्ठे प्रकाश्यते—

ये संस्कृतप्रियाः सन्तस्तेषां सद्मनि सद्मनि ।
उद्यानपत्रिका नित्यं विहर्तुमियमिच्छति ॥

द्वितीयविभागेऽपि

"अन्या वाचो विमुञ्चथ"
'वेदापहारविक्रोशद्वेधः खेदविमर्दिनम् ।
पण्णातीरपरिष्कारं परिजातमुपास्महे ॥

**ब्राह्मणमहासम्मेलनम्**

१६२८ ई० तमे वर्षे 'ब्राह्मणमहासम्मेलनकार्यालयात् १७७ दशाश्वमेध घाट रोड वाराणसी' नगरीतः 'ब्राह्मणमहासम्मेलनम्' नाम संस्कृतभाषायां मासिक-पत्रं प्रकाशितम् । पत्रमिदं हिन्दीभाषायामपि साप्ताहिकरूपेण प्रकाश्यते स्म । पत्रमिदं पण्डितलक्ष्मणशास्त्रिणो द्राविडस्य सम्पादकत्वे प्रकाशितम् ।

धर्मार्थे सततं यतमानैरेभिर्विद्वद्भिःयं बहूनि कार्याणि सम्पादितानि । 'ब्राह्मणमहासम्मेलनम्' इत्येका सभा संस्थापिता । प्रतिवर्षं 'ब्राह्मणमहासम्मेलनस्याधि-

१. उद्यानपत्रिका २५।६-१२. पृ० १२२–१२३ ।

वेशनं भवति स्म। यत्र भारतवर्षीयाः प्रख्यातधर्माचार्याः सर्वे विद्वांसश्चएकीभूय धर्मविषये स्वविचारान् प्रकटीकृत्य धार्मिकमनुष्यान् मार्गप्रदर्शनं कुर्वन्ति स्म। सम्मेलनस्य विवरणानि, भाषणानि पत्रेऽस्मिन् प्रकाशितानि। व्ययोऽपि प्रकाशितः।

लक्ष्मणशास्त्रि (१८७४-१९३०) महोदयस्य सहयोगः सम्मेलनं प्रत्यतीव प्रसशांर्हः। विद्वानयं 'वर्णाश्रमस्वराज्यसंघः'—वर्णाश्रमपूर्वकं स्वराज्यप्राप्त्यर्थं यतमानो जनसङ्घः। इति संस्थां संस्थाप्य राष्ट्रं प्रति प्रगाढानुरागो दर्शितवान्। बहुधा स्वीयभाषणे स्वराज्यप्राप्त्यर्थं जनान् प्रेरितवान्। वर्णाश्रमधर्मस्य प्रतिष्ठापनार्थमेव मासिकं-संस्कृतं—'ब्राह्मणमहासम्मेलनस्य प्रकाशनं कृतम्। महामहोपाध्यायपदवीप्रदान-समये सर आशुतोषमुखर्जीमहोदयेन कथितं 'यदेतेषामियं प्राथमिकी योग्यता, एतैः कदाप्येकाक्षरेणापि महामहोपाध्यायपदवीप्रार्थनया मदीयः-कर्णो नास्पर्शि'। अस्य विदुषः जीवनवृत्तान्तः 'सारस्वतीसुषमायां संस्कृत-पत्रिकायां प्रकाशितः।[१]

'ब्राह्मणमहासम्मेलनं'—पत्रस्य सम्पादक-सङ्घे नितरां दिगन्तविश्रान्तकीतयः विद्वांस आसन्। तेषु महामहोपाध्याय श्रीयुक्तानन्तकृष्णशास्त्रि--श्रीराजेश्वर-शास्त्रि द्रविड--श्रीताराचरणभट्टाचार्य--श्री श्रीजीव न्यायतीर्थ एम० ए० इत्येते प्रधानतमाः। श्रीहाराणचन्द्रशास्त्रि--श्रीगोपीचन्द्र सांख्यतीर्थश्च परिदर्शकौ आस्ताम्। 'विद्याविलास' मुद्रणालये मुद्रयित्वा ब्राह्मणमहासम्मेलनकार्यालयात्प्र-काशितस्यास्य पत्रस्य वार्षिकं मूल्यं रूप्यकत्रयमासीत्। यस्य प्रबन्धो यस्यां सञ्चिकायां प्रकाशितः तत्संख्या तस्मै विना मूल्यं प्रदीयते स्म। सौरमासस्य प्रथम-सप्ताहाभ्यन्तरे नियमतः प्रकाश्यते स्म।

धार्मिकमिदं पत्रमासीत्। 'धर्मैकलक्ष्यतैव द्वारं स्वराज्यसिद्धेः, तद्विनाश-द्वारमेव धर्मपराङ्मुखतेति। धर्मपराङ्मुखता हि केवलमात्महानाय एव नात्म-रक्षणाय'' 'इत्यस्य उद्देश्यपक्षे वर्तते। अस्य पत्रस्य प्रमुखपत्रे महाभारतस्य श्लोकार्धं सततं प्रकाशितम्—

---

१. सारस्वती सुषमा १।१ पृ० ८०-८२।

२. ब्राह्मण महासम्मेलनम् १।१ पृ० ६

'न जातु कामान्न भयान्न लोभाद्
धर्मं जह्याज्जीवितस्यापि हेतोः"

पत्रस्यास्य द्वितीयाङ्के किञ्चिन् निवेदनमित्थम् दृश्यते—'श्रीमन्तः पाठक-महोदयाः ।

"घोरेऽस्मिन् धर्मविप्लवसमये विशुद्धसनातनधर्मप्रचाराय प्रयतमानं ब्राह्मणमहासम्मेलनमेतत् संस्कृतमासिकपत्रं भवतां सकरुणावलोकनमाकांक्षति"। अष्टमाङ्कात् पत्रस्य प्राप्तिस्थानं 'साङ्गवेदविद्यालय, रामघाट वाराणसीः' अभवत्। एकः सचित्रविशिष्टाङ्कोऽपि प्रकाशितः। अस्मिन् विशिष्टाङ्के केवलं सम्मेलनस्य विवरणं प्रकाशितम्।

सर्वेसम्पादकाः—परिदर्शकौ च लेखकाः आसन्। म० म० पञ्चानन तर्करत्नभट्टाचार्य-- भाट्टपल्ली) म० म० पद्मनाथ विद्याविनोद एम० ए०--श्रीश्यामाचरणकविरत्न--श्रीनित्यगोपालविद्याविनोद—श्रीकृष्णशास्त्रि वेदान्तशिरोमणि ( पालघाट ) पं० नारायणशास्त्रि खिस्ते (वाराणसी) पद्मनाभाचार्य ( उडुपि )-राजपण्डितमुलकराजशर्म ( पटियाला ) श्री शेषय्यशास्त्रि ( विजयनगर ) सुब्बाराय शास्त्रि—सदाशिवशास्त्रि ( लश्कर ) श्रीसीताराम मिश्र ( फतेहपुर )—सूर्यनारायणशास्त्रि ( जयपुर )—रामदेव त्रिपाठी ( आरा )--रामकृष्णशास्त्रि ( अमरावती ) वाग्मीश झा ( मिथिला )--वेङ्कटरामशास्त्रि ( कृष्णरायपुर ) श्रीराघवशास्त्रि (चिदम्बर) राममूर्ति ( तेन्नालि ) अमृतलाल शास्त्रि ( पेटलाद् ) नर्मदाशंकर शास्त्रि ( बड़ौदा ) गोपीचन्द्र (काशी) इत्येतेषां कवि-निबन्धकाराणां कृतयः प्रकाशिताः।

धर्मः साम्प्रतिकस्पृश्यास्पृश्य विचारः, चातुर्वर्ण्यम्, विवाहः, समाजसंघटनम्, कः पन्थाः—, धर्म-विप्लवः--कलिवर्ज्यविचारः--धर्ममूला हि लोकस्थितिः--विधवाविवाहखण्डनम्, विधवोद्वाहगतं भ्रान्तिनिरासः, आदर्शचरितम्, इत्यादयः धार्मिकनिबन्धाः उल्लेखनीयाः। एतेषु निबन्धेषु लेखकानां विचाराः सयुक्तिपूर्णाः शास्त्रप्रमाणानुकूलाश्च।

म० म० श्रीपञ्चाननतर्करत्नस्य 'नेतृचरितम्' नाम भाणः प्रकाशितः। चित्रात्मकवर्णने निपुणोऽयं विद्वान्--

स्मृतौ तामुद्वहन् रामां
हृदि तद्रागजव्ययाम्।
आलोकतमसो सन्धि-
र्गोधूलिरिव नीयते॥

(नेतृचरितम्) (१.६-१०)

श्यामाचरणमहोदयस्य 'विष्णुनारदसंवादे' एकदा नारदः विष्णुसमीपं गत्वा निवेदितवान् यदधुना संसारे सर्वे सूत्रधाराः अतश्च द्विजातीनां बाहुल्यं प्राप्यते। विष्णुना निगदितमेतेषां मया चरणप्रक्षालनं कृतम्। यदि तेषां वृद्धिः भवति तत्र का हानिः। प्रमोदस्य विषयोऽयं त्वया श्रावितः। किं त्वया विस्मृतं यन्मह्यं ब्राह्मणपादप्रहारोऽपि प्रमोदजनक उन्नतिकारकश्च। भवतु! भवतु! ब्राह्मणानां वृद्धिः। इत्येवं श्रुत्वा अश्रुपूर्णाकुलेक्षणेन नारदेन धर्माश्रमयोः वैपरीत्यग्रहणं सूचितवान्। शोकसभानां बाहुल्यम्।

विष्णु—हं हो नारद! शोकसभा कीदृशी?

नारद—अतीव विचित्रेयं सभा। कस्मिंश्चिन्महापुरुषे मृते...सर्व एवोत्प्रफुल्लवदना दृश्यन्ते। नयनकोणे वाष्पकणोऽपि नोद्गच्छति।"

नारायणशास्त्रिखिस्ते महोदयस्य 'प्रणवविलाप-शोकाश्रुनिर्झरयोः' चेदृशी एव परिस्थितिः। नर्मदाशंकरशास्त्रि महोदयेन 'ब्रह्मचर्य-सूत्राणि' रचितानि। यथा--

'विधिपूर्वकमुपनयनम्' – (१)
'शिवः संकल्पः' (२)
'गुरोः शुश्रूषा' (३)
'प्राणायामः' (६)
'भैक्षं चरेत्' (८)
'दृढ प्रतिज्ञत्वम्' (२८)

'आत्मश्रद्धा' (३४)

'मा हिंस्यात्सर्वभूतानि (३६)

'नातिवेलं स्वापोऽवबोधश्चेति'

'ताराचरणभट्टाचार्यमहोदयस्य विरचितस्य 'भारतगीतिकायां भारतस्या र्वाचीनप्राचीनविभूतीनां सरसात्मकं वर्णनं प्राप्यते। 'त्रिभुवनवन्दितेन भारतभूमिं प्रति कविना स्वीयानुरागोदर्शितः। वर्णने निर्झरप्रवाहमयी सरित्ि सरला भाषा प्रवाहिता—

'त्वमसि तमसि मोहसदसि विमलचन्द्रचन्द्रिका
विलसितसित हासित सुरभि - यूथिवकुलमल्लिका।
सुरभिमधुर - मधुरपनस - लकुचचूत - मेदुरा
हससि लससि वितरसि फलमुन्नतगिरिबन्धुरा

प्रत्यङ्कं मंगलाचरणश्लोकाः तट्टीका भाषणानि च प्रकाशितानि। पत्रमि न बहुकालपर्यन्तं प्रकाशितम्। उत्सव-स्तुति-सम्बन्धिगीतयः प्रकाशिताः धर्मविषये प्रश्नोत्तराणि मुद्रितानि। पञ्चाननतर्करत्नमहोदयस्य 'सर्वमङ्गलोदय शिलष्टकाव्यस्य सटीकं प्रकाशनमभवत्। पत्रस्य भाषा अतीवसरला सामा संस्कृतज्ञग्राह्या च। 'अमरभारती' पत्रिकायां पत्रस्यास्य विषये नारायणशा खिस्तेमहोदयेन लिखितम्—

'काशीस्थ-ब्रह्मणमहासम्मेलनं तु प्रायो धार्मिकसाहित्यमात्रप्रकाशकं ध रत्नणचेत्रे रविरिव प्रकाशते।[१]

**संस्कृताऽङ्गलपत्र-पत्रिकाः**

अस्मिन्समये संस्कृत-आङ्गलमिश्रितानां पत्र पत्रिकाणामपि प्रकाश मभवत्। तासु विविधपत्रपत्रिकासु विविधा सामग्री प्राप्यते। संस्कृतवाङ मयस्यापि प्रकाशनं भवति स्म। तासु 'दि विश्वभारती[२] (१६२३)—गवर्नमे

---

१. अमरभारती १।१ पृ० ३-५

२. The Viswa Bharati ( Qarterly ).

आर्ट्स कालेजपत्रिका[१] (मद्रास १९२३) – 'जर्नल आफ ओरियन्टल रिसर्च सोसायटी[२] (१९२७)—हिन्दू कालेज मैगजीन[३] (१९२८)—जर्नल आफ दि म्यूजिक अकादमी[४] (मद्रास १९२९) इत्यादयः प्रमुखाः। तथैव संस्कृतहिन्दीमिश्रितानां पत्रपत्रिकाणां संख्या प्रभूततमा। इत्थं संस्कृताङ्गल संस्कृत-हिन्दी-मिश्रितानां पत्र-पत्रिकाणां समासेन सूचना समुल्लिखिता। चित्रवाणी ( काशी )—शारदा ( प्रयाग ) – अच्युतम् (वाराणसी) अमरभारती ( वाराणसी )—वैदिकमनोहरा ( काञ्चीवरम् )—संस्कृत-प्रचारकः ( दिल्ली )—मनोरमा ( उत्कल )—अमृतोदयः ( बंगलोर )—मित्रम् ( पटना )—वल्लरी ( काशी )—साप्ताहिकपण्डितपत्रिका ( काशी )— आर्यसिद्धान्तः ( प्रयाग )—श्रुतप्रकाशिका ( कलकत्ता )—सुरभारती (बम्बई)—कौमुदी (सिन्ध हैदराबाद)—श्रीचित्रम् ( त्रिवेन्द्रम् )—षाप्ताहिक-वैजयन्ती ( बालकोट )—अमृतवाणी ( बंगलोर )—ब्रह्मविद्या ( चिदम्बर )—विचक्षण ( पेरुट्टम्बूर )— भारतीविद्या ( फतेहगढ़ )—संस्कृत-साहित्य-सुषमा ( राजापुर)–विज्ञान-चिन्तामणि (पट्टांत्रि)–अमृतभारती ( कोचीन )—विद्योदय ( भरतपुर )—वेंकटेश्वर-पत्रिका (मद्रास)–सार्वभौमप्रचारमाला ( काशी )— आन्ध्र-संस्कृतसाहित्यपत्रिका ( आन्ध्र )—मञ्जुभाषिणी (काञ्ची)- मधुरवाणी (वेलगाँव)— पद्यामृततरङ्गिणी (कलकत्ता)–संस्कृतभारती ( कलकत्ता )—मधुरवाणी (गदग) – श्रुत-प्रकाशिका (कलकत्ता)—श्रीः ( काश्मीर )—कवित्वम् ( राजस्थान )—संस्कृतपत्रिका ( पदुकोटा )—काव्यकादम्बिनी ( लश्कर ) - विद्वत्कला ( लश्कर ) विद्वगोष्ठी ( काशी ) विद्या ( वेलगाँव )—सरस्वती सौरभ ( बड़ौदा )—ग्रन्थप्रदर्शिनी ( मद्रास )—ब्रह्म-विद्या ( नादुकावेरी ) साहित्यवाटिका ( देहली )— श्रीशारदा (मैसूर)—साहित्य-सुधा (पटना) वैष्णवसुधा (काञ्जीवरम्)— संस्कृतसाप्ताहिकपत्रिका (धुलजोड़ा)—साप्ताहिकी मञ्जूषा ( कलकत्ता )— साप्ताहिकी देववाणी ( कलकत्ता )— सन्देश

१. Govt Arts College.
२. Journal of the Research Society
३. Hindu College Magazine.
४, Journal of the Music Academy

( बनारस )—कौमुदी ( कोल्हापुर )—पीयूषपत्रिका ( नडियाद )—संस्कृतपद्य-वाणी ( कलकत्ता ), आर्यप्रभा ( कलकत्ता )—सञ्जीविनी ( विहार )—भारतश्रीः ( काशी )—गीता (उडिपी) धर्मचक्रम् (तिरुची —नृसिंहप्रिया (तिरुवाल्लूर)—पीयूषवल्लरी (काशी)—कृतान्त (काशी)—शंकरगुरुकुलपत्रिका ( श्रीरंगम् )—वैष्णवसुधा ( काञ्ची ) कालिन्दी ( आगरा )--उद्योत ( लाहौर )—संस्कृत-पद्यमात्रपत्रिका ( कलकत्ता )—संस्कृतप्रचारकम् ( देहली )—संस्कृतसंदेश ( काष्ठमाण्डू )—सुधा ( जयपुर ) भारती ( पूना )—संस्कृतरङ्गः ( मद्रास ) अमरवाणी ( इन्दौर )—प्रज्ञा ( कलकत्ता ) भारतसुधा ( पूना )—मनोरम ( ब्रह्मपुर )—सौदामिनी ( विजापुर )—देववाणी ( मुंगेर )—मधुरवाणी ( मैसूर )—प्रभा (बालकोट)—संस्कृतपत्रिका (चित्तौड़)—विद्योदय (भरतपुर—देवस्थानपत्रिका ( श्रीरङ्गम् )—संस्कृतवाणी ( आन्ध्र )—आन्धमहाभारतम्)—( ककिन्द )—आराधना--( हैदराबाद ) किरण (सूरत)--प्रतिभा (सूरत)—आनन्दकल्पतरु ( कोम्बटोर )—सत्यविद्या ( तञ्जोर )—उपासना ( चेम्बूर )--अञ्जलि—आरती—विकास—नीहारिका—पारिजात--राजधानी - तरुण—उत्थान—अभ्युदय—वासन्ती—सुधादयः ( उड़ीसा )—ज्योति ( भिवानी )--आभा ( चण्डीगढ़ )—अमरवाणी ( राजस्थान )—प्राची ( अजमेर ) वेदवाणी—ज्योत्स्ना--रत्नावली--अङ्कुर--भारती--हंस--द्विभाषिका ( बंगाल )--भारत-दिवाकर ( गुजरात )—मिथिलामोद ( बिहार )—बहुश्रुत ( वर्धा )—लोकानां दीपिका ( मद्रास )—सुरगी ( बालकोट )—कवित्वम् ( राजस्थान )—संस्कृत-महामण्डल ( कलकत्ता ) संस्कृतरत्नप्रभा--सुधानिधि—विद्या ( काशी ) मञ्जरी--भारती ( तिरुव्यारु ) उषा--वाग्देवी--सरस्वती—संस्कृत · संस्कृत-मिश्रितपत्रिकाणां विषयेऽधिकं ज्ञातुकामोऽस्मि । कृपया येषां विदुषां सविधे विद्यन्त एताः पत्र-पत्रिकाः ते शीघ्रं सूचयेयुः । अत्रानेक-पत्र-पत्रिकाणां सूचना अन्यासु पत्र-पत्रिकासु इतस्ततः प्राप्यन्ते तथापि ता अद्यापि न दृष्टिगोचरीभूताः । प्रार्थयेऽस्मिन्कार्ये सततं यतनीयम्, सूचनीयाश्च वयं संस्कृतज्ञैः विद्वद्भिरिति । लेखोऽयं पूर्वानुबद्धोऽग्रिमाङ्केष्वपि द्रष्टव्यः ।

---

# सम्पादकीयम्

## संस्कृतं जीवति वा न वा

संस्कृतं मृतमिति योरपीयविदुषामुक्तिमुच्चपदाधीशा अपि कतिपयभारतीयाः संस्मरन्तः यदा-कदा तथानुवचन्ति। श्रोतारः पुनः विश्वसन्ति—संस्कृतं मृतमेव। न ते पृच्छन्ति—कदा मृतम्, केन रोगेण मृतम्, केन मारितं वा। तद्यथा जवाहरलाल नेहरू-महोदयो लोकसभायां प्रोक्तवान्[1]—संस्कृतं नाम भारतवर्षस्य मननसंस्कृत्यैतिह्यानां सामान्यतः प्रकाशकं बभूवेति यः कश्चिदपि दृढं वक्तुं समर्थः। नितान्तमेतत् दुःखकरं यत्संस्कृतभाषा सर्वथा मृता सञ्जाता। यानादर्शान् वयं भारतीया लालयामस्तेषां कृते महतीयं दुःखकरी स्थितिः।........... किन्तु २००० वर्षेभ्यः पूर्वं यदा प्रभृति प्राकृतभाषायाः प्रयोगः समारब्धस्तत एव संस्कृतभाषायाः सामान्यजनप्रयोज्यत्वं नष्टम्।'

उपर्युक्त मतानुसारं संस्कृतस्य तथाकथितमृत्युः द्विसहस्रवर्षं प्रागेवाभवत्। विचारणीयोऽयं प्रश्नः—संस्कृतभाषाया मरणस्य पश्चात् कालिदासः, भारविः, भवभूतिः, कल्हणः, श्रीहर्षः, जगन्नाथादयः बहवः प्रथितयशसो महाकवयः बभूवुः। नेहरू मतेन संस्कृतस्य मृत्योः पश्चात् प्राकृतेन जन-भाषा-पदं गृहीतम्। किं नेदं सत्यम्—यत् प्राकृतभाषायां कदापि तावानुच्चकोटिकः कश्चित् कविः नैवाभवत्, यावान् संस्कृतभाषाया उपर्युक्तमहाकवय आसन्। कीदृशमिदं संस्कृतस्य मरणं

---

1. One could say with confidence that Sanskrit represented broadly the thought, culture and traditions of India. It was great pity that Sanskrit had become a complete dead language. It is a great damage done to all that we stand for in India.......But Sanskrit has ceased to be the language of the common people for nearly 2000 years now since Prakrit came to be spoken.

The Hindustan Times dated April 25, 1963.

यदनुमरणमपि संस्कृतस्य शवानुसरणं महाकवित्वं ददाति। तत् तु प्राप्यं नान्यथा।

इत्थं तत्त्वतो विश्लेषणेन सिध्यति यत् संस्कृतस्य मृत्युः मिथ्या वार्तेति! संस्कृतं हि देवभाषा। अमराणां वाणीयम्। 'अमरं संस्कृतम्' कदापि मृत्युं नार्हति, संस्कृतं न मृतम्, न म्रियते, न मरिष्यति वा।

खीष्टीयाष्टादशशतकं यावत् भारते बहवः प्राकृतभाषाः संस्कृतेन सह जीविता आसन्। सर्वास्ता भाषाः संस्कृतेन सह संवर्धन्ते स्म। नासीत् क्वचित्संस्कृतं प्रति ईर्ष्या। संस्कृतस्य माहात्म्यं सर्वैः स्वीकृतम्। यद्यपि संस्कृतं जनभाषा नासीत्, तथापि संस्कृतं सर्वेषां सुसभ्यानां मातृ-भाषा, कुटुम्बभाषा, कुलभाषा चासीदेव। संस्कृतमेवाध्ययनाध्यापनस्य द्वारं साधनं वाभवत्। कथमीदृशी भाषा मृता कथ्यते? नासीदष्टादश-शताब्दी-पर्यन्तं कापि उच्चशिक्षण-संस्था अस्मिन् देशे यत्र संस्कृतं विहायान्यासां भाषाणां माध्यमत्वं स्वीकृतम्।

भारतस्य राष्ट्रभाषा खीष्टीयाष्टादशशताब्दीं यावत् संस्कृतमेवासीत्। संस्कृतज्ञा एव यात्रिकाः कश्मीरतः कन्याकुमारीपर्यन्तम्, गुर्जरप्रदेशतः असमपर्यन्तं वा सुखं प्रचरन्ति स्म सर्वत्र च विचारप्रसारं संस्कृतमाध्यमेन कुर्वन्ति स्म। युगान्तरालेऽस्मिन् विविध-विषयेषु संस्कृतमवलम्ब्य यावन्तो ग्रन्थाः भारतस्य सर्वेषु भागेषु पूर्वद्वीपसमूहेषु च प्रणीताः न तावन्तः कस्यामपि प्रादेशिकभाषायां ग्रथिताः। दर्शन-धर्म-काव्य विज्ञानादीनि अधिकृत्य प्रायशः सर्वे प्रमुखग्रन्थाः संस्कृते एव लिखिताः न हि प्राकृते। ईदृशी अपि संस्कृतभाषा यदि मृता कथ्यते तर्हि मरणमपि अस्याः जीवनाद्वरम्। तेऽपि के भारताः ये योरपीयमतस्य सत्यासत्यमविचार्यैव तत् स्वीकुर्वन्ति देवभाषा वा तिरस्कुर्वन्ति, मृतभाषेति वा कथयन्ति।

संस्कृतेऽधुनापि पञ्चाशत्प्रायाः पत्र-पत्रिकाः प्रकाश्यन्ते, प्रतिवर्षं शतादभ्यधिकमभिनवग्रन्थाः विरच्यन्ते, सहस्रेषु संस्कृतविद्यालयेषु यस्य माध्यमेन विद्यार्थिनः शिक्ष्यन्ते, यस्यां सहस्रशः शास्त्रार्थविवादादयः प्रतिवर्षमायोज्यन्ते च। किमधिकं जीवनस्य लक्षणम्? यदि संस्कृतमधुना साधारण-जनभाषा नास्ति,

तर्हि नास्तीदं मृत्योर्लक्षणम्। चिरकालात् सुसभ्यैः स्वीकृतेयं संस्कृतभाषा साधु-जीविता, जीविष्यति च शश्वत्। पुराकालीनयोरपीयभाषा वस्तुतः मृताः। न तासु पत्र-पत्रिकाः प्रकाश्यन्ते, न वा पुस्तकानि लिख्यन्ते।

ध्रुवमेव संस्कृतं भृशं जीवति। तस्य मरणं कदापि न भूतं भविष्यति वेति साधुमतम्। संस्कृतमवलम्ब्य परस्परवार्तालापादिना वा संस्कृतस्य सजीवता श्रवणानां मनसि यथा प्रतिफलतु तथा प्रयतनीयं संस्कृतानुरागिभिः।

— —

# ग्रन्थ समालोचनम्

विश्वनाथभट्टाचार्यः

[ सागरिकायां प्रत्यङ्कं संस्कृतविद्यासम्पर्किता ग्रन्था: समालोचयिष्यन्ते । समालोचनार्थं पुस्तकस्य प्रतिद्वयं प्रेषणीयम् । ]

**गीताञ्जलिः** । पुल्लेलश्रीरामचन्द्रः । आर्ट्स अंड साइन्स् कालेज्, वरंगल, आन्ध्रप्रदेशः । मूल्यं ३ रूप्यकाणि । पृष्ठसंख्या—XII + 66 । 1962 ।

काव्यग्रन्थोऽयं कविभास्करस्य रवीन्द्रनाथठाकुरस्येतन्नाम्ना विश्वविश्रुतस्य गीतसंग्रहस्य संस्कृतानुवादरूपः । अनुवादकः पण्डित श्रीरामचन्द्रमहाशयो मैकमिलनकम्पनीप्रकाशितस्य गीताञ्जलेरांगलानुवादमाश्रित्यैतान् गीतिखण्डान् संस्कृतभाषायामनूदितवान् । १०३ संख्यका गीतिकाः सुललितेन मन्दाक्रान्ताच्छन्दसा संस्कृतेन निबद्धाः । स्वकीये प्रास्ताविकवक्तव्ये विदग्धो ग्रन्थकारः रवीन्द्रकाव्यस्यान्तः 'निगूढं वहन्तीमाध्यात्मिकविचारधारां' प्रतिपादयतिः । पाश्चात्त्यसाहित्यसिद्धान्तेन समं भारतीयसिद्धान्तानां परिशीलनेन लब्धदृष्टिप्रसादा रामचन्द्रमहाशयोः वक्तव्येऽस्मिन् स्वकीयं वैदग्ध्यं, रवीन्द्रनाथस्य काव्योत्कर्षं, तत्काव्यस्याध्यात्मभावनानिष्ठत्वं, वैष्णवकबीरनानकबाबुलाख्यानां विचारसरणौ रवीन्द्रकाव्येषु महत्त्वं—इत्यादिकं सर्वं सममेव प्रदर्शयति ।

काव्यस्य भाषान्तरकरणं नितरां दुःसाध्यमिति तत्र कृतश्रमाणां सर्वेषां विदुषां नैवाविदितम् । भावभाषयोर्भवति विचित्रः कश्चित् सम्पर्को येन विना भावस्य प्रकाशनं विघ्नितं स्यात् । अस्मादेव कस्याञ्चिद् भाषायां प्रसिद्धस्य महाकविनापि कृते भाषान्तरे मूलस्यास्वादः साकल्येन दुष्प्राप एव । मेघदूतस्यास्वादो मूलादेव लभ्यो भाषान्तरात्तदास्वाद आंशिक एव भवेत् । फिटजेरल्डकृत उमरखयामकाव्यानुवादः प्रसिद्धः सन्नपि मूलकाव्यरसं नैवोपाहरति । किन्तर्हि काव्यानामनुवादो व्यर्थः ? मैवम् । अनुवादो हि खलु द्वारं भाषान्तरप्रसिद्धग्रन्थानां रसा-

स्वादने। एतन्माध्यमेन मूलं प्रति सहृदया भवन्ति समाकृष्टाः। कविप्रतिभाया वैचित्र्यं, भावानां च सार्वभौमत्वमेवं दरीदृश्यते ततश्च महान् आनन्दः। सन्ति च केचन भावा मानवमात्रस्य हृदये समुल्लासजननसमर्थाः। गीताञ्जलेर्भावास्त-त्कोटिकाः। तेषां भावानां सर्वजनसुग्रहत्वमतो निर्विवादम्।

वङ्गभाषानिबद्धं वङ्गीयकविरचितं ग्रन्थं संस्कृतेऽनूद्य महदुपकृतं श्रीमता रामचन्द्रेण। संस्कृतं हि नाम सा भाषा या सकलभारतमण्डलं विषयीकरोति। भारतखण्डे १४ भाषा भिन्नभिन्नप्रदेशेषु प्रचलिताः। भाषाभेदमिमं दूरीकृत्य प्रदेशीयजनानां भावगतमैक्यमद्य विशेषतः संसाध्यम्। एतादृशैरनुवादग्रन्थैः सर्वासां भाषाणां महत्त्वं भारतीयभाववाहकत्वं च प्रमाणीक्रियेते। एतदर्थं संस्कृत-गीताञ्जलिरयं ग्रन्थकृता साकमस्माभिः सादरं समादरणीयः।

मन्दाक्रान्ताच्छन्दसो भाषायाश्च प्रयोगः सुतरां मनोहारी। तथापि मन्ये मात्रावृत्तस्य समाश्रयेण रवीन्द्रगीतिच्छन्दसो वैशिष्ट्यप्रदर्शनं सुशकमभविष्यत्। वयमस्य ग्रन्थस्य सर्वत्र समादरं कामयामहे।

**श्रीबोधिसत्त्वचरितम्**। सत्यव्रतशास्त्री। दिल्ली। २०१७। मूल्यं ४) पृ० १२०।

भगवतो गौतमबुद्धस्य जीवनवृत्तं बौद्धानां विशेषतो मननीयमिति तदधिकृत्यो-पलभ्यते पालिभाषायां विशालं साहित्यम्। जातकसाहित्यमिति नाम्ना बुद्धजीवन-सम्बन्धि साहित्यं निर्दिश्यते। पालिजातकेषु भगवतो बुद्धस्य जन्मान्तरीयचरितानां व्यापकं वर्णनमुपनिबद्धम्। बहूनि जन्मान्यतीत्यासौ बुद्धत्वं प्राप। बुद्धत्वप्राप्तेः पूर्वं स भगवान् बोधिसत्त्वदशां तन्नाम च भेजे। बोधिसत्त्वदशायां तैः सम्पादि-तान्यवदानानि पालिभाषायामेव प्राधान्येन वर्णितानि। केचन संस्कृतज्ञास्तानि संस्कृतभाषायामपि सन्यस्तवन्तः। अवदानशतकं, आर्यशूरविरचिता जातकमाला, क्षेमेन्द्रकृता बोधिसत्त्वावदानकल्पलता—इत्येते ग्रन्थाः पालिजातककथाः समा-श्रित्य संस्कृते बुद्धजीवनवर्णनपराः। बुद्धस्योदात्तजीवनं काले काले सर्वेषामेव प्रेक्षावतां हरति मनांसि। अस्यैव मनोहरणस्य परिणामः श्रीसत्यव्रतशास्त्रिणः श्रीबोधिसत्त्वचरितम् नाम महाकाव्यम्।

श्रीमान् शास्त्रिमहाशयः समाहृत्य काश्चन मनोहारिण्यः कथाः स्वकीयया अनुत्तमकवित्वशक्त्या संस्कृते विन्यस्य एकादशसर्गविभक्तं श्लोकसहस्रात्मकं महाकाव्यं प्रणीतवान् । भगवज्जीवनवर्णनपरत्वादस्त्येव विषयमाहात्म्यमस्य ग्रन्थस्य, कवेः कविकर्मनैपुणमपि प्रसभं हरिष्यति सुधियां मन इत्यस्माकं मतिः । भाषायाः प्रसादः, छन्दोवैचित्र्यं, अलङ्कारप्रयोगनैपुण्यं, कथाप्रतिपादनशैली च शास्त्रिमहाशयस्य कवित्वशक्तिमुद्घोषयन्ति । तेषां वयमन्यान्यपि महाकाव्यानि कामयामहे। संस्कृतानुरागिणोऽवश्यमेव ग्रन्थमेनं संग्रहीष्यन्तीति नो विश्वासः ॥

**भारतसन्देशः** । शिवप्रसादभारद्वाजः । विश्वेश्वरानन्द वैदिकशोधसंस्थानम् । होशियारपुरम् । २०१६ । मूल्यं—२) पृ० ५२ ।

लघुकाव्यमिदं 'युद्धज्वरग्रस्तस्य विश्वस्य कृते शान्तिसन्देशमधिकृत्य प्रवर्तते' इति भूमिकायामाह कवयिता श्रीमान् शिवप्रसादभारद्वाजः । सन्देशकाव्यस्य परम्परा यद्यपि पुरातनी तथाप्यत्र वर्ण्यविषयस्याभिनवत्वमस्य काव्यस्य वैशिष्ट्यं स्फुटं प्रमाणयति । यत्र प्राधान्येन शृङ्गार एव रसो विराजते तत्र देशभक्तिभावं संस्थाप्य संस्कृतसाहित्ये भारद्वाजविदुषा नवीनं स्वरसंयोजनं कृतम् ।

सन्देशकाव्यगुरुं कालिदासमौचित्येन प्रामाणीकृत्य कविना मन्दाक्रान्ताच्छन्दसा २८२ संख्यकाः श्लोकाः रचिताः । ते च श्लोकाः पूर्वभागे भारतवर्णनपराः, उत्तरभागे च राष्ट्रपतेः शान्तिसन्देशं वर्णयन्ति । हिंसादीर्णं युद्धोद्यतं च विश्वं दृष्ट्वा केचन वैदेशिकाः शान्तिस्थापनार्थे भारतराष्ट्रमेव योग्यं मत्वा भारते समागच्छन्ति, बम्बई-नगरीतः राजधानीं गत्वा राष्ट्रपतिप्रधानमन्त्रिणौ साक्षात्कुर्वन्ति, उभाभ्यां च सादरं सम्मानितास्ते भारतराष्ट्रपतेः शान्तिसन्देशं श्रुत्वा परमां मुदमधिगच्छन्ति इत्यत्रत्यकथासारः ।

पथवर्तिनां नगनदीनगराणां वर्णने, शान्तिस्थापनाया महत्त्वप्रतिपादने, दुरूहवैदेशिकशब्दानां संस्कृतरूपान्तरकरणे च स्वकौशलं कवित्वशक्तिं च भृशं प्रमाणयन्तो भारद्वाजमहाशयाः सर्वेषामेव प्रशंसार्हाः । वर्ण्यविषयस्य आधुनिकत्वे सत्यपि भाषायाः सारल्यं प्रसादगुणश्च कवयितुः शक्त्युत्कर्षं स्पष्टं प्रमाणयतः ।

सर्वथा प्रशंसनीयेऽस्मिन् लघुकाव्ये विषयविन्यासमधिकृत्य प्रश्न एक उदेति। किमर्थं शान्तिसन्देशश्रावणार्थं वैदेशिकानां समागमः प्रेरकरूपेण कल्पितः इति। स्वयमेव भारतराष्ट्रपतिश्चेद् युद्धोद्यतेभ्यो राष्ट्रेभ्यः सन्देश-प्रेषणमकरिष्यत्तर्हि मन्ये तत्सुसंगतमभविष्यत्।

नवीनमार्गसञ्चारिणोऽस्य काव्यस्य बहुलप्रचारः काम्यः॥

**उषारागोदया**—श्रीरुद्रचन्द्रदेवप्रणीता। सं० श्रीबाबूलाल शुक्ल शास्त्री, भाषा तथा शोध संस्थान, जबलपुरविश्वविद्यालय। मूल्यं—रु० ३ पृ० ५४

**नवग्रहचरितम्**—घनश्यामप्रणीतम्। सं० श्रीबाबूलाल शास्त्री-भाषा तथा शोधसंस्थान जबलपुर विश्वविद्यालय। १९६० ई० मूल्यं—रु०१'८७ पृ० २७

**कौत्सस्य गुरुदक्षिणा**—श्रीवासुदेव द्विवेदी, वेदशास्त्री, साहित्याचार्यः। सार्वभौमसंस्कृत-प्रचार-कार्यालयः—काशी। १९५४ ई०। मूल्यं-आणकत्रयम्। पृ० १२

**उन्मत्तकीचकम्**—के० एस० नागराजन्। भारतवाणी—कार्यालयः—४२३ सदाशिव, पुणें--२। मूल्यं रु० २) १९६० ई० पृ० ५४।

वारंगलशासकः काकतीयनृपः श्रीरुद्रचन्द्रदेवः शासनकर्मणा सममेव भारती-सेवाकर्मणि दत्तचित्तो बभूव। ययातिचरितं नाम नाटकं, उषारागोदया नाम नाटिका च तस्य राज्ञः संस्कृतप्रीतिं कवित्वशक्तिं च प्रमाणयतः। अद्यावधि उषा-रागोदया नाम नाटिका मुद्रायन्त्रनिपीडनं न प्राप्तवती, अतश्च विद्योत्साहिभ्यस्तां समुद्रितां सुसम्पादितं च कृत्वा उपहर्तृभ्यः पण्डितबाबूलालशुक्लेभ्यः साधुवादान् निवेदयामः।

विदुषा सम्पादकेन ग्रन्थस्यास्यामुखे ग्रन्थकृतः पूर्णः परिचयः प्रदत्तः। ई० ११५० वर्षात् ई० ११९५ वर्षं यावत् राज्यं कुर्वतोऽस्य नृपतेर्नाटिकायाः अध्ययनेन द्वादशशताब्द्यां दक्षिणभारते संस्कृतविद्यायाः स्थितिः शक्या सुखं विज्ञातुम्। आदौ भूमिकया अन्ते च श्लोकानुक्रमण्या युक्तोऽयं ग्रन्थः सुमुद्रितः संस्कृतनाटिकाभाण्डारेऽस्माभिः स्वागतशब्दपूर्वं संग्रहीतुं युज्यते।

  

बाबूलालशास्त्रिसम्पादितो द्वितीयो ग्रन्थो घनश्यामप्रणीतं नवग्रहचरितम्। अङ्कत्रयात्मकं रूपकमिदं समवकारश्रेणीमधितिष्ठतीति सम्पादकानामभिप्रायः। एषोऽपि ग्रन्थ इदम्प्रथमतया मुद्राप्य विद्वद्भ्य उपहृत इति शास्त्रिमहाशया धन्यवादानर्हन्ति। एवमेवान्यान् लुप्तग्रन्थान् प्रकाश्य श्रीमन्तः सम्पादका बहूपकरिष्यन्ति संस्कृतज्ञानामित्याशास्महे।

तृतीयो ग्रन्थः कौत्सस्य गुरुदक्षिणा नाम एकाङ्किनाटकम्। रघुवंशस्य पञ्चमसर्गीयो रघुकौत्ससंवादोऽत्र चतुर्भिर्दृश्यैः श्रीवासुदेवद्विवेदिना नाट्यरूपे परिणमितः। ईदृशानामेकाङ्किनाटकानां महाविद्यालयादिषु प्रयोगः सुखसाध्य इति युक्त एव संरम्भो द्विवेदिमहाशयानाम्। सरलया संस्कृतगिरा निबद्धं नाटकमिदं छात्रप्रियं विद्वत्प्रियं च भूत्वा विद्यालयेषु प्रयोगमर्हति। नवीनमार्गसञ्चारकुशली ग्रन्थकारः संस्कृतप्रणयिणां प्रशंसार्हः।

उन्मत्तकीचकमिति पञ्चाङ्कं नाटकं प्रसिद्धनाम्नः कवेः के० एस० नागराजन् महाशयस्य कृतिः। श्रीसीतास्वयंवराद्यनेककाव्यनिर्मातुः नागराज-महाशयस्य परिचयो नापेक्ष्यते संस्कृतज्ञैः। प्रवाहमयी भाषा, श्लोकानां सारल्यं चात्र विशेषतो दर्शनीये। नागराज—महाशयस्य संस्कृतं दृष्ट्वा अवितथं भाति तत्प्रयुक्तं भरतवाक्यम्—

स्वतन्त्रे भारते शश्वद्वर्धतां नव्यशोभया।<br>संस्कृता भारती रम्या रञ्जयन्ती मनांसि नः।

परमत्र कीचकचरित्रं महाभारतं सर्वथा नानुहरति यद्यपि आकरग्रन्थानां सर्वांशेनानुसरणं नैवावश्यकं नाट्यकारस्य, तथापि शौर्यौदार्यादिगुणैः कीचकोऽत्र महत्त्वं भजते तेन च तस्य प्रतिनायकत्वं खण्डितम्। विपरीतं चैतत्। अत्र नायकोऽपि कीचक एव। अतो मन्ये श्रीमता नाट्यकारेण पाश्चात्यप्रसिद्धदुःखान्तनाटक प्रकारमनुसृत्य कथावस्त्वत्र कल्पितमिति।

सुकल्पितं नाटकमिदं सर्वथा रङ्गमञ्चोपयोगि। संस्कृतविद्याकेन्द्रेषु सर्वत्र ग्रन्थस्यास्य स्थानं समादरश्च वयं समर्थयामहे।

----

# सागरिका

षाण्मासिकी



द्वितीयवर्षे द्वितीयाङ्कः

२०२०

प्रकाशिका

संस्कृतपरिषद्, सागरविश्वविद्यालयः

सागरम् ( म० प्र० )

# सागरिका

षाण्मासिकी

द्वितीयवर्षे द्वितीयाङ्कः

२०२०

प्रकाशिका

संस्कृतपरिषद्, सागरविश्वविद्यालयः

सागरम् ( म० प्र० )

सागरिकासम्पादनसमितिः

सम्पादकः—डा० रामजी उपाध्यायः

कोषाध्यक्षः—डा० वनमाला भवालकरः

मन्त्री—डा० विश्वनाथ भट्टाचार्यः

# सूचीपत्रम्

१—पद्मावती—डा० वासुदेव विष्णु मिराशी ... ... ९३
२—भारतं तद्विराजताम्—डा० मङ्गलदेवशास्त्री ... १००
३—अग्निसंहिता—श्रीजगन्नाथ वेदालङ्कारः ... ... १०१
४—काव्ये रसपर्याप्तिविमर्शः—डा० राममूर्ति त्रिपाठी ... ११०
५—सुरापः—श्रीमञ्जुलमयंकपन्तुलः ... ... ११५
६—पाणिनीयस्य सुबोधतां—श्री के० राजन्न शास्त्री ... १२२
७—आर्यसमाजस्य संस्कृतसाहित्यकाराः—श्रीविश्वनाथशास्त्री १२५
८—वसन्तवर्णनम्—स्व० म० म० रामावतार शर्मा ... ... १२६
९—विज्ञानवादे प्रत्ययनिर्वाहः—डा० व्रतीन्द्रकुमार सेनगुप्तः ... १३६
१०—मल्लिनाथानुवीक्षा—श्रीरेवाप्रसाद द्विवेदी ... ... १३८
११—उपनिषदां संस्कृतिसमीक्षणम्—कु० साधना गुप्तः ... १४५
१२—संस्कृतवृत्तम् ... ... ... १५०
१३—म० म० स्व० रामावतार शर्मा—श्रीअच्युतानन्द झा ... १५३
१४—संस्कृत-प्रकाशन-विज्ञप्तिः—श्रीभोजराजः ... ... १७२
१५—समाचारः ... ... ... १७७
१६—सम्पादकीयम् ... ... ... १७८

——

# पद्मावती

डॉ० वा० वि० मिराशी

पुरातनकाले सुविख्यातानि किन्त्वधुना करालकलिकालकवलितत्वात् स्मृतिशेषतां यातानि स्थलानि भारते सर्वत्र दरीदृश्यन्ते। पद्मावतीनाम्नस्तेष्वेकत-मस्यास्मिँल्लेखे परिचयं कर्तुं प्रयत्यते।

इयं पद्मावती नगरी महाकवेर्भवभूतेः पूर्वजानां पद्मपुरनाम्नो निवास-स्थानादभिन्नेति केषाञ्चिन्मतं भ्रममूलमेव। यतः तत् पद्मपुरं दक्षिणापथे विदर्भेष्वासीदिति भवभूतेरेव नाटकद्वयादवगम्यते। तथाहि महावीरचरित-नाटकस्य प्रस्तावनायां सूत्रधारः कथयति—'अस्ति दक्षिणापथे पद्मपुरं नाम नगरम्' इति। दक्षिणापथो नाम नर्मदाया दक्षिणतो देश इति सुविख्यातमेव। तथाहि वात्स्यायनकामसूत्रस्य जयमङ्गलाटीकायां सुस्पष्टमभिहितं 'नर्मदाया दक्षिणापथः।' राजशेखरस्तस्य 'माहिष्मत्याः परतो दक्षिणापथः' इति लक्षणं वदति तस्यापि स एवार्थः। यत इयं माहिष्मती मध्यभारते नर्मदातीरस्थं महेश्वरनामकं तीर्थस्थानम्। तस्मात् पद्मपुरं नर्मदाया दक्षिणतः स्थितमिति नात्र संदेहावकाशः। आत्मनो मालतीमाधवनाम्नो नाटकस्य प्रस्तावनायां भवभूतिरतोऽपि स्पष्टतया पद्मपुरस्य स्थानं निर्दिशति 'अस्ति दक्षिणापथे विदर्भेषु पद्मपुरं नाम नगरम्' इति। इदं पद्मपुरं ख्रिस्तपञ्चमशताब्द्यन्ते राजधानीपदं प्राप्तवदिति विदर्भशासकस्य वाकाटकराज्यवंशस्य कस्माच्चित्ता-म्रपत्रादनुमातुं शक्यते। तस्मिंस्ताम्रपत्रे 'पद्मपुरात्' इति ताम्रपत्रदानस्थलस्य निर्देशः कृतः, स राजधानी सूचक इति विदितमेव उत्कीर्णलेखाध्येतॄणाम्। तस्मात् भवभूतेः पितृपितामहानां निवासस्थानं पद्मपुरं दक्षिणभारते।

विदर्भेष्वासीदिति निःसन्देहं वक्तुं शक्यते तदधुना विदर्भाणां भंडारानाम्नि विषये स्वपुरातननाम्नैव विद्यत इति सप्रमाणमन्यत्र प्रदर्शितमस्माभिः। पद्मावती तु उत्तरभारत आसीदित्यनुपदमेव प्रदर्श्यते। तस्या अधुना रूपान्तरं 'पवाया' अथवा 'पदमपवाया' इति नामके ग्रामे सञ्जातम्। अयं ग्रामो ग्वाल्हेर नगरात् नैर्ऋत्यदिशायां द्विचत्वारिंशत्क्रोशार्धेषु विद्यते। पद्मावत्या इदं स्थानमुत्खननात् सुस्पष्टं संजातम्। भवभूतेर्मालतीमाधवनाटके कृतं पद्मावतीस्थनदीपर्वतदेवालयादीनां वर्णनं पवायाग्रामेण संगच्छत इत्युपरिष्टात्प्रदर्शयिष्यते।

अतिप्राक्कालादारभ्येयं पद्मावती नागराजानां राजधानीत्वेन महतीं ख्यातिमवाप। पुराणेष्वस्या बहुवारं नामोल्लेखो दृश्यते। तथाहि मगधानां कश्चन विश्वस्फाणिर्नाम नृपतिः पद्मावत्यां क्षत्रियसंहारं करिष्यतीत्युक्तमधोनिर्दिष्टे सन्दर्भे—

'मागधानां तु भविता विश्वस्फाणिः पुरञ्जयः।
करिष्यत्यपरान् वर्णान् पुलिन्दयदुमद्रकान्॥
प्रजाश्चाब्रह्मभूयिष्ठाः स्थापयिष्यति दुर्मतिः।
वीर्यवान् क्षत्रमुत्साद्य पद्मावत्यां स वै पुरि॥'

कोऽयं विश्वस्फाणिः, कुत्र कस्मिन् काले वा स सञ्जात इति नाद्यावधि गवेषणतो ज्ञातम्।

किन्तु ततः परमियं पद्मावती नगरी नागराजानां राजधानी सञ्जातेति निर्देशः पुराणेषु दृग्गोचरी भवति। तथाहि विष्णुपुराणेऽभिहितम्—'नव नागाः पद्मावत्यां, कान्तिपुर्यां, मथुरायाम्। पुराणान्तरेष्वप्युक्तम्—

'नव नागास्तु भोक्ष्यन्ति पुरीं पद्मावतीं नृपाः।
मथुरां च पुरीं रम्यां नागा भोक्ष्यन्ति सप्त वै॥

अस्मिन् श्लोके पद्मावतीशासकानां नागनृपतीनां 'नव' संख्या प्रोच्यते। पवायाग्रामे च श्री० मो० ब० गर्दे महाशयैः कृतादुत्खननात् महाराजोपाधिभाजां भीमनाग-स्कन्दनाग—बृहस्पतिनाग—देवनाग—विभुनागेत्यादीनां बहूनां

नागराजानां नामकानि प्राप्तानीत्यतः पुराणवचने न काऽप्यतिशयोक्तिः सम्भवति।

उपरिनिर्दिष्टा नागनृपतयो भारशिवनाम्ना विख्याता बभूवुः। तेषां वर्णनमधोनिर्दिष्टाद् वाकाटकनृपति—द्वितीयप्रवरसेनस्य ताम्रपत्रेभ्य उद्धृतात्सं-दर्भात्स्पष्टीभवति—

"अग्निष्टोमाप्तोर्यामोक्थ्यषोडश्यतिरात्रवाजपेयबृहस्पतिसवसाद्यस्कचतुरश्व-मेधयाजिनो विष्णुवृद्धसगोत्रस्य सम्राजो वाकाटकानाम्महाराजश्रीप्रवरसेनस्य सूनोः सूनोः अत्यन्तस्वामिमहाभैरवभक्तस्य अंसभारसन्निवेशित-शिवलिङ्गोद्व-हनशिवसुपरितुष्टसमुत्पादितराजवंशानां पराक्रमाधिगतभागीरथ्यमलजलमुर्द्धा-भिषिक्तानां दशाश्वमेधावभृथस्नातानां भारशिवानां महाराजश्रीभवनागदौहि-त्रस्य गौतमीपुत्रस्य पुत्रस्य वाकाटकानां महाराजश्रीरुद्रसेनस्य—"

अस्मिन् सन्दर्भे वाकाटकनृपतिः श्री ( प्रथम ) रुद्रसेनो वर्ण्यते। अति-बलाढ्यस्यानेकश्रौतयज्ञाहर्त्तुश्चतुरश्वमेधयाजिनः वाकाटक-सम्राजः श्री ( प्रथम ) प्रवरसेनस्य स नप्ताऽऽसीत्। अयं प्रवरसेनो विदर्भेषु चिरकालं सम्राट्पदं भेजे। तेनोत्तरभारतस्यभारशिवनृपतिभिः सह वैवाहिकसंबन्धः कृतः। एते भारशिवाः कुशाणनृपतीनां साम्राज्यस्य ह्रासकाल उदयं प्रापुः। किं बहुना तैरात्मनः पराक्रमेण कुशाणनृपतय उत्तरप्रदेशान्निष्कासिताः, वाराणसीं यावत्प्रदेशमाक्रम्य तत्रस्थ-भागीरथीजलेनात्मनो मूर्धाभिषेकः कृतः, अथ च दशाश्वमेधैरिष्ट्वा बहुवारमवभृथस्नानमपि कृतम्। प्रथमप्रवरसेनसमये भार-शिवानां महाराजो भवनागो नाम पद्मावतीं शास्ति स्म। प्रथमप्रवरसेनेन तस्यदुहिताऽऽत्मनो गौतमीपुत्रनाम्नः सुतस्य कृते स्वीकृताऽनेन च वैवाहिक सम्बन्धेन दक्षिणोत्तरभारतयोरार्याणामेकच्छत्रं राज्यं स्थापयितुं प्रायत्यत। पद्मावत्याः शासका नागराजाः स्वस्कन्धे भगवतः शम्भोर्लिङ्गम् आधुनिकवीरशै-ववत् वहन्ति स्म। अतस्ते भारशिवनाम्ना सुविख्याता बभूवुः। एतादृश-लिङ्गवहनात्संतुष्टेन भगवता चन्द्रमौलिनात्मनो राजवंशः समुत्पादित इत्या-

सीत्तेषां दृढा श्रद्धा। पद्मावतीनगर्यां भारशिवनृपतेर्भवनागस्य विपुलानि नाणकान्यद्याप्युपलभ्यन्ते।

तदनन्तरं पद्मावत्यां नागसेनो नाम राजा बभूव। अस्य राज्ञो विषये 'नागकुलजन्मनः सारिकाश्रावितमन्त्रस्यासीन्नाशो नागसेनस्य पद्मावत्याम्' इति भट्टबाणेनात्मनो हर्षचरिते विनाशकारणं निर्दिष्टम्। गुप्तसम्राजा समुद्रगुप्तेनोच्छिन्नेष्वार्यावर्तनृपतिष्वयमेकतम इति प्रयागप्रशस्तितो ज्ञायते। अस्योच्छेदानन्तरं पद्मावतीप्रदेशो गुप्तसाम्राज्यान्तर्भूत इत्यप्यनुमातुं शक्यते।

यद्यपि नागवंशोच्छेदात्पद्मावत्या राजधानीपदं विनष्टं तथापि खिस्तोत्तरैकादशशताब्दीं यावत् सा विद्यापीठरूपेण सुविख्यातासीत् तत्र च भारतस्य तत्तेभ्यः प्रदेशेभ्योऽध्ययनार्थं विद्यार्थिन आयान्ति स्म। पद्मावती देवायतनैः विहारारामप्रासादैः सुन्दरयुवतिभिश्च सुप्रसिद्धासीदिति संस्कृतवाङ्मयेऽस्याः चोत्कीर्णलेखेषु कृतात्तद्वर्णनात्सुविशदं भवति। तथाहि धाराधीशभोजनृपतेः सरस्वतीकण्ठाभरण उद्धृतो दृश्यतामयं श्लोकः—

"पुरः पाराऽपारा तटभुवि विहारः पुरवरं
ततः सिन्धुः सिन्धुः फणिपतिवनं पावनमतः।
तदग्रे तूदग्रो गिरिरिति गिरिस्तस्य पुरतो
विशाला शालाभिर्ललितललनाभिर्विजयते॥'

एतद्वर्णनं पवाया ग्रामेण सुष्ठु संगच्छते। अस्ति तत्र पारासिन्धुनामकं नदीद्वयम्। नागराजस्योपवनमधुना विनष्टं किन्तु तस्य स्थानं तत्रत्य-ग्रामीणैः प्रदर्श्यते। तत्र च गर्दमहाशयैरुत्खननेन दृग्गोचरीकृतो बौद्धविहारोऽपि वर्तते। नगरी-सकाशे विद्यमानो गिरिः सैवेयं पुरातनी पद्मावती नगरीति मतं द्रढयति।

खिस्तोत्तरैकादशशताब्द्यां पद्मावती आत्मनस्तुङ्गप्रासादैस्तत्रस्थगजवाजिरत्नैश्च कथं रामणीयकमाप तदधोनिर्दिष्टेभ्यः विक्रम-संवत् १०५७ तमवर्षे (खैस्ताब्दे १००१ तमे) उत्कीर्णात् खजूरवाहकस्थशिलालेखादुद्धृतेभ्यः श्लोकेभ्यः सुविशदं भविष्यति —

आसीदप्रतिमा विमानभवनैराभूषिता भूतले
लोकानामधिपेन भूमिपतिना पद्मोत्थवंशेन या।
केनापीह निवेशिता कृतयुगत्रेतान्तरे श्रूयते
सच्छास्त्रे पठिता पुराणपटुभिः पद्मावती प्रोच्यते ॥

सौधोत्तुङ्गपतङ्गलङ्घनपथप्रोत्तुङ्गमालाकुला
शुभ्राभ्रंकषपाण्डुरोच्चशिखरप्राकारचित्राम्बरा।
प्रालेयाचलश्रृङ्गसन्निभशुभप्रासादसद्मावती
भव्या पूर्वमभूदपूर्वरचना या नाम पद्मावती ॥

त्वङ्गत्तुङ्गतुरंगमोद्गमखुरक्षोदाद्रजः प्रोद्धतं
यस्यां जीर्णकठोरवस्त्रमकरोत्कूर्मोदराभं नभः।
मत्तानेककरालकुम्भिकरटप्रोत्कृष्टकष्टाद्भुतं
युक्तं कर्दममुद्रया क्षितितलं तां ब्रूत किं संस्तुमः ॥

भवभूतिरस्यां पद्मावतीनगर्यां चिरकालमुवासेति मालतीमाधवस्थतद्वर्णनात् सुस्पष्टं भवति। मन्ये तन्नाटकस्य माधवनामनायकवत् सोऽपि विदर्भेभ्यस्तत्राध्ययनार्थं गत आसीत्। मालतीमाधवस्य कथानकं पद्मावती परिसरे समभूदिति तन्नाटके वर्णितं कविना। तत्संगेन पद्मावतीनगरीस्थ-प्रासादाः तत्परिसरे वहन्त्यो नद्यस्तत्र च विद्यमानानि देवालयश्मशानादीनां स्थानानि निर्दिष्टानि। तेषु केषाञ्चिदुल्लेखा अधो निर्दिश्यन्ते।

पद्मावती नगरी पारासिन्धुसङ्गमे संनिविष्टासीत्। अत मालतीमाधवस्य चतुर्थाङ्के माधवो वदति—

"तदुत्तिष्ठ। पारासिन्धुसम्भेदमवगाह्य नगरीमेव प्रविशावः।"

एते नद्यावधुना 'सिंध' 'पार्वती'—इति यथासंख्यं नामद्वयेन विज्ञायेते।

पवायाग्रामस्य नैर्ऋत्यां दिशि क्रोशान्तरे सिन्धुसरितः प्रपातेन सदैव निनादितमतीव रम्यं स्थलं वर्तते, यत्र ओरछाप्रदेशाधिपतिना वीरसिंहदेवेन निर्मितमुत्तुङ्गं धूमेश्वरनामकं देवायतनमद्यापि सुस्थितावस्ति। मालतीमाधवस्य नवमाङ्के सौदामिनीमं जलप्रपातमेवं वर्णयति—

अयमसौ भगवत्याः सिन्धोर्दारितरसातलस्तटप्रपातः—

"अत्रत्य एष तुमुलोध्वनिरम्बुगर्भ-
गम्भीरनूतनघनस्तनितप्रचण्डः ।
पर्यन्त-भूधरनिकुञ्जविजृम्भमाणो
हेरम्बकण्ठरसितप्रतिमानमेति ॥"

एवमेव सा सौदामिनी पद्मावतीनगरीवैभवमपि वर्णयति—

"पद्मावती विमलवारिविशालसिन्धु-
पारासरित्परिकरच्छलतो बिभर्ति ।
उत्तुङ्गसौधपुरमन्दिरगोपुराट्ट-
संघट्टपाटितविमुक्तमिवान्तरिक्षम् ॥"

अस्मिन् श्लोकेऽपह्नुत्युत्प्रेक्षयो रमणीयः संकरः प्रयुक्तः कविना । पद्मावत्याः परिसरे अतिस्वच्छजला विशाला सिन्धुः पारा चेत्येते नद्यौ वर्तेते । ते उद्दिश्य कविरुत्प्रेक्षते—नूनं नेमे सरितौ किन्तु पद्मावत्यां विद्यमानानामतीवोत्तुङ्गदेवालयानां गोपुराग्रभागैः पाटिता भूमौ च पतिता आकाशप्रदेशा एवेमे। अहो रमणीयत्वमुत्प्रेक्षायाः ।

पवायाग्रामस्य पूर्वस्यां दिशि सार्धक्रोशान्तरे सिन्धुमधुमतीनद्योर्दृष्टिहारी संगमो वर्तते यत्र सुवर्णबिन्दुनामकः शिवालय आसीत् । तस्यापि निर्देशः मालतीमाधवस्य नवमाङ्के सौदामिन्या वचस्येवं दृश्यते—'अयं च मधुमतीसम्भेदपावनो भगवान् भवानीपतिरपौरुषेयप्रतिष्ठः सुवर्णबिन्दुरित्याख्यायते ।'

मधुमत्यधुना 'महुवार' नाम्ना विज्ञायते । सिन्धुनद्या सह तस्याः संगमेद्याप्येकस्य देवालयस्याधोभागो दृग्गोचरीभवति विद्यते च तदुपरि स्थापितं शिवलिङ्गम् । एतदेव भवभूतिना निर्दिष्टस्य सुवर्णबिन्दुशिवालयस्य स्थानमित्यत्र न स्तोकोऽपि सन्देहः । ततः पूर्वस्यां दिशि लवणा ( अधुना 'नून' नाम्ना विहिता ) नदी वर्तते यां सौदामिन्येवं वर्णयति—

"सैषा विभाति लवणा ललितोर्मिपङ्क्ति-
रभ्रागमे जनपदप्रमदाय यस्याः।
गोगर्भिणीप्रियनवोलपमालभारि-
सेव्योपकण्ठविपिनावलयो विभान्ति ॥"

तदेवं पद्मावती नगर्यां तत्परिसरे च विद्यमानानां नदीपर्वतदेवालयश्मशानादीनामतीव सुचारु सूक्ष्मं च वर्णनं भवभूतिना स्वीये मालतीमाधवाभिधे नाटके कृतं यदधुनापि परःसहस्रेभ्यः संवत्सरेभ्य ऊर्ध्वमपि यथातथ्यं भाति। तस्मात्तस्यां नगर्यां महाकविर्भवभूतिः कश्चित्कालं यापयामासेति नास्ति सन्देहलवोऽपि।

पुरातनकाले वैभवसम्पन्नाया उत्तुंगसौधप्रासाददेवालयादिभिर्भूषिताया: विविधशास्त्रकलाचणैर्विद्वद्भिः शिल्पिभिश्च स्वनिवासेन दिगन्तकीर्तिं प्रापितायाः पद्मावतीनगर्या अधुना दारिद्र्योपहतनिर्जनपवायाग्रामे संजातं रूपान्तरं प्रेक्ष्य कस्य सहृदयस्य मुखाद्दुःखावेगेनेयमुक्तिर्न निःसरेत्—

'सर्वं यस्य वशादगात् स्मृतिपथं कालाय तस्मै नमः।'



# भारतं तद्विराजताम्

डा० मङ्गलदेवशास्त्री

विद्याया निरवद्याया लोककल्याणकाम्यया।
उत्तरोत्तरमुत्कर्षे नियतं दत्तमानसाः ॥ १

दम्भेन मायया मुक्ताः स्वच्छा मुक्तावलीव ये ।
विबुधैर्भासितं तैर्यद् भारतं तद्विराजताम् ॥ २

वरेण्यस्य वरिष्ठस्य सृष्टावस्यामसंशयम् ।
मानवस्य महन्मूल्यं दम्भं मानं मदं विना ॥ ३

न्याय्यबुद्धिमुपादाय मानवत्वेन वर्तते ।
एषा स्वर्ग्या स्थितिर्यत्र भारतं तद्विराजताम् ॥ ४

राष्ट्रकार्यापदेशेन नैव स्वार्थपरायणा ।
न्यायैकपक्षपातेन लोककल्याणतत्परा ॥ ५

शक्तेर्मदेन दुष्टेन संकीर्णस्वार्थबुद्धिना ।
रहिता विद्ययोपेता राजनीतिः सुनिर्मला ॥ ६

यथा वाचि तथा कार्ये सिद्धान्तमिममाश्रिता ।
सत्याहिंसा परा यत्र भारतं तद्विराजताम ॥ ७

तत्तत् स्वार्थप्रवृत्तीनां विषेणोग्रेण सर्वथा ।
न्याय्यमार्गादपेतेन विवेकविधुरेण यत् ॥ ८

मिथ्याभिमानभावेन मुक्तमेकान्ततो महत् ।
सद्भावनाभिरादीप्तं भारतं तद्विराजताम् ॥ ९

समाजस्याथ राष्ट्रस्याविरोधेनैव नित्यशः ।
समुद्योगपरा स्वार्थे सत्या धारेण तन्वती ॥ १०

अन्ततश्च हितायैव सर्वेषां या प्रकल्पते ।
सार्थनीतिर्ध्रुवा यत्र भारतं तद्विराजताम ॥ ११

# अग्निसंहिता

जगन्नाथ वेदालङ्कारः

विदितमेव वेदितव्यविदां विदुषां यत् महर्षिणा श्रीअरविन्देन वेदविषये सुबृहत् गभीरञ्च साहित्यं प्रणीतमाङ्गलभाषया। तत्र 'On the Veda,' 'Hymns to Mystic Fire' ग्रन्थौ प्राधान्यं भजेते[1] अन्याश्च तस्य काश्चन लघुरचना :—The Vāmadeva Hymns to Agni,' 'तपोदेवोऽग्निः'[2] इत्यादिकाः—अद्यापि पृथक्पुस्तकाकारेण प्रकाशनं प्रतीक्षन्ते। एतदेव तस्य विपुलवेदवाङ्मयमवलम्ब्य ब्रह्मश्रीकपालि शास्त्रिभिर्यद् ऋग्वेदप्रथमाष्टकस्य सिद्धाञ्जनभाष्यं सुरभारत्या प्राणायि तदपि विश्रुतमेव वेदमनीषिषु। उपरिनिर्दिष्टयोः ग्रन्थयोः केचनांशाः श्रीमदाचार्याऽभयदेवमहोदयैः हिन्दीभाषया ऽनूदिताः 'वेदरहस्य' इति नामकपुस्तकरूपेण खण्डत्रयेण प्रकाशिताश्च हिन्दीभाषाविज्ञानां वेदोपासकानां वेदामृतपिपासां प्रशमयन्तितराम्। परमिदं तदीयं महार्घवाङ्मयं संस्कृतगिरा नाद्यापि प्रकाशमायातम् ऋते कतिचिन्मन्त्रेभ्यः श्रीकपालि-शास्त्रिकृतप्रथमाष्टकभाष्यगतेभ्यः। अपेक्ष्यते चास्य भारतीयसंस्कृतिमूलभित्तिभूतस्य वैदिकसाहित्यस्य संस्कृतावतारणमिति नात्र मतद्वयं संभाव्यते। तद्धि आङ्गलभाषानभिज्ञानां संस्कृतविदां श्रीअरविन्दस्य वेदव्याख्यावगाहनलालसानां सुतरां सहायकं तृप्तिकरञ्च स्यात्। यतः श्रीअरविन्देन वेदानां कोऽपि गुह्यार्थः साक्षात्कृतः, योगबलेन च तेषामाध्यात्मिकार्थस्य रहस्यं सम्प्राप्तम्[3]। तत्कृता वेदव्याख्या मूलस्य मर्मविभेदिनी,

1—Sri Aurobindo Mandir Annual, Jayanti No. 10, 15 th Aug. 1951

२—'विविधरचनावलि'—नामकतदीय-बङ्गलापुस्तकान्तर्गतो नातिलघुर्निबन्धः

३—श्रीमत्स्वामिदयानन्दसरस्वतीभिः वेदशब्दानां यौगिकार्थस्य रहस्यं सम्प्राप्तं प्रदत्तं चास्मभ्यमिति महर्षि श्रीअरविन्दपादैः प्रतिपन्नं स्वप्रणीत-'दयानन्द'-'वेदरहस्य'-नामकपुस्तकयोः। किन्तु वैदिकपदानां केषाञ्चित् प्रतीकात्मकार्थद्वारा वेदमन्त्राणां य उदात्ततमः आध्यात्मिकार्थः प्रसिद्ध्यति तस्य रहस्यं श्रीअरविन्देनैव उपज्ञातं सम्प्रदत्तं च स्वाध्यायप्रियेभ्यः।

मन्त्रशक्तेः साक्षात्कारकारिणी, आधुनिकविचारकाणामपि बुद्धिगम्या वर्तमान-युगानुरूपा च। अतोऽसौ सविशेषानुशीलनमर्हति सर्वेषामपि संस्कृतविद्-वेदप्रेमि-विपश्चिताम्, येन ते संस्कृतेन श्रीअरविन्दस्य वेदविषयकवि-चारान्-परिशील्य, तद्द्वारा यथार्थस्य वैदिकधर्मस्य स्वरूपं परिज्ञाय च तत्प्र-सारेण भारतीयसंस्कृतौ नवजीवनं सञ्चारयेयुः भारतस्याऽभ्युदयञ्च सम्पादयेयुः। अनया दृष्ट्याऽस्माभिः तस्य वैदिककृतीनां संस्कृतरूपान्तरस्य प्रयासः प्रारभ्यते। तत्रादौ 'Hymns to the Mystic Fire' नामकग्रन्थस्यानुवादो विधा-स्यते क्रमशः। तस्मिन् ऋग्वेदगताऽऽग्नेयसूक्तानां सर्वेषामविकलोऽनुवादः तेन उपन्यस्तः आङ्गलभाषया। तत्कृतानुवादस्यावबोधाय अग्नेः आध्यात्मिक-स्वरूप-कार्यव्यापारादीनां गुण-कर्मस्वभावानां वा ज्ञानं नितान्तमावश्यकम्। तद्विना तु सोऽनाविष्कृतगहनरहस्यमिव न कदापि रसमावहेत् स्वाध्यायकृताम् न चावेदयेदृचां परमोदात्तं गभीरमर्थम्। अतः प्रकृतग्रन्थस्य संस्कृतानुवादात् प्राक् तदुपोद्घातमुखेन अग्निदेवस्य स्वरूपव्यापारादिकं निरूप्यते महर्षि-श्रीमदरविन्दग्रन्थाद्याधारेण[1]।

**अग्नेः स्वरूपम्—**

अथ कोऽयमग्निर्यं ऋग्वेदे सर्वप्रथममीडितः (अग्निमीडे), स्तुतः, आवा-हितः, प्रार्थितः, कीर्तित उपवर्णितश्च? वैयाकरणास्तावत् अगि गत्यर्थे इत्यस्माद् धातोर्निष्पादयन्ति अग्निशब्दम् 'अङ्गेर्नलोपश्च' इत्युणादिसूत्रञ्च तत्रोदाहरन्ति। श्रीअरविन्दोऽपि अग् कुटिलायां गतौ यदा अगि गत्यर्थे इति धातोः निर्वक्ति अग्निपदम्, वक्ति च यदयं धातुः न खलु साधारणगते-

---

1—'On the Veda', 'Hymns to the Mystic fire', विविधरचनावलि-(बङ्ग-भाषा-पुस्तकं) ऋग्वेद-सिद्धाञ्जनभाष्यभूमिकादीनामाधारेण। एष्व् आद्यग्रन्थत्रयस्य केचित् सन्दर्भास्तावत् अविकलमनूदिताः संस्कृतगिरा इति ज्ञास्यते मूलग्रन्थविज्ञैः।

वाचकः किन्तु शक्तिमत्त्व दीप्तिमत्त्व-युक्त-गतिविशेषस्य इति प्राचीनार्यभाषा-शाखीयानाम् गत्यर्थकधातूनां परीक्षणेन ज्ञायते।

अगतेरङ्गते वा शक्ति-दीप्ति-पुरोनयन-प्रचलनादिषु वर्तमानत्वात् अग्नि-शब्दः कामपि शक्तिं, दीप्तिविशेषं, आलोकं, ज्वालां, पूर्वत्वं प्रधानत्वं च अभिधत्ते। वेदानामाध्यात्मिकार्थोऽयं भागवत तपश्शक्तेः (Divine Will or Cosmic Will) विराट्सङ्कल्पाग्नेः ज्योतिर्मय-सर्वदर्शि-सङ्कल्पशक्ते वा (Illumined Will or Seer Will) वाचकः। अग्निर्नाम भगवत ओजस्तेजोभ्राजस्वरूपा सर्वज्ञानमण्डिता परमज्ञानात्मिका तपश्शक्तिः या ज्ञानज्योतिषा प्रोज्ज्वलिता, ज्ञानस्य क्रियाशक्तिरूपा, जगतः सर्वासामपि अभिव्यक्तशक्तीनां मूलभूता प्रधानतमा च। वेदस्य शतशः सूक्तेषु अग्नेरिमे सर्वेऽपि गुणाः स्तुता वर्णिताश्च।

किं नु खलु अस्याः तपःशक्तेः स्वरूपम्? तत्सम्प्रति निरूप्यते।

भगवतः चिच्छक्तिर्यदा 'सतः परमपुरुषस्य' अनन्तनामरूपाणां ध्यानं करोति तदा तस्यास्तत् नानामुखं ध्यानं, स बहुमुखः समाधिरेव तपश्शक्ति-नाम्नाऽऽम्नायते। 'सत्'स्वरूपः पुरुषो यदा स्वचिच्छक्तिं कस्यापि नामरूपात्मकपदार्थस्य सर्जनाय, कस्यापि तत्त्वस्य विकासाय, कस्या अपि अवस्थायाः प्राप्तये वा समाहरति, प्रेरयति एकाग्रीकरोति च तदा सा तपःशक्तिरूपेण परिणमते। इयमेव तपः शक्तिः (Divine Will or Cosmic Will) जगत् सृजति सञ्चालयति रक्षति च। अस्या एव नाम अग्निरिति।

इयञ्च काऽपि दीप्तिशक्त्यात्मिका मूर्तिमती व्यक्तित्वमयी देवता न तु केवलं निराकारा शक्तिः। इयं परमदेवात् प्रथमोत्पन्ना शक्तिः। विश्वव्यापार-सञ्चालनार्थम् आदिदेवात् याः शक्तयः अर्थात् देवता आविर्भूताः तासु इयमेव प्रथमं प्राप्तजन्मा प्रधाना पुरोहितरूपा च तासाम्। अन्ये सर्वेऽपि देवाः चक्रनाभावरा इव अस्यां निहिताः।

इयं भागवतसङ्कल्पशक्तिः सदा सर्ववस्तुषु उपस्थिता सर्वलोकेषु क्रियारता सततं सर्जने विनाशे च, निर्माणे पूर्णत्वापादने च व्यापृता, सृष्टेः जटिलविका-

सस्य सदैवाऽवलम्बभूता, तत्तद्बीजात् तत्तद्वृक्षस्य प्ररोहे नियामिका, तत्तत्कर्मणः तत्तत्फलविशेषस्य विधायिका व्यवस्थापिका च। इत्थञ्चेयं वैदिकदेवतासु सर्वाधिक-महत्त्वशालिनी व्यापकतमा च।

अथेयं ब्रह्माण्डवत् पिण्डेऽपि प्रतिपलं क्रियापरायणा। इयमस्माकं सचेतनसत्तायाः शक्तिर्या देहप्राणमनसां व्यापाराणां मूलप्रेरिका। प्राणस्य अर्थात् क्रियाशीलजीवनशक्तेः मूलस्थिता सङ्कल्पशक्तिरियमेव। तत्र स्थितेयं स्वक्रियया प्राणं पवित्रयति। इयमेव नो मनसि सङ्कल्पतयाऽवस्थिता तन्निर्मलीकरोति पावित्र्यप्राप्तेः परमां स्पृहाम् (अभीप्साम्) समुत्पाद्य किम्बहुना, अस्माकं कर्मसु अस्मन्मानवीयसङ्कल्पस्य पृष्ठतो यस्तिष्ठति सोऽयमग्निरेव दिव्यसङ्कल्पस्वरूपः।

अतो यदा मर्त्यजातिः सचेतनतया महालक्ष्याभिमुखी भवति स्वात्मनि दिव्यतां स्रष्टुं च प्रयतते तदा प्रथमतः प्रधानतश्च सा इममग्निदेवमेव आवाहयति मन्त्रवर्णैः। अयमेव अस्मत्प्रयत्नोच्छेदपराः सर्वाः शक्तीः समुन्मूल्य अस्मल्लक्ष्यं प्रति अग्रतो नयत्यस्मान् (अग्र—णीः—अग्निः), चरितार्थयति च तद् अन्ततः। एवञ्चायं कस्यापि लक्ष्यस्य सिद्ध्यै सर्वप्रथममपेक्षिता, वास्तविकरूपदायिनी प्रधानशक्तिः।

यदा मनुष्योऽज्ञानान्धकारात् प्रबुद्धो भूत्वा सत्यतरोच्चतरजीवनं निर्मातुमनाः तादृशजीवनप्रदायिनो देवान् प्रति सर्वाण्यपि स्वकार्याणि बाह्याभ्यन्तराणि च समर्पयितुमिच्छति, एवञ्च मर्त्यतायाः निर्गत्य अभीष्टं लक्ष्यभूतञ्च ऊर्ध्वस्थममृतत्वमारोढुमिच्छति, तदा तेन ऊर्ध्वाकांक्षिसङ्कल्पस्य उच्चाभीप्सात्मकशक्तेरियं ज्वाला प्रज्वालनीया निजान्तरे, अस्यामेव च आहुतिर्देया सर्वकर्मणाम्, समर्पणीयं सर्वम्। यदाऽसौ सचेतनः सन् अस्यां स्वात्माहुतिं ददाति, स्वकार्याणि सर्वाणि अस्यां समर्पयति तदाऽयं प्रादुर्भूय पुरतः प्रकाशते परिचालयति चाऽस्मान्।

सोऽयमग्निदेवोऽस्मज्जीवनस्य घोरतमरात्रावपि जागर्ति, अस्माकं निश्चेतन-अर्द्धचेतनसत्ताया गहनान्धकारेऽपि दिव्यसङ्कल्पज्वालारूपेण प्रकाशते। यदा

वयं मनसः चेतनाऽऽलोकं सचेतनप्रकाशं क्वचिदपि न पश्यामो मार्गदर्शक-तया, तदाप्ययं निर्भ्रान्तकर्मा नित्यजागरूकोऽग्निस्तत्र क्रियारतो भवति। अन्ये देवास्तावद् 'उषर्बुधः' उदितायां ज्ञानोषसि अन्तर्ज्योतिषि च अस्मासु बुध्यन्ते, अयन्तु अस्मदन्तरस्थं तिमिरं निर्भिद्य प्रकाशयति सः प्रथमतः।

तदेवम् अग्निरेव अस्मदन्तरस्थपरमदेवस्य प्रथमं प्रधानञ्च जाग्रद् रूपम्। यदि वयं तं हृदयवेदिकायां प्रज्वलितं, प्रकाशितम्, उन्मुक्तमूर्ध्व-गामिनञ्च कर्तुं शक्नुयाम तर्हि स नो मानवचैतन्ये देवीमुषसमानीय अस्मासु देवताः प्रबोध्य, अनृताऽज्ञान-निरानन्द-वैकल्यानाम् तमोमयमावरणं निवार्य च, अस्मानमरान् दिव्यांश्च करिष्यति।

## अग्नेर्जन्म

अयमस्माकं देहे, अस्मत्पार्थिवसत्तायां निगूढस्तिष्ठति 'कामो हृच्छयः सर्वभूतानाम्'[१]। अरणिनिर्मथनाज्जायमानः स्थूलाग्निरिवायं देहमनसोरधरोत्त-रारण्योः संयोगेनोत्पद्यते। उत्तरस्य अरणेः अधरेण घर्षणात्, तस्मिन् आघातात् तत्प्रभावाच्च जन्यतेऽयम्। पूर्वमयं प्राणगतसंकल्परूपेण जीवनेच्छा-रूपेण वा जागर्ति, ततश्च मनसि प्रादुर्भवन् शुद्धरूपः सञ्जायते।

ऋग्वेदे एतत् सत्यम् इत्थमुपवर्णितम्—

मानवस्य हृदये यो मर्त्येष्वमर्त्यः परमो देवः प्रसुप्तस्तिष्ठति तं सर्वप्रथमम् अथर्वा एव निर्मथ्य आविष्करोति 'इममुत्यमथर्ववदग्निं मन्थन्ति वेधसः'— ऋ० ६।१५।१७। अन्यत्रापि एकस्मिन् मन्त्रे एवमुक्तम् - सर्वेषामपि देव-भक्तानां पुष्कराख्यात् शिरः कमलात् अथर्वा अग्निं निर्मथितवान्,—'त्वामग्ने पुष्करादध्यथर्वा निरमन्थत। मूर्ध्नो विश्वस्य वाघतः।' ऋ० ६।१६।१३।

अस्मास्वन्तर्हितो देवो यदा प्रथमतः सुप्तोत्थितो भवति तदाऽस्माकं हृदये भगवदभीप्साया ज्वाला, भगवत्प्राप्तेस्तीव्रा उत्काङ्क्षाऽनुभूयते। उद्बुध्य-

१. कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत्। ऋ० १०.१२९.४ ......हृदि क्रतुमान्। ऋ० ४.४१.१

मानस्य अग्निदेवस्य सा प्रथमा ज्वाला अथर्वा इत्युच्यते, न थर्वेति अथर्वा स्थिरा निश्चेष्टा च ज्वालेत्यर्थः। तथाहि अग्नेः, भागवतसंकल्पाग्नेः प्रकाशपूर्णसङ्कल्पशक्तेर्वा सप्तज्वालाः ज्वालामयशक्तयो वा भवन्ति याः सप्त अङ्गिरसः उच्यन्ते, तेषु सप्ताङ्गिरस्सु प्रथमोऽथर्वा। सोऽङ्गिरसामग्रगण्यः। सोऽयमथर्वा यदा मानवसत्तायां पदं लभते तदा स दिव्यज्योतिषः सम्पदः आविष्करोति क्रमशः।

अन्तर्यज्ञे, साधनापथे दिव्यप्रकाशप्रापकं मार्गं सर्वप्रथमम् अथर्वा अग्नेर्ज्वालाविशेष एव रचयति अन्तःसाधनैः—'यज्ञैरथर्वा प्रथमः पथस्तते'। ऋ० १।८३।५०।

एवञ्च यदाऽसौ सुप्तोत्थित इव ज्वलत्यूर्ध्वमुखः तदा अन्तर्यज्ञपरस्य यजमानस्य यज्ञभारं स्वयं परिगृह्य तदर्पितं हविः, तत्प्रदत्तं सर्वस्वं देवान् प्रापयति यथाभागम्। यजमानश्च तेन सर्वस्वसमर्पणरूपेण हविर्दानेन देवान् प्रति अनृणो भूत्वैव यजनसमर्थो जायते, न ततः प्राक्। तथा चाहुर्ब्राह्मणानि—'आत्मानं निष्क्रीयाऽनृणो भूत्वाऽथ यजते' (कौषीतकिब्राह्मणम् १०-३०), 'सर्वभ्य एव देवताभ्यो यजमान आत्मानं निष्क्रीणीते,' (ऐतरेय० ब्रा० २।६।३)

## अग्नेः प्रदीपनस्य फलम्

यथा यथा च यजमान इममग्निं पुनः पुनः प्रदीपयति तथा तथाऽयमूर्ध्वादूर्ध्वतरं धाम (चैतन्यभूमिम्) आरोहति आरोहयति च यजमानम्। 'मर्त्येष्वमर्त्यः' 'अतिथिः (अर्थात् सततगमनशीलः, अतनादतिथिः, अत् सातत्यगमने), 'सप्तजिह्वः, उत्तरोत्तर-प्रखरायमाणसप्तज्वालाभिरुपेतः, तद्द्वारा च सप्तधामाधिगामी, सप्तविधचिद्भूमिकाधिरोही अयमग्निदेवः अस्माद् भूलोकात् अन्नमयसत्तायाः प्रस्थाय दिवम् (दिव्यचिद्भूमिम्) आरोहति यथाक्रमम्, अवतारयति च ततः प्रतिफलरूपेण निखिलमपि आध्यात्मिकैश्वर्यम्—दिव्या ज्ञानधाराः, ज्योतिः, शक्तीः, दिवो वृष्टीश्च। तथा हि दिवमारूढे अग्नौ तत्सत्कारपुरस्काररूपेण दिवस्पतिः दिव्यमनोऽधिपतिरिन्द्रोऽपि दिव्यालोकद्यु-

तिभिः ( विद्युद्भिः, विद्युद्देवताभिः ) सह अवरोहति, 'पर्जन्य' देवरूपेण च अभीष्टजीवनदानैर्वर्षति ( वृषा ) दिव्यजीवनस्य प्रकाशस्य चावरणभूतान् वृत्रादीनसुरान् निषूदयति, प्रतिबन्धकावरणानि अपवार्य च परं सत्यमुद्भासयति, सत्यस्य सूर्यं साक्षात्कारयति ।

तदेतत् सत्यं साक्षात्कर्तुमेव अन्तरे दिव्यसङ्कल्पाग्निः प्रदीप्यते । प्रदीप्ते च तस्मिन् ज्ञानशक्तिमयजाज्वल्यमानाग्नौ तुच्छसुखदुःखानि, क्षुद्रचेष्टाविफलताः अज्ञानं मिथ्यात्वं मृत्युश्च हूयन्ते, येन सर्वमपि पुरातनमनृतञ्च भस्मीभवेत् अथ च यत्किमपि नवीनं सत्यञ्च तद् अग्नेः प्रादुर्भवेत् ।

## अन्तर्यज्ञस्य यजमानपुरोहितादयः

ननु यजमानपुरोहितान् हविः समिधादिपदार्थांश्चान्तरा न कोऽपि यज्ञः सिद्ध्यति । तर्हि अस्मिन् दिव्यसङ्कल्पाग्नौ यो यज्ञोऽनुष्ठीयते तस्य किं स्वरूपं, तत्र को यजमानः, के पुरोहिताः, किं हविः, काः समिधः किञ्च तस्य यज्ञस्य फलम् ? तत्रोच्यते । देवत्वप्राप्तये देवतानिमित्तेन क्रियमाणं देवतायै एव च समर्प्यमाणं यत्किमपि कर्म, आन्तरं बाह्यं वा, यज्ञ एव । यज्ञरूपस्य ईदृशकर्मणः कर्ता 'पुरुषः' जीवः, एव यजमानः गृहस्वामी वा, जीवस्य प्रकृतिरेव गृहपत्नी यजमानस्य सहधर्मिणी वा । कस्तर्हि पुरोहितः ? न खलु जीवः, तस्याहङ्कारचालितत्वात्, देहप्राणमनसां बन्धनैर्निगडितत्वाच्च । सति तु तस्य पौरोहित्ये महाऽनर्थसम्भावना । अतः अन्तरस्थदेवताया आह्वानं कृत्वा पौरोहित्येन होतृत्वेन च तस्याः प्रतिष्ठापनं कर्तव्यम् अन्तर्वेदौ । भागवतसङ्कल्परूपाऽन्तः स्थिता सा देवता यदि न जागर्ति अन्तरे तर्हि कोऽपि जीवं त्रातुं तारयितुं च न समर्थः । सा देवतैव यज्ञस्य सिद्धिदाता पुरोहितः । परमदेवतायाः पुरोहितात्मकस्वरूपमेव 'अग्नि' शब्देन निगद्यते वेदे ।

अथ काः खलु समिधः ? ईश्वरोन्मुखानि अन्तर्यज्ञाय सिद्धानि च देहप्राणमनांसि अन्यानि चास्मत्सत्ताया अङ्गोपाङ्गान्येव समिधः । मनसो बुद्धे र्वा निर्मलता प्रकाशयुक्तावस्था च घृतम् । देहप्राणमनसां नानाविधावस्थाः,

सत्यस्यान्वेषणार्थमभिव्यञ्जनार्थं वा क्रियमाणानि कर्माणि सकलान्यपि पूर्णोत्सर्गार्थमुपयुक्तानि हव्यानि[१]। ज्योतिश्शक्तिसत्यानन्दाऽमृतत्वप्राप्तिरेव हविष्प्रदानस्य फलं यदुपरिष्टादुपन्यस्तमस्माभिः सविस्तरम्।

स्पष्टमेवैतेन यत् अन्तर्यज्ञस्य सर्वाण्यपि अङ्गोपाङ्गानि अस्मास्वन्तरेव सन्ति। मनुष्ये अन्तरेवास्ति अग्निः, अन्तरेव वेदि र्हवि र्होता च। अभ्यन्तर एवास्ति ऋषिर्मन्त्रो देवता च, अन्तरेव प्रधानपुरोहितस्य ब्रह्मणो वेदगानम्, अन्तरेव वृत्रो वृत्रहन्ता च, अन्तरेव च देवदानवयुद्धम्। अन्तरेव वसिष्ठः, विश्वामित्रः, अङ्गिराः, अत्रिः, भृगुः, अथर्व-सुदास-त्रसदस्यु-प्रभृतयश्च ऋषयः, अन्तरेव च पञ्चविधाः ब्रह्मान्वेषिण आर्यगणाः।

तदेवम्, अग्नेराध्यात्मिकं स्वरूपमस्माभिर्निरूपितम्। अयमग्निरेव यज्ञस्य पुरोहितः यं मनुष्यः निजाध्यात्मिकप्रतिनिधिरूपेण पुरो निधत्ते, पुरो धीयमानत्वादेवायं पुरोहितः प्रोच्यते—पुरः पुरस्तात्, अग्रे हितः स्थापितः इति कृत्वा। अयमाहुतिद्रव्याणि अर्थात् देहप्राणमनः प्रभृतीनि अस्मत्सत्तायाः सर्वाण्यङ्गानि तेषां कार्याणि च परिशोधयति, अर्पयति च देवान् यज्ञे आहूतान् प्रति। देवानामाह्वानात् आह्वानपूर्वकं होमनिष्पादनाच्च अयं 'होता' इत्युच्यते, ऋत्वनुसारम् अर्थात् स्वकार्याणां यथायथ-विध्यनुसारं तेषां समुचितर्त्वनुरूपं च यजनात् स ऋत्विगुच्यते—ऋतुम् अर्थात् ऋतस्य सत्यस्य च विधिं कालञ्च अनु यजतीति ऋत्विक्। अन्तर्यज्ञस्य योगस्य च संसाधकत्वात् स 'साधुः' इत्युच्यते (साधयतीति साधुः)। स देवानां दूतो योऽग्रणीरिव नः पुरोगच्छन् नयत्यस्मान् देवानां धामानि। स मुखं देवानाम्। मुखत्वादेव स प्रमुखतां भजते प्रथमञ्च दृश्यते सर्वदेवेषु, अन्ये देवास्तावत् परस्यैकस्याङ्गभूताः, परस्तात् स्थिताः, अग्निमुखेनैव प्राप्यन्ते। स देवानामास्यम्। अस्माभिरर्प्यमाणं सर्वं प्रथमतः तस्यैव आस्ये हूयते, तन्मुखेनैव देवास्तत् स्वीकुर्वते, तेनैव तत्तद्

---

१—विस्तरार्थम् 'On the Veda' ग्रन्थस्य चतुर्थाध्यायः 'The Foundations of the Psychological Theory' शीर्षकोपेतो द्रष्टव्यः।

देवाय तत्तद्भागः प्रदीयते। एवञ्च स साक्षात् सर्वदैवतप्रतिनिधितया अस्मद्-हृदयगुहायामवस्थितः।

अयमग्निः सत्य-ज्योतिरमृतत्वप्राप्तये संग्रामपरायणस्य आर्यस्य महाकर्मणः कर्ता, भूलोक-द्युलोकयोः शुद्ध उदात्तश्च मध्यस्थः। अनासक्तो निस्तन्द्रोऽविजेयोऽयं दिव्यसङ्कल्पाग्निः सर्वभूतेष्ववस्थितो वैश्वानर इव विश्वस्मिन् विश्वेऽविरतं क्रियानिरतः। विश्वेषु नरेषु विद्यमानः, विश्वेषां नराणां हितश्चायं वैश्वानरोऽग्निः वैश्वदेवेषु महत्तमः, शक्तिमत्तमः, तेजस्वितमो निर्व्यक्तिकतमश्च।

अग्नेर्यदेतन्महामहिममयमाध्यात्मिकं स्वरूपमस्माभिरुपवर्णितम् तत् स्वयं भगवतो वेदस्यैव मन्त्रवर्णैः—'अग्निर्होता कविक्रतुः सत्यश्चित्रश्रवस्तमः। देवो देवेभिरागमत्' ऋ० १-१-५, 'गोपामृतस्य दीदिविं वर्धमानं स्वे दमे' ऋ० १-१-८; 'ऋतजातः' ऋ० १-१४४-७; हृदि'क्रतुमान्' ऋ० ४-४१-१—इत्यादिभिः स्पष्टीभवति। ईदृशेषु मन्त्रेषु अग्निः 'कविक्रतुः' अर्थात् कर्मसु अवस्थितः द्रष्टृसङ्कल्पशक्ति-रूपः, सत्यमयः, सत्यस्वरूपः, चित्रविचित्रान्तः—श्रवणैश्वर्यसम्पन्नः, अर्थात् नानाविधान्तःप्रेरणाप्रदो महाधनी च आम्नातः। सत्यम्, आनन्त्यं, विशाला वैश्वप्रज्ञा-शक्तेरविच्छिन्ना, ज्ञानशक्त्योः समवायभूता प्रज्ञा—च तस्य निजधाम 'स्वे दमे'।

——

# काव्ये रसपर्याप्तिविमर्शः

राममूर्त्तित्रिपाठी

आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते, आनन्देनाभिजीवन्ति, आनं प्रत्यभिसंविशन्ति—इति समुद्घोषयन्त्येवोपनिषदः। तदेवानन्दमयं व्याप तत्त्वमधिकृत्य तैत्तिरीयोपनिषदि 'रसो वैः सः' इति भणितिं संगिर व्याख्यातारः। तथा चेत्थं रसाद्बहिर्भूतं न किञ्चित्। दार्शनिकैरेव न अपितु साहित्यिकैः ध्वनिप्रस्थापनपरमाचार्यैरानन्दवर्द्धनैश्च निगदितं यद् य तु रसादीनामविषयत्वं स काव्यप्रकारो न सम्भवत्येव। दशरूपककारेणा समर्थितं—

रम्यं जुगुप्सितमुदारमथापि नीचमुग्रं पसारि गहनं विकृतं च वस्तु।
यद्वाप्यवस्तु कविभावकभाव्यमानं तन्नास्ति यन्न रसभावमुपैति लोके॥

भट्टनायकेन महिमभट्टेनापि चानुमोदितं यत्काव्येषु भाव्योऽनुमेयो वा र एव। एवञ्च यद्यपि सिद्धांततःरसपर्याप्तिः काव्ये सम्यक् समर्थिता, तथापि कवि कुलप्रणीतानि काव्यव्यपदेशोचितानि सर्वाणि लक्ष्याणि मनसिकृत्य विचार श्चेत् क्रियेत तदा बहूनि स्थलानि एवंविधानि समुपलभ्यन्ते यत्र भावना काव्यव्यपदेशोचितचारुताधायकतया रसं नैव साक्षात्कुर्वन्ति—अथापि त काव्यत्वव्यपदेशो निर्बाधः। इत्थं चायं प्रश्नो यत् काव्यत्वव्यदेशनिमित्तभूत व्यापकं तत्त्वं किमस्ति? रसो हि तथाविधस्थलेष्वनुदग्रतया स्थितः सन् काव्य त्वव्यपदेशनिमित्ततां नार्हति।

नात्र संदेहलेशो यद्रसस्योदग्रा स्थितिरास्वादयोग्या व्यक्ता वा स्थिति काव्येषु प्राशस्त्यमुत्कर्षं वाऽऽदधाति—परन्तु काव्यव्यपदेशोचितसाधारण चारुताया भारवाहिता सर्वत्र रसोपर्येव नैवावलम्बिता—अतएव रसध्वनि सर्वोत्कृष्टं मन्यमानोऽपि ध्वनिकारः तथाविधचारुतायाः व्यापकं निमि

प्रतीयमानमेव तत्त्वमाविष्कृतवान्। उक्तं हि तैः 'नात्र सहृदयहृदयाह्लादकारी कोऽपि काव्यप्रकारो यत्र प्रतीयमानसंस्पर्शसौभाग्यं नावतिष्ठते''। पण्डितराजैरपि अनुध्वनितम्—न ह्यनामृष्टप्रतीयमानोऽर्थः कश्चिच्चमत्कारमाधातुं शक्नोति किंच रसस्यैव केवलस्य काव्यत्वप्रयोजकं मन्यमानस्य महापात्र श्रीविश्वनाथस्य काव्यलक्षणमपि तैरालोचितम्। तर्कितं तैर्यद् कस्याञ्चिदुक्तौ रसस्य सम्यक्तया उत यथाकथञ्चिद्वा स्थितेः समुदेति काव्यत्वम्? नाद्यः, रसातिरिक्तालंकारादिस्रोतःसमुद्भूतचारुतामपेक्ष्य स्वीकृतासु काव्योक्तिषु अकाव्यत्वापत्तिः। न द्वितीयः, तथात्वे हि 'गौश्चरति'—इत्यत्रापि काव्यत्वापत्तिः। यद्यपि दर्पणकारोक्तपक्षसमर्थने म० म० श्री गंगाधरशास्त्रिमहोदयैः पण्डितराजोक्ताक्षेपनिरसनपुरस्सरं निगदितं यद्यत्र प्रकृतरसोपयोगिरत्यादिस्थायिभावव्यञ्जका अर्था शब्दोपहिताः स्युस्तत्र रसात्मकता स्यादेव यत्र च रसात्मकता स्यात्तत्र तत्र काव्यत्वमप्यप्रतिहतं भवेदेवेति—तथाप्येतेन किम्? एवंविधान्यपि काव्यपदाभिषिक्तानि स्थलानि सन्ति यत्र तथाविधा रसानुरूपा योजना नास्ति—तत्र दर्पणकारोक्तकाव्यलक्षणं कथं संगच्छेत्? अतएव पण्डितराजैः स्वकीये काव्यलक्षणे रसमयतामनिवेश्य 'रमणीयता' निवेशिता। नूनमेवास्याः परिधिः रसापेक्षया व्यापकतरः। रमणीयता हि लोकोत्तराह्लादजनकज्ञानगोचरता। सा च रसात्मकेऽर्थे, प्रतीयमानेऽर्थे, वाच्येऽपि च सहृदयहृदयाह्लादके पर्याप्ता। शब्दप्रतिपाद्यो ह्यर्थः काव्योचितरमणीयतामुत्पादयितुं न केवलं रसमपेक्षते प्रत्युत तदन्यदपि। अभिनवगुप्तेनापि सर्वत्र रसस्यैव काव्यत्वे प्रयोजकतां मन्यमानस्य रसाग्रस्य भट्टनायकस्य समीक्षां कुर्वता गर्जितम्—"यत्तु हृदयदर्पण उक्तम्—हहाहेति संरम्भार्थोऽयं चमत्कार इति। तत्रापि संरम्भ आवेगो विप्रलम्भव्यभिचारीति रसध्वनिस्तावदुपगतः। न च रामशब्दाभिव्यक्तार्थसहायकेन विना संरम्भोल्लासोऽपि। अहं सहे तस्याः किं वर्तते—इत्येवमात्मा हि संरम्भः। कमल पदे च कः संरम्भः—इत्यास्तां तावत्"—इति। अर्थात् हा हा हा देवि धीरा भव—इत्यत्र श्लोके काव्यव्यपदेशोपयोगिरमणीयतायाः धूर्वहत्वमविवक्षितवाच्यध्वने र्नतु वस्तुतोऽसंलक्ष्य-

क्रमध्वनेः रसस्य तथापि रसानुरूपयोजना भट्टनायकेन तत्रोपस्थापिता। अस्तु वा, परं नु

रइकिरणानुग्गहिआइं होन्ति कमलाइं कमलाइं

इत्यत्र तेन तथाविधकाव्यव्यपदेशोचितरमणीयतायाः निमित्तकत्वं कथं प्रतिपाद्येत। एवं विधान् पूर्वाग्रहग्रस्तान् समीक्षकान् लक्षीकृत्य ध्वनिकारैरुक्तम् यत् सर्वत्र ध्वनिरागिणा न भवितव्यम्। यतो हि कुत्र कस्य तत्त्वस्य काव्यव्यपदेशोचितरमणीयताया धूर्वहत्वमिति न पूर्वतो निर्दिष्टम्, अपि तु तत्र सूक्ष्ममतिपर्यालोचनया तन्निर्धारणीयम्। यत्र काव्यस्य रमणीयता वाच्यार्थावलंबिनी, तत्रापि रसस्यैव तन्निमित्तकत्वस्थापनं वरं स्यात्? एवं कुर्वाणः समीक्षकः विवेकं पुरस्करोति? चारुताया उदग्रं तत्त्वमनादृत्याव्यक्तमनभिव्यक्तमविवक्षितं रसतत्त्वं समादृत्य कश्चित्समीक्षक औचित्यभाग्भवेत्?

अस्तु। पण्डितराजजगन्नाथमहोदयैः या 'रमणीयता' काव्य व्यपदेशनिमित्तकत्वेनाविष्कृता, सा रसनिमित्तजां चारुतामन्तर्भावयन्ती काव्योचितकल्पनाजनितां चारुतां यावत् व्यापिनीति प्रतिभाति। काव्योचिता हि कल्पना न केवलं रसव्यञ्जकोपकरणनियोजनामेव यावत्, अपितु प्राधान्येनाप्राधान्येन वा प्रतीयमानमर्थमारभ्य वाच्यालंकारयोजनां यावत् प्रसृता। एवं च ध्वनिवादिनः सर्वत्रैव काव्यव्यपदेशोचितरमणीयताया धूर्वहत्वं रसस्य नाङ्गीकुर्वन्ति। तथाविधरमणीयतायाः प्रयोजकः कविप्रतिभासंरम्भगोचरो ह्येवार्थः स्वीकरणीय इति ते संस्थापयन्ति। तथा चात्र कविप्रतिभा संरम्भ गोचरेषु विभिन्नेष्वर्थेष्वनुगतं किमप्येकं तत्त्वं तावदनुसंधेयम्। तद्रसस्तावन्नास्तीति निश्चप्रचम्।

अलंकारवादिनां रीतिवादिनां च काव्यव्यपदेशोचितचारुतामधिकृत्य यन्मतम्, तद्विषयेऽभिनवगुप्तेनेदमुक्तम्—चारुत्वं हि द्विविधम्—स्वरूपनिष्ठं संघटनानिष्ठं च। तत्राद्यस्य प्रयोजकोऽलंकारोऽन्त्यस्य च रीतिः। अलंकारवादिनः प्रथमस्य रीतिवादिनस्तु द्वितीयस्य मूर्द्धन्यं महत्त्वं स्थापयन्ति। अलंकारवादिभिः रसास्तावदलंकारस्य प्रकारतयोरीकृतः। ततश्चैषां मते रसस्य पूर्णतया

पर्याप्तिः काव्ये सुतरामस्वीकृता। अलंकार एव काव्ये प्रधानमित्येषामभिनिवेशः। काव्यव्यपदेशोचितचारुतायाः प्रयोजकीभूतस्यालंकारस्यापि प्रयोजकीभूताऽतिशयोक्तिर्वक्रता वेति—एते वदन्ति। इत्थं चालंकारवादिनः काव्योचितचारुताया अपर्याप्तं प्रयोजकं रसम्, पर्याप्तं च अलंकारं तन्निमित्तभूतां वा वक्रतां मन्यन्ते।

यावद्रीतिवादिनो वामनाचार्याः--ते हि प्रतिपादयन्ति **'यदोजःकान्तिमतीगौड़ीया'** रीतिरतत्त्वभूता, तत्त्वभूता तावद्वैदर्भी। गौडीयारीतिघटकीभूतकान्तिगुणस्य स्वरूपं तावत्—दीप्तरसत्वम् ( कांति )। इत्थञ्च ये खलु रसमयगुणमतत्त्वभूतमाहुः--ते रसस्य काव्ये कियत्स्थानमूरीकुर्वन्ति–इति नितरां स्पष्टम्। यद्यप्यन्यत्र वामनेन 'संदर्भेषु दशरूपकं श्रेयः'—इति सिद्धांतितम्। येन चापातत इदमेव प्रतिभाति यद्रसनिधानभूतस्य दशरूपकस्य श्रेयस्त्वमङ्गीकुर्वतः वामनस्य मते रसस्य काव्ये सम्यक् पर्याप्तिरभिमता अपरञ्च दशरूपकस्य श्रेयस्त्वे तेन तत्रैव काव्यालंकारसूत्रवृत्तावन्यत्कारणमभिहितम्। उक्तं हि—

तद्धि चित्रं चित्रपटवत् विशेषसाकल्यात्—अर्थात् दशरूपके काव्यस्य प्रायशः सर्वेषां प्रकाराणां सांकर्यं भवति— अतएव दशरूपकं काव्येषु श्रेय इति। ततश्चायं निष्कर्षः यद्रीतिवादिनोऽपि सर्वथैव रसस्य पर्याप्तिं प्रति काव्ये वैमुख्यमादधति।

वक्रोक्तिवादिनः कुन्तकमहोदयाः 'निरन्तररसोद्गारगर्भसन्दर्भनिर्भरां गिरमेव स्थायिनीं कामयन्ते। अतएव भावोच्छ्लितवक्रतां प्रशंसन्ति, परन्तु तथाविधैव वक्रता न काव्यसर्वस्वभूता। अपितु चमत्कारोन्मुखबुद्धिवृत्तेरपि परिणतिभूता वक्रोक्तिः, काव्यत्वप्रयोजकीभूता। तथा च कुन्तक उभयविधसाधारणीं वक्रोक्तिं काव्यात्मतया स्वीकरोति।

इत्थञ्च भट्टनायकमहिमभट्टप्रभृतीन् कतिपयानेव समीक्षकान् विहाय सर्वे ऐकमत्येन समस्तविधकाव्यनामधारिणीषु कृतिषु रसस्य पर्याप्तिमस्वीकुर्वन्ति, वक्रतायाः, रीतेः, रमणीयतायाश्च पर्याप्तिं स्वीकुर्वन्ति। अलंकारवादिनां रीतिवादिनाञ्च वक्रतयोः भेदोऽस्ति। अलंकारवादिनां वक्रता शरीरचारुताया

उपजीव्या, परञ्च वक्रोक्तिवादिनां वक्रता न केवलं शारीरचारुताया एवोप-जीव्या प्रत्युत आंतरसौन्दर्यस्यापि। रीतिवादिनोऽपि सौंदर्यं शारीरमेवाङ्गी-कुर्वन्ति। अतः वाह्यसौंदर्यवादिनो रीत्यलंकारवादिनो विहाय सौंदर्यमान्तरमपि स्वीकुर्वतां वक्रोक्तिवादिनां 'वक्रत्वम्' पण्डितराजस्य च 'रमणीयता' काव्यस्य व्यापकप्रयोजकतया विचारयितुमवशिष्येते। रसापेक्षया इमे द्वे प्रोक्तरीत्या काव्यस्य व्यापकप्रयोजिके। संप्रति वक्रतारमणीयत्वयोरपि कस्याः पर्याप्तिरधि-केति प्रश्ने नूनमेव कुन्तकस्य कविव्यापारात्मिकायाः वक्रतायाः पर्याप्तिरधिका। यत्र तत्र वक्रता रमणीयता चानर्थान्तरं परं क्वचिद्वक्रता रमणीयतायाः प्रयोजि-कापि अतः वक्रतैव काव्यस्य प्रयोजिका भूता प्रतिभाति। इदमेव काव्यत्व-व्यवहारस्य व्यापकतमं प्रयोजकं तत्त्वम्। एवं तावद्रसस्य पर्याप्तिः काव्ये विचारणीयैव।

---

# सुरापः

मञ्जुलमयङ्कपन्तुलः

अये ! किमुच्यते
मधु - चषकोऽयम् ?
मृषा मृषा सर्वथा मुधा !
अहम् अगस्त्यः,
लघुसिन्धुरयम्,
लीलाभवनम्—
अथ श्यामायाः,
सकृच्चुम्बिता
सद्यः पाययते रूपम् !

मधुकलशोऽयम्,
दूवदनावरणतम्
लज्जावदना या रंगवधूः,
यन्मुखावगुण्ठनम्,
कम्पितकरेण
अपवार्य स्वयम्
मया पीयते
चिरतृष्णा !
आख्याहि सखे !
अस्ति किमपि किम—
उन्मादविरहितम ?
अस्ति विधातरि सृष्टिमदः ।

सृष्टिलयङ्करप्रलयमदः
ध्वंसमदः परमाणुधनानाम्
विस्तारमदः साम्राज्यपराणाम्
यथा वर्त्तते—

महामहिम्नाम् परोपजीविनाम्
गतत्रपाणाम् स्वार्थपराणाम्
नेतृवराणाम् - व्याख्यानमदः

मयि चषक-विलासिनि
मदिरा-पायिनि
तथैव विद्यते-मद्यमदः।

अधिवास्य इंग्लिशम्
अपनीय संस्कृतम्
संस्कृतेरेषणा
अरे ! विरोधः
हिन्दीवाचः विनाकारणाम्
किन्नास्त्ययमुन्मादः !

एतस्मिन्निहितः अस्य मदः,
तस्मिन्निहितः तस्य मदः,
यस्मिन्निहितः यस्य मदः,
कस्मिन्निहितः कस्य मदः।
एतस्मिन् तस्मिन् यस्मिन् कस्मिन्
वर्त्तते सर्वस्मिन्नुन्मादः।

किं बहुना
पुष्पम् पुष्पम्,
पत्रम् पत्रम्,
फलम् फलम् सुफलम् कुफलम्

सरित् सरित् सलिलम् सलिलम्
पुलिनम् पुलिनम् वितता विद्युत्
वृष्टिधरोऽथ वातलता
द्यावापृथिवी, मित्रावरुणौ
दृश्यते सर्वथा—उन्मादः।

स्रृष्टिरियम् अणुशः अणुशः
भुवनमिदं कणशः कणशः
इदम् जगत् निखिलं सर्वम्
उन्मादमयम् उन्मादभरम्!

तर्हि कथम् दूषिता
कमललोचनाकन्या
या सागरकुमारिका
क्षीरसिन्धुजा
अये! पण्डिताः?
शास्त्र सम्मताः!
नीतिशालिनः!
मर्शकारिणः!
विचार-वैभवाः!

अरे! कथं निन्दिता मे मदिरा!
कथं निन्दितं पानगृहम्!
कथं निन्दितो मधुवारः!
कथं निषेधः कथं वारणा!
मदिरापस्य किं प्रतारणा!

हे सखे माघ! हे बाण कवे!
हे कविकुलविलास कविकालिदास!
किं मदिरा मे इत्थं हेया?

मदिरापानं किं विगर्हितम् ?
सन्ति भवन्तः अत्र प्रमाणम् ।
हे काव्यरसाः ! कविसमयविदः !
कथं भवद्भिः मौनमाश्रितम् ?
किन्नास्ति इदं विदितं सत्यम्
यद्विकसति बकुलः,
आस्य-मदिरया
मदनधुराणाम्
भवतां शास्त्रे ?
तर्हि कथं निन्दितो मदिरोन्मादः,
कथं निन्दितोन्मादवाहिनी,
कथं निषेधः कथं वारणा !
मदिरापस्य किं प्रतारणा !
आम् ! मया पीयते माधूकी ।
शैम्पेनसखी,
बलरामवल्लभा
किन्तु पीयते शोणितमदिरा !
अवशेषपञ्जरम्
कंकालमात्रकम्
चञ्चारूपम्
जीवनवृन्ते तपश्चरन्तम्,
ऋद्धिसिद्धयः संविभूतयः
श्रमपरिपूते गात्रे यस्मिन्
सदा वसन्त्यः अभिमन्यन्ते !
क्षुधा दहत्यपि निजदेहे
अन्नं वितरति अन्नदेवता !

निर्माल्य-निकटे स्वयंवासिना
महयम् तुभ्यम् तस्मै अस्मै
ब्रह्माण्ड-दण्डवत्-बाहुभ्याम्
येन विरचितं सौधसहस्रम्
प्रज्वाल्य पौरुषम् !!
येन कृतं गगनम् सवनम्
येन कृता वसुमती मेदिनी
अमुम् जनम् यः,
जोषम् जोषम् ,
जीवम् जीवम्
यावज्जीवम् निर्जीवम् कुरुते।

तद्बिन्दु-बिन्दुशः संगृह्य शोणितम्
प्रस्रवते मानवरक्तवारुणीम,
अवलेढि रहसि स्वैरं स्वैरम्—
शोणित-मदिराम्,
असौ अधः मदिरापायी
अस्यैव वारुणी रक्तविवर्णा
मदिरापानं तस्य गर्हितम्,
मया नु केवलं वारि पीयते !!

किन्तु,
तदर्थम् स्वस्तिवाचनम् ,
शान्तिवचः अथ कथा, प्रशस्तिः,
दान-लिप्सया चाटुकारिता,
विना कारणं मम प्रतारणा !
केयं विडम्बना भोः !

पश्य मदीयां मधुरप्रेयसीम्
प्राणवरेयं प्राणधुरा मे !
अधरधरेयम्, अधरधुरा मे !
मधुबाला कियती मधुरा मे !
पश्य अमुष्मिन्*
कामवरायाः,

अलकलता ललिता ललिता।
परिधानपटो वलितो वलितः।
तरलं नयनं सरलं सरलम्।
अहो ! निरस्त उषोऽरुणिमा
आलक्तकरागायाः पुरतः।

सुधा धवलिमा शशिबालायाः
धन्यधवलितायाः पुरतः।
उर्वशी शतैरप्यलम् अलम्
उरसि विलासितायाः पुरतः।

विभर्षि कियन्तम अनुरागम्
अहो ! रञ्जने ! प्रत्यङ्गम् ?
मादिनि तव पदे वर्त्तते
कुव एतावत् उन्मादनर्तनम् ?
पातास्मि सखे ! मे—
विस्मृति-बालासु बहुमता।
यतो विस्मृतेर्वर्त्तते—
स्वान्तः संविति वत्सलता।

---

* चषकमुद्दिश्य

तदहर्निशम् पायं पायम्,
इदं जगत् विस्मराम्यहम्।
अनिच्छतोऽप्यात्मचेतनाम्
प्रसभं प्रशमाम्यहम्।

तदपि,
यर्हिकर्हिचित् आकुलयति माम्
स्मृतिस्तदीया मन्दम् मन्दम्।
विस्मरामि यां मे उरोवेदनाम्
संस्पृशति मनः, मन्दम् मन्दम्।

आः! स्मृतिगतोऽहम्
मर्मन्तुदया तया पीडया
यदा लालितं मे हृदयम्।
तया विवशता—संगिन्या अथ
यदा ख्यापितो विवशोऽहम्।

करुणापूरा दिशो बभूवुः
अवलोक्य सर्वशो मामेकलम्।
इयमेव तदा प्रतिमाप्रसादिनी
अङ्गीचक्रे मां विह्वलम्।

तस्मादियं दैवी विभूतिका
नैव मया अधराद्वियुज्यते।
स्मृतेर्हीयताम् यथा जगत्
विस्मृतिमन्त्रस्तथा पठ्यते!

त्वं कथयसि मधुचषकोऽयम्
अहम् अगस्त्यः
लघुसिन्धुरयम्······
····················

---

# पाणिनीयस्य सुबोधतां

के० राजन्न शास्त्री

महदिदं प्रमोदस्थानं यद् दुर्बोधव्याकरणशास्त्रस्य सुबोधतासम्पादनं नाम। न चेदमपरिचितचरं विपश्चिदपश्चिमानां यद् व्याकरणशास्त्रस्य सुबोधतासम्पादनायास्माकाः पूर्वेऽपि च्छात्रोपचिकीर्षवो भृशं यतितवन्त एवेति। तत्फलरूपेणैवास्माभिरद्य सिद्धान्तकौमुदी-लघुकौमुदीप्रभृतयो ग्रन्था अनुदिनमधीतिविषयीभवन्त उपलभ्यन्ते। यानधीत्यैव निवृत्तान्यचिन्तासन्तति, फणिभाषितपारङ्गता एवाभूवन्। उक्तं हि :—

"कौमुदी यदि कण्ठस्था वृथा भाष्ये परिश्रमः।
कौमुदी यद्यकण्ठस्था वृथा भाष्ये परिश्रमः॥"

यद्यपि प्रथमं विद्वांसः केवलसूत्रवृत्तिभाष्याध्ययनत एव वैय्याकरणशिखामणयोऽभूवन्, तथापि कालक्रमतो धिषणाह्रासात् तादृशसूत्रवृत्त्याद्यध्ययनस्य दुष्करत्वं विचिन्त्य भट्टोजीदीक्षितेन तद्गुरुणा वा संज्ञादिप्रकरणविभागं कृत्वा छात्रोपकृतिर्विहिता। तदनु च बहुपूर्वपक्षसिद्धान्तजटिलां भट्टोजीदीक्षितकृतिं सिद्धान्तकौमुदीमपि दुरधिगमामालक्ष्य सुकुमारमत्यन्तेवासिकृते श्रीवरदराजाचार्यैः पूर्वपक्षसिद्धान्तादिदुर्बोधविषयवैकल्येन नात्यधिकनातिन्यूनसूत्रविन्यासेन च लघ्वीं चकार। सेयमधुना पाणिनीयप्रवेशार्थिनां प्रथममधीतिविषयतामातनोति।

दुष्पूरः खलु कालः। पुनरयमेव प्रश्नः—"यत् सुकुमारमत्यन्तेवासिसार्थस्य पाणिनीयं सुबोधं कथं वा स्यात्।" परं कथं वा विधेयम्?।

आसीत्पुरा दुर्बोधतायामिदं निमित्तं—यदष्टाध्यायीक्रमेणाध्ययनावसरे- एकस्मिन्नेव सूत्रे तदनुरोधेन तत्रत्यलक्ष्यबोधनं नाम। यथा—"दीधीवेवीटाम्" इति प्रथमाध्यायप्रथमपादचतुर्थसूत्र एव धातुस्थलीयलक्ष्यप्रदर्शने

कर्तव्यं भवति। तदधिगमश्च धिषणावित्तवदेकसाध्यः। सिद्धान्तकौमुद्याविष्कारानन्तरं च पूर्वपक्षसिद्धान्तादिविषयवैपुल्यमेव दुर्बोधतायां निमित्तमिति तदपि वरदराजाचार्येण निवारितमेव।

प्रकृते किमु नेदं दुर्बोधतानिमित्तमिति विचार्यमाणे प्रतिभाति—"यदष्टाध्याय्यध्ययनविमुखानां नश्छात्राणां पूर्वसूत्रानुवृत्ततत्तत्पदानां ज्ञानाभावेन प्रकृतसूत्रं वृत्तिं विना नान्वयबोधं जनयतीति। तत्र तत्र चार्षप्रयोगैर्दुरधिगमः सूत्राभिप्राय" इति च।

तथा च प्रकृते सूत्राणां सुबोधतासम्पादने,—आर्षप्रयोगवैकल्यम्, अनुवृत्तपदसापेक्षत्वाभावश्च सामग्री इति फलितम्।

परं कथं वा तत् साध्यं स्यात्। यतो हि—

"अल्पाक्षरमसन्दिग्धं सारवद् विश्वतोमुखम्।
अस्तोभमनवद्यं च सूत्रं सूत्रकृतो विदुः॥"

इत्युक्तलक्षणलक्षितसूत्रस्य पूर्वसूत्रतः—पदानुवृत्तिरावश्यक्येव। अन्यथा प्रकृतसूत्र एव तत्तत्पदपरिकल्पने द्विरुक्त्या गौरवं प्रसज्येत। अल्पाक्षरत्वं व्याहतमेव स्यात्।

यदि च—अष्टाध्यायीसूत्रक्रममनपेक्ष्य संज्ञादिप्रकरणविभागक्रमेणैव सूत्रक्रममभ्युपगम्य सूत्रपूरणं क्रियेत, तर्हि सर्वस्यापि सूत्रजातस्य रूपान्तरीकरणमेव स्यात्। तत्तु सुतरां नोचितम्। सूत्रजातमन्यथयितुं समर्थानामपि पूर्वेषां मनीषिणां, "भाष्याध्ययनेऽवश्यं सूत्रपरिवर्तनतः क्लेशः सम्भवेत्, प्रौढपाण्डित्यं संरक्षणीयम्" इति मनीषया शिष्यजनहितचिकीर्षूणामपि तस्मिन्नव्यवसितत्वात्। 'दुरवगम' इति को वा वेदमन्यथयितुं प्रवर्तेत। "छन्दोवत् सूत्राणि भवन्ति" इति नियमेन सूत्राणां वेदप्रायत्वात्। अत एव भाष्यकारास्तथाविधलौकिकप्रयोगानपि सूत्रदृष्टान् बहुविधप्रयासेन स्वाभिलषितार्थपरतया व्याचक्रुः। अन्यथा सूत्रमेव परिवर्तयेरन्।

न च सति चैवं भाष्यकारकृतं तत्तत्सूत्रप्रत्याख्यानं कथं वा सङ्गच्छत इति वाच्यम्। "नैकेनापि वर्णेनानर्थकेन भाव्यम्। किं पुनरियता सूत्रेण"—

इति तैरेवोक्तत्वात् । स्ववचनव्याघातस्यान्यथानुपपत्त्या "तत्तत्सूत्रैस्तत्तदर्थ-कल्पनेन-एतत्सूत्राभावप्रयुक्तलाघवं स्यादिति प्रकारप्रदर्शनेन स्वशिष्यान् खण्डनपण्डितान् विधातुं यत्न एव प्रत्याख्याने बीजं, वस्तुतः तदावश्यक-मेवेति—

अथवा "विवाहश्च विवादश्च समयोरेव शोभते" इति न्यायेन भवतु वा प्रत्याख्यानं न काचित् क्षतिः ।

तथा च रूपान्तरीकरणमनुचितमिति सिद्धम् ।

अथ कथं वा सुबोधतासम्पादनं प्रकृत इति चेत्—

"दिने दिने म्रियन्तं तु को वा तमनुशोचति" । इति न्याय एव तत्रो-त्तरम् । रूपान्तरीकरणमन्तरा यादृशो यत्नो विधेयः स सर्वोऽपि पूर्वैरनुष्ठित एवेति ।

तस्मात् प्रकृते व्याकरणशास्त्रस्य सुबोधता-सम्पादनं नाम लघुकौमुदीं छात्रानध्याप्यैव ॥—इति शम्[१] ॥—

——

१—व्याकरणशास्त्रस्य सुबोधत्वसिद्ध्ये सूत्रादिकस्याभिनवरूपकल्पनमुचितमिति पक्षमवलम्ब्य कुरुक्षेत्र वास्तव्यपण्डितभिक्षारामशास्त्रिणा रचिता काचित् 'शब्दज्योत्स्ना' नाम पुस्तिका । तामधिकृत्य विमर्शरूपोऽयं निबन्धः । लघुकौमुद्याः सुबोधतरं व्याकरणज्ञानसाधनं नैव सम्भाव्यत इत्यत्र लेखक-स्याशयः ।—सं० सागरिका

# आर्यसमाजस्य संस्कृतसाहित्यकाराः

विश्वनाथशास्त्री

आर्यसमाजस्य संस्थापकेन स्वामिना दयानन्देनान्यैश्चार्यसमाजस्य पण्डितैः आर्यसमाजस्य शिक्षासंस्थाभिश्च संस्कृतस्य प्रचाराय यद् यत् कृतं, क्रियते च तत्तदस्माभिरत्रोल्लेखनीयमस्ति। स्वामी दयानन्दः संस्कृतप्रचारको वेदोद्धारकः समाजोन्नायकश्चासीत्। तेन संस्थापित आर्यसमाजोऽपि तेनैव प्रकारेण संस्कृतस्य, वेदस्य, समाजस्य चोन्नत्यै सर्वदा यत्नशीलो वर्तते। आर्यसमाजस्योपनियमोऽपि वर्तते यदस्य सदस्या देववाणीं हिन्दीवाणीं वाऽवश्यं जानीयुरिति। आर्यसमाजस्य यत् किंचित् संस्कृतसाहित्यं वर्तते तत्सर्वं वैदिकं, शास्त्रीयं, धार्मिकं सांस्कृतिकं च वर्तते।

आर्यसमाजस्य संस्कृतसाहित्ये प्रमुखरूपेण तु दयानन्दवाङ्मयं वर्तते। तत्तु पञ्चविधं तद्यथा—

(१) स्वामिनो मौलिकाः संस्कृतग्रन्थाः।

(२) स्वामिना कृतं देववाण्यां वेदभाष्यम्।

(३) स्वामिनो हिन्दीग्रन्थानां पण्डितैः कृताः संस्कृतानुवादाः।

(४) स्वामिनो ग्रन्थानां देववाण्यां लिखिताऽऽलोचना प्रत्यालोचना च।

(५) स्वामिनो जीवनमधिकृत्य पण्डितैर्लिखितानि दयानन्दचरितानि।

प्रथमं तु स्वामिनो जीवनमधिकृत्य किंचिल्लिखामः। अस्ति गुजरातदेशे मोर्वीराज्ये टंकारा नाम नगरी। तस्यां नगर्यामुदीच्यवंशे "करसन जी लाल जी तिवारी" नामकः कश्चिद्राज्याधिकारी सम्पन्नो विप्रः। तस्य मूलशङ्करो नाम तनयः १८२४ खिस्ताब्दे जातः। स एव कालेन दयानन्दनाम्ना प्रसिद्धो जातः। विप्रभावात् चतुर्दशवर्षदेशीय एव स मूलशङ्करः समग्रं यजुर्वेदं कण्ठाग्रं कृतवान्। बाल्य एव तस्य हृदि वैराग्यभावो जातः। एकविंशतिवर्षीयः स

गृहमत्यजत् । स मुमुक्षुः सन् योगिनां दर्शनायेतस्ततः रेवातीरेऽथ च हिमालये विचरन् सन् षट्त्रिंशद्वर्षीयो मथुरां गतस्तत्र च दण्डिनो विरजानन्दस्य पाठशालां प्राप्तः । तत्र च वर्षत्रयमुषित्वाऽष्टाध्यायी-महाभाष्य-निरुक्त प्रभृतीन् ग्रन्थान् दण्डिनोऽधीतवान् । दीक्षान्तसमये दण्डी प्रोवाच-यावज्जीवं वैदिकधर्मस्य प्रचारं कुर्वित्येव म आदेश इत्येव म उपदेशः । तथास्त्वित्युक्त्वा स वैदिकधर्मप्रचाराय प्रचलितः । सोऽवधूतावस्थायामेव सर्वत्र संस्कृतभाषायामेवावैदिकसम्प्रदायानां खंडनं कृत्वा वैदिकधर्मं स्थापितवान् । तेन १८७४ खिस्ताब्दपर्यन्तं केवलं संस्कृतभाषायामेव सर्वप्रकारको व्यवहारः कृतः । तेनान्या कापि भाषा न व्यवहृता । अयि पाठकाः ! अस्ति कश्चिदेतादृशोऽद्वितीयः संस्कृतोद्धारको यः संस्कृतं विहायान्यां कामपि भाषां न व्यवहरेत् ? तेन संस्कृतस्य प्रचाराय वेदानां चोद्धारायोत्तर-प्रदेशे फरुखाबाद, मिरजापुर, कासगंज, छलेश्वर इत्येतासु चतसृषु नगरीषु वेदपाठशालाः स्थापिताः । १८७५ खिस्ताब्दे तेनार्यसमाजस्य मुम्बापुर्यां स्थापना कृता । सर्वजनहिताय च तदा हिन्दी भाषाऽपि स्वीकृता व्यवहृता च । आर्यसमाजस्य मुख्योद्देश्यं तु वेदानां प्रचार एवास्ति । अतश्च स्वामिना वेदानां देववाण्यां हिन्दीवाण्यां च भाष्यं कृतम् । इत्थं नाना प्रकारेण स्वामिना संस्कृतस्य प्रचारो वेदानां चोद्धारः कृतः । १८८३ खिस्ताब्देऽजमेर-नगरे स निर्वाणपदं प्राप्तवान् । अधोलिखितं दयानन्द-वाङ्मय वर्तते ।

मौलिकाः संस्कृत-ग्रन्थाः—

१—ऋग्वेदादिभाष्यभूमिका

२—पंचमहायज्ञविधिः

३—संस्कृतवाक्यप्रबोधः

वेदादिग्रन्थानां भाष्यम्

४—ऋग्वेदभाष्यम् (मण्डलं ७, सूक्तं ६१ पर्यन्तम्)

५—यजर्वेदभाष्यम्

६—अष्टाध्यायीभाष्यम्

हिन्दीग्रन्थानां कृताः संस्कृतानुवादाः

७—शङ्करदेवपाठकाः—सत्यार्थप्रकाशः

८—विद्यानिधिः शास्त्री—व्यवहारभानुः (पद्यानुवादः)

आलोचना प्रत्यालोचना च

९—द्विजेन्द्रनाथशास्त्री—भूमिकाप्रकाशः।

दयानन्दचरितानि

१०—अखिलानन्दः—दयानन्ददिग्विजय-महाकाव्यम्

११—दिलीपदत्तोपाध्यायः—मुनिचरितामृतम्

१२—द्विजेन्द्रनाथशास्त्री—दयानन्दोदयः

१३—मेधाव्रतः—दयानन्ददिग्विजय-काव्यम्

दयानन्दवाङ्मयं लिखित्वाऽधुना वयमार्यसमाजस्यान्यैः पण्डितैर्यद् यद्रचितं तल्लिखामः।

गङ्गाप्रसादोपाध्यायः

१—आर्यस्मृतिः

२—आर्योदयकाव्यम्

३—तुलसीरामस्वामी—सामवेदस्य संस्कृतभाष्यम्

द्विजेन्द्रनाथ शास्त्री—

४—स्वराज्यविजयः

५—संस्कृतसाहित्यविमर्शः

६—धर्मदेवः—महापुरुषकीर्तनम्

७—ब्रह्ममुनिः—वेदान्तदर्शनस्य संस्कृतभाष्यम्

मेधाव्रतः

८—ईशोपनिषत्काव्यम्

९—कुमुदिनीचन्द्र (उपन्यासः)

१०—नारायणस्वामिचरितम्

११—प्रकृतिसौन्दर्यम्

१२—ब्रह्मचर्यमहत्त्वम्

१३—ब्रह्मचर्यशतकम्

१४—महर्षिविरजानन्दचरितम्

१५—सत्यदेववशिष्ठः—सत्याग्रहनीतिकाव्यम्

आर्यसमाजस्य शिक्षासंस्थाभिरपि संस्कृतस्य प्रचाराय महान् यत्नः क्रियते। आर्यसमाजेन संस्थापिता अनेके गुरुकुलाः कन्यागुरुकुलाश्च सन्ति यत्र संस्कृतस्य शिक्षैव मुख्यरूपेण भवति। तत्रस्थाः छात्रा देववाण्यां वार्तालापं कर्त्तुं प्रायेण समर्था भवन्ति। गुरुकुल-काङ्गड़ी-हरिद्वारतः संस्कृतभाषायां "गुरुकुल-पत्रिका" प्रकाशिता भवति। आर्यसमाजस्य विद्यालयेषु महाविद्यालयेषु कन्यापाठशालासु चापि संस्कृतप्रचाराय यत्नः क्रियते।

——

# वसन्तवर्णनम्

स्व० म० म० रामावतार शर्मा

( १ )

अथ कदाचिदुदञ्चितविक्रमः
क्रमजिताखिलभूवलयो नृपः ।
अवनिमैक्षत दिक्षु विभूषिताम्
स मधुना मधुनाशनसन्निभः ॥

( २ )

विजयिनोऽस्य जयं जलधेस्तटे
समभवास्य तुषारगिरावपि ।
हिमतमोविलयेन विकासयन्
मनुजवृन्ददृशे ददृशे रविः ॥

( ३ )

उपवनेषु रसालरसालसैः
विरहिणीस्तरुणीः प्रतिदारुणैः ।
प्रियतमाभिरसौ कृतसंनिधिः
परभृतैरभृतैष कुतूहलम् ॥

( ४ )

अरमयन् रमणीसहितं नृपं
किसलयावलिवेल्लदलिव्रजाः ।
उपवनेषु करेणुकरोपमाः
क्षमकरं मकरन्दभृता लताः ॥

( ५ )

परिहरंस्तरुणी चरणाहतिं
स्वयमशोकतरुः कुसुमं दधे ।
इति रुषारुणितैरचलन्पदैः
युवतयो बत योद्‌धुमिवोद्‌धुराः ॥

( ६ )

अधिवनं सहकारतरौ चिरं
मधु निपीय निलीय च पल्लवे ।
प्रतिययौ भृशमुत्सुकतां दधद्
विसरसे सरसे मधुपव्रजः ॥

( ७ )

मधुरसार्थमलिश्चपलो ययौ
कलरवं कलयन् किलमाधवीम् ।
परिजहार रुषा रजसा ततः
तमलिनी मलिनीकृतविग्रहम् ॥

( ८ )

प्रमदयेव सबाष्पजलास्यया
दयितयाप्यचिरेण सरः श्रिया ।
रुचिरवापितुषारकणोल्लसत्–
कमलया मलयानिलसंगमे ॥

( ९ )

नरपतिः स ननंन्द वनश्रिया
परभृतालिलसत्सहकारया ।
युवतिवक्त्रमधुस्फुटविस्फुरद्
वकुलयाऽऽकुलयाऽलिकदम्बकैः ॥

( १० )

रमयते रमणीनवदोलया
नृपतये कुपिता नवपल्लवैः ।
बहिरदर्शयदुन्मदना भृशं
वनलतामनलतामिवात्मनः ॥

( ११ )

परभृतैरलिभिश्च जयारवे
मदननेतुरुदारमुदीरिते ।
भृशमकम्पि भयार्दितचेतनैः
विरहितैरहितैरिव भूपतेः ॥

( १२ )

कुसुमिते सहकारतरौ चिरं
मधु निपीय मदालसविग्रहा ।
मधुकरी ददृशे शयितोत्पले-
ऽवनिभृता निभृतारवशालिनी ॥

( १३ )

निशि शशिप्रभया धवलीकृता
नृपतिना सरयूर्ददृशेऽमुना ।
करुणकूजिरथाङ्गविहङ्गमा
सरससारससान्द्ररवाकुला

( १४ )

मुदमनभ्रमये समये न ये
दधुरमन्दमदा मुरजारवे ।
सहचरीसहिताः शिखिनस्तदा
मुमुदिरे मुदिरे स्तनतीव ते ॥

( १५ )

पिकवरे कवरे मलयानिल-
प्रतिविकीर्णरसालरजश्च यैः।
रसति दीप्तमदे पथिकस्त्रिया
बधिरयाधिरयाऽपि कथंचन ॥

( १६ )

निजवशाप्रणये विवशा तट-
द्रुमततिप्रतिसारितमातपम् ।
सरसि नानुबभूव ततस्तदा
न जगतांगजतापममन्यत ॥

( १७ )

सपदिसारववारिविगाहना
दतितरां सरसे सकलेऽङ्कके ।
नरपतेः सुदृशां तु कुचे गलन्
मृगमदेऽगमदेकपदे मनः ॥

( १८ )

अतिगमिष्यति नैव मधुं प्रियो
बहिरिति प्रतिवासरमीक्षितम् ।
पतिसमागमशंसिकुचोल्लसत्
कसलयालसया पथिकस्त्रिया ॥

( १९ )

स्मरनिदेशवशाद् दृढतां गता-
वपि मृणालमृदू प्रमदाभुजौ ।
वशयतः स्म नृपं विजयज्ज्वलद्
भुजबलं जवलङ्घितशात्रवम् ॥

( २० )

नृपमशोकतरुर्नवदोलया
विनमितैर्विटपैरुपशोभितः ।
अमदयद्विरहार्त्तिपरिस्खलत्
तरुणयारुणया प्रसवश्रिया ॥

( २१ )

चलदृशः शफरीपरिघट्टनात्
सरसि या नितरां परितत्रसुः ।
स्मरशरादपि नैव भयं ययुः
भुजगता जगतामधिपस्य ताः ॥

( २२ )

प्रियकथां मलयानिल एकया
नुयुयुजे परया किल कोकिलः ।
ललनया विनयेन समुल्लसत्
कुतुकया तुकयाऽपि मधुव्रतः ॥

( २३ )

श्रितघनाम्रतरुस्तुदती श्रुती
कलरुतैस्तपनेऽपि तपत्यलम् ।
परभृता भवतिस्म न पल्लवै-
रपिहितापि हिताय वियोगिनाम् ॥

( २४ )

विरहवेदनया पथिकस्त्रियो
धृतरुजो निजबन्धुभिरीक्षिताः ।
मलयवायुरणादुगुणकार्मुके
रतिसखेऽतिसखेदमुदश्रुभिः ॥

( २५ )

अनुनयो न गृहे जगृहे यया
कथमपि स्वसखीजनबोधनैः ।
सकुसुमे परिरभ्य वने धृतः
कुपितयापि तया दयितः स्वयम् ॥

( २६ )

सकुसुमास्तरणो तरुणीजनैः
परिवृतः सदने मधुचन्द्रिकाम् ।
अभिगवाक्षमुदैक्षत विस्तृताम्
दिविषदां विषदां पथि भूमिपः ॥

( २७ )

प्रियतमं मम मञ्जुल-गुञ्जितैः
अयि सखे किमु नानयसि द्रुतम् ।
इदमुदीयँ विचिक्लिपिरे सुमा-
न्यभिकयाऽभिकयापि मधुव्रतम् ॥

( २८ )

अथ नृपः किल दुर्बलघातिनाम्
भवति शासक इत्यवधार्य सः ।
पृतनया चलितुं चकमे लसत्
कवचयाऽवचयाय मृगद्विषाम् ॥

( २९ )

वपुषि वर्म नवं तलवारणं
करयुगे मुकुटं शिरसि स्फुरत् ।
स रुचिरे समनह्यदुपानहौ
चरणयोरणयोगविचक्षणः ॥

( ३० )

अधिरुरोह हयं जविनं नृपः
परिचचाल च विन्ध्यवनं प्रति ।
बहुभटोऽपि वहन्धनुषा धृतिं
शरवता रवताडितशत्रुणा ॥

( ३१ )

बकुलसर्जरसालमधुद्रुम
प्रियकबिल्वपलाशवटादिभिः ।
कृतरुचं तरुभिः समलोकयत्
स वसुधां वसुधामधरो विभुः ॥

———

# विज्ञानवादे प्रत्ययनिर्वाहः

डा॰ ब्रनीन्द्रकुमार सेनगुप्तः, एम्॰ ए॰, डी॰ फील्॰

विज्ञानवादानुसारं तावत् 'अहमिदं जानामि' इति प्रत्यये यदेकरूपत प्रतिभासते तस्य विचारः कार्यः। अत्र 'अहम्' इति एकं विज्ञानम् 'इदम्' इति च द्वितीयं विज्ञानम्। अस्माद्विज्ञानद्वयात् वासनाद्वितयमुत्पद्यते। अस्माद् वासनाद्वितयात् वासनासहकारेणैव 'समनन्तरप्रत्यय' इति कश्चित् प्रत्यय जायते। समनन्तरप्रत्ययादेव तेषां नये त्रितयविषयकं प्रत्ययं जायते। यथा—कदाचित् अहं कल्पनायुक्त विज्ञानमुत्पद्यते, अनन्तरञ्च 'इदम्' इति चाकार विषयविकल्पितं विज्ञानमुत्पद्यते। इदं विज्ञानद्वितयं वासनासजातीयज्ञानस पूर्ववृत्तसजातीयज्ञानत्वाद् वासनारूपमेवेति विज्ञानवादिसम्मतः कश्चित् सिद्धान्तः इति अग्रे स्पष्टीकरिष्यते।

विज्ञानवादे तावद् विज्ञानातिरिक्तवासनाख्यः कश्चित् पदार्थो नास्ति पूर्वोक्तवासनाद्वितयादेव 'जानामि' 'पश्यामि' इति क्रियाविकल्पप्रत्यय उत्पद्यमानः सन् कारणत्रितयानुरूपं 'अहमिदं जानामि' इति विषय-क्रिया ऽहंप्रत्ययकल्पनात्मकं विकल्पिताकारम् एकमेव विज्ञानमुत्पद्यते।

अस्य विज्ञानवादस्योत्तरमुखेन वेदान्तिनस्तावदाचक्षते—वासनाक्रमस सर्वथाऽसङ्गत्वम् केवलम् 'अहमि'ति, केवलम् 'इदमि'ति ज्ञानस्य कदाप्युत्पत्ति दृष्टपूर्वा। ज्ञाने तावदेकमेव रूपं प्रथमत एव भासते—'अहमिदं जानामि' इति। तत्र कर्तृरूपस्य कर्मरूपस्य अनुभवरूपस्य च एकस्मिन्नेव प्रत्यये सम्भूय भानमिति सर्वेषामेवापरोक्ष्यम्। अतएव एतत्प्रतीत्यनुरोधेन 'अहं' रूपविज्ञानात् भिन्नम् अर्थक्रियासमर्थं नीलमभ्युपगन्तव्यम्।

**विज्ञानवादराद्धान्तस्तु—**

अनुभवानुसारेण नीलेन सह संवेदनस्याऽभेदो नास्ति, किन्तु नीलस्य विज्ञानात् सर्वथा भेदे सति विज्ञानेन नीलस्य प्रतिभास एव न स्यात्।

अतो नीलस्य प्रतिभासानुपपत्तिरेव नीलेन विज्ञानस्याऽभेदे प्रमाणम्। स्थैर्यवादे तावद् विषयविज्ञानयोरुभयोरपि स्थिरत्वात् क्रियानिबन्धनो विषयेण विज्ञानस्यासाधारणः कश्चन सम्बन्ध उपपद्यतेतराम्। तेन असाधारणाकारस्य विषयस्यावभासोऽपि भवितुमर्हति। यतः स्थैर्यवादे आगन्तुकसम्बन्धस्य सम्भवोऽपि भवति। क्षणिकत्ववादे तु तस्य सर्वथाऽसम्भवः।

इदन्तु आयाति—क्षणिकवस्तुद्वये कस्यापि आगन्तुकसम्बन्धस्यापि असद्भावात् क्षणिकविषयविज्ञानयोर्यदि स्वाभाविकोऽभेदोऽपि न स्यात्, तर्हि सम्बन्धमन्तरेण आगन्तुकसम्बन्धस्य च चिति (विज्ञाने) निरस्तत्वात् तया चिता (विज्ञानेन) विषयस्य कीदृगवभासः स्यात्? न कोऽपि इति वक्तव्यम्। तच्च न युक्तिसहम् अनुभवसंवादि वा। अतो विज्ञानवादिना तावत् केवलप्रतिभासानुपपत्त्या एव विषयस्य विज्ञानेन अभेदः प्रतिपाद्यते इति विभाव्यम्। अपि च, विषयस्य विज्ञानस्य च क्षणिकत्वात् क्षणिके क्रियायां अनुपपत्तिरेवेति अभ्युपगन्तव्या। क्रियाया उच्छित्त्या एव क्षणिकत्वम्। क्रियायां सत्यां क्रियान्वयि वस्तु क्षणिकं न स्यात् पूर्वमीमांसाप्राचीनाचार्यो बादरिरपि क्रिया-प्रत्याचष्टे इति सुधीभिर्विभाव्यम्।

———

# मल्लिनाथानुवीक्षा

रेवाप्रसादद्विवेदी

मल्लिनाथस्यापि टीकासु लभ्यमानान् कतिचन विचार्यांशान् विदुषां विनोदायात्र संक्षिप्य प्रस्तुमः —

**(१) शिशुपालवधस्य—**

क्षतः प्रजाक्षेमकृता प्रजासृजा सुपात्रनिक्षेपनिराकुलात्मना ।
सदोपयोगेऽपि गुरुस्त्वमक्षयो निधिः श्रुतीनां धनसंपदामिव ।। [१।२८]

पद्यमिदं मल्लिनाथ एवं व्याचष्टे—

'प्रजानाम् = जनानामपत्यानां च, क्षेमकृता = कुशलकारिणा, 'प्रजा स्यात् सन्ततौ जने' इत्यमरः, सुपात्रे = योग्यपुरुषे कटाहादिदृढभाजने च निक्षेपेण [न्यासेन] निधानेन च निराकुलात्मना स्वस्थचित्तेन, 'योग्यभाजयोः पात्रम्' इत्यमरः, प्रजासृजा = ब्रह्मणा पुत्रिणा च त्वं धनसंपदामिव श्रुतीनां वेदानां सदा उपयोगे दानभोगाभ्यां व्ययेऽपि अक्षयः एकत्र आम्नानाद् अन्यत्र आनन्त्याच्चेतिभावः, गुरुः उपदेष्टा संप्रदायप्रवर्तक इति यावत्, अन्यत्र महान्, निधीयत इति निधिः निक्षेपः कृतः। ......। अत्र शब्दमात्रसाधर्म्याच्छ्लेषोऽयं प्रकृतविषय इत्याहुः ।'

अत्रोपमेयपक्षे [श्रुतिपक्षे] सदोपयोगः, तत्रापि गुरुत्वम् अक्षयत्वं चेति विशेषणत्रयं यथा संगच्छते न तथोपमानपक्षे [धनसंपत्तिपक्षे] यो हि निधिः कटाहादिषु निक्षिप्य निखन्यते, स्यान्नामास्य विपुलतारूपं गुरुत्वम्; तथापि वर्धिष्णुतारूपं तत् नोपपद्यते, न चेदं न विवक्षितम्, श्रुतिपक्षे तस्यैव गुरुपदेन स्वारसिकत्वात्, 'व्यये कृते वर्धत एव नित्यं विद्याधनमि'त्यभियुक्तानुभवाच्च। नापि निखातस्य द्रव्यनिधेः प्रजाकर्तृक उपयोगोऽप्युपपद्यते । उपपन्नेऽपि च तस्मिन् निःस्रोतसः कूपजलस्येव निरागमस्यास्य निरन्तरमुपयुज्यमानस्याक्षयत्वं

न संभवति। न चात्र धननिखननं स्वाभाविकम्। यो हि प्रजासृट्पदवाच्यो गोत्रवृद्धः सन्ततिरूपायाः प्रजाया लब्धसंरक्षणमुखीनं कल्याणं चिकीर्षति नासौ स्वार्जितं वसु भूमौ खनति, तेनास्य निधिमात्रप्रियत्वं स्यात्, न प्रजावल्लभत्वम्। किञ्च—

'यं तु पश्येन्निधिं राजा पुराणं निहितं क्षितौ।
तस्माद् द्विजेभ्यो दत्त्वार्धमर्धं कोशे निवेशयेत्॥
निधीनां तु पुराणानां धातूनामेव च क्षितौ।
अर्धभाग् रक्षणाद् राजा भूमेरधिपतिर्हि सः॥

[ मनुस्मृतौ ८।३८, ३९ ]

इत्यादिधर्मशास्त्रानुरोधेन 'निधीयते इति' व्युत्पत्त्या निधिशब्दोऽत्र योगरूढो मन्यते चेत् 'क्षेम' पदेन तर्हि किमपराद्धम्, तस्यापि लब्धसंरक्षणार्थे रूढिः सर्वप्रसिद्धा, कथं वा 'आख्यातोपयोगे' [१।४।२९] इत्यादिषु 'उपयोगो नियमपूर्वकं विद्याग्रहणम्' इत्यादिभि काशिकादिवचनैः प्रसिद्धमुपयोगपदस्यापि रूढत्वमत्र नोदीर्यते, किमिति च निधिपदस्यापि निक्षेपशब्दः पर्यायतया दीयते ? निक्षेपो हि भारतीयस्यार्थशास्त्रस्य पारिभाषिकः शब्दः। तत्रास्य न्यासोपनिध्यपरपर्यायस्य तस्मिन्नेवार्थे भूयान् प्रयोगो यस्मिन् धरोहरशब्दस्य हिन्दीभाषायाम्। अत एव चाष्टादशसु व्यवहारेषु मनुस्मृतौ निक्षेपस्यान्यतमत्वम्—'तेषामाद्यमृणादानं निक्षेपोऽस्वामिविक्रयः' [८।४] 'स्वधनस्यान्यस्मिन्नर्पणरूपो निक्षेपः'—इति कुल्लूकवर्णितस्तदाशयश्च सङ्गच्छते। कुतश्चात्रैवार्थे कुटलतोकेनापि निक्षेपप्रक्षेपोपनिधीनां प्रयोगस्तस्य महन्महितेऽर्थशास्त्रे। प्रसिद्धं च तत्रैव—'उपनिधिभोक्ता देशकालानुरूपं भोगवेतनं दद्यात्, नाऽऽधिः सोपकारः सीदेत्, न चास्य मूल्यं वर्धेत, निरुपकारः सीदेत् मूल्यं चास्य वर्धेतान्यत्र निसर्गात्, निक्षेपश्चोपनिधिना [व्याख्यातः] रहसि वृद्धो व्याधितो वा वैदेहकः कश्चित्, कृतलक्षणं द्रव्यमस्य हस्ते निक्षिप्यापगच्छेत्, तस्य प्रतिदेशेन पुत्रो भ्राता वाऽभिगम्य निक्षेपं याचेत [कौटलीयमर्थशास्त्रम्—३।१२] इत्यादिभिर्वाक्यै-

निक्षेपस्य सोपकारत्वं निरुपकारत्वञ्च। तत्र उपकारेण द्रव्यादानेन सह क्रियमाणस्य निक्षेपस्य सोपकारत्वम्, अन्यथा च निरुपकारत्वम्। निरुपकारस्यास्य निक्षेपधारिणा स्वव्यवसाये विनियोगोऽनुमतः, यदि ततो जातेन लाभेन निक्षेपिणोऽप्यंशहरत्वं नाहन्यते। ततश्च व्याख्यातोऽनेन निरुपकारेण निक्षेपेणाद्यतनो बैंकविधिः। दृश्यते च मृच्छकटिके पञ्चतन्त्रे चानयोरुदाहरणं यत्र वसन्तसेना 'पुरुषेषु न्यासः क्रियते न गृहेषु' इति ब्रवीति, पञ्चतन्त्रप्रवक्ता च 'निक्षेपी म्रियते तुभ्यं दास्यामि तव वाञ्छितम्' इति सोपकारं प्राप्तनिक्षेपस्य जनस्य गृध्नुतां प्रकटयति। 'दुःखं न्यासस्य रक्षणम्' इति लौकिक आभाणको भासकृतौ स्वप्नवासवदत्तेऽपि दृश्यत एव।

अतोऽत्र 'सुपात्रपदेन कटाहादिकमगृहीत्वा प्रामाणिकः श्रेष्ठी ग्रहीतव्यः निक्षेपेण च तद्धस्ते कुलवृद्धकर्तृकः प्रजायै द्रव्यस्य निरुपकारो न्यासः। ततश्चायमत्रार्थो मान्यो यद् यथा कुलवृद्धः कस्मैचिद् व्यवसायिने सुहृदे स्वद्रव्यं ददाति, सोऽपि यथा तस्य स्वव्यवसाये विनियोगं करोति, यथा चैतेनास्योत्तरोत्तरं वृद्धिर्जायते कुसीदेन (ब्याजेन) च निक्षेप्तुः परिवारपालनम्, तथैव ब्रह्मणा श्रुतयः स्वत्पदवाच्ये नारदे निक्षिप्ताः—इति। एतेन गुरुशिष्यपारम्पर्यमपि ध्वनितं भवति। तत्र हि

'निर्याय विद्याथ दिनादिरम्याद् बिम्बादिवार्कस्य मुखान्महर्षेः।
पार्थाननं वह्निकणाऽवदाता दीप्तिः स्फुरत्पद्ममिवाभिपेदे॥

[ किराते—३ ]

इत्यादिनोदाहृता—

'विद्या ब्राह्मणमेत्याह शेवधिस्तेऽस्मि रक्ष माम्' [मनुस्मृतौ २।११४] इत्यादिभिर्निगमिता च विद्यासंक्रान्तिः, तस्याः संरक्षणम्, उपयोगेन तस्यास्तेजस्वितासंपच्छिष्यलोकस्य चक्षुरुन्मीलनद्वाराऽज्ञानतिमिरापनोदित्वञ्चेति सर्वमागूरितं जायते। अत एवमिवात्र व्याख्येयम्—

'सुपात्रे मेधाविनि त्वल्लक्षणे शिष्ये, प्रामाणिके श्रेष्ठिनि च निक्षेपेण न्यासेन निराकुलः स्वविज्ञानसंरक्षणेनाश्वस्तः सन्ततिनिर्वाहप्रत्ययेन च निश्चिन्त

आत्मा यस्य तेन प्रजायाः वर्णचतुष्टयात्मकस्य चराचरस्य सृष्टिप्रपञ्चस्य संततेश्च क्षेमकृता धर्मव्यवस्थया मात्स्यादिन्यायापसारेण स्थितिकर्त्रा, लब्ध-संरक्षणौपयिकस्य कल्पाणस्य च विधात्रा प्रजासृजा परमेष्ठिपितामहेन गृहस्थवृद्धेन च सदा नैरन्तर्येण प्रयोगे नियमपूर्वके स्वाध्यायाध्यापने न्यासरक्षकेण (बैंकादिना) स्वकार्ये विनियोगेऽपि च अक्षयोऽनश्वरः प्रत्युत गुरुः प्रतिपलं वर्धिष्णुः, एकोऽधीतस्य शतशाखीकरणेन तेजस्वितया च, अपरः सूदादिलाभेन, निधिः राशिः श्रुतीनां संपदाञ्च...।'

यश्चात्रालङ्कारो [श्लेषः] मल्लिनाथेन दर्शितः सोऽपि सादृश्यमेवात्र 'इव' पदप्रतिपादितं प्रगुणयन्नात्मन्यविश्रान्तत्वादप्रधान एव, प्रधानकृतं व्यपदेशं विहायाप्रधानकृतस्य तस्यामान्यत्त्वादमान्य एव च। अत एव काव्यप्रकाशे शब्दालङ्कारप्रकरणे श्लेषस्यालङ्कारान्तरप्रतिभोत्पादकतां विखण्ड्या-लङ्कारान्तरस्यैव प्रत्युत श्लेषप्रतिभोत्पादकता सिद्धान्तिता, अन्यथा पूर्णोपमा-दिकस्य महतः श्लेषमूलस्यालङ्कारसार्थस्य निर्विषयत्वमापद्येत। वस्तुतोऽत्र महिमभट्टानुरोध एव मान्यः। स हि समासोक्तिविधया संभवप्रत्ययेषु सादृश्यादिषु कण्ठरवेण तदुक्तिं प्रत्यादेष्टि, पौनरुक्त्यमवाच्यवचनत्वं वाच्या-वचनत्वं च तत्रोद्भावयति।[१]

---

१—"अनुरागवन्तमपि लोचनयोर्दधतं वपुः सुखमतापकरम्।
निरकासयद् रविमपेतवसुं वियदालयादपरदिग्गणिका॥"

अत्र हि लिङ्गविशेषनिर्देशात् स्त्रीत्वस्य कार्यतश्च तद्विशेषाभिव्यक्तौ सामर्थ्यादेवापरदिशो गणिकारूपत्वे वियतश्चालयत्वेऽवगते तयोस्ताद्रूप्य-वचनं तत् पुनरुक्तम् [ चौ० सं० व्यक्तिविवेके ३१३ पृष्ठे], इति,

"अलिभिरञ्जनबिन्दुमनोहरैः कुसुमपङ्क्तिनिपातिभिरङ्कितः।
न खलु शोभयति स्म वनस्थलीं न तिलकस्तिलकः प्रमदामिव॥

अत्र तिलकप्रमदयोरेकतरस्मिन् वाच्ये यदुभयोर्वचनं तदवाच्यवचनं दोषः। ये तु गण्डस्योपरि पिटकोद्भेदमिव तत्राप्यार्थमेव तस्योपमानत्वमुपरच-यन्ति नमस्तेभ्यः कविवरेभ्यः, तद्यथा—

४

अतोऽत्र 'निधिः श्रुतीनामित्येव वक्तव्यम्, धनसंपदामिवेति तु न। तस्य निधिपदेनैव पदान्तरसाहचर्याद् व्यञ्जनया प्रतीतेः। तदा चात्र शब्दशक्तिमूलोऽलङ्कारध्वनिः स्याद्, येन चमत्कारातिशयोऽपि संपद्येत। अतएवालङ्कृतीनामपि वाच्यत्वापेक्षया व्यङ्ग्यत्व एव सौभाग्यलाभं समर्थयन्ति सहृदयाः—

शरीरीकरणं येषां वाच्यत्वे न व्यवस्थितम्।
तेऽलङ्काराः परां छायां यान्ति ध्वन्यङ्गतां गताः॥ ध्वन्यालोके २।२८

वाच्यालङ्कारवर्गोऽयं व्यङ्ग्यांशानुगमे सति।
प्रायेणैव परां छायां बिभ्रल्लक्ष्ये निरीक्षितः॥ तत्रैव ३।३६

मुख्या महाकविगिरामलङ्कृतिभृतामपि।
प्रतीयमानच्छायैषा भूषा लज्जेव योषिताम्॥ तत्रैव ३।३७

वाच्यात्प्रतीयमानोऽर्थस्तद्विदां स्वदतेऽधिकम्।
रूपकादिरतः श्रेयानलङ्कारेषु नोपमा॥ व्यक्तिविवेके २।३६, ३०५

(२) रघुवंशस्य—

'अमुं पुरः पश्यसि देवदारुं पुत्रीकृतोऽसौ वृषभध्वजेन।
यो हेमकुम्भस्तननिःसृतानां स्कन्दस्य मातुः पयसां रसज्ञः॥ २।३६

---

'जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः
प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः।
भर्तुर्नृत्तानुकारे जयति निजतनुस्वच्छलावण्यवापी—
संभूताम्भोजशोभां विदधभिनवो दण्डपादो भवान्याः॥

अत्र हि समासोक्त्यैव 'दण्डपादस्याम्भोजतुल्यत्वेऽवगते यत्तस्याम्भोजशोभां विदधदिति पुनवर्चनं तत् अवाच्यवचनदोषतां नातिपतति।" [तत्रैव ३८४-५] इति च।

पद्यस्यास्योत्तरार्द्धं मल्लिनाथ एवं व्याकरोति—

'यो देवदारुः स्कन्दस्य मातुः गौर्याः हेम्नः कुम्भ एव स्तनः तस्मान्निःसृतानां पयसामम्बूनां रसज्ञः स्वादज्ञः, स्कन्दपक्षे हेमकुम्भ इव स्तन इति विग्रहः, पयसां क्षीराणाम्, 'पयः क्षीरं पयोऽम्बु च, इत्यमरः। स्कन्दसमानप्रेमास्पदमिति भावः ॥'

अत्रेयं विचारणा—वृक्षपक्षे यदि पयःपदं जलार्थतया नीयते तर्हि हेमकुम्भस्तनपदमपि पूर्वपदार्थस्य हेमकुम्भस्य प्राधान्यलाभाय 'हेमकुम्भः स्तन इव' इत्येवं 'पुरुषव्याघ्रः' इतिवत् विग्रहणीयम्। यथाश्रुते तु विग्रहे हेमकुम्भस्य स्तन आरोपात् स्तनस्यैव प्राधान्ये तेन सह जलपदार्थस्यान्वयो न घटते, नहि पयोधरतया प्रतीतेऽपि स्तने जलसत्त्वं लोकसिद्धम्, यस्य च सत्त्वं तत्र सिद्धं तत् क्षीरमेव, न च वृक्षपक्षे मल्लिनाथस्य पयःपदेनैतदभिमतम्। अत एव 'पादाम्बुजं भवतु नो विजयाय मञ्जुमञ्जीरशिञ्जितमनोहरसम्बिकाया' इत्यादौ मञ्जीरशिञ्जितत्वादेरम्बुजादावनन्वयात् काव्यप्रकाशकृता[1] दशमोल्लासान्ते रसगङ्गाधरकृता[2] च लक्षणाप्रकरणे विशेषणसमासमनङ्गीकृत्योपमितिसमासोऽङ्गीकृतः।

वस्तुतः 'विद्वन्मानसहंसे' त्यादौ श्लिष्टपरम्परितरूपकोदाहरणे यथा मानसमेव मानसं सरः' इति वस्तुद्वयस्याभेदो मन्यते, तयोः 'मानसे' त्याकारकेणाभिन्नानुपूर्वीकतयैकेनैव पदेनोक्तत्वात्, तथैवात्रापि जलस्य क्षीरस्य च 'पयसाम्' इत्येकेनैव पदेन प्रत्यायनात् अभेदः स्वीकार्यः। तथा च 'पयसाम्' इत्यस्य वृक्षपक्षे 'अम्बूनाम्' इति व्याख्यानमकृत्वा 'जलरूपाणां क्षीराणाम्' इति व्याख्यानं कार्यम्। क्षीररूपाणां जलानामिति तद्विपरीते तु व्याख्याने 'हेमकुम्भरूपाणां स्तनानाम्' इत्यनेन सम्बन्धो न संभवति, तत्र हेमकुम्भस्य स्तनस्य च पृथक्पदोपादानात् एकपदोपात्तयोः क्षीरनीरयोरिवोभयतोमुखस्य व्याख्यानस्या-

---

१—काव्यप्रकाशे—१०।१४० कारिकायाम्।

२—रसगंगाधरे १६६ पृष्ठे निर्णयसागरीये संस्करणे।

संभवात्। न चैवं पयसामित्यत्र रूपकातिरिक्तस्य प्रकारस्यासंभवात् तदेकवा-क्यतायै हेमकुम्भस्तनयोरपि रूपके क्रियमाणे स्कन्देन वास्तवस्यैव स्तनस्य पानात् हेमकुम्भरूपस्य स्तनस्य पानस्यात्राप्रसिद्धत्वात् स्कन्दपक्षेऽर्थानुपपत्तिरिति वाच्यम्, स्कन्देन सह देवदारोरौपम्यस्यात्र कविसंरम्भविषयत्वाभावान्नानुपपत्तिः। यो हि गौर्याः स्तन्यं धयति स तावतैव गौरीवल्लभस्य पुत्रतामासादयति, तत एव च स्कन्दतुल्यताम्, ततो नास्ति तत्र स्कन्दौपम्यस्य शब्देनोपादानमाव-श्यकम्। सा हि वामनाचार्याऽभिमता प्रौढिर्ययाऽत्र सुकविना पार्वतीति वक्तव्ये स्कन्दस्य मातेति प्रोक्तम्। अनेन च क्रमेण वृक्षस्य वृक्षत्वापेक्षया पुत्रत्वं प्रचीयते यदत्र 'पुत्रीकृतोऽसौ वृषभध्वजेन' इति कुमारे च 'गुहोऽपि येषां प्रथमाप्तजन्मनां न पुत्रवात्सल्यमपाकरिष्यति' [ ५।१४ ]–इति यत्सत्य-मतितरामभिसंहितम्। एतेन 'अतन्द्रिता सा स्वयमेव वृक्षकान् घटस्तन-प्रस्रवणैर्व्यवर्धयत्' [ कुमार० ५।१४ ] इत्यत्र मल्लिनाथेन घटावेवस्तनौ तयोः प्रस्रवणैः प्रसृतपयोभिः' इति यद् व्याख्यातं तदपि प्रत्युक्तम्, तत्रापि प्रस्रवणैः प्रवाहैरित्येव व्याख्यातव्यम्, 'घटावेव स्तनौ तयोः प्रस्रवणैः प्रसृतैः क्षीरोपमै-र्जलैः' इति वा, पार्वत्यास्तदानीं कन्यात्वेन पयस्विनीत्वस्यानुपपन्नत्वादनुचित-त्वाच्च। सीतायास्तु कृते—

> 'पयोघटैराश्रमबालवृक्षान् संवर्धयन्ती स्वबलानुरूपैः।
> असंशयं प्राक् तनयोपपत्तेः स्तनन्धयप्रीतिमवाप्स्यसि त्वम्॥'

इत्यत्र [ रघु० १४।७८ पद्ये ] तु तद् युज्येतापि।

एवमादिष्वन्येष्वपि नैषधकिरातादिपद्येषु मल्लिनाथकृता व्याख्याः संस्कृ-तस्य नवीनालङ्कारशास्त्रनिकषे सटीका न तिष्ठन्ति।

---

# उपनिषदां संस्कृतिसमीक्षणम्

कु० साधना गुप्त

सामान्यतः उपनिषदः प्राधान्येन दर्शनग्रन्था एव। तासु प्रधानतो वेदान्तनिचयो वर्तते, तथापि परवर्त्तिदार्शनिककृतीनामननुरूपमासु तात्कालिक-जनानां दैनंदिनजीवनस्य सांस्कृतिकनिदर्शनमन्तर्निबद्धम्। उपनिषत्सु विद्यार्थिनाम्, आचार्याणाम्, वानप्रस्थानाम्, ब्राह्मणक्षत्रियवैश्यानां, शूद्राणां च जीवनविधिः गौणरीत्या उपलभ्यते। यथार्थचित्रणेन सत्यप्रतिपादनार्थं कल्पितसंवादाः कथाः, युद्धयज्ञादीनां वर्णनं च इतस्ततो दृश्यन्ते।

अतश्च उपनिषन्निबद्धा संस्कृतिसामग्री भारतीयसंस्कृतेः पूर्णज्ञानाय नितरां महत्त्वं भजते। तासु संस्काराणाम्, आश्रमाणाम्, सामाजिकार्थिक-राजनीतिकदार्शनिकस्थितीनां चोल्लेखाः प्राप्तुं शक्यन्ते।

## संस्काराः

वैदिककाले संस्कारविधानं सुप्रचलितमेवासीत्। किंविधानेन गुणसम्पन्न-शिशवो जायेरन्निति बृहदारण्यके निर्दिशितम् यथा—

'अथ य इच्छेत्पुत्रो मे पण्डितो विगीतः समितिंगमः शुश्रूषितां वाचं भाषिता जायेत ते सर्वान्वेदाननुब्रवीत सर्वमायुरियादिति माँसौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयित वा औक्षेण वाऽऽर्षभेण वा'[1]

ये च कन्यां अभिलषन्ति तैरेष विधिः अनुकरणीयः—

अथ य इच्छेद्दुहिता मे पण्डिता जायेत ते सर्वमायुरियादिति तिलौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै'[2]

---

१—बृहदारण्यकोपनिषद् ६–४–१८

२—बृहदारण्यकोपनिषद् ६–४–१७

तस्मिन् काले उपनयनसंस्कारस्य विशेषमहत्त्वमासीत्। संस्कारविधिः सरल आसीत्। यथा हि सत्यकामस्योपनयनं निर्दशितं छान्दोग्योपनिषदि :—

'स ह हारिद्रुमतं गौतममेत्योवाच ब्रह्मचर्यं भगवति वत्स्याम्युपेयां भगवन्तमिति'।

'त ँ् होवाच किं गोत्रो नु सोम्यासीति स होवाच नाहमेतद्वेद भो...।'

'त ँ् होवाच नैतदब्राह्मणो विवक्तुमर्हति समिध ँ् सोम्याहरोपत्वा नेष्ये न सत्यादगा इति तमुपनीय कृशानामबलानां चतुःशता गा निराकृत्योवाच।[1]

तदानीं केचित् गृहस्थाः अपि ज्ञानोपार्जनार्थमुपनयनमभिलषन्ति स्म। शिक्षार्थिनः उच्चशिक्षाग्रहणार्थं द्वादशवर्षीया एवागच्छन्। समावर्तनविधिः सम्यक्सम्पादितोऽभवत्। तस्मिन्नवसरे आचार्योऽभाषत—

'त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसीति।[2]

## आश्रमाः

प्रायः चत्वारः आश्रमाः—ब्रह्मचर्यम्, गृहस्थः, वानप्रस्थः, संन्यासश्च स्वीकृताः।

**ब्रह्मचर्याश्रमः**

द्वादशवर्षादारभ्य यावज्जीवं ब्रह्मविद्याऽध्ययनकालः संमतः। ब्रह्मविद्याया अध्ययनं श्रेष्ठं मतम्। तस्या अध्ययनं साधारणतः कर्मयोगिनः, संन्यासिनः, विरक्ता वा जनाः कुर्वन्ति स्म। अन्ये सामान्यविद्यार्थिनः स्वरुच्यनुसारं विभिन्नविषयेभ्यः एकमनेकं वा स्वकीयाध्ययनार्थं चिन्वन्ति स्म। ऋग्वेद-यजुर्वेदसामवेदाथर्ववेदेभ्यः अतिरिक्तं बहवो विषया आसन् अध्ययनस्य। यथा छान्दोग्योपनिषदि सनत्कुमारो नारदं कथयति—

स होवाचर्ग्वेदं भगवोऽध्येमि यजुर्वेद ँ् सामवेदमाथर्वणं चतुर्थमितिहास-पुराणं पञ्चमं वेदानां वेदं पित्र्य ँ राशिं दैवं निधिं वाकोवाक्यमेकायनं

---

१—छान्दोग्योपनिषद् ४'४'३, ४, ५

२—प्रश्नोपनिषद् ६'८

देवविद्यां, ब्रह्मविद्यां, भूतविद्यां, क्षत्रविद्यां, नक्षत्रविद्याँ सर्पदेवजनविद्यामेतद्भगवोऽध्येमि'।[1]

आचार्याश्रमा एव शिक्षासंस्थानरूपेणाभिमता जनैः। इमे आश्रमा वनप्रदेशैः सभावृताः अवर्तन्त। गूढविषया अप्युदाहरणत्वेन दीयन्ते स्म। विद्यार्थिनः अनुशासनेन अतिसरलजीवनं व्यतीतवन्तः। तत्कालीनशिक्षकाः ज्ञानविज्ञानाम्बुधिनिष्णाताः आसन्। कतिपये राजानः विश्रुता प्राचार्याः, अध्येतारश्च बहुविषयाणां बभूवुः। तैः दर्शनसम्बन्धिशोधकार्याण्यपि कृतानि।

**गृहस्थाः**

पंचमहायज्ञाः बहुप्रचलिता अभवन्। अग्निहोत्रस्य महत्त्वपूर्णं स्थानमासीत्। अतिथीनां विशेषसमादरः क्रियते स्म गृहस्थैः। उच्चपदाधिष्ठिता अपि जनाः सामान्यातिथीनां सम्मानं कुर्वन्ति स्म। तथा च यमराजस्यातिथिः नचिकेता अभवत्। तमधिकृत्य यमेन प्रोक्तम्—

वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान्।
तस्यैताँ शान्तिं कुर्वन्ति हर वैवस्वतोदकम्॥[2]

अपि च—

तिस्रो रात्रीर्यदवात्सीर्गृहे मेऽ—
नश्नन्ब्रह्मन्नतिथिर्नमस्यः।
नमस्तेऽस्तु ब्रह्मन् स्वस्ति मेऽस्तु
तस्मात्प्रति त्रीन्वरान्वृणीष्व॥[3]

तदानीं एषा धारणा आसीत् यत् अतिथयः प्रथमं भोजनं कुर्वन्तु अन्यथा आतिथेयस्य सर्वधनं सर्वे गुणाश्च तं त्यक्ष्यन्ति।

---

१—छान्दोग्योपनिषद्—७-१-२
२—कठोपनिषद्—१-१-७
३—कठोपनिषद्—१-१-९

गृहस्थः परिश्रमशीलोऽभवत्। देवेभ्यः सः धनसञ्चयार्थं शारीरिकशक्तिमयाचत। तस्मिन्युगे गृहस्थस्य समाजे महत्त्वपूर्णं स्थानमासीत्। तस्य कार्याणि चरित्रञ्च अन्यजनेभ्यः आदर्शवत् प्रतिष्ठितानि दृश्यन्ते।

वानप्रस्थसंन्यासाश्रमौ

तद्युगे गृहस्थाः ब्रह्मज्ञानं प्राप्तुं विशेषतः समुत्सुकाः दृश्यन्ते। यदा ते निर्वेदमनुभवन्ति स्म तदा गृहत्यागं कृत्वा ते ब्रह्मविद्यां प्राप्तुं कस्यचित् लब्धप्रतिष्ठस्याचार्यस्य समीपे गतवन्तः। व्यक्तित्वविकासाय तपसः सर्वप्रथमं स्थानमवर्तत। समाधियोगाभ्यासादिनाऽपि ब्रह्मतत्त्वस्याभिगमनं संसाधितम्।

## सामाजिक-संस्थानम्

उच्चवर्गस्य सम्प्राप्तये कर्मणो माहात्म्यमभिमतम्। वस्तुतः उपनिषत्सु कर्मप्रधानः जीवनविन्यासः प्रतिष्ठापितः। जातेरुत्कर्ष अपकर्षश्च कर्मणा साध्येते। नासीत् उच्चनिम्नभावनायाः किमपि स्थानं समाजे, यथा देववर्गेष्वपि समानरूपेण ब्राह्मणक्षत्रियवैश्यशूद्राः प्राप्यन्ते।

शूद्राः पोषकाः मन्यन्ते स्म। तद्यथा बृहदारण्यके—

'स शौद्रं वर्णमसृजत्। पूषणमियं वै पूषेयें हीदं सर्वं पुष्यति यदिदं किंच'।[१]

कुटुम्बे पितरौ दैवौ मतौ। यथोक्तम्—'मातृदेवो भव' 'पितृदेवो भव'। पुत्रः इहलोके प्रतिष्ठायाः कारणमासीत्। यथा बृहदारण्यकोपनिषदि—

'स यद्यनेन किञ्चिदक्ष्णयाऽकृतं भवति तस्मादेनं सर्वस्मात्पुत्रो मुञ्चति तस्मात्पुत्रो नाम स पुत्रेणैवास्मिंल्लोके प्रतितिष्ठत्यथैनमेते दैवाः प्राणा अमृता आविशन्ति ॥१७॥[२]

कुटुम्बे परस्परं स्नेहयुक्तं सहानुभूतिपूर्णञ्च वातावरणं समवर्धत।

---

१— बृहदारण्यकोपनिषद्—१-४-१३

२—बृहदारण्यकोपनिषद् १. ५. १७।

## आर्थिकपरिस्थितिः

तस्मिन्युगे जनाः अन्नोत्पादने पशुपालने संलग्नाः बभूवुः। कृषिः पशवश्च समृद्धिसूचकाः निगदिताः। वनसम्पत्तिः वैभवशालिनी आसीत्। तदानीं जनानां जीवनस्तरः उच्चः आसीत्।

## राजनीतिकादर्शाः

उपनिषद्युगीना बहवो राजानः अध्यात्मविद्याविशारदाः बभूवुः। यथा अजातशत्रुजनकादयः। ते प्रजासु विद्या-विस्ताराय विशेषरुचिमदर्शयन्। भारतवर्षं तदा लघुराज्येषु विभाजितमासीत्।

## दार्शनिकप्रवृत्तयः

उपनिषत्प्रतिपादितं वेदान्त-दर्शनं 'पराविद्या' इति—एकशब्देनैव वर्णयितुं शक्यते। दार्शनिकाः प्रायः ब्रह्मचिन्तने अभिरताः ब्रह्मनिष्ठा इति पदमाप्नुवन्। 'सर्वं खल्विदं ब्रह्म' इति परमं सत्यं प्रतिष्ठितम्। यज्ञोऽपि ब्रह्मविचारणायां साधनं सम्मतः।

## धर्मः

उपनिषत्काले जनानां वैदिकविधानेषु तादृशी आस्था नासीत् यादृशी वैदिककालेऽभवत्। तदनुसारमिहलोकस्य परलोकस्य च ज्ञानमेव एकमात्रं समृद्धिकारणं वर्तते। उपनिषत्सु ब्रह्मचर्यसत्यतपःशमस्वाध्यायादीनां विपुल-महत्त्वं दृश्यते। जीवनविन्यासस्यौदात्त्यमाहारपानादीनां शुद्धिश्च माहात्म्य-कारणमिति निदर्शितम्।

———

# संस्कृतवृत्तम्

## अभिनव-त्रैमासिक-पत्रिकाः

महती प्रसन्नतास्माकं सञ्जाता संस्कृतत्रैमासिक-पत्रिकाणां संवर्धनेन जाबालिपुरतः ऋतम्भरा[१], आगरातः संस्कृतस्रोतस्विनी[२], पारडीतः स्वाध्याय मण्डलस्य शोध-पत्रिका[३], होशियारपुरतः विश्वेश्वरानन्द संस्थानस्य शो पत्रिका[४] चाचिरमेव प्रथमवारं प्रकाश्यतां यान्तीति हर्षकं वृत्तमस्माभिरस्मिन्ने मासेऽधिगतम्। एतासां सर्वासां पत्रिकाणां मङ्गलमोदयुतं जन्म चिरजीव च कामयामहे वयम्।

पत्रिकाणामभ्युदयो लेखकानां ग्राहकाणां च सहयोगेन सम्भवति। प्रथि यशसः संस्कृतलेखन-समर्था विद्वांसः संस्कृतेन लेखान् निबद्धुमद्यापि तावन्मा नोत्सहन्ते यावन्मात्रमाङ्गलभाषायामित्यस्माकं प्रतीतिः। इदमेव दैवदुर्विलसि संस्कृतस्याभ्युत्थाने प्रथममायासपदम्। सर्वे ते विदग्धा युगस्य परिवर्त पर्यालोच्य संस्कृतमपि लेखितुं सप्रश्रयं निवेदिता अस्माभिः। नान्यथाभिनव जातानां पुरोपनीतानां वा पत्रादीनां साफल्यं मन्यामहे।

ग्राहकाणामभावस्तु शोचनीय एव। प्रायः सर्वासु शिक्षणसंस्था संस्कृतेन शिक्षण-विषयेषु स्थानं गृहीतमेव। तथापि न तत्र संस्कृताध्याप संस्थाधिकारिणश्च संस्कृतपत्रादीनां संग्रहार्थे दत्तचित्ता इति दुःखदं वृत्त

---

१. प्रकाशनस्थानम्—४२६, पश्चिम निमाड़गञ्ज, जबलपुर।

२. प्रकाशनस्थानम्—बलवन्त राजपूत कालेज, आगरा।

३. प्रकाशनस्थानम्—स्वाध्यायमण्डल, पारडी, सूरत (गुजरात)

४. प्रकाशनस्थानम्—विश्वेश्वरानन्द वैदिक रिसर्च इन्स्टीट्यूट, होशियार पुर (पञ्जाब)।

स्माभिरवापि। अस्मिन्प्रकरणे इदमेव स्मारयितुं क्षमाः वयम्— क्षुद्रं हृदय-दौर्बल्यमिति। संस्कृतस्याभ्युत्थानाय संस्कृतज्ञानां संस्कृतानुरागिणां चौदार्यम-पेक्षितमेव वर्तते।

तथापि सर्वे तेऽभिनवसंस्कृतपत्रकाराः सोल्लासमभिनन्दिता अस्माभिः। 'तरसा चीयते ब्रह्म' इत्युक्तिं सत्यं मन्वाना वयं तपोधनानां तपःसंबलेन सर्वेषु पराक्रमेषु परमं लभ्यमिति विचारयामः।

**मध्यप्रदेशीय-रेडियोनीतिः**

महदाश्चर्यकरं वृत्तमेतन्मध्यप्रदेशीय-रेडियो-विभागस्य संस्कृतस्यावहेलन-मिति। अस्मिन् प्रदेशे संस्कृतज्ञानां संख्या समधिका वर्तते। अत्र हायर-सेकण्डरीपर्यन्तं प्रायशः सर्वे विद्यार्थिनः संस्कृतं पठन्ति। तथापि संस्कृत भाषा-माध्यमेन क्वचिदेव कार्यक्रमो दीयते। अपरेषु प्रदेशेषु रेडियो-कार्यक्रमेषु संस्कृतस्योन्नतं पदं विद्यते इति सुविदितमेव। एते रेडियोविभागाधिकारिणः संस्कृतस्य महत्त्वं परिलक्ष्याचिरमेवोचितं करिष्यन्तीति प्रचेतनास्माकम्।

**मध्यप्रदेशे संस्कृतस्य स्थितिः**

मध्यप्रदेशे प्राच्यपद्धतेः संस्कृतोपाधीनां वा तत्सम्बन्धिविद्यालयानां महा-विद्यालयानाञ्च दुःस्थितिः वर्तते इति महाशोभनं वृत्तम्। एतत्सर्वं परिपश्यतो महाभागस्य जवाहरलालस्य मतं श्रीकाटजू महोदयस्य सविधे प्रेषिते पत्रेऽङ्कितम्— There is some serious problem about Sanskrit in Madhyapradesh. Please look after it (मालवमयूरादुद्धृतम्— आश्विनमासस्य) प्रदेशेऽस्मिन्नेकदा काटजू-महाभागा मुख्यमन्त्री आसन्। ते संस्कृतं 'राष्ट्रभाषापदे' प्रतिष्ठापयितुकामा अपि मध्यप्रदेशे संस्कृतपाठ-शालानां स्वकीयमन्त्रित्वकाले विनिपातं निरोद्धुं न किञ्चित् कृतवन्त इति नाविदितमस्माकम्। अधुना डा० द्वारकाप्रसादमिश्रमहाभागाः मुख्यमन्त्रि-पदमलंकुर्वन्ति। मिश्रमहोदयानां संस्कृतं प्रति भारतीयसंस्कृतिं प्रति च

महती श्रद्धा वर्तते। तेषां मुख्यमन्त्रित्वकाले संस्कृतोपाधीनां यथायोग्यं पद... चिरमेव भविष्यतीति वयमाश्वस्ता एव।

भोजराजः

## डा० परशुरामलक्ष्मणवैद्यमहोदयानां वर्धापनम्

विगते स्वातन्त्र्यलब्धिमहोत्सवे संस्कृतविदुषां मूर्धन्यान् डा० परशुराम लक्ष्मणवैद्यमहाभागान् भारतराष्ट्रपतिः राष्ट्रियसम्मानप्रमाणीकरणेन सभाजि... वान्। डा० वैद्यमहोदयानामनेन सम्मानेन भारतस्य पारम्परीणतपःसाधना... गौरवदानशक्तिः ख्यापिता। अधुना वैद्यमहाभागा महाभारतरामायणबौद्धग्र... न्थादीनां सम्पादने व्यापृता वर्तन्ते। तेषामद्यावधि सम्पादितसंस्कृतप्राकृत... ग्रन्थानधिकृत्य संशोधनं अध्यापनकर्म च तान् प्रति सर्वेषां संस्कृतानुरागिणां महतीं श्रद्धां जनयतः। आधुनिकयुगे संस्कृतभाषायाः साहित्यस्य च के... लेखकाः संशोधकाश्च वैद्यमहोदयानां निष्कामकर्मप्रवृत्त्या समुत्साहिता भवन्तु इत्यस्माकं मनीषा। वैद्यमहाभागास्तु वैदिककालतः समारभ्य इदानीन्तनल... संस्कृतप्राकृतपालिमराठीहिन्दीवङ्गादिभाषाणां प्रथितयशसां महाकवीनां रत्नानि समुद्धृत्य भारतभारत्याः शाश्वतं माहात्म्यं प्रतिष्ठितवन्तः। वैद्यमहोदयेभ्यः शतायुःप्रदानार्थं वयमत्र जगदीशं प्रार्थयामहे।

## सम्पादकाभिनन्दनम्

सागरिकायाः प्रधानसम्पादकः संस्कृतविभागाध्यक्षः श्रीमान् डा० रामजी उपाध्यायमहाशयः सागरविश्वविद्यालयतः "प्राचीनसाहित्यस्य सांस्कृतिकभूमिका" इति विषयमधिकृत्य शोधनिबन्धप्रदानेन डी० लिट् इत्युपाधिं विगते सितम्बर मासे अधिकृतवान्। महोदयोऽसौ युगपदेव संस्कृतविभागस्य प्रोफेसरपदे नियोजितः। उपाध्यायमहाशयस्येदृशमुत्तरोत्तरमुत्कर्षं संस्कृतपरिषदियं कामयते। सागरिकाया अधिकतरं समभ्युदयं श्रीमानयं साधयिष्यतीति दृढमाशास्यते॥

विश्वनाथो भट्टाचार्यः

——

# म० म० स्व० रामावतार शर्मा

## ( १८७४-१९२९ )

अच्युतानन्द झा

बिहारराज्यस्य शारण्यभूमौ छपराह्वनगरीपरिसरे ब्राह्मणकुलोद्भवस्य पाण्डेय श्री कोद्रवशर्म्मणस्तनूजस्य श्रीदेवनारायण शर्म्मणो द्वितीयस्तनयः खृष्टाब्दस्य फेब्रुअरी मासे १८७४ वर्षे मातुः श्रीमत्या गोविन्ददेव्याः कुक्षौ जनिमलभत । स एव रामावतार इति नाम्ना कुलगुरोरादेशात् प्रथितिं गतः ।

य: पञ्चमवर्षात् पूर्वं—

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।

यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥

—इति पद्यं कण्ठस्थीकरोति स उद्भटो विद्वान् भवतीति भणित्यनुसारं तातेनादिष्टो रामावतारः श्लोकमिमं पञ्चवर्षात्पूर्वमेव हृदयात्तञ्चकार ।

**शिक्षा—**

विशुद्धधियोऽस्य प्रारम्भिकी शिक्षा पितुः सकाशादेवाभवत् । प्रखरप्रतिभासम्पन्नस्य रामावतारस्य शिक्षणे पं० देवनारायणशर्मा आत्मानमसमर्थमभिज्ञाय पं० रामदवर ओझामहोदयस्य सकाशं प्रेषितवान् । तत्सविध एव वर्तमानेन तेन रामावतारेण वङ्गीयसंस्कृत-शिक्षासमितेः १८८१ तमे वर्षे प्रथमापरीक्षां समुत्तीर्य काश्यां राजकीयसंस्कृतमहाविद्यालये म० म० गङ्गाधरशास्त्रिणः सकाशादध्येतुं प्रवेशोऽलभ्यत । तस्मान्महाविद्यालयान्मध्यमापरीक्षां १८६० तमे वर्षे प्रथमश्रेण्यामुत्तीर्णा । १८६१ तमे वर्षे वङ्गीय-संस्कृत-शिक्षासमितेः मध्यमापरीक्षां प्रथमश्रेण्यां समुत्तीर्य १८६३ तमे वर्षे काव्यतीर्थ-परीक्षायां प्रथमं स्थानमधिकृतं शिक्षासमित्या चैतदर्थमसौ धनप्रदानेन सम्मानितः । १८६५ तमे वर्षे कलिकाता-विश्वविद्यालयतो द्वितीयश्रेण्यां इलाहाबादविश्वविद्यालय-

तश्च प्रथमश्रेण्यां प्रवेशिका (Entrance) परीक्षोत्तीर्णा। तस्मिन्नेवाब्दे परीक्षाफलोद्घोषणात्पूर्वमस्य जनको दिवं गतः। वाराणसीमधितिष्ठतानेन १८९१ तः १८९३ वर्षं यावद् व्याकरणाचार्य-प्रथमखण्ड-परीक्षा प्रथम-श्रेण्यामुत्तीर्णा। १८९७ तमे वर्षे काशीस्थराजकीय-संस्कृतमहाविद्यालये साहित्याचार्य-परीक्षा प्रथम-श्रेण्यामुत्तीर्णा, प्रथमं स्थानञ्चाधिकृतम्।

## अध्ययनाध्यापनम्—

पितुर्देहान्ते भ्रातृत्रयस्य, स्वजनन्याः, पितृष्वसुः, स्वधर्मपत्न्याश्च पालनाय "छपराजिला स्कूल" इत्याख्यसंस्थायां संस्कृतशिक्षकस्यपदमगृह्णात्। तत्र शिक्षयतानेन १८९८ तमे वर्षे पञ्जाब-विश्वविद्यालयतः एम.ए. परीक्षा सर्वोच्च-श्रेण्यामुत्तीर्य पदकमपिलब्धम्। १९०० तमे वर्षे कलिकाता विश्वविद्यालयतः बी. ए. आनर्स परीक्षा सर्वप्रथमं स्थानमधिकृत्य समुत्तीर्णा। विश्व-विद्यालयेन चासौ र.क. स्वर्णपदक प्रदानेन सम्मानितः। १९०१ तमे वर्षे तस्मादेव विश्वविद्यालयात् एम. ए. परीक्षा सर्वोच्चश्रेण्यां समुत्तीर्णा, विश्वविद्यालयस्वर्णपदकमपि लब्धम्।

१९०१ वर्षतः १९०५ वर्षं यावद् वाराणसीस्थे सेन्ट्रल-हिन्दू-कालेज इत्याख्ये महाविद्यालये प्राध्यापकपदे महता कौशलेन कार्यं सम्पाद्य ११.४. १९०६ तिथौ पाटलिपुत्रमहाविद्यालये (Patna College) संस्कृत-विभागे प्राध्यापकपदमलञ्चकार। खृष्टाब्दस्य १९०७–८ वर्षे इतो लब्धावकाशः कलिकाताविश्वविद्यालये विश्वविद्यालयप्राध्यापकपदे "श्री गोपाल वसुमल्लिक व्याख्यातृ-पदे" च नियोजितः। ततः प्रतिनिवृत्य पुनः पाटलिपुत्रमहाविद्यालय एवाध्यापनकर्मणि व्यापृतोऽभवत्। १९१९ वर्षतः १९२२ वर्षं यावत् महामनसां मदनमोहनमालवीयमहाभागानामादेशानुसारं बिहारशासनाद् गृहीतावकाशः हिन्दुविश्वविद्यालये प्राच्यमहाविद्यालये (Oriental Collage) प्रधानाचार्य-पदमलङ्कृतवान्। वर्षत्रयं तत्रातिवाह्य पुनराजीवनं पाटलिपुत्रमहाविद्यालय एव संस्कृतप्राध्यापकपदं समलमकरोत्।

पण्डित रामावतारशर्म्मणः प्रतिभा बहुमुखी आसीत्। एकतोऽनेन संस्कृतभाषायां केचन पद्यात्मकाः—मारुतिशतकम्, शम्भुशतकम्, कृष्णस्तवकल्पतरुः, मुद्गरदूतम्, अभिनवभारतम्, सत्यदेवकथा, शतश्लोकीयं धर्मशास्त्रमित्यादयो ग्रन्था विरचिताः। अपरतस्तस्यामेव भाषायां पद्यगद्यात्मकाः केचन ग्रन्थाः—धीरनैषधम् (नाटकम्) जयप्रकाशचरितचम्पूः, परमार्थदर्शनम् (त्रैभाषिकम्), साहित्यरत्नावलीत्यादयो विरचिताः। एतदनन्तरमन्यान्यपि स्फुटपद्यानि, गद्यजातानि चानेन विरचितानि प्राप्यन्ते—वसन्तवर्णनम्, सरस्वत्यष्टकम्, जयोर्जप्रशस्तिः, अन्योक्त्यादीनीति। वैदिकशैलीमनुसृत्य कोऽपि एको विरचितो ग्रन्थ अप्रकाशितो वर्तते।

सम्पादितानां ग्रन्थानां संख्या नाल्पीयसी। कल्पद्रुकोशः, सदुक्तिकर्णामृतम्, नारायणशतकम्, इत्येतेषु सम्पादितेषु प्रथमोक्तास्त्रयो ग्रन्थाः प्रकाशिताः, अन्तिमश्चाप्रकाशितः।

मिथिलाविद्यापीठग्रन्थमालातः प्रकाशं गताः प्रकीर्णप्रबन्धाः कस्य शेमुषीवतश्चेतो नातिरञ्जयन्ति। मुद्गरदूतम्, धीरनैषधम् (नाटकम्) अभिनवभारतम्—(भारतीयमितिवृत्तम्, देशान्तरीयेतिवृत्तम्) इत्याख्याश्चत्वारो ग्रन्थाः संकलिताः। तथा च मित्रगोष्ठीपत्रिकायां काले-काले प्रकाशं गताः सर्वेऽपि विविधविषयका निबन्धाः संगृहीता विद्यन्ते।

विदुषोऽस्य राष्ट्रभाषायां निबद्धानामुपलभ्यमानानां निबन्धानां संख्या सत्यं महीयसी। बिहारराष्ट्रभाषापरिषदा प्रकाशितायां रामावतारशर्म्म-निबन्धावल्यां बहवो निबन्धाः संकलिताः सन्ति। एतदतिरिक्तमपरेऽपि केचन निबन्धा विविधपत्रिकासु प्रकाशिताः प्राप्यन्ते।

काशीनागरीप्रचारिणी-सभातः प्रकाशितः यूरोपीयदर्शनाख्यो ग्रन्थो निश्चयेनास्य महाभागस्य प्राच्यपाश्चात्त्यदर्शनशास्त्रेऽप्रतिमं वैदुष्यं प्रकटयति।

आङ्गलभाषायां ग्रथिता महत्त्वपूर्णाः केवलं सप्तनिबन्धाः प्राप्यन्ते। तेषु पञ्च बिहार-रिसर्च-सोसाइटी पत्रिकायां प्रकाशिताः, एकः हिन्दुस्तान रिव्यू इति पत्रिकायां प्रकाशितः, अन्यश्चाप्रकाशितः।

कलिकाता विश्वविद्यालये "श्रीगोपालवसुमल्लिकव्याख्यातृपद" मलंकुर्वं शर्ममहोदयस्य वेदान्तधर्ममधिकृत्य व्याख्यानानि बोस-विल्किन्स-मुद्रणाल कलिकातायाः ग्रन्थाकारेण प्रकाशितानि। स च ग्रन्थो वेदान्तेऽस्य विदु पाण्डित्यप्रकर्षं व्यनक्ति।

प्रबन्धेऽस्मिन् प्रकाशितानामप्रकाशितानामूह्यानाञ्च ग्रन्थानां सिंहावलो कनन्यायेनास्माभिः किमपि विवरणं प्रस्तूयते।

पण्डितप्रवरस्यास्य प्रथमा कीर्तिः "धीरनैषधम्" नाम नाटकम्। इदं अष्टादशवर्षीयेनानेन प्रणीतम्। तत्र महाकविश्रीहर्षविरचिता नैषधीयचरि विषयिणी कथा रूपकशैल्या सकौतुकं प्रतिपादिता। नाटकमिदं सप्ताङ्कात्मक ग्रन्थादौ ग्रन्थकर्तुः तद्गुरोश्च संक्षिप्तः परिचयो वर्तते। श्रीकृष्णस्तुतिम नाटकमिदं प्रारभ्यते। अत्रांगी रसः शृङ्गारः अन्येऽपि रसाः प्रसङ्गवश क्वचित् स्पृष्टा एव।

१८६५ ऐशवीये २१ वर्षवयस्केन रामावतारेण मारुतिशतकम्, शम्भु शतकम्, कृष्णस्तवकल्पतरुरित्यादयो ग्रन्था विरचिताः।

**मारुतिशतकम्—**

तत्र "मारुतिशतकम्" भक्तिभावानुप्राणितं प्रकाशितं वर्तते। सर्वे श्लो अत्र स्रग्धराच्छन्दसोपनिबद्धाः। केचन श्लोका उदाहरणस्वरूपेणाधः वर्तन्ते।

"आयातो मन्दरः किं ? स खलु जलधिना त्रासितः पूर्वमेव
मेरुः किं ? सोऽपि सार्धं किल निजविभुना वेत्ति मां शक्रजिष्णुम्।
कैलासः किं ? स जानात्यहह सह गणै रावणस्यात्मजं मा-
मित्युद्भूतप्रतर्कं दशवदनभुवा वीक्षितोऽव्याद्धनूमान् ॥५७॥

**लंकादहनकाले—**

हा ! मातस्तात हा ! हा ! प्रिय हह ! दयिते वत्स हा ! क्वासि यातो
हा ! दग्धो हा ! मृतोऽस्मि स्फुटति बत ! शिरो हन्त दैवं नृशंसम्।
इत्थं कोलाहलैर्यो रजनिचरपुरीं सम्भृतां दाहकाले
चक्रे, सोऽयं कपिर्वः प्रदिशतु सततं सन्ततं सौख्यराशिम् ॥६६॥

अन्ते फलश्रुतिः—

अभिनवमधुरोल्लसत्प्रबन्धं
शतकमिदं पवमाननन्दनस्य ।
प्रतिदिनमुदिते दिनाधिनाथे
प्रपठति योऽविरतं सुखी स भूयात् ॥१०४॥

नैसर्गिकार्थरुचिरत्वमृतेऽपिकाव्येऽ-
न्वियन्ति केऽपि किल अम्बरमेव बाह्यम् ।
सन्त्येव ते त्रिचतुराश्चतुरा हि लोके
यै र्लिप्यते गुडरसः प्रमदाधरेषु ॥१०८॥

अतो ममायं विहितो निबन्धः
समग्रशब्दार्थगुणैरहीनः ।
चिराय नालीकरसप्रसिद्धे
तनोतु मोदं कविमानसेऽद्य ॥१०६॥

पितुरनुकलयञ् श्रीदेवनारायणस्य
प्रथितमपि च मातुः श्रीलगोविन्ददेव्याः ।
गुणगणमिति शिष्यः शास्त्रिगङ्गाधरस्या-
निलतनुजनुतिं प्राणैष्ट रामावतारः ॥

शम्भुशतकम्—

शम्भुशतकमपूर्णमप्रकाशितञ्च वर्तते । अस्मिञ्शतके मन्दाक्रान्ताच्छन्द-सोपनिबद्धैः सुललितपद्यबन्धैरादितः समाप्ति यावद् भगवतः शम्भोर्गुणानु-कीर्तनमस्ति । केचन श्लोका उदाह्रियन्ते ।

गौरीदोर्लतिकाप्रसङ्गविगलद्भस्माङ्गरागोज्वल-
ग्रीवा हालहलप्रभाच्छुरणया श्यामायितात्मप्रभम् ।
मौलिस्थास्नुसुरापगातटवनीवानीरजालोपमं
चूडाचन्द्रमरीचिमण्डलमुमानाथस्य मथ्नात्वघम् ॥२॥

सन्त्रासं दितिजैः सहर्षममरैः सोत्कण्ठमाद्यैर्गणैः
सस्नेहं शिवया सविस्मयरसं स्कन्देन नीतं श्रुतिम् ।
लब्धाघौघविघातपाटवभरं ब्रह्माण्डभाण्डोदरे
आर्तं भर्गवृषस्य भाङ्कृतमहो भूयाद् भवद् भूतये ॥५॥

श्रीकृष्णस्तवकल्पतरुः—

"श्रीकृष्णस्तवकल्पतरुः" प्रकाण्डद्वये विभाजितो वर्तते । आदिमे प्रकाण्डे केवलं २२ श्लोकाः सन्ति, अन्तिमे च ४८ श्लोकाः । अयं ग्रन्थोऽपि अप्रकाशितोऽसमाप्तवच्चाभाति । विविधैश्छन्दोभिरुपरचितोऽयं ग्रन्थः । ग्रन्थनाम्नैव वर्ण्यविषयोऽभिव्यज्यते । उदाहरणार्थं केऽपि श्लोकाः—

जनेश नेशः खलु कोऽपि गोपिका-
पते ऋते त्वद्भवतापितस्य मे ।
हरेत को वा मुदिराद्विना भियं
मृगस्य तां यादव या दवोद्भवा ॥ प्र० २–१२ ॥

भवे भवे त्वद्विभवे भवेन्मनो
मम प्रभो नाप्यमृतं मयेष्यते ।
कवित्वमाधुर्यधुरीणतां गतो
न तोषमायाति सुधारसैर्बुधः ॥ प्र० २–१३ ॥

भवन्भवत्पादसरोजसेवको
न कोऽपि कोपं शमनस्य पश्यति ।
वसन्सुमेरोः शिखरे हरे हतां
दरिद्रतामृच्छति वा कथं जनः ॥ प्र० २–१६ ॥

न मां रमानाथ भवान्भवाम्बुधौ
विलीयमानं परिहातुमर्हति ।
शिशुः कथं हा जनकस्य पश्यतः
पतेत्पुरः शक्तिमतो हुताशने ॥ प्र० २–२० ॥

भवत्पदालोकमहे महेश हे न हेलयास्वर्गमहोत्सवं सहे।
युवा मृगाक्ष्या रसिकः कथामृते श्रुती विधत्ते पिकपञ्चमे कथम् ॥प्र०२-२६॥

श्लोकानामेतेषामुद्धरणेनैतस्य काव्यप्रतिभा, अलंकारयोजना, छन्दोविधानम्, रसपरिपाककौशलमित्यादयः सर्वेऽपि महाकविगुणाः स्पष्टीभवन्ति।

**अभिनवभारतम्—**

१६११ खृष्टाब्देऽभिनवभारतं व्यलेखि। ग्रन्थोऽयं तरङ्गद्वये विभाजितो विद्यते। भारतीयेतिहासतरङ्गः, देशान्तरीयेतिहासतरङ्गश्च। तत्र प्रथमस्तरङ्गः, "भारतीयमितिवृत्तम्" द्वितीयश्च "देशान्तरीयेतिवृत्तम्" इति नाम्ना प्रसिद्धौ। समस्तोऽयं ग्रन्थः प्रकाशितः।

भारतीयमितिवृत्तमित्यस्यान्ते स्वगुरुचरणस्य, पित्रोश्च परिचयः, समाप्तिश्लोकेन च ग्रन्थनिर्मितिकालः संसूचितौ। अस्यादिमः श्लोकः—

प्राचीनेभ्यो निबन्धेभ्यो नवीनेभ्यश्च यत्नतः।
संगृह्य भारतस्येतिवृत्तं संक्षिप्तमुच्यते ॥१॥

**अन्ते चेमे दृश्यन्ते—**

साम्राज्ये श्रीजयोर्जस्य काश्यां गंगाधरः कविः।
पदवाक्यप्रमाणानां पारदृश्वास्ति सम्प्रति ॥वी० ५.७७॥
गतार्थोऽद्य जगन्नाथो नापेक्ष्योऽप्पयदीक्षितः।
कटुवाग्वेङ्कटार्योऽपि सति गंगाधरे गुरौ ॥वी० ५.७६॥
रवेरिवास्य प्रभया सनाथे सूर्याश्मनीवास्य जनस्य चित्ते।
कणा इवाग्नेरभवन्प्रबन्धाः प्रभोज्ज्वला वाङ्मयवार्धिमुख्याः ॥८०॥

**पित्रोर्वर्णने—**

पितुरनुकलयञ्श्री देवनारायणस्य
प्रथितमपि च मातुः श्रीलगोविन्ददेव्याः।
गुणगणमिति शिष्यस्तस्य रामावतारो
व्यधित विबुधहृद्यं भारतस्येतिवृत्तम् ॥८१॥

श्रीजयोर्जनृपतिर्महामतिः पालयत्ववनिमूर्जितां चिरम्।
घोषिते यदभिषेकमङ्गले ग्रन्थरत्नमजनीदमुज्ज्वलम् ॥८२॥

अपरञ्च—

व्यक्तोर्जया रक्षितायां सुचिरं भारतावनौ।
प्रज्ञाचक्षुर्महाशक्तिरभूद् गोवर्धनः कविः ॥६८॥
गते पण्डितराजे द्यामपुत्रा भारती चिरम्।
आनन्दिता सुपुत्रेण पुनर्येन महाधिया ॥वी० ५·६६॥

ग्रन्थेऽस्मिन् भारतेतिहासवर्णनप्रसङ्गे संस्कृतसाहित्येतिहासोऽपि वर्णितः। पूर्वोक्तश्लोकद्वयेन अन्तिमस्य संस्कृतकवेः परिचयोऽधिगम्यते। अत्र पञ्च वीचयः सन्ति। समेषां वीचिस्थानां श्लोकानां संख्या पञ्चशतमस्ति।

देशान्तरीयेतिवृत्तेऽजपुत्र (मिश्र) रोम-पारसीकफ्रान्सादि देशानामितिहासः संक्षिप्तं वर्णितः। वृत्तेऽस्मिन्नष्टादशवीचयस्सन्ति। सर्वासां वीचीनां श्लोक-संख्या ४२४ इत्यस्ति। ग्रन्थोऽयमनुष्टुपछन्दसा निबद्धः। प्रत्येकं वीच्यन्ते छन्दःपरिवर्तनं दृश्यते। केवलमष्टमवीचित एकरूपमेव छन्दः स्वीकृतम्। ग्रन्थस्यास्य भाषातीव सरला सुगमा च। तत्तद्देशानां देशीयानाञ्च नामानि संस्कृते विपरिणमितानि। तदेव पाठकानां कृतेऽर्थावबोधे काठिन्यमुपस्थापयति। यथा अलिकचन्द्रस्य (Alexander) वर्णने—

प्रलिम्पस्याभवत्पुत्रोऽलिकचन्द्रः सुविश्रुतः।
यो विंशतितमे वर्षे राज्यं पैत्रिकमाप्तवान् ॥
नयन्यवनसैन्यानि स तीर्त्वा यवनार्णवम्।
पारसीकान्वशीकृत्य सिन्धुतीरमुपागमत् ॥

तस्य पितुरपिनाम प्रलिम्प (Phillips) इत्युक्तम्।

मुदगरदूतम्—

"मुदगरदूतम्" १६१४ 'ऐशवीयेऽब्दे प्रणीतम्। एतत्किल व्यंग्योक्ति-प्रधानं काव्यमस्ति। कल्पना सर्वथा नवीना। यथा क्षेमेन्द्रस्य "देशोपदेशः" "नर्ममाला" इति काव्यद्वयं सत्यं मौलिकतां भजते, तथैव पं० रामावतार

शर्मणः मुद्गरदूतम् उत्कृष्टतममथ च मौलिककल्पनाप्रसूतं विद्यते। संस्कृतसाहित्ये न किमपीदृशं काव्यं दृश्यते यदेतेन साम्यं बिभर्ति। एतस्मिन् कविना न केवलं मेघदूतस्य छन्दःसरणिरेवानुसृता, अपि तु तत्काव्यस्य वाक्यांशान् अपि तत्र समावेश्य Parody इति पाश्चात्यप्रसिद्धकाव्य-प्रकारस्य इदंप्रथमतया संस्कृते निबन्धनं कृतम्।

अस्मिन् काव्ये समाजे आपतितानां दुष्कर्मणां कदाचाराणाञ्च प्रतिवादं कृतवान् ग्रन्थकारः। स्वामिनो मुद्गरानन्दस्य तस्य गुरोर्वन्ध्यापुत्रस्य चालौकिक-चरित्रचित्रणव्याजेन समाजाग्रणीनां धर्मध्वजिनां कटुप्रहारः पटुवचोभिरस्मिन् कृतः। सन्देशकाव्यपरम्परायां काव्यमिदं नव्यधारायाः प्रतिनिधिस्थानीयमिति निश्चयेन प्रतिपादयितुं शक्यते।

महाकवेः कालिदासस्य मेघदूतं भागद्वये विभक्तं मुद्गरदूतन्तु भागत्रये विभक्तं वर्तते, पूर्वमुद्गरः, मध्यमुद्गरः, उत्तरमुद्गरश्चेति। सर्वत्र काव्ये मेघदूत-वदेव मन्दाक्रान्तावृत्तं स्वीकृतम्। सम्मिलितानां श्लोकानां संख्या १४८ अस्ति।

भाषाभावगाम्भीर्यं प्रतिपदमभिलक्ष्यते। आंगलभाषागतानां शब्दानां विपरिणतिरपि कृता। उदाहरणार्थं केचन श्लोकाः—

किं मे पुत्रैर्गुणनिधिरयं तात एवैष पुत्रः
शून्यध्यानैस्तदहमधुना वर्तये ब्रह्मचर्यम्।
कश्चिन्मूर्खश्चपलविधवास्नानपूतोदकेषु
स्वान्ते कुर्वन्निति समवसत्कामगिर्याश्रमेषु॥ पू० मु० १॥

नीतिव्याख्यासमितिषु तथा धर्मवार्तासदःसु
प्रायो नास्त्येष्वथ शबरवनिष्वाश्रमेषूद्भटानाम्।
व्यर्थं क्षिप्त्वा भरतवसुधाद्रव्यकोटीः स कीटो
देशप्रेमोल्बणभणितिभिर्नाशयामास विद्याम्॥ पू० मु० १५॥

ईशः सृष्टिं स किल विदधे फूत्कृतैश्चिन्तया वा
तावत्पापं क इह कुरुते यावदीशः क्षमेत।

रे रे मूढाः स्मरत गणिकां तामथाजामिलं वा
व्याख्यायेत्थं निखिलजनतां मज्जयामास पापे ॥ पू० मु० १६ ॥
यत्नाद्बाष्पं कथमपि वशी सन्निरुध्य प्रियायाः
वार्तामिच्छन्नमुमथ चिरान्मूर्खदेवो जगाद ।
कः स्यादस्यां विपदि शरणं मुद्गर त्वां विना मे
याचे तस्मात्किमपि भगवन् धृष्टतां चेत्क्षमेथाः ॥ म० मु० ७६ ॥
जातं वंशे भुवनविदिते वर्करानन्दकानां
जानामि त्वां विकृतिपुरुषं कामरूपं महात्मन् ।
तेनार्थित्वं त्वयि विधिवशाद् दूरबन्धुर्गतोऽहं
याच्ञा मोघा वरमपगुणे नोत्तमे लब्धकामा ॥ म० मु० ८० ॥

**उत्तरमुद्गरे—**

शिल्पागारैर्गगनपतयः सागरा युद्धपोतैः
शैला ज्योतिर्गणितभवनैः सेतुभिर्यत्र नद्यः ।
कुल्याम्भोभिर्जनपदपथा राजमार्गैश्च देशा
विद्युद्दीपैः शशधरनिभैर्वीथयो यत्र रम्याः ॥ उ० मु० ६८ ॥
गच्छन्मार्गे सरितमथचेन्मिश्रशिप्राभिधानां
पश्येर्दैवादवहितमना विद्धि पारेऽथ तस्याः ।
वृक्षैः शश्वत्फलभरनतैर्नित्यरम्योपकण्ठे ।
तस्यागारं ननु विटपतेर्येन नीता प्रिया मे ॥ उ० मु० १०६ ॥
नौकाशुल्कं यदि न सुलभं तत्र ते स्यात्तदात्वं
धृत्वा जन्तोः शवमयि सखे दारुखण्डं तथा वा ।
गाढप्रेमा सपदि तुलसीदासवत्तां प्रतीर्य
प्राप्स्यस्यग्रे विटपतिगृहं रासभीचाररम्यम् ॥ उ० मु० १०७ ॥

**समाप्तिश्लोकः—**

प्राप्यं धन्यैरमरुकविना यत्प्रियायाः पतित्वं
शस्तं भूयस्तदकृतमतिर्मूर्खदेवस्त्वमिच्छन् ।

वन्ध्यापुत्रानुसरणसमां तां विहायातिरुष्टः
कल्याणार्थी शरणमगमद् ब्लाटकानन्ददेवम् ।। उ० मु० १४८ ।।

**सत्यदेव कथा—**

स्कन्दपुराणोक्तसत्यदेवकथासदृशी काचिद् नवीना कथानेन लिखिता। कथायामस्यां सत्यस्य स्वरूपं सम्यक् प्रतिपादितम्। ये किल धर्मस्य सत्यस्य च व्याजेन धर्मसत्ये प्रहरन्ति तेषामुपालम्भनं बहुभिः प्रकारैः कृतम्। सहैव भूभागस्योत्पत्तिः तस्य विकासः, भौगोलिक स्थितीनाञ्च परिचयो विहितः।

श्लोकच्छन्दसा—

एकदा मुद्गरानन्दं भगवन्तं महामतिम्।
पप्रच्छुः सुहृदस्तस्य काशीक्षेत्रे मनोरमे ।।

इति श्लोकेन कथेयं प्रारभ्यते। एकमेव वृत्तं समाप्ति यावदुपलभ्यते। कथायामस्यां सप्ताध्यायाः सन्ति। प्रथमाध्याये पृथिव्याः सृष्टिः, द्वितीये पृथिव्याः स्थितिः, तृतीये आर्याणामितिवृत्तम्, चतुर्थे भारतेतिहासः, पञ्चमेऽसत्यासुरस्य जन्मवृत्तम्, षष्ठे सत्यदेवकथायाः दम्भदूषणम्, सप्तमे च सत्यस्वरूपवर्णनम्, पारमार्थिकसत्ताख्यापनम्, दाम्भिकानां प्रतिवादः, परीक्षितवस्तूनां सम्यगादरः, इत्येते विविधविषयाः सिद्धान्ताश्च सरलया गिरा प्रतिपादिताः।

**उदाहरणार्थं केचन श्लोकाः—**

भगवन्मूर्खताग्रस्तं भारतं पापदूषितम्।
तस्योद्धारः कथं भावी तद्भवान्वक्तुमर्हति ।।२।। (अ० १)
सौराण्डान्निर्गता भूमिः पुरासीत्तप्तगोलका।
अथ सैकार्णवीभूता क्रमात्तापविनिर्गमे ।।अ० १-२५।।

**अमरीकाया वर्णने—**

आँग्लदेशाश्रयो वार्धिस्तुङ्गसागरनामकः।
अमेरिकाभिधा तस्य पारे भूर्महती स्थिता ।। अ० २-२७।।
अमेरिका विभक्तासौ दक्षिणोत्तरभागयोः।
महानदनदीशैलवनपत्तनपूर्णयोः ।।अ० २-२८।।

**भारतेतिवृत्तकथने—**

दम्भः सत्यं धनं सत्यं सत्या च स्वैरिणी किल ।
विद्या मिथ्या गृहं मिथ्या भार्या मिथ्येतिवादिनः ॥४-११॥
तस्यासत्यासुरस्यैते पुत्राः पौत्राश्च भूतले ।
जनान्प्रचेरुः कुर्वाणाः सत्यदेवपराङ्मुखान् ॥अ० ४-१२॥

अन्ते सत्यदेवस्य पूजनविधिः प्रतिपादिता । "अनुपपन्नस्य छात्रस्य सीदत्कुटुम्बस्याध्यापकस्य वा माल्यवस्त्रपुस्तकादिभिः पूजा ।" प्रार्थनानन्तरमाशिषोऽभिधानम्—

परमार्थपरास्सर्वे जायन्तां भवतः कुले ।
सरस्वतीमुपासीना महोद्योगा गतश्रमाः ॥

अन्तिमेनाधःश्लोकेन भगवतः सत्यदेवस्य ध्यानं विधाय समापितेयं कथा ।

आकाशस्त्वगनन्त आदिरहितस्सर्वात्मभूतो विभुः
तारासूर्यसहस्रभास्वरतनुः स्वस्मिन्नशेषेक्षिता ।
निर्मायापरिमेयशाश्वतजगद्वैचित्र्यरूपः सदा
भातु प्रेमनिधिः सुखैकनिलयः श्रीदेवदेवः स नः ॥

**शतश्लोकीयं धर्मशास्त्रम्—**

इदं धर्मशास्त्रं दशाध्याये विभाजितं वर्तते । प्रत्यध्यायं श्लोकानां दशकेन पूर्णग्रन्थस्य श्लोकसंख्यैकशतम् । प्रथमाध्याय उपक्रमपूर्वकं धर्मशास्त्रमिदं प्रारभ्यते ।

संगृह्य प्राच्यसिद्धान्तान् हिताय जगतः शिवम् ।
तत्त्वं शाश्वतधर्मस्य संक्षेपेणात्र वर्ण्यते ॥
सत्येन विधृतं सर्वमसत्यं विप्लवावहम् ।
धारणात्सत्यमेवोक्तं धर्मशब्देन कोविदैः ॥१॥

ततः धर्मलक्षणम्, द्वितीये धर्ममूलप्रतिपादनम, तृतीये शौचवर्णनम्, चतुर्थे आचारनिरूपणम्, पञ्चमे भक्तिस्वरूपविवेचनम्, षष्ठे आश्रमधर्मप्रकाशनम्,

सप्तमे द्विजातिधर्मोपदेशाः, अष्टमे व्यक्तिधर्मविचारः, नवमे प्रजाधर्म-स्त्रीधर्मयोः सम्यक् चर्चा अन्तिमे दशमेऽध्याये प्रायश्चित्तवर्णनमितीत्थं प्रायः सर्वे धर्मशास्त्रसिद्धान्ताः सरलया सुबोधया च भाषया निबद्धाः। अर्थावबोधे न कुत्रापि कस्यचित् विशेषः परिश्रमोऽपेक्ष्यते। केचनान्तिमाः श्लोकाः प्रस्तूयन्ते।

अव्याहतानुसन्धानात्परं पुण्यं न विद्यते।
व्याहतस्यानुसन्धानात्परं पापं न च क्षितौ ॥ अ० ६-६ ॥
अव्याहतानुसन्धानं तस्मान्नित्यं समाचरेत्।
रागद्वेषविहीनश्च व्याहतं परिवर्जयेत् ॥ अ० ६-१० ॥

उपसंहार श्लोकः—

इदं पवित्रमायुष्यं धनधान्यविवर्धनम्।
धर्मशास्त्रमनुस्मृत्य न तमस्यवसीदति ॥ अ० ६-११ ॥

परमार्थदर्शनम्—

१६११-१२ तमे वर्षे पण्डितवरेण्येन परमार्थदर्शनं निरमायि। ग्रन्थोऽयं म० म० शर्ममहोदयस्याप्रतिमवैदुष्यपरिचायकः। अस्मिन् ग्रन्थे दर्शनस्य समाजस्य व्यवहारस्य च परम्पराक्रमागतानां विविधानां युक्तीनां खण्डनं प्रौढोक्त्या युक्तिपूर्वं विहितम्। तथा तर्कोपन्यस्तानां युक्तियुक्तानां सिद्धान्तानां भावानाञ्च महत्त्वमावश्यकत्वञ्च प्रतिपादितम्। ग्रन्थोऽयं सूत्रवार्तिकात्मकः प्राचीनशास्त्रपद्धतिमनुसरति। जिज्ञासूनां पिपठिषूणां सौकर्याय तस्य सविस्तरं भाष्यमपि प्रौढशैल्या लिखितम्। ग्रन्थस्तु मुद्रितः किन्तु दर्शनशास्त्रानुरागिणां दौर्भाग्याद् भाष्यस्याल्पांश एव पाटलिपुत्रतः प्रकाश्यमानायां संस्कृतसञ्जीवन-पत्रिकायां तदा प्रकाशितः। अवशिष्टांशस्तु पाण्डुलिपिरूपेणाद्यापि प्रकाश-मपेक्षते।

विद्वद्वरेण्यस्यास्य दर्शनसिद्धान्तानां सारः संक्षेपेणात्रोच्यते।

प्रकृत्यनुसारं बुद्धिस्त्रिगुणात्मिका गुणत्रयस्य सर्वोत्तमस्वरूपपरिज्ञानं भक्ति-कर्मणोश्चाधीनम्। वस्तुतत्त्वस्य परिज्ञानानन्तरमेव जनः भक्तिपूर्वकं कार्याय

चेष्टते। कश्चिदेकं गुणमेवावलम्ब्य प्रवृत्तस्य दर्शनशास्त्रस्य व्यावहारिकत्वं सम्भाव्यते। अतोऽस्मिन् युगे तादृशस्य दर्शनशास्त्रस्यापेक्षा भवति यत्र त्रयाणां गुणानां यथास्थानं सन्निवेशः स्यात्। ज्ञानाद्दार्शनिकी उन्नतिः, ज्ञानकर्मणश्च योगेन वैज्ञानिकोन्नतिः, भक्त्या जगति समापतितानामासुरशक्तीनां वृद्धिरसंभवप्राया भविष्यतीति।

सत्यपि विविधदर्शनशास्त्रनिचये परमार्थदर्शनस्य प्रयोजनं प्रतिपादयता ग्रन्थकारेणोच्यते—

संग्रहश्च विवेकश्च व्यवस्थानाग्रहस्तथा।
उद्योगाभ्युदयौ चास्य दर्शनस्य प्रयोजनम्॥

शिल्पशास्त्रपयसा सरस्वतीम्
कामधेनुमिव विश्वतोषिणीम्।
ह्यनुपास्य कितवप्रतारणाम्
पोत्रिणीमिव निषेवते जनः॥ वार्तिक सं० ६॥

देवशब्द किल दिव्यशक्तिभिः
रव्यापिताभिरिह धूर्तबालिशैः।
वञ्चिते न परमार्थधीर्जने
तां पुनर्जीवयितुं यतामहे॥ वा० सं० ४॥

शास्त्रभारनतकन्धरा अपि
व्याहृतिप्रणयिनो विपश्चितः।
तान्मुखेन परमार्थतत्परान्
कर्तुमेष विपुलः परिश्रमः॥ वा० सं० ५॥

परमार्थे वर्ण्यवस्तूनां परिचयं ददता पुनरग्रे भणितम्—

प्रत्यक्षेणानुमानेनाबाधेनाप्ताज्ञयापि वा।
यो ज्ञापितः स एवार्थः परमार्थ इति स्मृतः॥ अ० २ वा० सं० १८

शास्त्रेऽस्मिन्नष्टावध्यायाः सन्ति। प्रत्यध्यायमाह्निकद्वयं विद्यते। प्रत्याह्नि

अधिकरणानां संख्या न समा। सम्मिलितानामधिकरणानां संख्या विंशोत्तर-शतम्। अत्र न केवलं दर्शनशास्त्रस्य गूढतत्त्वानां वैशद्येन विवेचनं किन्तु भारतीयसमाजस्य धर्मस्य च विवेचनीयानां तथ्यानां पुंखानुपुंखं मीमांसाप्य-वलोक्यते। दर्शनशास्त्रविदामालोचकानामनुसारमयमभिनवो दार्शनिकग्रन्थः परमार्थप्रतिपादकत्वेन दर्शनस्य सप्तमकोटावापततीति तु निश्चप्रचम्। केवल-मयमेवैको ग्रन्थः अलोकसामान्यप्रज्ञावतः शर्म्ममहोदयस्याद्भुतप्रतिभाया असामान्यवैदुष्यस्य चैकं प्रकाण्डं निदर्शनम्।

**प्रियदर्शिप्रशस्तयः—**

१६१५ खृष्टाब्दे रामावतारशर्मा स्वशिष्यस्य श्रीहरिनन्दन पाण्डेयस्य श्रीमनोरञ्जन घोषमहोदयस्य च साहाय्येनाशोकप्रशस्तीः संस्कृतांगलभाषयोरनूद्य शिलालेखानां स्तम्भलेखानां सन्तुलनञ्च विधाय ग्रन्थाकारेण सम्पाद्य प्रका-शितवान्। गयातः प्रकाशितायां "लक्ष्मी" पत्रिकायामेतासां प्रशस्तीनां राष्ट्रभाषानुवादोऽपि प्रकाशितः किन्तु सोऽप्यपूर्ण इति महान् खेदकरो विषयः।

**जयप्रकाशचरितचम्पूः—**

अयमेकोऽपरोऽप्यज्ञातप्रणयनकालो ग्रन्थोऽस्ति। अत्र चत्वारः स्तबका वर्तन्ते। अस्मिन् "गद्यपद्यमयं काव्यं चम्पूरित्यभिधीयते" इति नियमं सर्वथा स्वीकृतवानसौ। ततः केवलं कश्चन गद्यांशस्तस्य पण्डितशीर्षण्यस्य गद्यलेखनशैलीपरिज्ञानायाधः प्रदीयतेऽस्माभिः।

"अथ कदाचित् सहसा महसा सह सागरां सागराम्बरामाशावकाशविक-स्वरकिरणस्तरणिः प्रकाशयामास, शुचितराम्बररुचिरा रजोविनिर्मुक्ताः किमप्यभिमततमं मङ्गलमुदयमानमागमयाम्बभूवुरिव दिगङ्गनाः; जनतां घनतापनोदकुशलो मातरिश्वान्तरानन्दभरेणेव मन्दप्रचारश्चिरमननुभूतपूर्वेण प्रतिप्रतीकं प्रजीवयता स्पर्शेन सुखयति स्म; महोत्सवव्यापृता इव सकल भूतल-निवासिनो जना मदयतेव हृदयं तरलयतेवान्तरात्मानं नन्दयतेवेन्द्रियवृन्दमुत्तर-ङ्गयतेवान्तरङ्गं विवशीकुर्वतेव शेमुषीं प्रविशतेव प्रत्यङ्गमनूपयतेव रोमकूपान्,

मनोरथपथादिव प्रसरता, स्वप्नविषयव्यासङ्गवशादिवलब्धजनुषा, निपु-न्द्रजाललीलाकलनादिवोपचितेन, नाट्यदर्शनादिवोल्लसता, जन्मान्तरीयसं-विशेषोद्बोधादिव प्ररोहता प्रियजनध्यानादिवोद्धावता, क्षणिकस्वर्गसुखा-फलैः पुण्यकणैरिवोपनीतेनानिर्वाच्येनानिमित्तेनाप्रतिमेनापूर्वेणावार्येण प्र-पूरेणाप्लाव्यमानाः क्षणं व्यस्मरन्निव सामयिकं दुःखजातम् ॥ (अप्रकाशितां-

चाङ्ग्लमहार्णवकोषः—

१६२२ ऐशवीयाब्दतः रामावतारशर्मा संस्कृते विश्वकोषरचनायां ब-बद्धोऽभवत्। आसीत्तस्य भविष्यवाणी "यदि दशवर्षपर्यन्तं जीवामि त-कार्यमेनत् सम्पूर्णं करिष्यामि" इति।

कोषोऽयं सम्पूर्णतां गतो वा नवेतीति कथनं दुष्करम्। सोऽयमधु-काशीस्थे ज्ञानमण्डलमुद्रणालये मुद्रणार्थं तत्पुत्रेण स्वर्गतनलिनविलोचनश-महाशयेन प्रेषितो वर्तते। तस्य मुद्राप्यमाणग्रन्थस्य दर्शनं न कृतमि-तत्त्वतोऽस्य विषयसन्निवेशरीतिः कीदृशीति न ज्ञायते। इतस्ततो दृ-समुल्लेखेषु कोषस्यास्य महाविषयत्वं स्पष्टीभवति। महापण्डितेन राहुल-कृत्यायनेनास्य विषये लिखितम्—एष कोशग्रन्थः २५,००० श्लोकम-शर्ममहोदयस्य स्वःप्रस्थानात् अष्टवर्षानन्तरमप्यमुद्रित एवासीत्। तत्रा-न्तिमश्लोकोऽपि तेनोद्धृतः—

> श्रीदेवनारायणशर्म्मणः श्रीगोविन्ददेव्याश्च महामहिम्नोः
> प्रणम्य पित्रोश्चरणाम्बुजाते आचार्यगंगाधरशास्त्रिणश्च।
> रामेण सारण्यभवोद्भवेन काश्यां यदारम्भि महाभिधानं,
> समापितं तत्किल विश्वविद्यासर्वस्वमेतत्कुसुमाख्यपुर्याम्[१] ॥

तथापि नैतन्निश्चितं २५,००० संख्यकश्लोकैर्ग्रन्थोऽयं पूर्णो वा नवेति-एतत्तु सुनिश्चितमेव यथास्थितेऽपि मुद्रिते सत्ययं ग्रन्थः सर्वान् संस्कृतको-ग्रन्थानतिशयिष्यते। कोषस्यास्यांशावलोकनेन प्रतिभाति यदस्मिन् अकारा-

१. जिनका मैं कृतज्ञ १६५७—राहुलसांकृत्यायन पृ० सं० ५६-६२।

क्रमेण शब्दाः सन्निवेशिताः, शब्दार्थाः तत्प्रयोगाश्च न केवलं संस्कृतेऽपि तु भाषान्तरेषु (ग्रीक, लैटिन, अंग्रेजी, हिन्दी-वङ्गादिषु) अपि प्रदर्शिताः। उद्भिद्विद्या-भूतविद्या-भूविद्यादयः, सर्वे विज्ञानसम्बन्धिविषया अप्यत्र संस्कृत-श्लोकैः निबद्धाः। चित्रादिभिश्च सम्यगलङ्कारितोऽयं ग्रन्थः। कोषकृता स्वयमेव शर्ममहाशयेनोक्तम्—सेन्टपिटर्सवर्ग् कोष-मोनियर-विलियमकृतकोषयोः अन्येषु च प्राचीनार्वाचीन संस्कृतकोषेषु याः न्यूनता लक्ष्यन्ते ताः परिजिहीर्षया कोष-रचना क्रियत इति[२]।

ईदृशस्य महाविषयस्य विश्वविद्याप्रकाशक कोषस्य रचना कथमेकेन मनुष्येण साध्येति सत्यं विस्मयकरम्। अहो कर्मण्यता संस्कृतानुरागश्च शर्ममहाशयस्य यदयमप्राप्तेऽपि धनसाहाय्ये कर्मिसाहाय्ये च कुतश्चन, सव्यसाचीव रचयामास महाग्रन्थमेनम्। कदाचिदनेन प्रार्थितस्तात्कालिको विहारप्रदेशीयः शिक्षामन्त्री धनसाहाय्यप्रदाने शासनस्यासामर्थ्यं प्रकटयामास। कोषार्थं कर्म कर्तुमनेना-कारितो महापण्डितराहुलसांकृत्यायनोऽप्यात्मनोऽसामर्थ्यं प्रकटयामास। तथापि कोषरचनातः शर्ममहाशयो न विरतः।

पञ्चपञ्चाशद्वर्षात्मके स्वजीवनकाले रामावतार-शर्मणा यद् यत् कृतं तस्य कार्त्स्न्येनावलोकनमत्र कृतम्। विद्यानुरागेण ऊर्ध्वस्विचारित्र्येणानेन न केवलं स्वयममरत्वं प्राप्तमपितु सर्वेषां विद्यानुरागिणां पुरतः महादर्शः संस्थापितः। संस्कृतविद्याया अभ्युदयार्थं महाजनो येन गतः स पन्था इति न्यायात् स एव मार्गोऽनुसरणीय इति किमु वक्तव्यम्।

रामावतारशर्मा पुराणमित्येव न साधु सर्वमिति कालिदासोक्तिं प्रमाणी-कृतवान्। युक्तिवादानुरागिणी तस्य विचारसरणिः सर्वत्रैव युक्तेर्महत्त्वं स्वीक-रोति। अतएत श्रूयते—रामावतारशर्मा नास्तिक आसीदिति। परं सर्वथासमी-चीनमेतद् वक्तव्यं प्रतिभाति। स्वकीये परमार्थदर्शनाख्ये ग्रन्थे आप्तवाक्य-स्यापि प्रामाण्यनिर्देशात्। सार्वजनीनं, सार्वभौमं सार्वकालिकं च यत्तदेव

२—तत्रैव।

अव्याहतं तच्च सर्वैः स्वीकरणीयम् इत्यासीत्तस्य मनीषा। अव्याहतानुसन्धा... मनुष्यस्य परमं करणीयमिति तेन बहुशो निर्दिष्टम्। तस्याचला गुरुभक्ति... शिष्टाचारानुसारित्वं आस्तिकत्वं च प्रमाणयतः।

स्वदेशं स्वसमाजं च दीनावस्थं भेदभिन्नं आत्मगौरवरहितं च दृ... नितरामस्य मनो दूयते स्म। संस्कृतपण्डितानां दैन्यं चानेन बहुशः प्र... कृतम्। समाजे प्रवर्धमानानां भण्डानां दुष्टानां च कुचरितमसकृत् दृष्ट... एष एव हेतुस्तस्य कर्मण्यतायाः। अनुत्तमो विद्वानपि शर्ममहाभागः ... समाजहितचिन्तकः तत्संस्कारकोऽभूत्। मानवानां चिन्तनशक्तेरुत्कर्षे वि... संस्कृतभाषा एव श्रेष्ठं साधनमिति प्रायशःतेन सर्वं संस्कृते व्यलेखि। तन्न... यत् संस्कृतेन न प्रतिपाद्यते इत्यासीत्तस्य परिनिष्ठितं मतम्। अत एव ... भूगोलधातु-शिल्पविज्ञानादिविषयेषु निबन्धा लिखिताः।

स्वकीयमुदात्तभावं सर्वत्र सञ्चारयितुं संस्कृतनिबद्धानां लेखानां हि... आंगलभाषयोरपि अनुवादोऽनेन कृतः। लैटिनभाषाभिज्ञश्चायमा... रघुवंशस्य तेन कृतः कश्चिल्लैटिनानुवादः प्राप्यते।

यथा विनयो विद्यानुचरस्तथा स्वाभिमानोऽपि। स्वाभिमानः तस्यैव शो... यस्य विद्यानुत्तमा। नात्र चित्रं यदयं विद्वान् स्वात्मनि बहुमान आसीत्।... 'रामो द्विर्नाभिभाषते' इत्युक्तिस्तस्य मुखादश्रूयत। एष एव बहुमानः निःस्... स्य तस्य कोषादिवदनेकसाध्ये कर्मणि परममवलम्बनमभूत्।

संस्कृतभाषायामस्याधिकारस्त्वनुपम एवासीत्। यं कमपि भावं यदा... संस्कृतश्लोकेन प्रकाशयितुं समर्थोऽसौ आसीत्। अयमपि भवभूतिवत्कथ... मर्हः—"यं ब्राह्मणमियं देवी वाग् वश्येवानुवर्तते" इति। उद्भटविदुषः... सर्वे ग्रन्थाः विदुषां गोचरीकरणीया इत्यत्र नास्ति सन्देहलेशः। अप्रका... ग्रन्थाः प्रकाशमीयुरिति वयं कामयामहे। रामावतारशर्मविषये सरस्वती-पत्रि... यदुक्तं पं० महावीरप्रसादद्विवेदिना तदुद्धृत्य समाप्यतेऽयं निबन्धः। गुणा... पुरःसरं श्लोकोऽयं तत्र दृश्यते—

"यद् विज्ञानविरुद्धमेव निखिलं तद् येन सन्त्यज्यते
वाक्यं स्वीक्रियते न येन वितथं शास्त्रश्रुतीनामपि।
यस्यास्ये परमार्थदर्शनमयी वाणी ननर्ताद्भुता
सोऽयं शर्म तनोतु धर्मधनिनां रामावतारो बुधः॥"

— —

# संस्कृत-प्रकाशन-विज्ञप्तिः

## ( पत्र-पत्रिकाः )

भोजराजः

संस्कृतभाषायाः प्राचीनसाहित्येनैव परं परितुष्टा वयं तस्यापि पारं गन्तुमसमर्था अर्वाचीनयुगस्य संस्कृतसाहित्यापेक्षामपि न समीहामहे। पञ्चदशशताब्दीतोऽद्यावधि संस्कृतग्रन्थानां सहस्रं विरचितं प्रकाशितं च। तथापि तेषां विषये नाकिञ्चन ज्ञानमस्माकमस्तीति शोचनीया स्थितिः। संस्कृतभाषायामधुनापि नित्यं नवसाहित्यसर्जनं भवतीति सर्वजनविदितं यथा भवतु तथा प्रयतनीयमस्माभिः। 'संस्कृतानुरागिणोऽमरभारत्या अमरत्वं मन्यमानाश्च नागरिका अभिनव संस्कृतग्रन्थानां पत्र-पत्रिकादीनां वा प्रकाशनार्थं दत्तयोगा भवन्तु' इत्यस्माकं निवेदनम्।

ऊनविंशतौ विंशतौ च शताब्द्यां संस्कृतपत्रपत्रिकादीनां प्रादुर्भावः पर्याप्तसंख्यः सञ्जातः। तथापि कतिपया एव पत्रपत्रिकाश्चिरं प्रकाशनं गताः। ताः पत्रिका ग्राहकाणां लेखकानां वाभावादकाले पञ्चत्वं गताः। संस्कृतभाषाया अभिनवसाहित्यस्यापि दुःस्थितिर्वर्तते। बहूनि पुस्तकानि लिख्यन्ते तथापि तेषां प्रकाशका न प्राप्यन्ते, प्रकाशितानां पुस्तकानां विक्रेतारः क्रेतारो वा न दृश्यन्ते तथा च तेषां निर्धारणं परीक्षासु न क्रियते। 'इयं स्थितिः पत्रपत्रिकादीनां पुस्तकानां वा गुणाभावादस्ति' इति नावितथमेव। अत्र संस्कृतज्ञानां प्रथममुपेक्षाभावो द्वितीयतस्तद्विषयको विज्ञापनाभाव एव प्रधानं कारणम्।

तर्हि वयं सागरिकायामभिनवप्रकाशितानां संस्कृतग्रन्थानां पत्र-पत्रिकादीनां च विज्ञप्तिं यथाकालं कुर्मः। पुस्तकानामालोचनं पुस्तकद्वयप्रदानेन क्रियतेऽस्माभिः। अस्मिन्नङ्के गीर्वाणवाण्यां प्रकाशितानां संस्कृतपत्रिकादीनां

परिचयो दीयतेऽधस्तात् । सर्वे संस्कृतानुरागिणः कतिपयपत्रपत्रिकादीनां ग्राहकत्वं स्वीकृत्य संस्कृतस्याधुनिकाभ्युदयविधाने भागग्राहिणो भवन्तु इत्यस्माकं हार्दिकी प्रार्थना —

**मासिकम्**

१. आनन्दकल्पतरुः रू० ३) — 29 Macdonald Street, फोर्ट, कोयमबटूर ।

२. उद्यानपत्रिका — D. T. ताताचार्य शिरोमणिः — 113 G. South Mada Street, तिरुपति, (आन्ध्रप्रदेश)

३. गुरुकुलपत्रिका रू० ४) — श्रीसत्यव्रतविद्यालङ्कारः — गुरुकुल, कांगड़ी हरिद्वार,

४. जयतु संस्कृतम् रू० ६) — श्रीवासुदेव त्रिपाठी — 10/558 भाटाहिटी काठमाण्डु, नेपाल

५. दिव्यज्योतिः रू० ६) — आचार्य श्रीदिवाकरदत्तशर्मा — आनन्दलाज, जाखू शिमला—१

६. प्रणवपारिजातः रू० २) — श्री केदारनाथ सांख्यतीर्थः, श्री श्रीजीवन्यायतीर्थः — श्री सीताराम वैदिक महाविद्यालय 7/3 P.W.D. Road, कलिकाता—३५

७. बालसंस्कृतम् रू० ५) — वैद्य श्री रामस्वरूपशास्त्री — घाटकोपार आगरा रोड बाम्बे—३६

८. भारती रू० ३) — भट्ट श्री मथुरानाथशास्त्री — भारतीभवन, गोपालजी का रास्ता, जयपुर

| | | | |
|---|---|---|---|
| ९. भारतीयविद्या-भवनपत्रिका | रू० ५) | श्री ज० ह० दवे | भारतीय विद्याभवन चौपट्टी, बाम्बे— |
| १०. मालवमयूरः | रू० ५) | श्री रुद्रदेव त्रिपाठी | मन्दसोर, म० प्र० |
| ११. वैदिकमनोहरा | रू० ५) | श्री पी० बी० अनङ्गाचार्यः | ग्रन्थमाला आफिस काञ्चीपुर |
| १२. सूर्योदयः | रू० ५) | श्री ग० न० वैशापुरकरः | भारतधर्ममहामण्डल जगतगञ्ज, वाराणसी- |
| १३. संस्कृतरत्नाकरः | रू० ५) | म०म० श्री परमेश्वरानन्दः | 172–D, कमला नगर दिल्ली |
| १४. सरस्वतीसौरभम् | रू० ३) | श्री जयनारायण पाठकः | द्वारिकाधीश मन्दिर नृसिंह पोल, बडोदा |
| १५. संस्कृतसञ्जीवनम् | रू० ६) | डा० श्री नागेन्द्रपति त्रिपाठी | वारिपथ, पटना— |
| १६. संस्कृत साहित्य-परिषत् पत्रिका | रू० ६) | म०म० श्री कालीपदतर्काचार्यः | संस्कृत साहित्यपरिषद् 168/1, राजा दिनेन्द्र स्ट्रीट कलिकाता— |
| १७. साहित्यवाटिका | | श्री यशोदानन्दन भारद्वाज | दिल्लीराज्य संस्कृत विश्वपरिषद् 23 F, कमलानगर, दिल्ली |

## त्रैमासिकम्

| | | | |
|---|---|---|---|
| १. कामेश्वरसिंह संस्कृत-विश्वविद्यालयपत्रिका | | म० म० डा० श्री उमेश मिश्रः | कामेश्वरसिंह संस्कृत विश्वविद्यालय दरभंगा, बिहार |
| २. ब्रह्मविद्या | रू० ८) | डा० वे० राघवन् | अडायर लायब्रेरी मद्रास — २० |

३. सारस्वतीसुषमा रू० ७'५० संस्कृत विश्वविद्यालय वाराणसी—२

४. सागरिका रू० ६) डा० श्रीरामजी उपाध्याय संस्कृत विभाग, विश्वविद्यालय सागर

## षाण्मासिकम्

१. पुराणम् रू० १२) डा० वे० राघवन् काशिराज ट्रस्ट, रामनगर, वाराणसी

२. संस्कृतप्रतिभा रू० ४) डा० वे० राघवन् साहित्य अकादमी 74 Theatre Communication Building Connaught Circus नई दिल्ली

## वार्षिकम्

१. तरङ्गिणी डा० आर्येन्द्र शर्मा संस्कृत विभाग उसमानिया विश्वविद्यालय हैदराबाद, आन्ध्रप्रदेश

## दैनिकम्

१. संस्कृतिः रू० १५) श्री व० प० वेरसेडकरः श्री शारदा प्रेस, २८१, बुधवार पेठ, पूना—२

## साप्ताहिकम्

१. भवितव्यम् रू० ५) श्री द० व० वराडपाण्डे संस्कृतभवितव्यम् कार्यालय नागपुर

| | | | |
|---|---|---|---|
| २. संस्कृतम् | रू० १०) | श्री कालीप्रसाद शास्त्री | संस्कृतं कार्यालय, अयोध्या (उ० प्र०) |

## पाक्षिकपत्रम्

| | | | |
|---|---|---|---|
| भारतवाणी | रू० ५) | डा० व० ग० राहूरकर | रावेतकर सदन, ६७५, सदाशिव, पूना—२ |
| २. शारदा | रू० ५) | श्री व० अ० गाडगिल | ७७, शनिवार पेठ, पूना—२ |
| ३. संस्कृतसाकेतम् | रू० ८) | | संस्कृतसाकेत कार्यालय, अयोध्या (उ० प्र०) |

———

# समाचारः

## राजधान्यां संस्कृतविश्वविद्यालयस्य स्थापना

अक्टूबरमासस्य सप्तम्यां तारिकायां विश्वविद्याप्रतिष्ठानस्य वार्षिकोत्सवः सम्पन्नः यस्योद्घाटनं भारतस्य माननीयाः प्रधानमन्त्रिणः पं० जवाहरलाल नेहरू महोदयाः कृतवन्तः। सायंकाले विशिष्टेऽधिवेशने राजधान्यां संस्कृतविश्वविद्यालयस्य स्थापनाविधिः सम्पन्नः, विभिन्नविदुषां भाषणान्यभूवन्। विश्वविद्याप्रतिष्ठानस्य कुलपतिभिः डा० आचार्य प्रभाकर मिश्रैरुद्घोषितं यदन्ताराष्ट्रिय-संस्कृतप्रचारार्थमेव संस्कृतविश्वविद्यालयस्य स्थापनाप्रयासः कृतः। आशासे सर्वत्र संस्कृतप्रचाराय महदान्दोलनं प्रचलिष्यतीति। अधुना संस्कृतविश्वविद्यालयेन सरलसंस्कृतपरीक्षाणां तथा केन्द्रीयसर्वकारेण प्रस्तावितोच्चसंस्कृतपरीक्षाणामायोजनं विहितं वर्तते।

——

# सम्पादकीयम्

## संस्कृतविश्वविद्यालयाः

प्राचीनशिक्षणपरम्परामनुसृत्य भारते शिक्षणपद्धतिः प्रतिष्ठापनीयेति विचारयन्तो बहवो विचारधुरीणाः संस्कृतविश्वविद्यालयानां स्थापनार्थं समुत्सुका भवन्ति। तथापि वर्त्तमानसंस्कृतविश्वविद्यालयानां महाविद्यालयानां वा दुःस्थितिं दृष्ट्वा हतोत्साहास्ते जायन्ते। पण्डितमदनमोहनमालवीयः संस्कृतविश्वविद्यालयस्य स्थापनां कर्त्तुमैच्छत्, परन्तु आंगलरीतिमनुसरन् विश्वविद्यालयं स्थापितवान्।

विगतदशके कतिपयसंस्कृतविश्वविद्यालयाः संस्थापिताः किन्तु तेषु तेषु विश्वविद्यालयेषु विद्यार्थिनां संख्या स्वल्पैव वर्तते, अध्येयविषयाणां समीचीनं वैविध्यमपि तत्र न दृश्यते, प्राध्यापकानां स्नातकानां च शोधवृत्तिरपि कुण्ठितैव लक्ष्यते, अध्ययनाध्यापनस्योच्चस्तरस्य तत्र का कथा ? न तस्य दर्शनं क्वचिदपि आधुनिके युगे भवति भारते। न तेषां संस्कृतविश्वविद्यालयानां स्वनामार्हणत्वमीषदपि राजते। अपरञ्च प्राध्यापकानामात्मप्रशंसा, पारस्परिकविगर्हणं च, कुटिलवृत्त्या परेषां सहकर्मिणामवपातनं च दरीदृश्यन्ते।

एतत्सर्वं दृष्ट्वा वितर्को जायते—अस्ति काचिदावश्यकता संस्कृतविश्वविद्यालयानाम् ? पाश्चात्यरीत्यनुसारिणो बहवो विश्वविद्यालयाः सन्त्येव। तेषु विश्वविद्यालयेषु बहुविधज्ञानविज्ञानादिभिः सह संस्कृतमपि पाठ्यते। तत्र शोधपरम्परा भारतीयपुरातत्त्वमपि स्पृशति। किमवशिष्टं वर्तते यत् संस्कृतविश्वविद्यालयैः सम्पादनीयं भवेत्। तद्यथा मया दृष्टमनुभूतं च संस्कृतविश्वविद्यालयानामधिकारिणः प्राध्यापकाश्चास्मिन्विषये विमर्शस्पृशः न सन्ति।

भारतस्य भारतीयता यदि रक्षणीया स्यात्, तर्हि तस्याः संरक्षकाः सम्पादनीयाः। न ते संरक्षका बहुसंख्यकेषु साधारणविश्वविद्यालयेषु निर्मिता भवन्ति। इमे साधारणविश्वविद्यालयास्तु पाश्चात्यसंस्कृतिमनुधावन्ति।

एतेषां साफल्यं तु भारतस्य योरपीकरणे एव विद्यते। न तत्र भारतीयताया दर्शनं भवति। अपवादस्वरूपा एव तत्र भारतीयसंस्कृतिमनुसरन्तः प्राध्यापका विद्यार्थिनो वा। अन्ताराष्ट्रियसंस्कृतेः संरक्षका एतेषु विश्वविद्यालयेषु निर्मीयन्ते। भारतीयता तत्रोपहासपदमुपपद्यते।

तर्हि किं करणीयं संस्कृतविश्वविद्यालयानां सम्यक्परिपालनाय? प्रथमं तावत् संस्कृतविश्वविद्यालयानां स्थितिः नगरेभ्यः सुदूरं भवतु। नगरोद्भवो धूलिरपि सद्वृत्तिं क्वचित् हन्तीति श्रूयते। तत्पूर्णसत्यमिति मे मतिः। संस्कृत विश्वविद्यालयानां सर्वे प्राध्यापका अधिकारिणश्च न केवलं भारतीयसंस्कृतेः वाचा समर्थकाः सन्तु अपि तु मनसा वेषादिभिश्च ऋषिकल्पपरायणा भवन्तु। नेमे विश्वविद्यालया ज्ञानविदग्धानामपि जराजीर्णानां मृतविद्यानामावासाः सम्पादनीयाः। ते एव प्राध्यापकाः शोधसञ्चालका वा तत्र नियोज्या येषां निःस्वार्थमपि अध्ययनाध्यापनं विश्रुतं वर्तते। मुखशूराः कतिपयतथाकथित-विद्वांसः कुचक्रं संचार्य संस्कृतविश्वविद्यालयेषु पदोन्नता दृश्यन्ते। तेषामुप-स्थितिरेव ज्ञानभूमिं ग्रामीकरोति।

कुलपतय उपकुलपतयः अन्ये वा पदाधिकारिणो संस्कृतविश्वविद्यालयानां ते एव महानुभावा भवन्तु ये पण्डितमदनमोहनमालवीयस्य आचार्यनरेन्द्रदेवस्य वादर्शं भजन्ते। अतादृशा जनाः संस्कृतविश्वविद्यालयानां महतीं हानिं कुर्वन्ति करिष्यन्ति च। तादृशा योग्या जनाः सन्ति किन्तु तेषां लोकव्यवहारगतिः कुण्ठिता वर्तते। न ते अनर्हप्रयासेनाग्रेसरा भवितुमिच्छन्ति। तान् महापु-रुषान् संस्कृतविश्वविद्यालयानां धुरि नियोजयितुमस्माकं सत्याग्रह अपेक्ष्यते।

अपरञ्च विद्यानामर्जनं न केवलं लोकैश्वर्यपदादीनां प्राप्त्यर्थमेवास्ति अपि तु प्रथमं तावत् आध्यात्मिकशान्तिप्राप्तये भवतीति विद्यार्थिनां मानसे पुनः सन्धारयितव्यमाचार्यादिभिः न केवलं वाचा अपि तु स्वकीयेनोदात्तेन प्रकामप्रशान्तेन च व्यक्तित्वेन। धनार्जनशक्तिप्रदायिनी अपरा विद्या न तावदुत्कर्षविधायिनी भवति यावत् परा विद्या यया ब्रह्म निष्पद्यते इति आचा-र्याणां जीवनादर्शेन विद्यार्थिनः सम्यङ् निबोधन्तु।

ईदृशो विश्वविद्यालयः सफलो भविष्यति ऋषीणां तर्पणाय ।

## संस्कृतलेखकानामैतिह्यम्

अस्माकं देशे इतिहासप्रणयनस्याभिरुचिः पुरा नासीत् । सुतरां न वयं महत्तमानामपि कवीनाम्, दार्शनिकानान्, धर्मशास्त्रकाराणाम्, राज्ञां वा विषये यथेष्टं पर्याप्तं वा ज्ञातुं समर्थाः । अतीतस्यान्धगह्वरे भूगर्भे निखातानि रत्नानीव पुनः पुनः सप्रयासं शोध्यमानान्यपि मनीषिचरित्राणि क्वचिदेव पूर्णतोऽभिगम्यानि भवन्ति ।

इदानीन्तनानामपि भूयसामपि संस्कृतसाहित्यकाराणां विषये पाठका ज्ञातुकामा अपि स्वल्पमेव वेत्तुमसमर्था इति मे प्रतीतिः । अतीतेषु पञ्चशताब्देषु कविधुर्याणां साहस्री निःसन्दिग्धं प्रावर्तत । तेषां कृतयो हस्तलिखिता मुद्रिता वा नातिश्रमेण प्राप्याणि भवन्तु नाम किन्तु तेषां लेखकानां चरितविषये सामान्यपरिचयोऽपि प्रायशो दुर्लभो वर्तते । आधुनिकसंस्कृतसाहित्यस्यापि इतिहासप्रणयनं तावन्मात्रं दुःसम्पाद्यं जातं यावन्मात्रं प्राचीनसाहित्यस्य 'ये विद्वांसो ह्यः सुविख्याता आसन् ते एव श्वो विस्मृतिपथं यास्यन्ति, न च तेषां विषये जिज्ञासूनां प्रश्नसमाधानकारिणो वा भविष्यन्ति' इति विचार्य वर्त्तमानलेखकानां प्रधानदायित्वमिदमपि वर्तते यत्ते स्वकीयरचनाया आदौ अन्ते वा आत्मविषयकमितिहासप्रणयनोपयोगि वृत्तं दत्त्वा न केवलं साम्प्रतिकविजिज्ञासून् अपितु भावीतिहासकारांश्चानुगृह्णन्तु इत्यस्माकं निवेदनम् ।

सागरिकायां वर्त्तमानयुगस्य, मध्ययुगस्य, प्राचीनकालस्य वा संस्कृतसाहित्यकाराणां चरितविषयकाः सुप्रमाणितप्रबन्धाः सादरं प्रकाश्यन्ते, इत्यस्माकं नीतिः । लेखकानां पारिषदाः, अन्ये वा तेषां सम्बन्धिनो वंशजा वा तादृशप्रबन्धं प्रेषयितुं निवेद्यन्ते । प्रबन्धेषु साहित्यकाराणां जन्म-स्थान-शिक्षा-शिष्यमण्डल-साहित्यसर्जनादिचर्चापेक्ष्यास्त्येव तथापि अस्माकं मतौ विशेषतरं स्पृहणीयं वृत्तमस्ति तेषां लेखकानां व्यक्तित्वविकासनम्, औदार्यकथा, लोकसेवाकर्तव्यावदानादीनि ।

---

सागरिकासम्पादनसमितिः

सम्पादकः—डा० रामजी उपाध्यायः

कोषाध्यक्षः—डा० वनमाला भवालकरः

मन्त्री—डा० विश्वनाथ भट्टाचार्यः

# सूचीपत्रम्

१—बौद्धेषु प्रमात्वविमर्शः—जगन्नाथः उपाध्यायः ... १८१
२—कालिदासस्य संगीतकलाकृतित्वम्—श० श्री० परांजपे ... १८६
३—संस्कृतपत्रकारिता—रामगोपालः मिश्रः ... ... १९३
४—कतमः स्विदेव सः—जगन्नाथवेदालङ्कारः ... ... २१५
५—महाभारतीया आत्मगुणाः—कु० शशिबाला श्रीवास्तव ... २१६
६—संस्कृतसाहित्ये पारिजातहरणकथा—गौतमप्रसादमिश्रः ... २३५
७—रामावतारशर्मणां समाजोद्बोधनम्—अच्युतानन्दः झा ... २४५
८—पाददण्डः—वनमाला भवालकरः ... ... २५७
९—संस्कृतवृत्तम्—विश्वनाथभट्टाचार्यः ... ... २८४
१०—सम्पादकीयम् ... ... ... ... २८६

—

# बौद्धेषु प्रमात्वविमर्शः

जगन्नाथः उपाध्यायः

भारतीयदर्शनेषु ज्ञानानां प्रमात्वाप्रमात्वविचारो वेदानामुपनिषदाञ्च प्रामाण्याप्रामाण्यविचारप्रसङ्गादेव समुद्गत इति वैदिकावैदिकप्राचीनग्रन्थानां श्लोकवार्तिकन्यायभाष्य-तद्वार्तिक-तात्पर्यटीका-भामती-चित्सुखीप्रभृतीनां तथा प्रमाणवार्तिक-तदलङ्कारभाष्य-तत्त्वसङ्ग्रहादीनां पर्यालोचनेन प्रतीयते। सुविदितमेव यद् भारतीयदर्शनेषु अन्यतमं सांख्यदर्शनमेव प्रत्यक्षानुमानाभ्यां व्यतिरेक्यागमस्यापि प्रामाण्यं समतिष्ठिपत्, एतद्विषये च विवदमानेषु प्रास्थानिकेष्वागमप्रामाण्याय आप्तत्वविचारप्रसङ्गे शाब्दज्ञानस्य प्रमात्वप्रस्तावः प्रारभ्यत। शाब्दप्रमात्वविचारद्वारैव शब्दरचनाविशेषस्य वेदस्यापि प्रामाण्याप्रामाण्यान्यान्यतररूपो विषयोऽनायासेनैव विमृश्यतां प्राप्तः। अथापि वेदप्रामाण्योपजीवकस्य शाब्दज्ञानस्य सुस्थिरं प्रमात्वं तावत् नैव पर्यवस्येद् यावज् ज्ञानमात्रस्य प्रमात्वाप्रमात्वविचारो नैव निश्चीयेत इतिकृत्वा वैदिकावैदिकैः सर्वैरेव प्राचीनैर्दार्शनिकैर्ज्ञानमात्रस्य प्रमात्वाप्रमात्वविमर्शः कृतः। एतस्यामेव विचारपरम्परायां प्रमात्वस्वरूपनिर्धारणार्थं "यया सामग्र्या ज्ञानमुत्पद्यते – गृह्यते च, तयैव तद्गतं प्रामाण्यमपि उत्पाद्यते गृह्यते अन्यथा वेति" विचारः स्वतस्त्वपरतस्त्वाभिधाभ्यां प्रास्फुरत्। एवं, प्रथमं श्रुतौ प्रामाण्य सम्पादयितुं प्रवर्तमानोऽपि ज्ञानप्रमात्वविचारः पश्चाद् तत्तद्दर्शनानां सिद्धान्ताननुरुध्य स्वतस्त्वपरतस्त्वादिविचारै र्बहुधा भिन्नः पर्यवसितः। अतएवार्वाचीनवैदिकावैदिकदर्शनानुरोधेन प्रमात्वस्यासाङ्कर्येण सम्यग् भेदनिर्धारणं यद्यपि दुःशकम्, तथापि प्रमात्वस्य स्वतस्त्वपरतस्त्वादिविचारो, नियमानियमपक्षाभ्यां भिद्यत एव। तत्र नियमवादिनः सांख्य नैयायिक-मीमांसकप्रमुखाः अनियमवादिनो बौद्ध-जैनादयः। यद्यपि सांख्यादिषु मिथः प्रमायाः स्वतस्त्वपरतस्त्व-

विषये अस्ति विमतिस्तथापि प्रमायाः स्वतस्त्वं परतस्त्वं वेति नियमेनैव तैरा- द्रियते। बौद्धैः जैनैस्तु कादाचित्कं स्वतस्त्वं परतस्त्वञ्चेति स्वीकुर्वद्भिः अनियम एव नियम्यते। उक्तं तत्त्वसंग्रहे बौद्धन्यायं सम्यगालोचयता कमलशीलेन—

"नहि बौद्धैरेषां चतुर्णामेकतमोऽपि पक्षोऽभीष्टो ऽनियमपक्षस्यैवेष्टत्वात्, ......पञ्चमस्याप्यनियमपक्षस्य सम्भवादिति" ( ८११ पृ० )

अतएव बौद्धेतरग्रन्थेषु सर्वदर्शनसङ्ग्रहादिषु बौद्धानां परतस्त्वमात्रवादित्वे- नोपन्यासो न सिद्धान्तानुरूपः।

नियमपक्षवादिसांख्यानां नये प्रामाण्याप्रामाण्ये उभे अपि स्वत एव। एतद्विपरीतं न्यायनये प्रामाण्यमप्रामाण्यञ्च परत एवेति नियमः, जैमिनीये प्रामाण्यं स्वतः, अप्रामाण्यन्तु परत इति नियमपक्षः। एतेन सर्वेषामेव दर्शनानां नये अप्रामाण्यं परत एवेति यः प्रचलितो वादः,स न सम्यगित्यालो- च्यताम् यद्यप्युपात्तसांख्यग्रन्थेषु प्रामाण्यचर्चा स्फुटं नैवोपलभ्यते, तथापि श्लोक- वार्तिक-तत्त्वसङ्ग्रह-सर्वदर्शनसङ्ग्रहादिग्रन्थेषूपलभ्यमानस्वतस्त्वस्थापननिवारण- प्रकाराभ्यामुभयतः स्वतस्त्वं सांख्यस्यैव पक्ष इति प्रतीयते। सांख्यसूत्रे ( अ० पृ० ५१ सूत्रे ) तत्प्रवचनभाष्ये च वेदप्रामाण्यस्य स्वतस्त्वापादनविधिनाऽपि, एतदेवसमर्थ्यते। तैर्वक्तृयथार्थज्ञानमूलकत्वमनपेक्ष्य, वेदानां स्वसामर्थ्य- वशादेव यथा स्वतः प्रमात्वं स्वीक्रियते, तुल्यन्यायात् ज्ञानमात्रगतप्रमात्वस्यापि स्वतस्त्वं कथं न सिध्येत्? एवं सांख्यानां मीमांसाविरुद्धमप्रामाण्यस्वतस्त्वं शब्दसामर्थ्यप्रयुक्तमेव प्रामाण्यस्वतस्त्ववत्।

श्रुतीश्वरोभयज्ञानप्रामाण्यवादिनो नैयायिका ईश्वरोक्तत्वादेव प्रवृत्तिसामर्थ्य- मनपेक्ष्यैव वेदानामपि परतः प्रामाण्यं स्वीकुर्वन्तः सर्वेषामेव ज्ञानानां प्रमात्वं परत एवेति स्थापयन्ति। एते हि ज्ञानान्तरं जायमानस्य ज्ञानप्रामाण्यसंशयस्यो- पपत्तये ज्ञानप्रामाण्यस्य परतस्त्वमेव ख्यापयन्ति। अस्मिन् मते परतस्त्वं समर्थप्रवृत्तिलिङ्गकानुमानाद् गृह्यते, गुणेभ्यश्च जायते। यद्यपि नैय्यायिकाः सर्वथापरतस्त्ववादिनस्तथापि अनवस्थादोषभयाद् व्यभिचारादिशङ्काया अभावे

अनुमानादीनां स्वतस्त्वमपि स्वीकुर्वन्तीति तद्वचनादेव प्रतीयते। यदाहुः न्यायवार्तिकटीकायां वाचस्पतिमिश्राः "प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत्प्रमाणमिति" भाष्ये प्रतिपत्ति-प्रवृत्तिसामर्थ्ययोरनवस्थां परस्पराश्रयत्वञ्च परिहरन्तः—

"अनुमानस्य तु प्रवृत्तिसामर्थ्यलिङ्गजन्मनः अन्यस्य वा निरस्तसमस्तव्यभिचारशङ्कस्य स्वत एव प्रामाण्यमिति। ज्ञानगततज्जातीयत्वलिङ्गग्राहिणश्च ज्ञानस्य मानसप्रत्यक्षस्य तादृशस्य अदृष्टव्यभिचारितया परितो निरस्तसमस्तविभ्रमाशङ्कस्य स्वतः प्रामाण्यमिति नानवस्था इति च (अ० १ आ० १ सूत्र)।

धर्मे श्रुत्येकप्रमाणवादिनो मीमांसका हि तस्याः स्वतः प्रामाण्यख्यापनाय ज्ञानमात्रस्य स्वतः प्रमाणत्वमवधारयन्ति, उपपादयन्ति ज्ञानस्य स्वविषयतथात्वावधारणे यदि स्वतः स्वाभाविकी शक्तिर्न स्यात् तदा परेणापि न शक्यते सम्पादयितुमिति प्रामाण्यस्योत्पत्तौ स्वतस्त्वं स्वाश्रयजनकसामग्रीमात्रजन्यत्वम्, ज्ञप्तौ च स्वाश्रयग्राहकसामग्रीग्राह्यत्वम्,—फले तु इष्टसाधनताज्ञानाद्यतिरिक्तानपेक्षत्वमिति। गुरुमते व्यवसायात्मकं स्वप्रकाशं ज्ञानम्। तद्धि स्वप्रकाशसामर्थ्यात् स्वात्मानमिव स्वगतप्रामाण्यमपि स्वत एव गृह्णाति। भट्टमते ज्ञानमात्रस्यातीन्द्रियतया ज्ञाततालिङ्गकानुमानेन तज्ज्ञानं तद्गतप्रामाण्यं च गृह्यते। मिश्रमते तु घटत्वेन घटमहं जानामीति यज् ज्ञानविषयकं लौकिकमानसज्ञानमुत्पद्यते तेनैव प्रामाण्यस्यापि ग्रहणम्। सर्वथापि त्रयाणां मते स्वाश्रयग्राहकसामग्रीग्राह्यत्वरूपं स्वतस्त्वमेव। अयमेव मीमांसकानां स्वतस्त्वनियमपक्षः।

एतन्नियमपक्षत्रयमसहमाना बौद्धाः प्रत्यवतिष्ठन्ते—प्रामाण्यस्य स्वतस्त्वापादनाय मीमांसकैर्या शक्तिः कल्प्यते सा निर्हेतुकत्वेन नित्यत्वात् स्वाभाविकी, उत अनित्याऽपि सा स्वहेतुभ्यः स्वभावनिष्पत्तिकाले एव भवति, न तूत्तरकाले हेत्वन्तरेणाधीयते, अतः स्वाभाविकी। यदि निर्हेतुकत्वान् नित्या स्वाभाविकी, तदा सा पदार्थेभ्यो व्यतिरिक्ता अव्यतिरिक्ता वा। व्यतिरिक्तत्वे पदार्थात् तस्याः सम्बन्ध एव न स्यात्, अकारकत्वं च पदार्थानां प्रसज्येत। अव्यतिरिक्ता च

शक्तिः स्वहेतुभिरुत्पन्नत्वेनानित्या स्यात् । नित्यस्य व्यक्तिः हेत्वन्तरापेक्षा चेत् कथं सिद्धयेत् । सिद्धान्ते च ज्ञानादीनां क्षणभङ्गत्वस्वीकारेण प्रमाणे स्वर्भा- स्थिताऽपि शक्तिः स्वतो न बोद्धुं शक्यते । उक्तं शान्तरक्षितेन—

"साधितं क्षणभङ्गं हि सर्वं वस्तु सविस्तरम् ।
नित्यं च जन्यते नेति कारणापेक्षिताऽस्य का ॥"

( श्लो० २९२६

बौद्धा अनियमपक्षमाश्रित्य कस्यचिज्ज्ञानस्य स्वतस्त्वं कस्यचिच्च परतस्त्वं प्रतिजानते । तेषां नये स्वसंवेदनप्रत्यक्षं, योगिज्ञानम्, अर्थक्रियाज्ञानम्, अनु- मानम्, प्रत्यक्षम्, अभ्यासबलेन निरस्तभ्रान्तिकारणत्वात् स्वत एव निश्ची- यन्ते । किञ्चित् परतोऽपि यथा—विवादास्पदीभूतं श्रुत्यादिचोदनाजनि- ज्ञानम्, प्रत्यक्षं वा अनपगतभ्रान्तिनिमित्तम् । एतदेवालोच्योक्तमाचार्यशान्त- रक्षितेन "किञ्चित्स्वतोऽन्यतः किञ्चित्परैश्चानियमो मतः" इत्यादिना । सर्वास्तिवादिनां वैभाषिकाणां हि प्रायशः परतः प्रामाण्यवादः, सौत्रान्तिक- योगाचारयोश्च प्रायशः स्वतः प्रामाण्यवादः, तयोश्च पिण्डीभूतार्थोऽयम- चार्यशान्तरक्षितस्य अनियमवादः । स्वतस्त्वपरतस्त्वयोरेतद्विवेकमधिकृत्य प्रमाणवार्तिकतद्वृत्तितद्भाष्यटीकादिषु धर्मोत्तरीये तत्प्रदीपिकायां मोक्षाकरीये तर्कभाषायां च प्रमाणस्य लक्षणं प्रामाण्याधिगमस्य निमित्तञ्चापि उपलभ्यते । अर्थक्रियाप्राप्त्यैव प्रामाण्यं तस्यैवाविसंवादकत्वमतः परतस्त्वमेव प्रामाण्यस्येति वस्तुवादिनां स्वभावः । विज्ञानवादिनये अविसंवादकत्वमिष्टार्थप्रापणमात्रम् दृष्टार्थश्च विज्ञानवादे प्रतीतार्थ एवातो विज्ञानवादेऽर्थस्वरूपप्रतीतिरेव ज्ञान- प्रामाण्यं पर्यवस्यति । इत्यालोच्यैवोक्तमाचार्यधर्मकीर्तिना "ज्ञेयस्वरूप- संवित्तिरिष्टा तत्र क्रियास्थिति" रित्यादिना । एतेन न केवलं बाह्यग्राह्या- प्रामाण्यं सिद्धयति अपि तु तद्रूपसंवेदनमात्रापेक्षमपि । अतएव—अर्थक्रिया- स्थितिरविसंवादनमिति धर्मकीर्तिलक्षणं व्याख्यातवता मनोरथनन्दिविदु- यथोपदर्शितस्यार्थस्य प्रमाणयोग्यतैव अविसंवादनमित्युक्तम् । इदञ्च लक्षणं बाह्यार्थेतरवादयोः समानम् । एवं अर्थक्रियानिर्भासबलात् सर्वस्यानुमानप्रामाण्यं

स्यापि स्वतस्त्वं सिद्ध्यति। किन्तु न सर्वत्र स्वतस्त्वमेव अपि तु परतस्त्वमपि। उक्तं चैतद् धर्मकीर्तिना "प्रामाण्यं व्यवहारेण" इत्यादिना। एतेन ज्ञप्तौ स्वतस्त्वं उत्पत्तौ तु परतस्त्वमपि। इति पर्यवस्योक्तं वार्तिकवृत्तौ—यस्य साधनज्ञानस्य तादात्म्यादनुभूतेऽपि प्रामाण्ये साशङ्का व्यवहर्त्तारः अनभ्यासवशादनुत्पन्नानुरूपनिश्चयाः तत्रार्थक्रियाज्ञानेनैव प्रामाण्यनिश्चयः इति। अन्यत्र तु आद्यज्ञानेऽपि अभ्यासादिना प्रोत्सारितभ्रान्तिनिमित्ते प्रामाण्यस्य स्वतस्त्वमेवेत्यभिप्रेत्योक्तं शान्तरक्षितेन—वृत्तौ अभ्यासवत्यां तु वैलक्षण्यं प्रतीयते (७८० पृ०) इत्यादिना।

———

# कालिदासस्य संगीतकलाकृतित्वम्

श० श्री० परांजपे

कालिदासस्य सर्वतोमुखप्रतिभाया उन्मेषः सप्तकृतिव्याजेन व्यक्तीभूत विदितमेव कालिदाससाहित्यविज्ञानाम् । कतिपया अन्या रचना महाकवि त्वेन समाख्यातास्तथापि तत्संबन्धे संशयं वहन्ति अनुसंधायिनः । कालिदा प्रातिभं ज्योतिः सप्तरचनारूपसप्तरङ्गिणा व्यक्तित्वेन स्फुटीभूतमित्यत्र विवादावकाशः । अतस्ता एव रचनाः समाश्रित्य महाकवेः सङ्गीतकलावि कृतित्वे किंचिदधः प्रस्तूयते । वस्तुतस्तु कालिदासीयं समस्तं काव्यजातं सं मयभाषालालित्येन सुसंपन्नम् । भवेत् तद् नाटकं वा महाकाव्यं वा संगी तेषु सर्वेषु सन्नद्धमेव वर्तते । खण्डकाव्ये तु गेयतत्त्वस्य प्रकर्षो वरीवर्ति अस्मादेव कारणात् कालिदासस्य "मेघदूतम्" अथ च "ऋतुसंहारः" इ गीतिकाव्यपरम्पराप्रवर्तकरूपेण सम्मानिते । एतदतिरिक्तमपि महाकवेः स कृतिषु संगीताभिज्ञत्वम् व्यज्यत एव संगीतशिल्पशिल्पित्वमपि तस्य सुत भिव्यज्यते । समसामयिकसंगीतविषयकस्थितिमाश्रित्य ये विचाराः कविकृ यत्र तत्र विकीर्णा वर्तन्ते तदाधारेण कालिदासयुगीनसंगीतस्य प्रामाणि मौलिकश्च इतिहासो लिखितुं शक्यते ।

भरतशूद्रककालिदासप्रणीतरचनासु 'संगीतम्' तथा च 'संगीतकम्' इ तयोर्द्वयोरपि संज्ञयोः प्रयोगो दरीदृश्यते । 'गीतम्' तथा च 'संगीतकम्' इ स्मिन् गीतं, वादित्रं, नृत्यं च इत्येषः त्रिवर्गः समाविष्टः । कलात्रयीषु ए गीतस्य प्राधान्येनैव 'संगीत' इत्यस्य शब्दस्य निष्पत्तिः 'प्राधान्येन व्यपदे भवन्ति' इति न्यायतः । कालिदासकृतिषु शब्दयोरनयोः प्रयोगः समष्टि एवावलोक्यते । गीतेन सह वाद्यनृत्ययोः सहोदरसंबन्ध एव । संगीतावयवसं कालिदासस्य विचारा अवलोक्यतां तावत्—

शब्दायन्ते मधुरमनिलैः कीचकाः पूर्यमाणाः
संसक्ताभिस्त्रिपुरविजयो गीयते किन्नरीभिः ।
निर्ह्रादस्ते मुरज इव चेत्कन्दरेषु ध्वनिः स्यात्
संगीतार्थो ननु पशुपतेस्तत्र भावी समग्रः ॥ मेघदूते

गीत-मृदंग-वंशात्मकानां त्रयाणां तु स्पष्टनिर्देशोऽत्र। तत्किं नृत्यानुपादाने संगीतार्थ अत्र समग्रो भवितुमर्हति इति चेत् तन्न । अयं तु संगीतार्थः पशुपतेः प्रसादनाय संयोजितः । तत्र तावत् नृत्यभागो नटेश्वरेण स्वयमेव संयोजित इत्येव अभिप्रायो महाकवेः । चतुर्थपंक्तौ 'पशुपतेर्नृत्यतस्तत्र पूर्णः' इति पाठो दक्षिणावर्तटीकाकारेण निर्देशित एव ।

कालिदासकाव्येषु 'संगीतकम्' इत्येतत् 'शिल्पम्' इत्येतस्मिन्नान्तर्भावितम् । शिल्पं ललितकला च द्वयमेतत् परस्परपर्यायस्वरूपम् । रमणीयरूपेण संगता ललितकला स्त्रीजातेरपूर्वो निधिः । तदुक्तम् मालविकाग्निमित्रे—"भो न केवलं रूपे शिल्पेऽप्यद्वितीया मालविका।" मालविकाया निर्व्याजसौन्दर्यं ललितविज्ञानेन संगीतकलारूपेण योजयता विधात्रा कामस्य विषाक्तो बाण एव परिकल्पित इति कल्पितं कालिदासेन।

गीतं नाम कण्ठसंगीतम् । संगीतशिक्षणार्थं सविशेष अधिकारः अपेक्ष्यते तत्प्रार्थिभ्यः । भरताचार्यैरपि संगीतनिमित्ता मूलभूतयोग्यता प्रतिपादिता । गीतस्य कृते 'सुकण्ठत्वम्' वाद्यस्य कृते 'सबलत्वम्' तथा च नृत्यस्य कृते 'अंगसौष्ठवम्' परमावश्यकं मतम् । मालविका शिल्पाधिकारे योग्येति सम्यक् विचार्य धारिणीसमीपं प्रेषिता । अत्रैवोच्यते—

पात्रविशेषे न्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः ।
जलमिव समुद्रशुक्तौ मुक्ताफलतां पयोदस्य ॥

कालिदासस्य गायिका नायिका असामान्यकंठस्वरेण सम्पन्ना वर्तन्ते । उमाया मधुरस्वर अमृतस्रावी कोकिलस्वरातिशायी चेति वर्णितः । किन्नर्यः रक्तिगुणसंपन्नकंठेन त्रिपुरविजयं नाम गीतमगुः । यक्षपत्नी तु विशेषतः

संगीतकलापारंगताऽऽसीत्। विरहकाले वीणावादनयुक्तं गानं तस्या मनोरंजन-साधनं जातम्। दृश्यताम् तावत्—

उत्संगे वा मलिनवसने सौम्य निक्षिप्य वीणाम्
मद्गोत्राङ्कं विरचितपदं गेयमुद्गातुकामा।
तन्त्रीमार्द्रां नयनसलिलैः सारयित्वा कथंचित्
भूयोभूयः स्वयमपि कृतां मूर्च्छनां विस्मरन्ती॥ मेघ० २-२६

अत्र यक्षप्रियाया असामान्यसंगीतनैपुण्यं व्यज्यते। स्वप्रियविषयीभूत-गीतगाने विविधा स्वराणामारोहावरोहरूपमूर्च्छनाः तया स्वयं विरचिता अधि-कृताश्च। यक्षनामांकितो गेयो प्रबन्धस्तया स्वयमेव निबद्धः। यदा तदुत्संग-गतवीणायास्तन्त्रीः संततप्रवाहिभिर्नयनसलिलैर्विस्वरतामुपगतास्तदा संगीत-प्रवीणैरपि प्रयाससाध्या 'सारणा' नाम तंत्रीसंयोजनरूपा प्रक्रिया तया सम्पा-दिता। सलिलस्यार्द्रत्वेन तन्त्रीस्वरा विकृतिं भजन्तीत्येतत् तु संगीतप्रयोग-कुशलानामेवानुभवसिद्धम्। गान्धर्वगतो मूर्च्छनाविषयो, पदजातयः एवं च वीणातंत्रं संगीतकलानिपुणानामभ्यस्तविषयो नाम। कालिदासस्य संगीतनैपुण्य-मेव व्यक्तीभूतमेतन्मिषेण।

वीणावादने तन्त्रीव्यवस्थापनं तावदादिमं कृत्यम्। सर्वास्तन्त्र्य अभीष्ट-स्वरेषु सम्यग्योजिताश्चेत् वीणावादनं सुशक्यं भवेत्। तासु तन्त्रीषु यस्याः कस्या अपि प्रकर्षापकर्षौ संगीतरागविघातकौ। अपस्वरस्य ज्ञानं तु न सर्वजनसुलभं तत्कृते श्रोत्रस्य सूक्ष्मग्राहिकाशक्तिरपेक्षिता। एतदेव प्रति-ध्वनितम् निम्नश्लोके —

स्वरेण तस्याममृतस्रुतेव प्रजल्पितायामभिजातवाचि।
अप्यन्यपुष्टाः प्रतिकूलशब्दाः श्रोतुर्वितन्त्रीरिव ताड्यमाना॥

कालिदासस्य रसिकशिरोमणित्वमत्र व्यज्यते। अपरत्र रघुवंशस्थ अज-विलापप्रसङ्गे विगततन्त्रीवीणाया वर्णनं इन्दुमतीदेहमिषेण प्रस्तूयते कालि-दासेन। तद्यथा—

"प्रतियोजयितव्यवल्लकीसमवस्थामथ सत्त्वविप्लवात् ।
स निनाय नितान्तवत्सलः परिगृह्योचितमङ्कमङ्गनाम् ॥" रघु० ८-३१

इन्दुमत्या मृतशरीरं तन्त्रीविहीनया फलतोऽस्तव्यस्तया वल्लक्या सममुपमितं महाकविना। वल्लकी नाम हृदयंगमस्वना वीणा। अङ्कपरिवर्तनोचिता वल्लकीयं लघ्वाकारा सुवहा ( Handy ) आसीदिति स्पष्टम्। इन्दुमतीमृतशरीरवर्णने वल्लकीवर्णनमेतदेव द्योतयति यत् संगीतसभासु न केवलं कालिदासस्य संचार आसीत् अपितु संगीतान्तर्गतवाद्यविषयस्तस्य सुपरिचित आसीत्। रसिकता मार्मिकता च इत्येते परस्परभिन्ने वस्तुनी। विद्वज्जनसंसर्गेण रसिकता लब्धुं शक्या, मार्मिकता तु अभ्याससाध्या वर्तते। कालिदासस्य संगीतविषयकविवेचनं न केवलं व्यापकानुभवजन्यमपि तु लोकोत्तरसंगीतज्ञानजन्यम्। संगीतस्य पारिभाषिकसंज्ञानां रागतानमूर्च्छनादीनां प्रयोगास्तस्य कृतिषु स्थाने स्थाने प्राप्यन्ते। 'रागो' वर्तते भारतीयसंगीतस्य प्रधानभूतं वस्तु। तद्विषयकं निम्नप्रमाणं कालिदासप्रयुक्तं दृश्यताम् तावत्—

तौ सन्धिषु व्यञ्जितवृत्तिभेदं रसान्तरेषु प्रतिबद्धरागम्।
अपश्यतामप्सरसां मुहूर्तं प्रयोगमाद्यं ललिताङ्गहारम् ॥

अत्र रागशब्देन पारिभाषिकरूपेण भवितव्यम्। अत्रस्थो रागशब्दः केवलं 'रञ्जनात्मको' 'रसात्मको' वा गृह्यते चेत् पुनरुक्तिदोषदूषितं भवेत्तद्वचः। 'रसान्तरेषु' इत्येतस्मिन् पदे सति 'प्रतिबद्धरागम्' इत्येतत्सन्निकटपदेन न कोऽपि अर्थलाभो भवेत्। रसस्तु रागात्मको भवत्येव, तस्याम्रेडितेन को लाभः? मल्लिनाथेन पदस्यास्य या व्याख्या कृता—'प्रतिनियमेन प्रवर्तितो वसंतललितादिरागो यस्मिंस्तत्। यस्मिन् रसे यो रागो विहितस्तदनुसारेण प्रयुक्तरागम्'—इत्येवंरूपा सुतरां तर्कसंगता वर्तते। अन्यत्र तु "कैशिक" इत्यस्य रागविशेषस्य स्पष्ट उल्लेखो महाकविना कृतो वर्तते। तद्यथा—

स व्यबुध्यत बुधस्तवोचितः शातकुम्भकमलाकरैः समम्।
मूर्च्छनापरिगृहीतकैशिकैः किन्नरैरुषसि गीतमङ्गलः ॥ कुमार ७.६५

कैशिको वर्तते नाट्यशास्त्रोल्लिखितो ग्रामरागषट्केऽन्यतमः। तस्य मूर्च्छ-नापरिगृहीतं गानमत्र संकेतितम्। विक्रमोर्वशीयस्य चतुर्थाङ्के 'भिन्नक-कुकु-वसन्तिका' इत्यादिभी रागविशेषाणां नामनिर्देशः कृत एव, तद्गतगीतं तत्र ग्रथितं वर्तते। अंशोऽयं मौलिकश्चेत् कालिदासयुगीनरागकल्पनायाः विकासो विज्ञातुं शक्यते।

संगीतशालाभ्यन्तरे प्रवर्तमानस्य संगीताभ्यासस्य विवरणं तथा च संगीता-ध्ययनस्य विविधाः पाठाः कीदृशा भवितुमर्हन्तीत्येतस्य चित्रणमभिज्ञानशाकु-न्तले समुपलभ्यते। तद्यथा—

"भो वयस्य संगीतशालाभ्यन्तरेऽवधानं देहि। कलविशुद्धाया गीतेः स्वरसंयोगः श्रूयते। जाने, तत्रभवती हंसपदिका वर्णपरिचयं करोतीति।" भरतोक्ता गीतिश्चतुर्विधा मागधी, अर्धमागधी, संभाविता, पृथुला च। विवि-धाक्षरकालनियंत्रितं स्वरूपमेतासाम्। संगीतशालाभ्यन्तरे विविधानां गीतीनां स्वरावर्ताऽऽवृत्तिपुरःसरं पाठ्यन्ते। तदेवाभिप्रेतं 'स्वरसंयोग' इत्यनेन। वर्णस्तावत् चतुर्विध अन्वर्थसंज्ञः—स्थायी, आरोही, अवरोही, संचारी च। तथा चाह भरताचार्यः

आरोहन्ति स्वरा यत्र आरोहीति स भण्यते॥ (२६, २०)
यत्र चैवावरोहन्ति सोऽवरोहीति संज्ञितः॥
स्थिरस्वराः समा यत्र स्थायिवर्णः स संज्ञितः॥ (२६, २१)

संगीतविद्यालयेषु स्वराणां विविधालंकारभूतो य अभ्यासः क्रियते स प-वर्णसंज्ञासंज्ञितः। यथा सासा, रेरे; सारे, रेग; गरे, रेसा; सारेगरे, रेगमग।

वस्तुनामकगेयप्रबन्धानामुल्लेखोऽपि कालिदासेन कृतः। वस्तुगानेन सार्धं तदनुकूलमेव नृत्यं कार्यमित्ययमभिप्रायः कालिदासस्य। यथा मालवि-काग्निमित्रे—"देव शर्मिष्ठायाः कृतिर्लयमध्या चतुष्पदास्ति। तस्याश्चतुर्थ-वस्तुनः प्रयोगमेकमना श्रोतुमर्हति देवः।" अपरं च—"देव शर्मिष्ठायाः कृतिं चतुष्पदोत्थं छलिकं दुष्प्रजनमुदाहरन्ति।"

अवनद्धवाद्यानां प्रचुरवर्णनं कालिदासस्य रचनासु प्राप्यते। 'अवनद्ध

नाम चर्मवाद्यं काललयप्रदानार्थम्। पुष्कर—मुरज—मृदंग—मर्दलादीनां वाद्यानां प्रभूतत्वेन वर्णनं तत्र संजातम्। दिङ्मात्रमत्र उदाह्रियते—

"जीमूतस्तनितविशङ्किभिर्मयूरैरुद्ग्रीवैरनुरसितस्य पुष्करस्य।
निर्ह्रादिन्युपहितमध्यमस्वरोत्था मायूरी मदयति मार्जना मनांसि॥"

मार्जना नाम मृदंगादिवाद्यमुखानां मृत्तिकालेपनं विशिष्टस्वरप्राप्त्यर्थम्। भरताचार्येण तिस्रो मार्जना निरूपिताः—

"मायूरी ह्यर्धमायूरी तथा कार्मारवी पुनः।
तिस्रस्तु मार्जना ज्ञेयाः पुष्करेषु स्वराश्रयाः॥"

मायूरीमार्जनायाः प्रयोगो मध्यमग्रामे विहितः। तत्सिद्ध्यर्थं पुष्करस्य त्रीणि मुखानि वामदक्षिणोर्ध्वगाणि नाम विविधस्वराश्रितानि क्रियन्ते। मृत्तिकामार्जनं वर्तत अभीष्टस्वरोद्भव-प्रयोजनमेव। अयं तु मार्जनाविधिर्मुख-त्रययुक्तपुष्करस्य वादनार्थं विहित इति प्रतीयते!

कालिदासकल्पितसंगीतार्थे त्रिविधानां वाद्यानां तत-वितत-सुषिररूपाणां यथायोगं योगदानं वर्तते। ततवाद्येषु वीणावल्लकीप्रभृतीनां समावेशः। वितत-वाद्येषु-बृहदाकाराणां पुष्कर-मृदंग-मुरज-मर्दलादीनां लघुकायानामंक्यालिङ्-क्योर्ध्वकादीनां च चर्ममुखवाद्यानां प्रभूत उल्लेखस्तत्र प्राप्यते। फूत्कारनिर्मित-ध्वनिषु सुषिरवाद्येषु वेणुवंशादीनां उल्लेखः अत्र उपलभ्यते। एतज्जातीयतुर्य-शंखादीनां प्रयोगो मंगलप्रसंगेषु च समुल्लिखितोऽत्र।

संगीतांगभूताया नृत्यकलायाः शास्त्रीयं वर्णनं कालिदासेन कृतम्। मालविकाग्निमित्रे नृत्यकलाविषयिणी प्रभूता सामग्री ग्रथिता वर्तते। नृत्यकला नाट्यांगरूपिणी परम्परागतरूपेण सम्यगभ्यस्ताऽऽसीत्। पारम्पर्येण प्राप्तविद्या आगमिनः प्रयोगनिपुणा अभिनयाचार्या नाट्यशिक्षाकर्मणि नियुक्ता आसन्। चलितनाम्नोऽभिनयवस्तुतो वर्णनमत्र कृतं वर्तते। 'चलितं' 'छलितं' वा चतुष्पदयुक्तो गीतप्रबन्धः प्रतीयते। तदुक्तम्—

तदेव तच्चलितं नाम साक्षाद्यदभिधीयते।
व्यपदिश्य पुरावृत्तस्वाभिप्रायप्रकाशकम्॥

नृत्यमेतत् गेयप्रबन्धानुकूलमेव संपादनीयमासीत् । चतुष्पदप्रबन्धमाश्रित्य प्रस्तुतं 'चलितं' नाम नृत्यं दुष्प्रयोज्यमितीदं नाट्यविदां मतं कालिदासेन स्पष्टीकृतम् । ईदृशा नृत्यानुकूलगेयप्रबन्धाः कालिदासस्य सम्मुखमासन्निति स्पष्टं प्रतीयते निम्नवाक्यात्—

'देव शर्मिष्ठायाः कृतिर्लयमध्या चतुष्पदा । तस्याश्चतुर्थवस्तुकं प्रयोग-मेकमनाः श्रोतुमर्हति देवः ।'

अत्र शृङ्गाररसत्वात् मध्यलयस्य प्रयोगः । शृङ्गारहास्यरसनिष्पत्तौ मध्यलयः प्रयोक्तव्य इत्यत्र नाट्यशास्त्रसंकेतः कालिदासेन स्वीकृतः । तथा चोक्तं नाट्य-शास्त्रे—'तत्र हास्यशृङ्गारयोर्मध्यलयः करुणे विलंबित इति ।'

भरताचार्यस्य संगीतविषयकमुत्तमर्णत्वं महाकविना शिरसा धृतमेव। तथाहि—

मुनिना भरतेन यः प्रयोगो भवतीष्वष्टरसाश्रयो निबद्धः ।
ललिताभिनयं तमद्य भर्ता मरुतां द्रष्टुमनाः सलोकपालः ।।

(विक्रमो० २.१७)

लयतत्त्वस्य महत्त्वं सर्वातिशायि संगीतशास्त्रे । लयो नाम तालकला-साम्यम् । लयस्त्रिविधः—द्रुतो मध्यो विलम्बितश्च । विशिष्टतालानामन्तराले यः कालः समीभूतो विद्यते स एव 'लय' इतीरितः । लयबद्धनृत्यप्रयोगस्य वर्णनं कालिदासमुखेन श्रूयताम्—

अङ्गैरन्तर्निहितवचनैः सूचितः सम्यगर्थः
पादन्यासो लयमनुगतस्तन्मयत्वं रसेषु ।
शाखायोनिर्मृदुरभिनयस्तद्विकल्पानुवृत्तौ
भावो भावं नुदति विषयाद्रागबन्धः स एव ।। (माल० २.८)

उपरितनाद्विवरणात् स्पष्टोऽयं निष्कर्षो यत् कालिदासस्य संगीतविषयकं ज्ञानं न केवलं रसिकसंसर्गजन्यम् साधारणं रसिकत्वरूपमपि तु संगीतकलाभ्यास-प्रसूतमेव । संगीतशास्त्रस्य मर्मज्ञत्वमिदमेव प्रमाणयति यत् संगीतशास्त्रे संगीत-प्रयोगे च तस्य गतिरप्रतिहता ।

---

# संस्कृतपत्रकारिता

## ( १६३०-१६३५ )

रामगोपालः मिश्रः

**श्रीपीयूषपत्रिका—**

गीर्वाणवाग्लता एषा श्रीपीयूषपत्रिका लेखादिजालपीयूषसेचनैः १६-३१ ई० तमे खिस्ते अंकुरिता पश्चाच्च विकसिता पुष्पिता च। पञ्चोलीत्युपाह्वहीरालालशास्त्री, ओङ्कारात्मजहरिशङ्करशास्त्री च सम्पादकौ आस्ताम्। गुजरातप्रदेशात् प्रकाशितेयं पत्रिका 'श्रीपीयूषपत्रिकाकार्यालय, नडीयाद्' इति स्थानाल्लभ्याऽऽसीत्। मासिकीयं पत्रिका आसीत्। पत्रिकायामस्यां वेदवेदाङ्गमीमांसा-न्यायसांख्ययोगादिषूपलभ्यमाना ग्रन्था एव क्रमशो मुद्राप्य प्रकाशिताः। तत्तद्विषयविवेचनपराः प्राचीनविद्वच्चरितपराश्च लेखाः प्रकाश्यन्ते स्म। इदमेवासीत्पत्रिकायाः प्रकाशनस्योद्देश्यम्। पत्रिकायां हिन्दीभाषानिबद्धाः निबन्धा अपि प्रकाशिताः। यथा निगदितं सम्पादकसंघेन "तथाप्यत्र संस्कृतभाषाज्ञानविधुराणामपि ज्ञानाय राष्ट्रभाषायामपि प्रकाश्यमिति विचक्षणैः संसूचिते राष्ट्रभाषाया अपि कृतः सन्निवेशः। परमत्र राष्ट्रभाषायामपि दार्शनिका एव लेखाः प्रकाशतामर्हन्ति, न तु काचिदपि लौकिकी चर्चा।"[१]

पत्रिकेयं सचित्रा आसीत् वसन्तरामशास्त्रिमहाभागानां कृपया बहूनि चित्राणि प्रकाशितानि। प्रथमं तावत् प्रथमपृष्ट एव पीयूषवर्षिणो नटवरवपुषोमुरलीधरस्य चित्रं द्वितीये राधामाधवयोदर्पणदर्शनमतीवसुन्दरं चित्रमवलोक्य कस्य चेतसि पत्रिकायाः विषये समादरो न भविष्यति? मनोहराणां विविधरङ्गयुतानां चित्राणां मुद्रणं पत्रिकाया महत्त्वपूर्णमाकर्षणं अभवत्।

१—श्री पीयूषपत्रिका १०१।

सचित्रा श्रीमद्गोपालाष्टपदी प्रकाशिता। यावदेवश्लोकास्तावदेव श्लोक-सम्बन्धिचित्राणि च। यथा यमुनातोयविहारः

रञ्जितमञ्जुलकञ्जसहोदरपदयुगलेन समारूढं
कल्पद्रुमडम्बरहरचारुकदम्बं शाखाशतगूढम्।
तोयनिमग्नविलासवतीजनपटमिषमानसलुण्ठाकं
मन्दस्मितविद्योतं प्रणमत गोपालं जगतीपालम्॥

वस्तुतः तरुणपारिजात-लतेवेयं श्रीपीयूषपत्रिकाऽऽसीद्। लेखाः नितरां समीचीनाः हृदयङ्गमाश्चैव प्रकाश्यन्ते स्म। पारमार्थिक-तत्त्वजिज्ञासूनां पत्रिकेयमवश्यमेवावलोकनीया। वैदिको मार्गः सरलसंस्कृतभाषायां प्रतिपादितः। वैदिक-मार्गोऽतिकठिनतीक्ष्णकण्टकावृत इति लोकैर्मन्यमानापवादः पीयूषबिन्दून् पाययित्वा दूरीकृतः पत्रिकयानया। भाषाऽतीव मधुरा अलङ्कारभूषिता च। यथा—

"सम्प्रति रक्तबीजायितेऽपि बौद्धजैनयवनाङ्गलीयैर्विविधोपायैर्विध्वस्तसमस्तशरीराऽपि सुरभारती वाग्देवी, स्वीयाप्रतिहतप्रतिभया, जर्मन्यमेरिकाफ्रान्सब्रिटेन-प्रभृतीन्नानाकर्मकुशलान्देशानपि पण्यक्रीतानिव प्रेरयन्ती, प्रबुद्धबुद्धिरिवतर्के सविशेषशेमुषीकेव वैशेषिके, सङ्ख्यतीव साङ्ख्ये, रञ्जितलोकेव साहित्ये, प्राप्तप्रतिष्ठेव भाट्टभास्करे, अनल्पविकल्पेव कल्पे, शिक्षाक्षमेव शिक्षायाम्, अकृतापशब्देव शब्दशास्त्रे, अभियुक्तेव नैरुक्ते, सज्जेव ज्योतिषि, तत्त्ववेदिकेव वेदान्ते मृतभाषात्वेन प्रोच्यमानापि, विविधवृजिनतापोपतप्यमानाप्याययन्ती पीयूषवर्षिभिरतिललितपदविन्यासैः साक्षान्मूर्तिमती सुधासुन्दरीव, तिरस्कुर्वती सकलान्यभाषासौष्ठवम्,..................मञ्जुलध्वनिना गीतिगौरवेव विमोहयन्ती...........निखिलास्वपि भारतीयभाषासु जीवनमर्पयन्ती सार्वभौमेव किल जागर्ति जगति।"[१]

अनिरुद्धाचार्य-हरिशर्म-हीरालाल-वासुदेवशर्म-गिरिधरशर्म - मधुसूदनभट्ट-गोपीकृष्णरत्नाकर-हरिभाऊशास्त्री-रामकृष्णभट्ट-रणछोड़लोल-चिन्नस्वामी-राम-

१—पीयूषपत्रिका १०१।

स्वामिशर्म-अमृतलालशास्त्रि-मथुरानाथशास्त्रि-लक्ष्मीराम-भट्टाभिरामशास्त्रि-हरिकृष्णशास्त्रि-हरिरायचरण-मधुसूदन-केशवशास्त्रि-गणपतिरामशर्म-श्रीपरागादीनां विद्वद्वराणां तूलिकया पवित्रितेयं पत्रिका। निबन्धानां गाम्भीर्यं दर्शनीयम्। विषयप्रतिपादनशैल्यपि सुष्ठुतरा। कतिपयशोधनिबन्धानामपि प्रकाशनमभवत्। अणुभाष्यसहितं ब्रह्मसूत्रं देवयाज्ञिकभाष्योपेतं कात्यायनश्रौतसूत्रं संस्कृतटीकायुतं सूर्यशतकं क्रमशः प्रथमाङ्कात् प्रकाशितानि। हिन्दीभाषायां वेदान्ततात्पर्यनिर्णय-प्रमेयरत्नार्णवौ ग्रन्थौ मुद्रितौ। समस्या अपि प्रकाशिताः। भाषाभूषाविकृतिः - भागवतविजयः - भट्टोद्भटः-धर्मसमाजः - सर्वज्ञजीवविवेचना-शाण्डिल्योक्तं भक्तितत्त्वम्-पातञ्जलदर्शने मानसशास्त्रम्-व्याकरणस्य दर्शन-शास्त्रत्वम्-इत्यादयः शोधनिबन्धाः प्रसिद्धाः।

विशेषाङ्का अपि प्रकाशिताः। 'श्रीपीयूषपत्रिका'— विशेषाङ्कद्वयं प्रथमे वर्षे एव प्रकाशितम्। प्रथमे दर्शनाङ्क-विशेषाङ्के दार्शनिकतत्त्वानां विवेचना युक्तियुता। शताधिकपृष्ठात्मको बहुभिर्बहुरङ्गैश्चित्रैः शोभितः प्रशंसनीयोऽयमङ्कः। कवितानां प्रकाशनमल्पतरमेवाभवत्। गद्यरूपेष्वधिकतर आदरो दर्शितः।

दार्शनिकतत्त्वविवेचनपरा पत्रिकेयं कथं कथमपि प्रथमं वर्षं व्यतीत्य यदा द्वितीय वर्षे पदमादधात् तदा कालकुठारेण ताडिता[१]। मुद्रणसौष्ठवेन बहुरङ्ग-चित्रैश्च समलङ्कृतेयं पीयूषप्रवर्षिणी श्रीपीयूषपत्रिकेयं नितान्तमाकर्षत्स्वान्तानि संस्कृतसेविनामिति नास्ति संशयलेशोऽत्र। पत्रिकायामस्यामनेकान् विषयान-वलम्ब्य विभागयोजनाऽऽसीद् तदनुसरणमप्यभवत्।

गैर्वाणीं वाणीमाश्रित्य प्रतिमासं प्रकाश्यमानायाः पत्रिकाया वार्षिकं मूल्यं रूपकत्रयं, द्वात्रिंशत् पृष्ठाः, त्रुटिरहितं मुद्रणं चासीत्। पत्रिकायां कदापि सामान्यविषयाणां चर्चा न कृता। तात्कालिकेतिवृत्तानां तु का कथा, तथापि पत्रिकायां कतिपयग्रन्थानां प्रकाशनं महत्त्वपूर्णं प्रतिभाति। संस्कृतसाहित्य-

१—मया केवलं द्वितीयवर्षस्य द्वितीयाङ्कपर्यन्तं दृष्टेयं पत्रिका।

सरसि समुद्भूतानि काव्य-नाटक-चम्पूसरसिजानि नैव समाहृतानि। 'यो वै भूमा तदमृतमिति प्रत्यङ्कमुद्घोष्य भक्तिमार्गमेवानयावलम्बिता। अयं श्लोकः सर्वेष्वङ्केषु दृश्यते।

'कालदावानलज्वालावलीढान् सज्जनान् सदा।
शिशिरीकुरुतात् सर्वान् सैषा पीयूषपत्रिका॥'

**भारतसुधा—**

१६३२ तमे खिस्ते पुण्यपत्तनस्थ—भारतसुधापाठशालाधिकारिभिः प्रकाशिता द्वैमासिकी संस्कृतपत्रिका 'भारतसुधा' नाम्नी। वार्षिकमूल्यमासीत्साधं रुप्यकद्वयम्। प्रत्यङ्कमष्टाणकमिति। महामहोपाध्यायः पं० वासुदेवशास्त्री अभ्यंकरमहोदयः वेदान्तवागीशः पं० श्रीधरशास्त्री—डा० वासुदेव गोपाल पराञ्जपे पं० शंकरवामनः दाण्डेकरः श्री पुरुषोत्तमगणेशः शास्त्री–श्री शैलजि गोविन्दः कानडे इत्येते प्रख्यातविद्वांसो 'भारतसुधा'—पत्रिकायाः सम्पादकीयं पदमलमकुर्वन्। भारतसुधासंस्कृतपाठशाला, कसबा १४०१ पुण्यपत्तनात्प्रका-ऽऽसीदियं पत्रिका।

'महाजनो येन गतः स पन्था इति न्यायेन वयं भारतसंस्कृतिकल्पद्रुमस्य धर्मशास्त्रकलाप्रभृतिशाखानां सञ्जीवनार्थं यथामति प्रयतामहे' इत्यादि दुद्देश्यम्[1]। भारतसुधापत्रिकायाः नियमावल्यां लिखितं यदस्यां पत्रिकायां प्रच-लितराजशास्त्रविषयका लेखा नैव प्रकाश्येरन्। धर्मशास्त्र-अध्यात्मशास्त्र-कलाविषयकास्तथा चरित्रविषयकाः प्रबन्धाः काव्यानि च प्रकाश्येरन्। कदा पत्रिकेयमस्तंगतेत्यप्यविदितम्। आदर्शाङ्कं प्रकाश्य विरता, प्रकाशनात् विरतेति सन्देहः। कारणं तावदिदमस्ति यन्मया केवलमादर्शाङ्को दृष्टः। अतः प्रार्थयामहे पत्रिकाविषयेऽधिकं ज्ञातुम्।

श्रीः १६३२ तमे खिस्ते भूस्वर्गतः प्रकाशितेयं 'श्री'—नाम्नी पत्रिका श्रियं धारयन्ती विबुधजनं तोषयन्ती मृतभाषेति विवादं खण्डयन्ती दुष्टान् म...

1—भारतसुधा-आदर्शाङ्कः

यन्ती संस्कृतवाङ्मयं पोषयन्ती असंस्कृतज्ञानपि लोभयन्तीयं पत्रिका त्रैमासिक्यासीत्। पत्रिकायामस्यां कश्मीर-प्रदेशस्थ-श्रीनगरसंस्कृतसाहित्यपरिषदः त्रैमासिकं विवरणमपि प्रकाश्यते स्म। सम्पादकपदे पण्डितनित्यानन्दशास्त्रिमहाभागा आसन्। सञ्चालकः उपसम्पादकश्च पण्डितकुलभूषण आसीत्। श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिकायां श्रीपत्रिकाविषये प्रकटीकृतमित्थम् :—

"श्रीः—एतन्नाम्नी त्रैमासिकी पत्रिका श्रीनगरतः चैत्राषाढाश्विनपौषमासेषु वहिरात्मानमाविष्करोति। अस्याश्च सम्पादकौ पं० नित्यानन्दशास्त्री, पं० कुलभूषणश्च। अत्र च पत्रिकायां महाराणाप्रतापः पिता धर्मः पिता कामः, भोटदेशे बौद्धधर्म इत्यादय अनुपमा विषयाः सरसाश्च कविताः सरलवाण्या प्रकाश्यन्ते"[१]।

आषाढमासे श्रीपत्रिकायाः प्रथमोऽङ्कः प्रादुरभूत्। वार्षिकमूल्यं सपादरूप्यकम्। स्वल्पमूल्येनाऽपि पत्रिकायाः समादरो नाऽभवत्। वस्तुतः संस्कृतभाषां प्रति सामाजिकी सम्भावना नासीत् सन्तोषप्रदा। ग्राहकादीनां सहायकानां संख्या न प्रभूततराऽभवदितीतिहासावलोकनेन ज्ञायते। कथं कथमपि शतसंख्यकाः ग्राहकाः आसन्। कापि पत्रिका एतावन्मात्रग्राहकानङ्गीकृत्य प्रकाशयितुमक्षमा तथापि सम्पादकमहाशयस्योत्साहेन पत्रिकेयं पञ्चदशवर्षपर्यन्तं प्रकाशिता। जना ग्राहकत्वमङ्गीकृत्यापि समये न मूल्यं प्रेरयन्ति सूचनाप्रदानेन कथयन्ति 'न याचे तव पत्रिकाम्। आगामिमासतः मा प्रेषयः। बहवः ग्राहकास्तु कारणमिदं समुल्लिख्य ग्राहकत्वं त्यजन्ति यत्तव पत्रिकायां रुचिकरो विषयो न प्रकाश्यते, इति नैराश्यपदं प्रबन्धकानाम्। तथापि त्रिंशत्पृष्ठात्मिकेयं पत्रिका प्रणयिजनहृदयहारिणी बाह्यतोऽपि मनोहारिणी बहुविषयशालिनी गम्भीरविषयविवेचनपरा वेदस्मृतिधर्मेतिहासविषयावलम्बिनी प्रचलिता।

---

१—श्रीमन्महाराजसंस्कृतपाठशालापत्रिका ११·१

२

'यद्यपि गूढपाण्डित्याभावात् श्रियः पृष्ठेषु नानाविधाः बाहुल्येन प्रकाशने ऽक्षमा वयमिति तथापि यथाशक्ति यथासम्भवं वेदस्मृतिपुराणेतिहासरूपा लेख प्रकाशयिष्यन्ते'[१] इति सम्पादकनिवेदनम् ।

स्वामिवेदान्ततीर्थ—पं० नारायणदेव ( लाहौर ) पं० विश्वेदेव-शर्मा ( श्रीनगर ) धर्मदेव ( वेगंलौर ) गोविन्दाराजानक ( श्रीनगर )—नरदेव शास्त्री—विष्णुमित्र—मदनमोहन (अमृतसर)—प्रियव्रतवाचस्पति—रमाना शास्त्रि—विष्णुमित्र शुक्ल (कुरुक्षेत्र)—प्रेमनाथ (श्रीनगर) इत्यादीनां कवि लेखकानां रचनाः प्रकाशिताः पत्रिकायाम् । धार्मिकपत्रिकायां वेदविषये विभ्र माणां निरसनं दिग्दर्शनं तात्त्विकसमालोचनं प्रकाशितानि । कतिपयाङ्के महात्मगान्धिविषयेऽपि निबन्धाः प्रकाशिताः[२] । तात्कालीनपरिवर्तनशील परिस्थितीनामपि परिज्ञानं भवति स्म पत्रिकाद्वारेण । भूस्वर्गतः प्रचरन्ती पत्रिका भूस्वर्गवद्रमणीयाऽवलोकनीया चासीत् ।

## अच्युतम्—

१६३३ ई० तमे खिस्ते वाराणसीतः अच्युत-नामकं पत्रं प्रकाशितम् । पं चण्डीप्रसादशुक्लोऽस्य पत्रस्य सम्पादक आसीत् । गोयनका-संस्कृत-विद्यालय प्रकाशनस्थानं, वार्षिकमूल्यं षट्रूप्यकाणि चास्ताम् । दार्शनिकनिबन्धानां प्राधान्यमभूत् । हिन्दीभाषासंयुक्ते पत्रेऽस्मिन् शाङ्करभाष्यानुवादः प्रकाश मानीताः ।

## अमरभारती—

१६३४ ई० तमे खिस्ते 'गवर्मेन्टसंस्कृतकालेजमुखपत्रिका' रूपेण वारा णसीतः 'अमरभारती' नाम संस्कृतमासिकपत्रिका प्रकाशिता । नारायणशास्त्रि खिस्ते महोदयानां महता प्रयासेन पत्रिकेयं कथं कथमपि त्रिवर्षं यावत्प्रकाशिता नारायणशास्त्रिमहोदयानां मनसि संस्कृतभाषां प्रति प्रगाढानुरागदर्शनात्

१—श्रीः १·१

२—श्रीः २·१

तात्त्विकविवेचनपद्धतिप्रदर्शनाय सरस्वत्यागारपरिपूरणाय तीव्रतमाकांक्षा वरीवर्ति। विदुषां सहयोगेन पत्रिकेयं विविध-बुधजनहृदयमालिकेवासीत्।

अमरभारतीपत्रिकाया वार्षिकमूल्यं रूप्यकत्रयमासीत्। पत्रिकायामस्यां गम्भीरनिबन्धाः हास्यप्रदाः लेखाः सरसाः कविताः समस्यापूर्त्यादयः सततं प्रकाश्यन्ते स्म। सम्पादकीयलेखेषु शास्त्रसम्मतमतानां प्रतिपादनमतीव मनोरमम्। महामहोपाध्यायनारायणशास्त्रिखिस्तेमहाभागस्य सम्पादकत्वे प्रकाशितेयं पत्रिका सारस्वतीसुषमा इवासीत्। प्रथमाङ्के नारायणशास्त्रिमहोदयेन संस्कृतपत्राणां विषये स्वविचारं प्रकटय्य यदन्ते लिखितं तत्तु सत्यमेव—

"एतावता गीर्वाणगीर्निबद्धपत्रिकाक्षेत्रं दुरवस्थापरामृष्टमेवास्ति सम्प्रतीत्यत्र न केषामपि विप्रतिपत्तिः। तत्रापि प्राचीनादर्शपरिपाटीसदाचारादिप्रदर्शकनिबन्धविभूषितं विविधशास्त्रीयगम्भीरतत्त्वालोचनानुप्राणितं कमनीयनिरवद्यगद्यपद्यसमुद्भासितं समस्यापूर्तिप्रकाशनैर्बहुविधकविजनोत्साहसन्धुक्षणसमर्थं संस्कृतमासिकपत्रमद्यत्वे दुःखास्पदमेवेति खिद्यमानमानसानां सौभाग्येन सत्यलोकादिव श्रीमत्परमहंसपरिव्राजकाचार्य१०८ श्रीसत्यध्यानतीर्थस्वामिपादानुग्रहादवतीर्णेयममरभारती। सर्वस्यापि वाङ्मयस्य मातृभूताऽसौ सर्वत्रैव समदृष्टिरेवास्ति"[१]। इत्यनेन समुद्घोषेण ज्ञायते यत्पत्रिकायाः किमासीदुद्देश्यम्। वस्तुतः पत्रिकायां बहुविधं प्रकाशितम्।

एषा मासिकी विचित्रा चित्रकाव्यादिमयी संस्कृतपत्रिका भाषासौष्ठवेनापि प्रख्याता। अस्याः परिचालकसमितौ परमहंसपरिव्राजकाचार्याः सत्यध्यानतीर्थस्वामिचरणाः संरक्षकाः, महामहोपाध्याय श्रीगोपीनाथकविराज एम० ए० महाशयाः सञ्चालकाः, श्रीदामोदरशास्त्रिपादाः निरीक्षकाः, पण्डितशिरोमणयः बरखेडकरनरसिंहाचार्याः—व्याकरणाचार्यनेनेगोपालशास्त्रिणः तथा साहित्याचार्यसाहित्यवारिधि-खिस्ते श्रीनारायणशास्त्रिणः सम्पादका आसन्।

---

१. अमरभारती १।१–२; पृ० ३५

पत्रिकायाः मूल्यं रूप्यत्रयमभूत् । मुद्रणं त्रुटिरहितं सुन्दरञ्चासीत् । प्राप्तिस्थानम्—अमरभारतीकार्यालयः, २०।११ घासीटोला, बनारस आसीत् । पत्रिकाविषये पद्यवाणीपत्रिकायामेवं लिखितम्—

'अस्यां पत्रिकायां साहित्यदर्शनादिविषयकाः प्रौढनिबन्धाः विचित्राणि चित्रकाव्यानि समस्यापूर्तयः प्रहेलिकादयश्च 'संस्कृतपद्यवाणी'रीत्या प्रदृश्यन्ते । ईदृशी पत्रिका नैवापरा समुपलभ्यते । विशिष्टानां विपश्चितां लेखसम्भारेणोपस्कृता खल्वियं पत्रिका संस्कृतप्रियपण्डितसमाजे स्वल्पेनैव कालेन महतीं प्रतिष्ठां गतवतीति" ।[१]

चत्वारिंशत्पृष्टयुतेयं पत्रिका प्रतिपौर्णमास्यां प्रकाश्यते स्म । विदुषां सच्चरितमपि प्राकाश्यत । 'अत्र व्याकरणन्यायसाङ्ख्ययोगधर्मशास्त्रपूर्वोत्तरमीमांसादिविषयका अभिनवा रहस्यगवेषणापूर्णाः प्रबन्धाः'[२] प्रकाश्यन्ते स्म ।

म० म० लक्ष्मणशास्त्रितैलङ्ग—भालचन्द्र शास्त्रि—म० म० दामोदरशास्त्रि (काशी) जगन्नाथ शास्त्रि (होशङ्गाबाद) विठ्ठलनाथशास्त्रि (उदयपुर) माधव शास्त्रि (लाहौर) लक्ष्मणमिश्र ( नवानी ) सदाशिवशास्त्रि (रींवा) अनन्तराम शास्त्रि (वेताल) श्रीरेवणसिद्ध (मैसूर)—नयराजपन्त (नेपाल) विनायकशास्त्रि ( इन्दौर )—वैद्यनाथशर्म—हरिशङ्कर – दयारामशास्त्रि — रामचन्द्रमिश्र—गोपीकृष्ण—नारायणशास्त्रि आठिल्ये—गिरिधरशर्म—केशवाचार्य ( बागलकोट)—वामनाचार्य ( वदामी )—रामाचार्य ( विजापुर )—सत्यवीराचार्य—बालशास्त्रि—श्रीनिवासाचार्य बुलि ( वेलगाँव )—इत्यादीनां दिगन्तविश्रान्तकीर्तीनां पण्डितप्रवराणां समस्यापूर्तयः प्रकाशिताः ।

म० म० गोपीनाथकविराज—डा० मङ्गलदेवशास्त्रि—नारायणशास्त्रि खिस्ते—जगन्नाथशास्त्रि—अनन्तशास्त्रि फड़के—नरसिंहाचार्य वरखेडकर—महादेवशास्त्रि—गोपालशास्त्रि नेने—म० म० लक्ष्मणशास्त्रि तैलङ्ग—दीनानाथ शर्म सारस्वत—गणेशकवि—सोमनाथ—रामचन्द्र—सतीशचन्द्र

१. संस्कृतपद्यवाणी १.४

२. अमरभारती १।१

भट्टाचार्य—बटुकनाथशास्त्रि खिस्ते—डा० गंगानाथ झा—बदरीनाथशास्त्रि—मथुरानाथशास्त्रि—शंकरचैतन्यभारती—सूर्यनारायणशुक्ल—कृष्णशंकरशर्म—चन्द्रावतीदेवी—भैरवनाथ चालिसे—प्रभृतयः प्रधानलेखका आसन्।

विश्रुतविदुषां परिपक्वलेखनीनिःसृतं विविधं वाङ्मयं प्रकाशितं पत्रिकायाम्। उत्कृष्टकथनिकाप्रकाशनेन बहुभिः समादृता। पं० जगन्नाथ होशिङ्गस्य—'कमलिनी' प्रकाशिता। भाषात्र अतीव सरला प्रयुक्ता, शैली च प्रभाववती। सामाजिकदशाचित्रणप्रधानेयं कथा श्रेष्ठा अस्ति। 'को नाम पाकाभिमुखस्य जन्तोर्द्वाराणि दैवस्य पिधातुमीष्टे' इत्युद्दिश्य बटुकनाथ शास्त्रिखिस्तेमहोदयस्य 'वासन्ती', विश्वनाथ शास्त्रिणो 'युवतिर्वा व्याघ्रो वा' बहुशः प्रशंसिते। अलंकारचमत्कारत्वमुपमाप्रियत्वं विश्वनाथशास्त्रिणः प्रख्याते। यथा—

'तदा सा शरत्पूर्णिमाज्योत्स्नेव, वासन्तीपुष्पशोभेव, दर्शकहृदयानन्ददायिनी, तारुण्यतरोर्नवा वल्लरी, लावण्यवारांनिधेर्लहरिका सर्वोत्कर्षेणाराजत।'

तथैव पं० भैरवनाथचालिसेमहाभागस्य 'इन्दिरा', नारायणखिस्तेमहोदयस्य 'प्रणयपिपासा' इत्यादि कथानिकाः प्रकाशिताः।

कतिपयरचनासु पाश्चात्यसम्राजां विशदवर्णनं दृश्यते तत्तु परतन्त्रतां द्योतयति। शोकोद्गाराणामपि स्थानं आसीत्। वाद-विवादानां चर्चा प्रचरिता। हास्यविषयकाणां निबन्धानां न्यूनत्वं नासीत्।

यथा—

'कविः—( सम्पादकं प्रति ) मम कविता किमर्थं न प्रकाश्यते। सा खलु मम प्राण इव वर्तते!

सम्पादकः—( सस्मितं ) परेषां प्राणहरणं वयं न कुर्मः, अतः सा कविता भवदन्तिकं सधन्यवादं परावर्त्यते।'

श्लोकोऽयं सर्वेष्वङ्केषु प्राप्यते—

'वाङ्मयैकात्मके हंसे
समासीना सिताम्बरा।

कच्छपीवादनरता
जयत्यमरभारती ॥'

**संस्कृतपद्यवाणी—**

संस्कृतपद्यप्रधाना त्रैमासिकी संस्कृतपत्रिकेयं प्रसिद्धविपश्चित्कालीपदतर्कचार्यमहाभागस्य सम्पादकत्वे ई० १६३४ तमे वर्षे '२।१ रामकृष्ण लेन कलिकातानगरीत: प्रकाशिता। गांगेयनरोत्तमशास्त्रि-रामकृष्णचक्रवर्तिविद्याभूषण एम० ए०, च सहसम्पादकौ आस्ताम्। पत्रिकायाः प्राप्तिस्थानमासीत् ११ चौधुरीलेन श्यामबाजार, कलकत्ता। अस्या वार्षिकं मूल्यं साधारणं सार्धरूप्यकं परिपोषककृते पञ्चरूप्यकाणि इत्येवं निर्दिष्टम्। प्राथमिकसम्वेदने निवेदितं—

'सन्ति यद्यप्यनेकाः संस्कृतपत्रिकाः सम्प्रत्यपि प्रचरन्त्यो भारते वर्षे, सन्ति चानेकाः संस्कृतपरिषदो याः सुरसरस्वतीमिमां विशेषेण समुन्निनयिषवः सन्तिष्ठन्ति प्रयत्नसहस्राणि, तथापि तासामशेषविधिव्यापृततया न ताभिः सम्भप्रभूततमः सुगमायाः पद्यपद्धतेरपि समुत्कर्षः, दूर एव तु कथा चित्रकाव्यप्रहेलिका समस्याश्लोकांशपूरणादीनाम्। अतः सम्प्रयोजनात्र तादृशी काचिद् गीर्वाणवाणीप्रतीका, या निरन्तरायं प्राधान्येन पद्योन्नतिपरायणा पद्यप्रचुरा नितरामलं कृत्यमार्गे स्वशक्तिं विनियोजयितुम्। इत एव कारणात् पूर्वं कतिपयवर्षेभ्यः कलिकातामहानगर्यां कैश्चन प्रवर्तिताभूत् संस्कृतपद्यगोष्ठी नाम काचित् संस्कृतपद्यसाहित्यपरिषत् तदङ्गभूता संस्कृतपद्यमात्रमयी संस्कृतपत्रिका च। परं स्वल्पमात्रेणैव कालेन कारणान्तरैः प्रतिरुद्धकृत्या तद्वयोनिधनं समाश्रित्य स्मरणीयदशां विषादं सुमहान्तमुददीपयत् तदीयबान्धवानाम्। सम्प्रति पुनस्तस्या एव लक्ष्यभूतां समभिलक्ष्य प्राचीनतमसंस्कृतसाहित्यविभूतिं सम्बलं मत्वा केवलं विज्ञानमयकोषसार्वभौमस्य सृष्टिस्थितिप्रलयकारणस्य भगवतो भूतपतेः करुणाकरावलम्बं संस्कृतपद्यप्रधानां नावधीरितगद्याभिमानां संस्कृतपद्यवाणीं नाम त्रैमासिकपत्रीं प्रकाशयितुमिच्छामः।'[१]

---

१—संस्कृतपद्यवाणी १०१. पृष्ठ १३–१४.।

तृतीयवर्षस्य प्रारम्भ एव पत्रीयं प्रकाशनाद्विरता। अर्वाचीनसंस्कृत-वाङ्मयप्रकाशनार्थं बद्धपरिकरा पत्रिकेयं विशेषतः चित्रकाव्यप्रहेलिका-बिन्दु-मतीत्यादीना प्रकाशनं कृतवती। पद्मबन्धश्लोकस्तावत्—

'देवि याचे पदे मोदादामोदे मुञ्च भावदे।
देवभाग्यप्रदे देवं वन्दे देव्या त्वयाविदे॥'

× × × ×

भासतां दीप्तभावेन
नवे भावे मनोविभा।
भाविनोऽप्यस्यभासा सा
साप्ताभा द्योततां सभा॥

× × × ×

विविधयमकोपरचिता माधवीप्रकृतिविषये—

सरोजराजराजिता पराजिताऽसिताम्बरा।
वराङ्गनाऽङ्गशोभिनी सुशोभिनी रविप्रभा॥
पदागमान्मनोरमा रमाविलासकोमला।
मलापहारसुन्दरी दरीमुखस्य वापिका॥

'नित्यं दीने दयां कुरु' इति पादस्याद्यान्ताक्षरयोः सन्निवेशः—

निदाघलोपे जलदाधिपत्यं
दीर्घो विषादः प्रियसङ्गहाने।
दशाविपर्यासमिमं धरायां
कुलं घनानां व्यततोदचारु॥

इत्थं सचित्रचित्रश्लोकानां प्रकाशनं क्रियते स्म। हिमालयवर्णने पञ्चा-ननतर्करत्नभट्टाचार्यमहोदयस्य भावात्मकं चित्रं—

'यस्मिंश्चलन्ती क्वचिदाशु वक्रं
क्वचिद्भ्रमन्ती परिवर्त्तिताङ्गी।

कच्छपीवादनरता
जयत्यमरभारती ॥'

**संस्कृतपद्यवाणी—**

संस्कृतपद्यप्रधाना त्रैमासिकी संस्कृतपत्रिकेयं प्रसिद्धविपश्चित्कालीपद... चार्यमहाभागस्य सम्पादकत्वे ई० १६३४ तमे वर्षे '२।१ रामकृष्ण लेन ... कातानगरीतः प्रकाशिता। गांगेयनरोत्तमशास्त्रि-रामकृष्णचक्रवर्तिविद्याभू... एम० ए०, च सहसम्पादकौ आस्ताम्। पत्रिकायाः प्राप्तिस्थानमासीत्... चौधुरीलेन श्यामबाजार, कलकत्ता। अस्या वार्षिकं मूल्यं साधार... सार्धरूप्यकं परिपोषककृते पञ्चरूप्यकाणि इत्येवं निर्दिष्टम्। प्राथमिक... वेदने निवेदितं—

'सन्ति यद्यप्यनेकाः संस्कृतपत्रिकाः सम्प्रत्यपि प्रचरन्त्यो भारते वर्षे, ... चानेकाः संस्कृतपरिषदो याः सुरसरस्वतीमिमां विशेषेण समुन्निनयिषवः ... तिष्ठन्ति प्रयत्नसहस्राणि, तथापि तासामशेषविधिव्यापृततया न ताभिः स... प्रभूततमः सुगमायाः पद्यपद्धतेरपि समुत्कर्षः, दूर एव तु कथा चित्र... प्रहेलिका समस्याश्लोकांशपूरणादीनाम्। अतः सम्प्रयोजनात्र तादृशी ... गीर्वाणवाणीप्रतीका, या निरन्तरायं प्राधान्येन पद्योन्नतिपरायणा पद्यप्रचु... नितरामलं कृत्यमार्गे स्वशक्तिं विनियोजयितुम्। इत एव कारणात् पू... कतिपयवर्षेभ्यः कलिकातामहानगर्यां कैश्चन प्रवर्तिताभूत् संस्कृतपद्यगोष्ठी ... काचित् संस्कृतपद्यसाहित्यपरिषत् तदङ्गभूता संस्कृतपद्यमात्रमयी संस्कृतप... च। परं स्वल्पमात्रेणैव कालेन कारणान्तरैः प्रतिरुद्धकृत्या तद्वयोनि... समाश्रित्य स्मरणीयदशां विषादं सुमहान्तमुददीपयत् तदीयबान्धवान... सम्प्रति पुनस्तस्या एव लक्ष्यभूतां समभिलक्ष्य प्राचीनतमसंस्कृतसाहित्यवि... सम्बलं मत्वा केवलं विज्ञानमयकोषसार्वभौमस्य सृष्टिस्थितिप्रलयकारणस्य ... वतो भूतपतेः करुणाकरावलम्बं संस्कृतपद्यप्रधानां नावधीरितगद्याभिमानां ... पद्यवाणीं नाम त्रैमासिकपत्रीं प्रकाशयितुमिच्छामः।'[१]

१—संस्कृतपद्यवाणी १०१. पृष्ठ १३–१४.।

तृतीयवर्षस्य प्रारम्भ एव पत्रीयं प्रकाशनाद्विरता। अर्वाचीनसंस्कृत-वाङ्मयप्रकाशनार्थं बद्धपरिकरा पत्रिकेयं विशेषतः चित्रकाव्यप्रहेलिका-बिन्दु-मतीत्यादीना प्रकाशनं कृतवती। पद्मबन्धश्लोकस्तावत्—

'देवि याचे पदे मोदादामोदे मुञ्च भावदे।
देवभाग्यप्रदे देवं वन्दे देव्या त्वयाविदे॥'

× × × ×

भासतां दीप्तभावेन
नवे भावे मनोविभा।
भाविनोऽप्यस्यभासा सा
साप्ताभा द्योततां सभा॥

× × × ×

विविधयमकोपरचिता माधवीप्रकृतिविषये—

सरोजराजराजिता पराजिताऽसिताम्बरा।
वराङ्गनाऽङ्गशोभिनी सुशोभिनी रविप्रभा॥
पदागमान्मनोरमा रमाविलासकोमला।
मलापहारसुन्दरी दरीमुखस्य वापिका॥

'नित्यं दीने दयां कुरु' इति पादस्याद्यान्ताक्षरयोः सन्निवेशः—

निदाघलोपे जलदाधिपत्यं
दीर्घो विषादः प्रियसङ्गहाने।
दशाविपर्यासमिमं धरायां
कुलं घनानां व्यततोदचारु॥

इत्थं सचित्रचित्रश्लोकानां प्रकाशनं क्रियते स्म। हिमालयवर्णने पञ्चा-ननतर्करत्नभट्टाचार्यमहोदयस्य भावात्मकं चित्रं—

'यस्मिंश्चलन्ती क्वचिदाशु वक्रं
क्वचिद्भ्रमन्ती परिवर्त्तिताङ्गी।

क्वचित् स्खलन्ती च विमुक्तरावा
गंगा चिरं क्रीडति बालिकेव ॥
छत्रं तुषारं व्यजनं तुषारं
परिच्छदो यस्य पुनस्तुषारः ।
तुषारभासाम्बरसंवृतस्य
तस्याद्रिराजस्य चिरं स्मरामि ॥

गांगेय नरोत्तमशास्त्रि—रामकृष्ण चक्रवर्ति—शिवचन्द्र सार्वभौम—दक्षिणारञ्जन शास्त्रि—भवभूतिविद्यारत्न— नारायणचन्द्र—पञ्चाननतर्करत्नभट्टाचार्य—प्रमथनाथ तर्कभूषण—उपेन्द्रमोहन—कुञ्जविहारि—पुलिनविहारिदासगुप्त—म० म० लक्ष्मण शास्त्रि द्राविड़—श्रीजीवन्यायतीर्थ—म० म० कालीपदतर्काचार्य—हेमन्तकुमार—शिवकुमारशास्त्रि —जगद्बन्धुचक्रवर्ति-शशिमोहनतर्कशास्त्रि — सत्यकिंकर—सदानन्दशास्त्रि-- गुरुकुमारचक्रवर्ति-मनोरञ्जनमिश्र—अनन्तनारायण—प्रेमचन्द्र—श्रीशचन्द्र-श्रीगिरि—माधव-यदुनाथ — ताराशंकर—कालीप्रसन्न—हरिनाथ—जानकीनाथ—नरेन्द्रनाथ विद्यारत्न—इत्येतेषां महानुभावानां सरसकवितादयः सततं प्रकाश्यन्ते स्म। समस्यापूर्तिश्लोकानां चारुत्वमतीव दर्शनीयम् । वस्तुतः सुधारससंसिक्तैरक्षरैः प्रमोदधारासारैः भावैः ध्वन्यनुकूलप्रवाहैः पत्रिकायाः समादरोऽभूत् ।

पत्रिकायां प्रहेलिका बिन्दुमती च प्रकाशिते । रसान्विता भावयुक्ता गीतयः प्रकाशिताः । प्रकृतिविषयकरमणीयश्लोकानां नूतनशैल्यां रचना अतीव मनोहारिणी तत्र । हेमन्तकुमारमहाभागानां गीतयः विशेषतः उल्लेखनीयाः । यथा—

उदिता शारदशोभा भुवने ।
सलिले कमले घने गगने ॥
धवलजलदमाला ।
विलुप्तचपलाखेला ॥

विषमा वलाका स्वच्छगगने।
चातकी तृषिता नीडसदने॥
उदिता शारदशोभा भुवने।

× × × ×

कुञ्जे कुञ्जे शारदी पुष्पशोभा
पुष्पे पुष्पे भृङ्गसंघः सरङ्गः।
भृङ्गे भृङ्गे गुञ्जितं मञ्जु लास्यं
लास्ये लास्ये कामसौभाग्यसारः॥

माधवीप्रकृति—विरहिणीविलाप — मधुप्रयाणपञ्चक — निदाघप्रकृति-च्छाया—प्रियासौख्यपञ्चक—हिमालयवर्णन—वर्षाप्रकृति—शारदी—समुद्र-दर्शन—वसन्तप्रकृति—हेमन्तसुषमा—ऋतुविलास—इत्येतानि गीतकाव्यानि विशेषरमणीयानि। म० म० कालीपदतर्काचार्यस्य 'सत्यानुभवम्' नामधेयं काव्यं आशुतोषावदानञ्च प्रकाशिते। शिवशंकरशास्त्रिणः 'पतिव्रताकथा' मनोरमा। 'निदाघप्रकृतिच्छाये'ति गीतिकाव्ये विशेषरूपेण ध्वनिमाधुर्यं दर्शनीयम्—

'मधुरपयातो दक्षिणवातः कथमपि जीवति कुञ्जे।
पिककुलगीतं मधुरमतीतं नीरवमधुकरपुञ्जे॥

× × × ×

व्यपगतकुसमालङ्कृतसुषमा कोमलकतिपयपत्रा।
लतिका दयिता ताम्यति ललिता तापविशोषितगात्रा॥

× × × ×

पत्रिकायामनुवादानां सन्ततिरपि दृश्यते। वंगीयविपश्चितां खण्डकाव्यानां संस्कृतभाषायामनुवादास्तथैव रमणीयाः सञ्जाताः। यथा—

'नयने सलिलधारा, वदने कालिमा।
विलासशून्यदेहे वस्त्रे मलिनभा॥

हृदये दहनज्वाला ।
प्रबला मदनकला ॥
कलेवरे समुदित आलस्यगरिमा ।
भुवने विस्मयकारी प्रणयमहिमा ॥

विरहिणी विलापः

रम्याणि काव्य-कुसुमानि प्रकाश्य पुरातनानि काव्यकुसुमानि विस्तारितवतीयं पत्रिका । म० म० कालीपदतर्काचार्यमहोदयस्य 'आलोकतिमिरसंवाद' इत्यतीवरमणीयं सरसङ्गीतिकाव्यं सर्वप्रथममस्यामेवपत्रिकायां प्रकाशितम्। पञ्चाननतर्करत्नभट्टाचार्यस्य 'समुद्रदर्शने' गीतिकाव्ये समुद्रस्य दर्शनं भवति—

'प्रसारितानेकतरङ्गबाहु-
र्वेलासमालिङ्गनलालसोऽब्धिः ।
मत्तो दशग्रीव इव प्रधावन्
स्पृष्टैव तां शाम्यति तत्क्षणेन ॥

निबन्धकाराणां निबन्धाः प्रौढतमाः । समालोचनमपि सुष्ठुतयैव क्रियते स्म । सामान्यविषयाणां चर्चा दृश्यते यत्र तत्र । शुभाशंसनानुकूलाचरणं कृतवती पत्रिकेयम् —

'आलोकमालेव तमोनिहन्त्री
सुधेव चान्द्री विबुधैकगन्त्री ।
प्रमोदयन्ती कविमानसानि
प्रवर्द्धतां संस्कृतपद्यवाणी ॥

**संस्कृतसाप्ताहिकपत्रिका—**

पत्रिकेयं कदा प्रकाशिता इत्यस्मिन् विषय अद्यावधि न ज्ञातम्। तथापि पत्रिकायाः सूचना संस्कृतपद्यवाण्यां प्रकाशिता—इत्यनेन ज्ञायते यत्पत्रिकायाः प्रकाशनं ई० १६३४ तमे वर्षे कलिकातानगरीत एवाभवत्। यथा =

'संस्कृतसाप्ताहिकपत्रिका'

'विदितमेवेदमनेकेषां विदुषां यत् फरिदपुरप्रदेशान्तर्गत 'धुलजोड़ा'—विद्वत्सम्मेलनस्य प्रधानकार्यालयः कलिकातानगर्यामेवाभवत्। सम्प्रति श्रूयते तस्मादेका संस्कृतभाषामयी साप्ताहिकी पत्रिका प्रकाशं गमिष्यतीति, तदिदं समाकर्ण्य सुतरामानन्दिता वयं संस्कृतविद्याया नवीनोन्नतिसम्भावेन''[1] पत्रिकेयं प्रकाशिता वा न वा इत्यपि न जानीमहे। निवेदनं बहुशः कृतं तथापि नानुगृहीतं विद्वद्भिः। मोघापि याञ्चा पुनरपि क्रियते यत् पत्रपत्रिकेतिवृत्तं सूचनीयं तद्विज्ञैः।

**सूनृतवादिनी—**

आसीत् वाराणस्यां बहो कालात् पूर्वं लब्धप्रचारा 'सूनृतवादिनी' नामविद्वत्प्रिया पत्रिका साप्ताहिकी। सा हन्त ! कालेन कवलीकृता क्षीणां स्मृतिमपि नोत्पादयते'' इतीयं सूचना संस्कृतपद्यवाण्यां निबद्धा।[2] पत्रिकेयं वाराणसीतः प्रकाशिता इति त्वनिश्चितमेवास्ति। विद्यावाचस्पति-अप्पाशास्त्रिराशिवडेकर-महाभागस्यसम्पादकत्वे 'सूनृतवादिनी' नाम साप्ताहिकी पत्रिका पूर्वं कोल्हापुरतः प्रकाशितासीद्। अस्याः संक्षिप्तवर्णनं सागरिकापत्रिकायाः प्रथमवर्षस्य द्वितीयेऽङ्के कृतमेव। वाराणसीतः प्रकाशितायाः सूनृतवादिनी पत्रिकायाः विषये किमपि न जानीमो वयम्।

**देववाणी—**

'देववाणीपत्रिका ई० १९३४ तमे खिस्ते प्रकाशिता। पत्रिका तु अद्यापि मया न प्राप्ता, तथाप्यस्याः सूचना 'पद्यवाण्यां' इत्थं दृश्यते। संस्कृतपद्यवाणीपत्रिकायां 'प्राप्तपत्रिकापरिचय' इति स्तम्भे सततं संस्कृतपत्र-पत्रिकाणां परिचयाः प्रदत्ताः। अतः देववाणीं पत्रिकामवलम्ब्य सूचितं सम्पादकमहाभागेन।

देववाणीयं साप्ताहिकसन्देशवहा नवीना संस्कृतपत्रिका। अस्याः सम्पादकः—श्रीकृष्णचन्द्रस्मृतितीर्थः, पृष्ठपोषकः—कविराज—श्रीविमलानन्द-

---

१. संस्कृतपद्यवाणी १'२

२. संस्कृतपद्यवाणी १'१, पृष्ठ ४८

तर्कतीर्थः। प्राप्तिस्थानम्—३८ नं० हरिमोहनघोष लेन, वेलेघाटा, कलिकाता।

'साम्प्रतिके काले इयमेका प्रकृष्टा साप्ताहिकी संस्कृतपत्रिका नियमेन प्रतिसप्ताहं प्रचार्यमाणा दृश्यते। अस्यां सामयिकाः सन्देशाः, वङ्गीयसंस्कृत-परीक्षासमितिसम्बन्धिनो वृत्तान्ताः, विविधाः संस्कृतविद्यालयवार्ताः, स्वल्प-मात्राणि कविकाव्यादीनि, पुरातनसंस्कृतपरीक्षाप्रश्नपत्रादीनि च नियमेन प्रकाश्यन्ते। अनया पत्रिकया संस्कृतज्ञानां विदुषामवसरविनोदनान्यपि सम्प-द्यन्ते। अस्याः त्रैमासिकमूल्यमेकरूप्यकम्, षाण्मासिकमूल्यं रूप्यकद्वयम्। अस्याः पत्रिकायाः सर्वस्मिन्भारतवर्षे देशान्तरेषु च भूयांसं प्रचारमिव भाषा-सम्बन्धिनि संस्कारे समुत्कर्षे च सम्पादकपरिवृढैः सुदृढमवधानं दीयमानमभ्यर्थ-यामहे।'"[1]

**मञ्जूषा—**

ई० १९३५ तमे खिस्ते कलिकातानगरीतः डा० क्षितीशचन्द्रचटर्जी-महाभागस्य (१८९६–१९६१ ई०) सम्पादकत्वे 'मञ्जूषा' नाम मासिकी पत्रिका प्रवर्तिताऽऽसीत्। १९३७ ई० तमे वर्षे पत्रिकायाः प्रकाशनं विरतं पुनरपि पत्रिकायाः समुज्जीवनं १९४९ ई० तमे वर्षेऽभवत्। प्रारम्भत एव मञ्जूषा निखिलविषयमञ्जूषैव समधिकमञ्जुला पण्डितपुञ्जानाह्लादयन्ती प्राधा-न्येन व्याकरणविषयसम्बन्धिलेखैः प्रथमत्वमाप। अस्याः पत्रिकायाः सविस्तरं वर्णनमग्रे करिष्यामि। तथाप्यत्र किञ्चिद्वर्णनं प्रस्तूयते।

अस्याः पत्रिकायाश्चोपक्रमे प्रसिद्धविपश्चिद्-राशिवडेकर-अप्पाशर्मविद्या-वाचस्पतिमहाभागस्य 'हा धिक् दौर्भाग्यं संस्कृतभाषायाः' इत्ययं नितान्तपरि-ष्कृतो लेखः कस्य वा सहृदयस्य मनो नाधुनापि समाहरति? तेन महाभागेन लिखितम्[2]—

---

१. संस्कृतपद्यवाणी १·४

२. मञ्जूषा १०४.

"अर्वाचीनेऽपि काले कियन्तो वा नोदपद्यन्त पण्डिताः, कियन्तो वा न प्रादुरभवन् दार्शनिकाः, कति वा नोद्भवन् साहित्यशास्त्रमर्मज्ञाः, कियन्तश्च नालमकार्षुः संस्कृतभाषामेकान्ततोऽनुरागिणः पुण्यपुञ्जा इवार्यवंशस्य मूर्ता इवोत्साहाः परः कोटयः क्षितिपालाः। यैः किल संरक्षिताः संस्कृतभाषायाः प्राणाः परिवर्धिता कान्तिरुज्जृम्भिता गुणनिकराः समुज्ज्वलिता अलङ्काराः सुदूरमुत्सारितं दोषनिकुरम्बं हृदयङ्गमत्वमनुप्रापितानि रीतिजालानि मनोहरत्वमुपनीता वृत्तयो माधुर्यमनुप्रापिताश्च ध्वनयः। येषामेव च प्रसादभाजनतामुपगता मनोज्ञपदविन्यासा निखिलरसविशेषकमनीया विमलतरगुणजालहृदयहारिणी नैकविधरुचिरालङ्कारसमधिकसमुज्ज्वला प्रकृतिरमणीया नवविलासिनीव केषां न वशीकृतवती हृदयानि भगवती गैर्वाणी वाणी। कश्च वा कुसुमशरशरासारविह्वल इव कामुको रसिकः सोत्कण्ठमेव नास्वादितवान् रसमेतस्याः। नूनमवसरे तस्मिन् प्रायेणापामरं सर्वेषामपि भारतवर्षीयाणां वदनानि विहारभवनानीव समवर्तन्तैतस्याः।......आर्याः! तत् किमित्यद्यापि समासेव्यत एवौदासीन्यम्। अद्यापि किल विद्यतेऽवसरः परित्राणस्यैतस्याः। अद्यापि किल नेयं सर्वांशतो नामशेषतामनुप्राप्ता, अद्यापि खलु परिस्पन्दते श्रीमतां धमनी, अद्यापि ननु निःसरन्त्येव वदनकुहरतो निःश्वासाः, अद्यापि प्रसरति श्रीमतां वचनविषयिणी शक्तिः, किमधिकमद्यापि खलु विद्यते भवतां चेतना नाम। यदार्याः किमित्यद्यापि प्रतिरुद्धकण्ठैरिव समासेव्यते मौनमेव श्रीमद्भिः। किमिति च नानाविधेषु नात्यावश्यकेष्वपि कर्मस्वायस्यद्भिः क्षणमपि न प्रयत्यतेऽस्या अभ्युदयाय श्रीमद्भिः। अहो! तदेतदतिमहीयः खलु दुर्भाग्यं संस्कृतभाषाया यदियमार्यवंशीयेभ्योऽपि भवद्भयोऽवहेलनमाप्नोति।

"का कथा दैनिकसासाहिकादिपत्राणां मासिकपत्राण्यपि सुविरलान्येव विद्यन्त इति यत्सत्यमतिमात्रं किल लज्जामहे प्रकाशयन्त इमं वृत्तान्तम्। यानि च कथञ्चिदपि प्रादुरभूवंस्तेष्वपि प्रतिवत्सरं कियन्तिचिद्विलयमुपयान्ति, अन्यान्यपि च तदभिमुखत्वमिवापद्यन्त इति समवगच्छतः कस्य वा सचेतश्चेतो न दूयेत। कश्च वा सरलमतिर्ब्रूयान्नैतत् त्रपाकरमार्यवंश्यानामिति।........

केवलं हा धिग् दुर्भाग्यं संस्कृतभाषाया इति वदन्तः सम्प्रतीव सन्ततं तद्-जीवनायासक्लेशसहस्रं सोढुं सज्जा भविष्याम इति शिवम्।''

पत्रिकायां 'वनदेवी' नाम नाटकं फलवृक्षादीनां शाखादिभञ्जनमतीव खेदकारीति विषयमवलम्ब्य प्रकाशितम्। पत्रिकाया भाषा अतीव सरला सुसंस्कृता। द्वात्रिंशत्पृष्ठात्मिकया पत्रिकया बहूपकृतं देववाण्याः। डा० सुनीति-कुमारचटर्जीमहाभागेनेत्थं प्रशंसितेयम्—

'We have still about half-a-dozen Sanskrit Journals in India, apart from fairly frequent addresses and dissertations which are published independently. Among these Journals, the Manjusha which is probably the only one of its kind, appearing regularly month after month, has made quite a unique place of its own.

× × × ×

Dr. Chatterji had been the soul of the Journal and had been publishing the Manjusha at an enormous financial loss and personal sacrifice.''

सुन्दरविषयैरतिसुषमामयी 'मञ्जूषा'-पत्रिकेयं ई० १९४९ तमाब्दात्प्रारभ्य सततं ई० १९६१ वर्षपर्यन्तं प्रकाशिता। अस्याः वर्णनमग्रे भविष्यति।

**मधुरवाणी—**

ई० १९३५ तमे खिस्ते बेलगांवतः मासिकमधुरवाणीपत्रिकायाः प्रकाशनमारब्धम्। मधुरवाणीयं सततं मधुरया वाण्या काव्य-नाटकचम्पूकथादीन् प्रकाशयन्ती मधुरमधुरैः शब्दैः काव्य-नाटक-सूक्ति-निबन्ध-दार्शनिकविषयान् प्रतिपादयन्ती सत्यमेव स्वस्य नाम्नो याथार्थ्यं व्यधात्।

बुर्लो श्रीनिवासाचार्यमहोदयस्य संस्थापकत्वे, पं० गलगली-रामाचार्यस्य प्रधानसम्पादकत्वे तथा पं० पण्ढरीनाथाचार्य गलगलीमहाभागस्य सम्पादकत्वे प्रकाशकत्वे चेयं पत्रिका संपाद्यमाना संस्कृतसाहित्यसञ्चारे महत्साहाय्यमकरोत्।

वार्षिकं मूल्यं पञ्चरूप्यकाणि आसीत्। कदाचित् पत्रिकेयं बागलकोटतः, बेलगांवतः अपि प्रकाशिता; तथैव सम्पादकानामपि परिवर्तनमजायत।

'गीर्वाणवाणी व्यवहारोपयोगिनी कर्तव्या' इति विषयमवलम्ब्य संस्कृत-साहित्यसम्मेलने प्रदत्तानि भाषणानि मुद्रितानि। सामान्यतस्तु साधारणविषयाणां समावेशनं भवति स्म।

रामाचार्य-नीर्पाजे-रुद्रदेवत्रिपाठि–एस० बी० भीमभट्टः—पं० विद्याधर-शास्त्रि–नरहरदामोदरशास्त्रि—दामोदर उपाध्ये—गोकर्ण—सुब्रह्मण्यदीक्षित–दीनानाथ—श्रीक्षितीशचन्द्र—जग्गूकुलभूषण–सुलोचनादेवी–गणेशशास्त्रि—शेण्डेमाधवाचार्य–परमानन्दसारस्वत–शं० दा० पेशवे–क० वे० कृष्णमूर्ति शास्त्रि–क्षमाराव–पं० सरसकविराजरामानुजाचार्य–नीलकण्ठशिवाचार्य–सीता-रामशर्म–वासुदेवशास्त्रिमहाभागानां रचितप्रबन्धाः प्रकाश्यन्ते स्म।

'गोवास्वातन्त्र्यं' नामधेये रूपके काचिन्नूतना प्रणाली स्वीकृता नीर्पाजे भीमभट्टमहाभागैः। शोधनिबन्धानां प्रकाशनं प्रारब्धमनया पत्रिकया। 'कालि-दाससमये चित्रकला–दैवी मीमांसा–नामरहस्यम्–इत्यादयः प्रौढतमाः निबन्धाः प्रकाशिताः। स्व० क्षमादेव्या विरचितं 'नैषधीय-गद्यामृतं' नामोपन्यासः प्रकाशितः। प्रश्नोत्तररूपेण जग्गूकुलभूषणेन 'दशकुमारचरितं प्रकाशितम्।

पत्रिकायाः प्रकाशनं कथं कथमपि प्राचलत्। संस्कृतपत्रपत्रिकाणामेकैकवर्ष सीमातिक्रमणं नाम युगान्ते पदप्रक्षेपणमिव दरीदृश्यते। प्रथमं तावत् पत्रिका-व्ययनिर्वहणे पर्याप्ता ग्राहका एव न लभ्यन्ते, द्वितीयं अपर्याप्ता अपि ग्राहकाः न द्वितीयवर्षे मनो दधते, तृतीयं सम्पादकं प्रति विरुद्धभावं भजन्ति। प्रश्न-सरणिमवलम्ब्य इत्थं सूचितम्—

'मधुरवाणी कुतो वा नाविष्क्रियते ?

'अनानुकूल्यात्'

'किं तदनानुकूल्यम् ?'

'मुद्रणासौकर्यम्।'

'कुतस्तत् ?'

'द्रव्याभावात् ।'

द्वादशवर्षे व्यतीते सति 'मधुरवाणी' संस्कृतसाप्ताहिकपत्रिका भविष्यतीति सूचना पूर्वं प्रकाशिता परञ्च कालवशादेव त्रयोदशे वर्षे प्रारब्धे बुर्लीश्रीनिवासाचार्यमहोदयः पञ्चत्वं गतः । यथा—

"अनाथा मधुरवाणी । सम्पादकमण्डलस्य महती प्रत्याशाऽऽसीद् यत् त्रयोदशे वर्षे मधुरवाणीं साप्ताहिकीं विधाय सर्वत्र संस्कृतभाषाप्रसारेण सुरवाण्या गरीयसी परमश्रेयस्करी च सेवा विधेया । अद्य सा प्रत्याशा सपद्येव विलीना प्रियसुहृदां परलोकगमनेन विद्युदिवाकाशे ।"[1]

पत्रिकेयं द्वादशवर्षमतीत्य यदा त्रयोदशवर्षे पदमधात् तदेयं आपत्तिरागता। पूर्वमपि पत्रिकायाः प्रकाशनमनवरतगत्या नैवाभवदित्यस्मिन्विषये इत्थं चर्चा दृश्यते —'चिरान्मधुरवाणीसम्पादकानां पण्डितप्रकाण्डानां विन्दतीषु का कथा संस्कृतपत्राणां, यासां ग्राहकगणनाप्रसङ्गे कदाचित् अङ्गुष्ठतर्जनीनामपि अनामिकात्वमायाति । काश्चन पत्रिकाः शरदम्बुधराडम्बरमेव विडम्बयन्ति, अन्याश्च काश्चन चञ्चच्चञ्चला इव यदा कदाचिदेव चारु चमत्कुर्वन्ति। अपराश्च काश्चिद् दरिद्रमनोरथा इव विनाशसामग्रीसमवहिता इव उत्पद्यन्ते विलीयन्ते च ।.....एवं संस्कृतसाहित्यगगनाङ्गणे सर्वतो नैराश्यनिविडान्धकारभरिते स्थिरकान्त्या चिरशान्त्या च अचलध्रुवनक्षत्रवद्देदीप्यमाना, नैराश्यौदास्यतमस्तोमं तिरयन्ती.....मधुरवाणी सप्तसागरानिवोत्तीर्य द्वादशोत्तुङ्गशैलेन्द्रशृङ्गानुल्लङ्घ्य कथमपि अष्टमे वर्षे पदं दधाति ।"

विनोदकाव्यानामपि प्रकाशनं भवति स्म । पं० रुद्रदेवत्रिपाठिमहोदयेन चलच्चित्रगीतानामनुवादाः संस्कृतभाषायां कृताः, तथैव चलच्चित्रगीतध्वन्यनुसारेण तस्य महाभागस्य विरचितानि गीतानि प्रकाशितानि । पं० कृ० वे० कृष्णमूर्तिशास्त्रिमहोदयस्य काफीपानविडम्बनमतीवहास्यकरी रचना । अस्य

---

[1] मधुरवाणी १३।४

विदुषः 'सतीविलास'—महाकाव्यमपि सततं प्रकाशितम्। मेधाव्रताचार्यस्य "शुद्धिगंगावतारः' रमणीयोपन्यासः प्रकाशितः। स्व० श्रीनिवासाचार्यस्य 'हेमलता' नाम भावप्रधाना कथा कं न आह्लादयति ? स्वतन्त्रान्दोलनविषयमवलम्ब्य निबन्धाः प्रकाश्यन्ते स्म। नूतनविचाराः, सामयिकदशानां वर्णनमप्यभवत्। समस्यापूर्तीनां प्रकाशनं सततं क्रियते स्म। जीवनवृत्तान्ता अपि प्रकाशं लेभिरे। वस्तुतः सम्पादकमहाभागानां प्रतिज्ञेयमासीत्—'श्रुत्युक्तमार्गेण श्रद्धया च प्रयतमाने यदि देहपातः स्यात् तद् इष्टापत्तिः।'

भारतराष्ट्रध्वजः, भारतमातुः प्रशस्तिः इत्यादिकवितादयः देशं प्रति प्रगाढानुरागं द्योतयन्ति। हास्य-व्यंग्यविनोदश्लोकानां प्रकाशनेन मधुरवाणी पत्रिकेयं मधुरमधुवन्न प्रिया कस्य ? पत्रिकाविषये मञ्जूषासम्पादकः श्री क्षितीशचन्द्रमहाभागोऽपि मधुरवाणीं प्रशंसितवान्—

यास्तावद्देवभाषामय्यः पत्रिकास्तृणीकृतस्वार्थाः प्रचरन्ति भारतभूम्यां तेष्वेयमन्यतमा प्रधानतमा च मधुरवाणीत्यन्वर्थनाम्नी मासपत्रिका। अस्याश्च सम्पादकवर्यैर्महतीमपि हानिमुररीकृत्य प्राकाश्यतैषा। प्रियवाचकमहाभागाः! आसीदस्माकं बलवती प्रत्याशा यद् भारतवर्षस्य स्वाधीनतासमधिगमादनन्तरं पुनरपि प्रोड्डीना स्याद्देवभाषावैजयन्ती सर्वत्रैवाप्रतिहतम् तथापि किं पश्यामः ?"

मधुरवाणी पत्रिकायाः प्रथमं प्रकाशनं 'मधुरवाणीकार्यालयः १६१८, वेलगाँवतः गलगलीरामाचार्यस्य सम्पादकत्वे प्रारब्धम्। पश्चादियं पत्रिका पं० पण्ढरीनाथाचार्यगलगलीमहाशयस्य सम्पादकत्वे गदगतः प्रकाशिता। संकेतस्थानं मधुरवाणीकार्यालयः, गदग, जि०—धारवाड—इत्यासीत्। द्वौ सम्पादकौ गलगलीश्रीरामाचार्यः गलगलीपण्ढरीनाथाचार्यश्च लब्धप्रतिष्ठौ महाविद्वांसौ सरसकाव्यनिर्माणनिपुणौ महानिबन्धलेखकौ, समस्यापूर्तिकारौ, शुद्धविचारकौ चास्ताम्। पत्रिकेयं प्रत्याङ्गलमासे प्रथमसप्ताहे प्रकाश्यते स्म। गलगलीरामाचार्य—चुर्लीश्रीनिवासाचार्य—पं० पण्ढरीनाथाचार्य—स्वर्गीया-

मधुरवाणी १७.७

क्षमाराव—स्व० क्षितीशचन्द्रादिपण्डितानांप्रकाण्डानां रचनाभिः शोभि-पत्रिकेयमासीत् ।

पत्रिकायाः प्रमुखे पृष्ठे श्लोकोऽयं सततं प्रकाश्यते स्म—

'सुधानिष्यन्दिन्या मधुरमधुरालापकलया
खलावज्ञामूर्च्छाभरमपहरन्ती सुरगिरः ।
मनोज्ञालङ्कारा रसिकजनचेतांसि सहसा
वशीकुर्वाणेयं भुवि मधुरवाणी विजयते ॥'

तथैव—

'राधाधरमधुस्यन्दमिलिन्दाय मधुद्विषे ।
कृष्णापटकुविन्दाय गोविन्दाय नमोऽस्तु नः ॥'

——

# कतमः स्विदेव सः

जगन्नाथवेदालङ्कारः

व्योम्नो वितानेऽनुपमे सुनीले
हारित्यवत्सुन्दरकाननेषु ।
करो हि कान्तिं कृतवान्नु कस्य
विचित्रितां विच्छुरितां छविं वा ॥ १ ॥

आकाशमार्गे निभृताः समस्ताः
क्लान्ता यदा वातचयाः शयानाः ।
योऽबोधयत्तान् ननु कस्स आसीत्
आदिष्टवान् वातुमथाऽविलम्बम् ॥ २ ॥

विलीन आस्ते हृदि मानवानां
निलीन एव प्रकृतेर्गुहायाम् ।
मस्तिष्कमध्यं ह्यधितिष्ठतीति
ग्रथ्नाति चित्रां स विचारमालाम् ॥ ३ ॥

ओतः सुमानां प्रतिरूपमध्ये
प्रोतः स तेषां च सुफुल्लतायाम् ।
नक्षत्रजाले निशि काशमाने
निबध्यतेऽबद्ध इति प्रसिद्धः ॥ ४ ॥

शक्तौ सुकान्तौ च नृणां वधूनाम्
बालस्य हासे सुमनोविकासे ।
ह्रीसंयुतास्येऽपि च बालिकायाः
संलक्ष्यते तस्य विचित्रसृष्टिः ॥ ५ ॥

बृहस्पतिं कम्पयमान आदौ
अभ्रामयत् यस्य करो द्युलोके।
व्ययीकरोतीह स चातुरीं स्वाम्
आकुञ्चितुं कुन्तलकेशपाशम् ॥ ६ ॥

एतानि कार्याणि हि तस्य किं च
बिम्बानि तस्याप्यवगुण्ठनानि।
परं स कुत्रास्ति किमाख्यको वा
ब्रह्माथ विष्णुश्च नरोऽथ नारी ॥ ७ ॥

शरीरवान् वाऽस्त्यशरीर एव
द्वितीयवान् सोऽथ किमद्वितीयः।
प्रश्ना इमे सर्गपरम्परात्ताः
समाधिभाजो न विना समाधिम् ॥ ८ ॥

प्रेमास्पदं नः किल बाल एकः
श्यामश्च देदीप्तमुखो हि योऽसौ।
यैका च नारी ननु नग्नरौद्री
साऽऽस्माकदेवी विदिता जगत्याम् ॥ ९ ॥

दृष्टश्च कैलासगिरेर्हिमान्याम्
ध्याने निमग्नः स हि देव एकः।
संवीक्षितः कर्मरतोऽन्तराले
द्यावापृथिव्योर्हृदि चाश्रितः सन् ॥ १० ॥

वक्ष्याम एते वयमद्य लोकम्
तच्चातुरीं चापि तदीयमार्गान्।
प्रमोदते हर्षवशाच्च मन्योः
स यातनाया अपि वेदनायाः ॥ ११ ॥

स हृष्यति क्लेशपरान्निरीक्ष्य
प्ररोदितुं प्रेरयते तथा नः।
आनन्दसौन्दर्यवशात् स्वकीयात्
पुनस्ततोऽस्मान् हरतीव मायी ॥ १२ ॥

हासध्वनिस्तस्य तु केवलं तत्
संगीतमेतद् भुवनेषु यावत्।
सौन्दर्यमानन्द-परावधेश्च
तस्यैव सर्वं स्मितमात्रमास्ते ॥ १३ ॥

हृत्कम्पमात्राणि च जीवितानि
तस्यैव नोऽहङ्कृतिसंवृतानि।
हर्षोन्मदो नोऽपि च कृष्णराधा-
पाणिग्रहः प्रेम तयोश्च चुम्बः ॥ १४ ॥

शक्तिः स सा या तुमुले खेऽत्र
तूर्यादिजाते किल नानदीति।
रथं समारोहति विग्रहेषु
प्रासैः प्रहारान् कुरुते तथाऽस्त्रैः ॥ १५ ॥

स निर्दयं हन्ति विनाऽनुतापम्
तथापि सत्यं विदितो दयालुः।
भर्तुश्च सर्गे स हि युद्धतेऽथो
तस्यान्तिमाया नियतेश्च पूर्तौ ॥ १६ ॥

समस्त विश्वस्य सुविस्तरे वा
स कल्पकल्पान्तरवीचिमध्ये।
सहानुभावोऽप्यतुलप्रभावः
शुक्रो धिया जातु न वर्णनीयः ॥ १७ ॥

विचारकैरध्युषितं स चान्त्यम्
विचारसानु परतोऽतिशेते ।
प्रत्नानि नव्यान्यविनश्वराणि
धामानि कामं ह्यधिरोहतीशः ॥ १८ ॥

प्रेमी प्रभुः सोऽस्ति नृणामनन्तो
नेदिष्ठमस्मद्धृदये स्थितश्च ।
चक्षुर्भवेच्चेदमुमीक्षितुं नः
परं वयं स्मो मदवासनान्धाः ॥ १९ ॥

बद्धास्तथा चात्मविचारपाशैः
मन्यामहे मोहवशात् स्वतन्त्रान् ।
अज्ञानिजीवस्य गतिर्जगत्याम्
अतोऽन्यथा तस्य कृपाकटाक्षैः ॥ २० ॥

सदायुवाऽतीतयमायुरेष
सूर्येऽमरो यः पुरुषः स एव ।
तस्यार्धरात्रे प्रतिबिम्बमस्तम्
पश्यन्ति योगप्रवणाः प्रवीणाः ॥ २१ ॥

अन्धं तमोऽग्रे तमसा निगूढम्
यदाऽभितोऽभूत् सलिलञ्च सर्वम् ।
अनन्त एकश्च तदा न्यषीदत्
तस्यापि गर्भे निभृतः स देवः ॥ २२ ॥

———

(श्रीलारविन्दस्य Collected Poems and Plays नामक ग्रन्थस्य प्रथमभागात् 'Who' शीर्षक-कविताऽनुवादः ।)

# महाभारतीया आत्मगुणाः

कु० शशिबाला श्रीवास्तव

विचारशीलैः मनीषिभिर्मानवजीवनस्य सर्वाङ्गीणाभ्युदयार्थं सदाचारस्य सच्चरित्रताया महत्त्वं सदैव स्वीकृतम्। सदाचारेणैव सामाजिकजीवनस्य सुश्लिष्टता व्यक्तिगतजीवनस्य सुखं शान्तिश्च सम्भाव्येते; अतः मानवसंस्कृति-विन्यासे आचारस्य मौलिकतत्त्वानां शाश्वती प्रतिष्ठा वर्तते। सत्याहिंसादयः आत्मगुणाः सद्गुणा वा सदाचारस्य स्वरूपं निर्धारयन्ति। त एव आचारस्य मौलिकतत्त्वानि। एते गुणा मानवानां सत्प्रवृत्तीः प्रकाशयन्ति, अतः सद्गुणा इति कथ्यन्ते, मानवानां व्यक्तित्वं प्रदीपयन्ति, आत्मानमलंकुर्वन्ति च, अतः 'आत्मगुणा' इत्यभिहिताः।

भारतवर्षे प्राचीनकालादेवात्मगुणानां महत्त्वं वर्तते। वैदिकैर्ऋषिभिः तेषां महिमा उद्गीयते। ऋग्वेदे सत्यस्य महिमा सर्वोपरि प्रतिष्ठापितः। तदनुसारं सृष्टेरादौ सर्वप्रथमं सत्यस्योत्पत्तिर्बभूव।[1] सत्यस्य शक्तिरपरिमिता। तां परिलक्ष्य कथितम्—

"सत्येनोत्तभिता भूमिः"

(ऋग्वेद. १०'८५'१)

तथा चोक्तं सत्यमसत्यात् श्रेष्ठतरम्। सोमः सत्यं पालयति, असत्यं च नाशयति।[2] असत्यवादी पापफलं भुंक्ते। अथर्ववेदानुसारं वरुणः स्वपाशैः असत्यवादिनं बध्नाति, यथा ऋषिभिः प्रार्थितम्—

"ये ते पाशा...............

छिनन्तु सर्वे अनृतं वदन्तं यः सत्यवाद्यति तं सृजन्तु।

---

१. ऋ० १०.१९०.१.

२. ऋ० ७.१०४.१२

शतेन पाशैरभि धेहि वरुणैनं मा ते मोच्यनृतवाङ्नृचक्षः।
आस्तां जाल्म उदरं स्रंसयित्वा कोश इवाबन्धः परिकृत्यमानः।
(ऋ० ४.१६.६-७)

शतपथब्राह्मणेऽपि असत्यवादिनो हेयत्वमुपवर्णितम्।

तथा हि—

"अमेध्यो वै पुरुषो यदनृतं वदति, तेन पूतिरन्तरतो
मेध्या वा आपः मेध्यो भूत्वा व्रतमुपायानीति......।"
(३.१.२.१०; १.१.१.१.)

अतः सदैव सत्यभाषणं कर्त्तव्यम्। सत्यं शोकमपहरति।[१]

उपनिषत्सु अपि सत्यस्याक्षुण्णः महिमा दृश्यते। बृहदारण्यकोपनिषदि सत्यं धर्मस्य समकक्षं चित्रितम्। अत्र मानवानां व्यावहारिकजीवने सत्यस्य धर्मस्य चैकत्वं प्रतिपादितम्। तद्यथा—

"......यो वै स धर्मः सत्यं वै तत्तस्मात् सत्यम् वदन्तमाहुर्धर्मं वदतीति धर्मं वा वदन्तं सत्यं वदतीत्येतद्ध्येवैतदुभयं भवति" (१.४.१४)

अस्यामेवोपनिषदि सत्यं सर्वेषां भूतानां मधुरूपं (पोषकः) मतम्। तस्मिन् ब्रह्मणः शाश्वती स्थितिः वर्तते।[२] 'सत्यमेव जयते नानृतम्' इत्युक्तिः तस्मिन् युगे सत्यस्यापराजेयशक्त्यां मानवानां सुदृढं विश्वासं द्योतयति।

वैदिकयुगे सत्यादतिरिक्तानामन्येषामपि सद्गुणानां समादरो दृश्यते। ऋषीणां सूक्तिषु मानवहृदयस्योदात्तभावानां महत्त्वमभिव्यक्तं भवति। दुर्गुणानामधोगतिजनकत्वं प्रायः प्रतिपादितम्। परेषां निन्दा सामाजिकजीवने पारस्परिकसौहार्द्रं सौजन्यं चापहरति। अतः इमां सम्भावनां परिलक्ष्य कथितम्—

"निन्दितारो निन्द्यासो भवन्तु"
(ऋ० ५.२.६)

---

१. शतपथ ब्रा० ११.५.३.१३

२. बृहदारण्यकोपनिषद् २.५.१२

उदारमतीनां ऋषीणां मतानुसारमनुदारभुक्तमनुदारेण दत्तं वान्नं व्यर्थमेव। निगदितमेव तैः—

"मोघमन्नं विन्दते अप्रचेताः सत्यं ब्रवीमि वध इत्स तस्य।
नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी॥"

(ऋ० १०.११७.६)

विनयमधिकृत्य कविः कथयति—

"नम इदुग्रं नम आ विवासे।
नमो दाधार पृथिवीमुत द्याम्॥"

(ऋग्वेद ६.५१.८)

वैदिकसाहित्ये बहुशः अन्यास्वनेकासु सूक्तिषु आत्मगुणानां प्रतिष्ठा दृश्यते। तद्यथा—

"संगच्छध्वं सं वदध्वं।
सं वो मनांसि जानताम्॥"

(ऋ० १०.१६१.२)

"विश्वं तद्भद्रं यदवन्ति देवाः।"

(ऋ० २.२४.१६)

परि माग्ने दुश्चरिताद्बाधस्वा मा सुचरिते भज।"

(यजु० ४.२८)

"मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे।"

(यजु० ३६.१८)

"कीर्तिं च वा एष यशश्च गृहाणामश्नाति यः पूर्वोऽतिथेरश्नाति।"

(अथर्व० ६.६.३५)

आत्मगुणाः मानवजीवनस्य सर्वोच्चादर्शानामाधारभूताः सन्ति। प्रकारान्तरेण त एव मानवहृदयस्य सर्वोत्तमानामुदात्तभावानां परिचायकाः। तेषां महत्त्वं चिरन्तनमस्ति। देशकालादिभिः न तद् बाध्यते। अतः कालान्तरे आत्मगुणानां महत्त्वं क्रमशः परिवर्धितं दृश्यते।

ज्ञानप्रधाने उपनिषद्युगे आध्यात्मिकप्रकर्षसाधनरूपेणात्मगुणानामावश्यकत्वं महत्त्वं चाधिकतरं प्रतिपादितम्। अस्मिन् युगे ज्ञानभित्तौ तेषां सुदृढा प्रतिष्ठा भवति। तेषां तात्त्विकस्वरूपाणि स्पष्टीकृतानि। ईशोपनिषदि, "मा गृधः कस्यस्विद्धन" मित्याचारसिद्धान्तस्य प्रतिपादनार्थम्, "ईशावास्यमिदं सर्वं यत् किञ्च जगत्यां जगत्........" इत्यादि[1] तात्त्विकं प्रमाणं मनीषिभिः प्रस्तुतम्।

ज्ञानचक्षुरुन्मीलने शोकमोहादयः तुच्छभावाः न मानवान् क्लेशयितुं प्रभवन्ति। आत्मनि सर्वभूतानि सर्वभूतेषु चात्मानमनुपश्यन् मानवः कथमन्यं प्रति घृणां मोहं वानुभवितुं शक्नुयात्। तद्यथा

"यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः॥

(ईश० ६-७)

एकत्वस्यानयैव भावनया विश्वबन्धुत्वस्य भावना समुदभवत्।

महाभारते आत्मगुणानां प्रतिष्ठा सर्वोपरि दृश्यते। अत्रापि तेषां मध्ये सत्यस्य प्रथमं स्थानं वर्तते।

## सत्यम्

सत्यस्य स्वरूपं परिलक्ष्य भीष्मेण निगदितम्

सत्यं नामाव्ययं नित्यमविकारि तथैव च।
सर्वधर्माविरुद्धं च योगेनैतदवाप्यते॥

(शान्ति १५६.१०)

तदनुसारं सत्यं, समता, दमः, अमात्सर्यं, क्षमा, ह्रीः, तितिक्षा, अनसूया, त्यागः, ध्यानम्, आर्यत्वम्, धृतिः, अहिंसा च—एतानि सर्वाणि सत्यस्यैव

---

१. ईशोपनिषद् १.

स्वरूपाणि ।[1] सत्यस्यैतस्मिन् विस्तृते परिधौ प्रायः सकलानामात्मगुणानां समावेशः कृतः ।

महाभारते सत्यस्य धर्मस्य च सम्बन्धोऽविच्छिन्नः प्रतिपादितः ।[2] सत्यं धर्मस्य स्थितिः ।[3] सत्येन धर्मो रक्ष्यते ।[4] भृगुमुनेर्मतानुसारमस्मिन् जगति सत्यमेव धर्मः, धर्मः एव प्रकाशः, प्रकाशश्चैव सुखम् ।[5] अन्यत्र सभायां वृद्धजनानां वृद्धजनेषु धर्मस्य, धर्मे सत्यस्य, सत्ये च निश्छलतायाः अनिवार्या स्थितिः उल्लिखिता ।[6]

सत्यं परमः सनातनः सर्वश्रेष्ठश्च धर्मः । भीष्मस्य शब्देषु—

'नास्ति सत्यात्परो धर्मो नानृतात्पातकं परम्'

(शान्ति० १५६.२४)

यद्यपि चतुर्णां वर्णधर्माणां संकरो न प्रशंसितः, तथापि निर्विकारं सत्यं सर्वेषु वर्णेषु समानरूपेण प्रतिष्ठितमासीत् । सत्पुरुषाः मुनिजनाः च सर्वदा सर्वैः प्रकारैः सत्यं पालयन्ति । सत्यमेव मनुष्याणां परमा गतिः, अतः असत्यं त्यक्त्वा सत्यस्य पालनं मानवानां परमं कर्त्तव्यमित्यभिमतम् ।[7]

**सत्यासत्यनिर्णयः**—महाभारते सत्यासत्ययोः सूक्ष्मं विवेचनं कृतम् । तदनुसारं सत्यकथनं श्रेयस्करं, परन्तु तत्त्वतः सत्यस्वरूपपरिज्ञानं दुष्करं

---

१. शान्ति० १५६.८–६
२. शान्ति० १६२.६६
३. शान्ति० १५६.२४
४. उद्योग० ३४.३७
५. शान्ति० १८३.५
६. उद्योग० ३५.४६
७. शान्ति० १५६.३–४.२४ अनु० ११६.६२ अनु० ७५.३२ आदि० ६६.२४

वर्तते।[१] वस्तुतः सत्यस्य स्वरूपमधिकृत्य मनीषिभिः मानवानामत्यन्तं हितमेव तदिति बहुप्रकारेण व्यवस्थितम्। नारदेन स्पष्टतः निर्दशितमपि—

"यद् भूतहितमत्यन्तमेतत् सत्यं ब्रवीम्यहम्।"

(शान्ति० २७६.१६)

मानवानां व्यावहारिकजीवने कदाचित् सत्यमपि असत्यवत्, असत्यमपि सत्यवत् प्रतिभाति। अनेकेष्ववसरेषु सत्यमेवावक्तव्यमसत्यमेव च वक्तव्यं भवति। मानवानां हितं परिलक्ष्यैव पण्डितैः एवं प्रकारेण सत्यस्य क्वचिदपलापोऽनुमोदितः। महाभारते तेऽवसरा इत्थं प्रदर्शिताः—

"प्राणात्यये विवाहे वा सर्वज्ञातिधनक्षये।
नर्मण्यभिप्रवृत्ते वा प्रवक्तव्यं मृषा भवेत्।
अधर्मं नात्र पश्यन्ति धर्मतत्त्वार्थदर्शिनः।"

(कर्ण० ४६.५३)

अनेन प्रकारेण महाभारतकारस्य दृष्टौ सत्यं न किमपि अचलं तत्त्वमपितु परिवर्तमाने मानवजीवने तस्य महत्त्वमपि सज्जीवनानुसारि परिवर्तनसहम्। सत्यं सर्वत्रैकरूपं पश्यन् मानवः अज्ञतां भजते। धर्मज्ञाः सत्यासत्ययोः स्वरूपं यथावत् निरूप्यैव सत्यपालने प्रवृत्ताः भवन्ति।[२] अस्मिन् प्रसङ्गे कौशिकमुनेः कथा उल्लेखनीया। स दस्यून् वने निगूढानां मनुष्याणां स्थितिं प्रोवाच। अतः तस्य सत्यभाषणेन दस्यवः बहून् मनुष्यानघ्नन्। एतस्मादेव कारणात् स सत्यमपि उक्त्वा पापभागभवत्।[३]

अनन्तः खलु सत्यस्य महिमा। महाभारतानुसारं सत्यं पुत्रशतात्, अश्वमेधसहस्रात्, सर्ववेदाधिगमनात्, सर्वतीर्थावगाहनाच्च परमं मन्यते।[४]

---

१. कर्ण० ४६.२७ शान्ति० ११०.५; २७६.१६ शान्ति० ३१६.१३ आर० २०३.४२
२. कर्ण० ४६.३० शान्ति० ११०.६
३. कर्ण० ४६.३१-५६ शान्ति० ११०.७-८
४. आदि० ६६.२१-२३

विश्वस्य सर्वाणि कार्यजातानि सत्येनैवानुप्राणितानि, सत्यस्य शक्त्यैव सञ्चालितानि भवन्ति, तद्यथा—सत्येन सूर्यस्तपति, अग्निः प्रदीप्यते, मरुतः च वान्ति इत्यादयः। संक्षेपतः महाभारतानुसारं सर्वं सत्येन विधृतं, सत्ये च सर्वं प्रतिष्ठितम्।[1] विविधानि पुण्यकार्याणि धार्मिकसिद्धांताश्च सर्वव्यापिनः सत्यस्यैव रूपान्तराणि। तद्यथा कथ्यते—

"सत्यमेकाक्षरं ब्रह्म सत्यमेकाक्षरं तपः।
सत्यमेकाक्षरो यज्ञः सत्यमेकाक्षरं श्रुतम्॥

(शान्ति० १६२.६४)

"सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव"[2]; अतः सत्यवन्तः स्वर्गं गच्छन्ति, तत्र च मोदन्ते।[3] सत्यस्य गुणाः असंख्येयाः। देवाः पितरो ब्राह्मणाश्च सर्वे सत्यं प्रशंसन्ति, सत्यपालनेन च प्रसन्नाः भवन्ति।[4] सत्ये अमरत्वस्य स्थितिः। अतः सत्यपालनेन मनुष्याः मृत्युमपि जेतुममरत्वमपि प्राप्तुं शक्नुवन्ति।[5]

यदा कदा अस्मिन् लौकिकसंसारेऽपि सत्यस्यालौकिकी शक्तिः परिस्फुरन्ती दृश्यते। सत्यभाषणप्रभावेण सत्यवादिनो युधिष्ठिरस्य रथः पृथ्व्याः चतुरङ्गलादूर्ध्वं प्रचलति स्म। अश्वत्थाम्नो मृत्युमधिकृत्य युधिष्ठिरेण भाषितेऽसत्ये तु तस्य वाहाः महीं स्पृशन्तो बभूवुः।[6]

---

१. अनु० ७५.३० शान्ति० २५१.१०
२. शान्ति० २८८.३१
३. शान्ति० १८३.१ अनु० ७५.३३
४. शान्ति० १५६.२३ अनु० ७५.३१
५. शान्ति० १६६.२६–२८
६. द्रोण० १६४.१०७

# अहिंसा

महाभारते अहिंसा सर्वभूतेभ्यो परमो धर्मः मता।[१] वैदिकप्रमाणमाश्रित्य ऋषयः देवाः ब्राह्मणाः चाहिंसां प्रशंसन्ति ।[२] सर्वधर्मानुसंहितानुसारमहिंसायां सकला धर्माः समाविष्टा भवन्ति—

"यथा नागपदेऽन्यानि पदानि पदगामिनाम् ।
सर्वाण्येवापिधीयन्ते पदजातानि कौञ्जरे ।
एवं लोकेष्वहिंसा तु निर्दिष्टा धर्मतः पुरा ।"

(अनु० ११४. ६–७)

धार्मिकमान्यतानुसारं मनुष्यैः न तु कर्मणैवापितु मनसा वाचा च हिंसायाः पूर्णतया परित्यागः विधेयः ।[३] महाभारते अहिंसां वर्णयता कविना मांसभक्षण-परित्यागो विशेषतः प्रतिपादितः। कतिपयेषु प्रसङ्गेषु तु इदमेवाहिंसापालनस्य प्रधानमङ्गमिव वर्णितम्—

"न भक्षयति यो मांसं न च हन्यान्न घातयेत् ।
तन्मित्रं सर्वभूतानां मनुः स्वायम्भुवोऽब्रवीत् ॥

(अनु० ११५.१०)

भीष्ममतानुसारं मांसं विवर्जयन् मनुष्यः सर्वभूतानामधृष्यः, सर्वजन्तुषु विश्वास्यः, साधूनां च सम्मतो भवेत् ।[४] मांसत्यागेन महतः पुण्यफलस्योपलब्धिः भवति –

"मासि-मास्यश्वमेधेन यो यजेत शतं समाः ।
न खादति च यो मांसं सममेतन्मतं मम ।।"

(अनु० ११५.१८)

---

१. अनु० ११५.२३
२. अनु० ११४.२
३. अनु० ११४.७–८
४. अनु० ११५. ११

महाभारते पंडितैः अहिंसायाः अतीव महिमा वर्ण्यते। तेषां मतानुसारं यज्ञानुष्ठाने अपि पशूनां हिंसानभिमतास्ति। तद्यथा—

"इज्यायज्ञश्रुतिकृतैर्यो मार्गैरबुधोऽधमः।
हन्याज्जंतून् मांसगृध्नुः स वै नरकभाङ् नरः॥"

(अनु० ११५.४३)

हिंसायाः सर्वथा त्यागेन रूपस्य, अव्यङ्गतायाः, आयुषः, बुद्धेः, सत्त्वस्य, बलस्य, स्मृतेः च प्राप्तिः सम्भाविता।[1] हिंसात्मा नरकम्, अहिंसकः स्वर्गं च गच्छति।[2] हिंसावर्जितैः कर्मभिः मानवाः सदैव रक्ष्यन्ते।[3] अहिंसापालनेन नरः यज्ञदानतपस्तीर्थादीनां फलं प्राप्तुं शक्नोति, यतो हि

"अहिंसा परमं दानमहिंसा परमं तपः।
अहिंसा परमो यज्ञस्तथाहिंसा परं फलम्।"

(अनु० ११७.२८. २६)

वस्तुतः अहिंसया प्राप्याणि फलानि गुणाश्चावर्णनीयानि।[4] न वर्षशतैरपि तस्याः गुणा वक्तुं शक्याः।[5]

## दमः

सामान्यतः दमस्यार्थः इन्द्रियसंयमः, परन्तु महाभारते दमस्य स्वरूपं किञ्चिदधिकं विस्तृतं दृश्यते। सनत्सुजातस्य मतानुसारं दमे अष्टादश दोषाः वर्तन्ते—कर्त्तव्याकर्त्तव्यनिरूपणे विमूढता, गुणेषु दोषदृष्टिः, कामः, अर्थः, स्पृहा, क्रोधः, शोकः, तृष्णा, लोभः, पैशुन्यम्, मात्सर्यम्, विवित्सा, परितापः, रतिः, अपस्मारः, अतिवादः, आत्मसम्भावना चेत्येतेषां दोषाणामभावो दमः इति कथ्यते।[6] अन्यत्र दमस्य भावात्मकं स्वरूपं निरूपयन् कविः

१. अनु० ११५. ६,३१
२. अनु० ११४.५३
३. शन्ति० २८५.३६
४. शान्ति० १५४.६
५. शान्ति० २१३.२,८
   " १५४.१०, १४
६. उद्योग० ४३.१५.१७

कथयति—क्षमा, धृतिः, अहिंसा, समता, आर्जवम्, सत्यम्, इन्द्रियजयः, दक्षता, कोमलता, लज्जा, अचपलता, अकार्पण्यम्, अक्रोधः, सन्तोषः, प्रियवादिता, अविवित्सा, अनसूया च—एतेषां सद्गुणानां समुदय एव दमः।[१] दमस्य संक्षिप्ता रूपेरखापि उपलब्धा भवति—

"दमो नान्यस्पृहा नित्यं धैर्यं गाम्भीर्यमेव च।
अभयं क्रोधशमनं ज्ञानेनैतदवाप्यते।"
(शान्ति० १५६.१२)

एवं महाभारतकारेण दमे न केवलमिन्द्रयसंयमोऽपितु अन्याः समस्ताः सद्गुणाः समावेशिताः। दमस्य महत्त्वं सनातनमस्ति। तदेवानेकैः महर्षिभिः स्वस्वज्ञानानुसारं प्रवर्तितानां धार्मिकविधीनामाधारत्वेन मतः।[२] सर्वेषु वर्णेषु आश्रमेषु धर्मेषु च दमस्य पालनमुत्कृष्टं प्रशस्तं च मतम्।[३] धर्मपालनस्य तत्त्वं संयम एव निहितं न तु केवलं ग्रामवासे अरण्यवासे वा। वस्तुतः--

"दान्तस्य किमरण्येन तथा दान्तस्य भारत।
यत्रैव निवसेद् दान्तस्तदरण्यं स चाश्रमः।"
(शान्ति० १५४.३६)

दमपालनस्य फलान्यनेकानि। दान्तः इहलोके परलोके च सर्वत्र सिद्धिं सुखं च विन्दते--

"दमस्तेजो वर्धयति पवित्रं च दमः परम्।
विपाप्मा तेजसो युक्तः पुरुषो विन्दते महत्॥"
(शान्ति० १५६.६)

तत्त्वदर्शिनो वृद्धजनाः दमं परमं निःश्रेयसं प्राहुः।[४] दमोऽमृतस्य द्वारम्।[५] सत्यफलावाप्तेः अपि स एव कारणम्।[६] क्रियाणां सिद्धिरपि दमपरतन्त्रा—

---

१. शान्ति० १५४.१५-१६
२. शान्ति० १५४.६
३. शान्ति० २१३.२,८,१५४.१०,१४
४. शान्ति० १५४.७।
५. शान्ति० २८८.२०।
६. अनु० ७५.३३।

"नादान्तस्य क्रियासिद्धिर्यथावदुपपद्यते ।
क्रिया तपश्च सत्यं च दमे सर्वं प्रतिष्ठितम् ॥"

(शान्ति० २१३.३)

इन्द्रियाणां संयमासंयमौ एव मनुष्याणां सुखदुःखयोः कारणं मन्येते ।[१] महाभारते ज्ञानेन्द्रियाणामिव कर्मेन्द्रियाणां संयमोऽपि अभीष्टो मतः । तदनुसारं—

"चत्वारि यस्य द्वाराणि सुगुप्तान्यमरोत्तमाः ।
उपस्थमुदरं हस्तौ वाक् चतुर्थी स धर्मवित् ॥"

(शान्ति० २८८.२८)

यस्य वाङ्मनसी सम्यक् सुसंयते वर्तेते, स वेदाध्ययनस्य तपसः त्यागस्य च सर्वं फलमाप्नुयात् ।[२] संयमी आत्मदर्शनेऽपि सफलो भवति । तद्यथा कथितम्—

"रश्मींस्तेषां स मनसा यदा सम्यङ्नियच्छति ।
तदा प्रकाशतेऽस्यात्मा घटे दीपो ज्वलन्निव ॥"

(शान्ति० १८७.४४)

एवं प्रकारेण महाभारतयुगे लौकिकाभ्युदयार्थं पारलौकिकसत्फलप्राप्त्यर्थं च दमस्य महत्त्वं प्रवर्धितं दृश्यते ।

## क्षमा

क्षमायाः स्वरूपमधिकृत्य भीष्मेण प्रोक्तम्—

"अक्षमायाः क्षमायाश्च प्रियाणीहाप्रियाणि च ।
क्षमते सर्वतः साधुः साध्वाप्नोति च सत्यवान् ॥"

(शान्ति० १५६.१४)

---

१. शान्ति० १८७.३६ ।
२. शान्ति० २८८.२४ ।

तस्मिन् युगे क्षमाया महान्तं गरिमाणं वर्णयद्भिर्विद्वद्भिः तया लौकिक पारलौकिकलाभस्य योजना कल्पिता। क्षमात्मवतां सत्पुरुषाणां सदाचारः सनातनो धर्मः कथ्यते।[१] काश्यपः क्षमाविषये गाथामेकां गायति—

"क्षमा धर्मः क्षमा यज्ञः क्षमा वेदाः क्षमा श्रुतम्।
यस्तामेवं विजानाति स सर्वं क्षन्तुमर्हति॥
क्षमा ब्रह्म क्षमा सत्यं क्षमा भूतं च भावि च।
क्षमा तपः क्षमा शौचं क्षमया चोद्धृतं जगत्॥
................ ....... ..........।
यदा हि क्षमते सर्वं ब्रह्म संपद्यते तदा॥"

(आर० ३०.३६-३७.४१)

तेजस्विनां तेजः, तपस्विनां ब्रह्म, सत्यवतां सत्यं, गुणावतां बलं[२]—एतानि सर्वाणि क्षमारूपाण्येव। अर्थात्, एतेषां सर्वेषां मूले क्षमा एव हेतुत्वेन उद्भासते। क्षमामाश्रित्य नरः सर्वत्र कल्याणं लभते—इह लोके सम्मानं, परलोके च शुभगतिं प्राप्नोति।[३] शक्तिहीनमनुष्ये व्यावहारिकदृष्ट्या क्षमा नितान्तं लाभप्रद सिध्यते परन्तु धर्मशास्त्रानुसारं शक्तिमद्भिरपि नरैः क्षमा आचरणीया वर्तते।[४] क्षमया स्वक्रोधं नाशयन्, अन्येषामाक्रोशस्य ताडनायाश्च पात्रं भूत्वापि क्षमामेवावलम्ब्य नरः सर्वोत्तमान् लोकान् गच्छति।[५]

## ह्रीः

ह्रीरिति लज्जार्थशब्दः। इयं धर्मस्य अङ्गमुत्तमं मन्यते। धर्मेणैवास्या अवाप्तिः भवति।[६] ह्रीमान्नरः पापाज्जुगुप्सते। ह्रीधर्मौ अन्योन्याश्रितौ—

---

१. आर० ३०.५०।
२. आर० ३०.३६ उद्योग० ३६.५५। 
३. आर० ३०.४२ आदि० ३८.६।
४. उद्योग० ३६.४६।
५. अनु० ३०.४३,३३-३४,४१,३८।
६. शान्ति०१५६.१५ उद्योग० ७०.३५।

"ह्रीर्हता बाधते धर्मं
धर्मो हन्ति हतः श्रियम् ॥"

(उद्योग० ७०.१६)

ह्रिया मनुष्यः श्रिया युज्यते ।[१] लज्जावन्तो नरा अन्येषां कल्याणं सम्पादयन्ति, स्वयं च परमगतिं प्राप्नुवन्ति । तद्यथा कथ्यते—

"ह्रीमानवति देवांश्च पितॄनात्मानमेव च ।
तेनामृतत्वं व्रजति सा काष्ठा पुण्यकर्मणाम् ॥"

(उद्योग० ७०.३६)

## धृतिः

महाभारते भीष्मेण धृतिरेवं लक्षिता—

"धृतिर्नाम सुखे दुःखे यथा नाप्नोति विक्रियाम् ।
.........................................
वीतहर्षभयक्रोधो धृतिमाप्नोति पण्डितः ॥"

(शान्ति० १५६.१६–२०)

प्राज्ञाः कल्याणभिलाषिणाश्च नराः सदैव धृतिमाश्रयन्ति । महाभारतीयसिद्धान्तानुसारमुत्तमा धृतिः उभयलोकार्थं श्रेयसो मूलम् ।[२] धृतेः आभावादेव राजर्षिः महाभिषः स्वर्गात् पतितः, क्षीणपुण्य ययातिश्च धृत्यैवोत्तमान् लोकानवाप्तवान् ।[३]

## आर्जवम्

धार्मिकक्षेत्रे आर्जवेन नितान्तं महत्त्वपूर्णं पदमधिकृतम् । महेश्वरमतानुसारमार्जवमेव धर्मः कुटिलतैवाधर्मः अस्ति । अत आर्जवेन भूषितो नरो धर्मेण युज्यते ।[४] आर्जवमाश्रित्य नरः महत् पुण्यफलमवाप्नोति—

१. उद्योग० ७०.३६ ।
२. शान्ति० २६७.२२ ।
३. शान्ति० २६७.२३ ।
४. अनु० १४२.३०–३१ ।

"सर्ववेदेषु वा स्नानं सर्वभूतेषु चार्जवम् ।
उभे एते समे स्यातामार्जवं वा विशिष्यते ॥"

(अनु० १४२.२६)

आर्जवेन ब्रह्मप्राप्तिरपि सम्भाविता ।
"सर्वं जिह्मं मृत्युपदमार्जवं ब्रह्मणः पदम्"
इति कृष्णेन प्रतिपादितम् ।

(आश्व० ११.४)

## अक्रोधः

क्रोधप्रभवाणां अहितानां वर्णनप्रसङ्गे महाभारते धार्मिकाचारस्य क्षेत्रे क्रोधस्यातीवावाञ्छनीयता प्रतिपादिता । क्रोधेन मनुष्याः श्रेयोमार्गाद् भ्रश्यन्ते। क्रोधो यज्ञतपोदानहवनादीनां धार्मिककार्याणां फलानि हन्ति ।[1] 'मनुष्याणामुन्नतिः अवनतिः वा क्रोधमूला' इति कथ्यते । क्रोधं जित्वा नरः उन्नतिम्, क्रोधाधीनश्च भूत्वावनतिमवाप्नोति ।[2] क्रोध उचितानुचितयोर्विवेकमपहरति। क्रुद्धैः मनुष्यैः न किमपि अवाच्यमकार्यं वा वर्तते ।[3] एवं प्रकारेण क्रोधस्य दोषान् ज्ञात्वा उभयलोके भूतिमिच्छन्तो मनीषिणः क्रोधं परित्यजन्ति ।[4] क्रोधं सर्वथा त्यक्त्वा नराः संकटानि तरन्ति ।[5] क्षमाशीलस्य युधिष्ठिरस्य तु मते स्वधर्मस्यत्यागः अपि कदाचित् वरम्, परन्तु क्रोधभजनं न कदाचिदपि कार्यम्।[6]

## अनुक्रोशः

साधुभिः सदैव परिपालितोऽनुक्रोशः धर्मस्य परं लक्षणमिति मतम्।[7] दयासदृशमिह परत्र च न किंचिदपि वर्तते । अतः सर्वेषु भूतेषु दया कर्त्तव्या। दयावानात्मवान् भवति, तथा हि—

---

१. शान्ति० २८८.२७। शान्ति० ३४८.१८। आदि० ३८.८। अनु० ७५.१६।
२. आर० ३०.१ ।
३. आर० ३०.५ ।
४. आर० ३०.७ ।
५. शान्ति० १३०.२० ।
६. आर० ३०.२३ ।
७. अनु० ५.२४ ।

"नात्मनोऽपि प्रियतरः पृथिवीमनुसृत्य ह।
तस्मात् प्राणिषु सर्वेषु दयावानात्मवान् भवेत् ॥"

(अनु० ११६.२२)

एवं च दयालुः उभयत्र सुखं विन्दते ।[1]

## अन्ये गुणाः

एतेभ्यः पूर्ववर्णितेभ्य आत्मगुणेभ्योऽतिरिक्ता महाभारते समतातितिक्षादयः अनेके गुणावर्णिताः। समताविषये कथितम्—

"आत्मनीष्टे तथानिष्टे रिपौ च समता तथा।
इच्छाद्वेषक्षयं प्राप्य कामक्रोधक्षयं तथा ॥"

(शान्ति० १५६.११)

अन्यत्र तितिक्षायाः स्वरूपं प्रदर्शितम्—

"धर्मार्थहेतो क्षमते तितिक्षा क्षान्तिरुच्यते।
लोकसंग्रहणार्थे वै सा तु धर्मेण लभ्यते ॥"

(शान्ति० १५६.१६)

यो नरो यशस्काममनपेक्ष्यात्मप्रदर्शनाद् विरक्तो भूत्वा, प्रयत्नतः प्राणिनां हितं साधयति, तस्यायं गुणः 'आर्यतानाम्नाभिहितः।[2]

महाभारते आत्मगुणेषु अनेकेषां गुणानां वर्णनं प्रत्येकशो स्वतन्त्ररीत्या कृतम्। तेषां स्वरूपाणि निश्चितानि, महत्त्वं च प्रतिपादितम्; परन्तु कतिपय-प्रसंगेषु सामूहिकरूपेणापि तेषामुपयोगिता प्रदर्शिता, तद्यथा सनत्सुजातानुसारं सत्यमार्जवं ह्रीर्दमः शौचं विद्या च एतानि सर्वाणि ब्रह्मश्रिया द्वाराणि।[3] दमत्यागाप्रमादेषु अमरत्वं निहितम्। मनीषिणः एतान् सत्यस्य मुखानि कथयन्ति।[4] सामूहिकरूपेणापि तेषां गुणानां व्यावहारिकोपयोगिता प्रतिपादिता। मानवेषु सुखप्राप्तेरिच्छा स्वाभाविकी। अत एतैर्गुणैः पारलौकिकपुण्यफलैः

---

१. अनु० ११६.१०–११
२. शान्ति० १५६.१८
३. उद्योग० ४२.३२।
४. उद्योग० ४३.१४।

सार्धं लौकिकलाभा अपि समुपार्जनीया भवन्ति इति विविधप्रकारेण निर्दिष्टम् । तद्यथा—

"दमः क्षमा धृतिस्तेजः संतोषः सत्यवादिता ।
ह्रीरहिंसा व्यसनिता दाक्ष्यं चेति सुखावहाः ॥"

(शान्ति० २७६.१६)

अन्यत्रापि सर्वभूतेषु समभावः, अनायासः, सत्यभाषणम्, वैराग्यम्, अविवित्सा च सुखस्य शान्तेश्च कारणं निर्दिश्यन्ते ।[३] धृतिः, शमः, दमः, शौचम्, करुणा, मृदुवाणी, मित्रेषु चाद्रोहः—एते गुणाः लक्ष्मीं वर्धयन्ति ।[४] विदुरानुसारम्—

"मार्दवं सर्वभूतानामनसूया क्षमा धृतिः ।
आयुष्याणि बुधाः प्राहुर्मित्राणां चाविमानना ॥"

(उद्योग० ३६.३६)

प्रज्ञा, कुलीनता, दमः, शास्त्रज्ञान, पराक्रमः, अल्पभाषणं, दानं च इत्येते अष्टौ गुणा मानवानां व्यक्तित्वमलंकुर्वन्ति ।[५] ध्यानम्, अध्ययनम्, दानम्, सत्यम्, ह्रीः, आर्जवम्, क्षमा, शौचम्, आहारसंशुद्धिः, इन्द्रियनिग्रहश्च—इत्येतैः गुणैः तेजोवृद्धिः पापनाशं सर्वार्थसिद्धिः विज्ञानोपलब्धिश्च सिध्यन्ते ।[६] गीतायां प्रकल्पितायां दैवसम्पत्तावपि प्रकारान्तरेणोपर्युक्ताः आत्मगुणा एव परिगणिताः । कृष्णेन दैवसम्पत्तावभयमहिंसा सत्यमक्रोधो दानं दमः समविष्टानि । दैवीसम्पद् मोक्षस्य साधनमस्ति ।[५]

एवं हि महाभारते आत्मगुणानां महती प्रतिष्ठा दृश्यते । मानवानां व्यावहारिकजीवने तेषां महत्त्वं स्वीकृतम् । पारलौकिकदृष्ट्यापि तेषामावश्यकता प्रतिपादिता । गुणैरुपार्जनीयानि पुण्यफलानि सांसारिकलाभाश्च युगपदेव प्रदर्श्य वस्तुतो महाभारतकारेण जनसमाजे गुणानां लोकप्रियता वर्धिता ।

१. शान्ति० १७१,२–३ ।
२. उद्योग० ३८.३५ ।
३. उद्योग० ३५.४५ ।
४. शान्ति० २३२.१०–११ ।
५. भीष्म० ३८.१–५

# संस्कृतसाहित्ये पारिजातहरणकथा

गौतमप्रसादमिश्रः

लीलामानुषविग्रहस्य श्रीमद्भगवतः श्रीकृष्णस्य विविधेषु मनोरमसुचरितेषु "पारिजातहरणम्" अन्यतमं मुख्यतमञ्चेति सार्वजनीनम्। प्राग्जोतिषपुराधीशेन भौमासुरेण क्रियमाणानि साधुजनपरिपीडनानि धूर्तकुलसन्तोषप्रदानि कार्याणि परां भूमिमयासिषुः। तानि सोढुमपारयन्तस्तपस्विनो भगवन्तं श्रीकृष्णं प्रार्थयामासुः। सोऽपि—

परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मं संस्थापनार्थाय संभवामि युगे युगे॥

इत्युक्तरीत्या स्वावतारं सफलयितुकामः, संग्रामसाहस-विचक्षणां स्वधर्मचारिणीं सत्यभामां साकमेव नीत्वा प्राग्ज्योतिषपुरमाक्रम्य, भौमासुरं युद्धे हत्वा, अदित्याः कुण्डलं दातुं देवलोकं गतः। तत्र देवेन्द्रोपवने पारिजाततरुं सत्यभामया प्रेरितः स हठादपहृत्य द्वारकामानीतवानिति हरिवंशपुराणे प्रथमा कथा। श्रीमद्भागवते विष्णुपुराणे चेयमेव कथा अल्पीयसा भेदेन प्रतिपाद्यते। पारिजातहरणसम्बद्धा द्वितीयापि कथा हरिवंशपुराणे दृश्यते। प्रकृतोपयोगित्वात् पुराणत्रयान्तर्गता कथात्रयत्र संक्षेपतः प्रदर्श्यते।

## हरिवंशपुराणे

श्रौतसाहित्ये पारिजातवृक्षस्य पारिजातहरणकथायामागतपात्राणाञ्च नामानि वर्तन्ते। किन्तु तत्र क्वचिदपि नेयं कथा परिस्फुरति। अस्याः समाना अपरापि काचित्कथा नोपलभ्यते। मन्ये लोकेषु विश्रुतामिमां श्रीकृष्णसुचरितसंबद्धां कथां कल्पनया संशोध्यालिखदसममेधावी हरिवंशपुराणरचयिता। इत्थं भारतीयसंस्कृतवाङ्मयेषु सर्वप्रथमं हरिवंशपुराण एवैषा कथावलोक्यते। तत्रापि ईषदन्यथाभावेन द्वे कथे परिदृश्येते। हरिवंशे विष्णु-

पर्वणि द्वयोरध्याययोः ( ६३–६४ ) प्रथमा कथा प्रतिपादिता या उपर्युक्तैव। पञ्चषष्टितमादध्यायादारभ्य (६५–७६) षट् सप्ततितमाध्यायपर्यन्तं नवस्वध्यायेषु द्वितीयः पारिजातापहारवृत्तान्तो निरूप्यते । तद्यथा—

विविधाभिश्शक्तिभिरिव रमणीभिः परमपुरुष इव सेव्यमानो द्वारकाधिपतिः श्रीकृष्णः कदाचिद्व्रतविशेषोद्यापनार्थं रैवतकं यातुं रुक्मिण्या प्रार्थितः सपरिजनस्तत्र गतवान्। विधिवत् व्रतोद्यापनान्तरं भगवता श्रीकृष्णेन सह समासीनां तां नारदोऽभिगत्य ददर्श। ताभ्यां सभाजित ऋषिर्निरिदः पारिजाततरोः पुष्पमेकं भगवते माधवाय दत्तवान्। तच्च भगवान् पार्श्वस्थायै रुक्मिण्यै प्रददौ। सा च सबहुमानं तच्छिरसि धारयन्ती सोमसनाथितेव शुशुभेतराम्। नारदस्तु कलहजीवातुरिति लोकेऽपि प्रसिद्धम्। रुक्मिणी सत्यभामयोर्द्वेषोत्पत्तिर्जायतामिति बुद्ध्या स पारिजातप्रसूनस्य वैलक्षण्यं बहुधा संकीर्त्य भूमिलोकदुर्लभस्यास्य भर्त्रा तस्या एव प्रदानेन सपत्नीनां मध्ये तस्यामेव भर्तुः समादराधिक्यञ्च सपत्नीवृन्ददासीनां पुरस्तादेव प्रशस्य तस्याः सौभाग्यातिशयं प्रतिपादितवान्।

सखीनां दासीनां च मुखेभ्योऽधिगतेदंवृत्ता सुलभकोपना सत्यभामा क्रोधातिकाष्ठां गता भूषणान्युत्सृज्य कोपागारं विवेश। इमं संभवं पूर्वतरमभ्यूहितवान् माधवः सद्यश्च सत्यभामासदनं प्राप्य—

> पारिजातक-पुष्पाणि यदीच्छस्यति कोपने।
> तदा दातास्मि सुश्रोणि सत्यमेतद् ब्रवीमिते ॥
> स्वर्गास्पदादानयित्वा पारिजातं द्रुमेश्वरम्।
> गृहे ते स्थापयिष्यामि यावत् कालं त्वमिच्छसि ॥"[१]

इति प्रतिज्ञाय तस्याः कोपं शामयामास। अथ कृष्णस्य स्मरणमात्रेण समुपस्थितो महर्षिनारदः तयोः पूजां प्रतिगृह्याशिषश्च प्रयुज्य पारिजाततरोस्तत्पुष्पाणाञ्च महिमातिशयं विवर्णयते स्म। "सत्यभामायाः पुण्यकव्रत-

---

१. हरिवंशपुराण विष्णुपर्व अ० ६८ श्लोक ३१–३२

विधानार्थमावश्यकः पारिजातवृक्षो देवलोकाद्भूमिलोकं प्रापयितव्यः" इति कृष्णस्य संदेशमुद्वहन् नारदो देवेन्द्रान्तिकं प्रतस्थे। नारदमुखात् कृष्णसंदेशमधिगत्य महेन्द्रः पारिजाततरोर्भूमिलोकानर्हतामुपपाद्य--

'पलाशपत्रार्धमपि त्वयाजितो नपारिजातस्य तव प्रदास्यतीति--

सुयुद्धमेवास्तु धिगस्तिजिह्मताम्'[1] इति कथयित्वा तन्न दास्यामीत्युवाच। पुनर्नारदो देवेन्द्रसंदेशं कृष्णं श्रावयामास। कृष्णस्तु प्रद्युम्नसात्यकिभ्यां सहितो रथेन मृगयाव्याजेन रैवतकं जगाम। तत्र ससूतं रथं परित्यज्य महाबलशालिना गरुडेन त्रयो देवराजनन्दनोपवनमुपेयिवांसः। एतावतेदं ध्वन्यते यत् सत्यभामां कृष्णसात्यकिप्रद्युम्नांश्च विहाय द्वारवत्यां न ज्ञातं केनाप्यपरेणेदं वृत्तम्। इन्द्रोपेन्द्रयोस्सुमहद् युद्धं समारब्धम्। कृष्णस्य सहायकौ सात्यकिः प्रद्युम्नश्चास्ताम्। इन्द्रस्य तु प्रवरजयन्तौ। इन्द्रमुखात् वृत्तमिदं श्रुत्वा बृहस्पतिस्तं भर्त्सयामास। बृहस्पतिस्तपश्चरन्तं देवेन्द्रपितरं काश्यपं प्राप्य निखिलं बोधयामास। श्रुत्वेदं "ब्राह्मणशापादिदं घटितम्" इति चिन्तयन् स स्तोत्रेण शिवमतोषयत् कृष्णेन्द्रयोशिशवाय। द्वयोः प्रचण्डेन युद्धेन त्रिलोकी चकम्पे। ततः ब्रह्मा काश्यपं गत्वोवाच---

'गच्छ वध्वा सहादित्या पुत्रौ वारय सुव्रत !'[2]

काश्यपस्तथेत्युक्त्वा रणस्थलीं जगाम। तत्र तौ युद्धान्निवारयामास पराजितप्रायेण देवराजेन स्तूयमानो भगवान् पारिजाततरुं वैनतेयस्योपर्यारोप्य द्वारवतीं निनाय। सन्तुष्टान्तरङ्गया सत्यभामया पुण्यकव्रतेऽनुष्ठिते संवत्सरात्परं पुनरपि स वृक्षः स्वर्लोकं प्रापितो यथापूर्वम् इति द्वितीया कथा। श्रीमद्भागवतेऽल्पीयसाभेदेन हरिवंशपुराणस्य प्रथमैव कथा परिस्फुरति। सा संक्षेपतः सभेदश्च प्रस्तूयते---

---

१. हरि० विष्णु प० अ० ७२, ४६-५०

२. हरि० विष्णु प० अ० ७६, २०

श्रीमद्भागवते—

श्रीमद्भागवते दशमस्कंधे उत्तरार्धे ५६ तमेऽध्याये अयं वृत्तान्तः वर्णितः। तत्रत्यकथासंक्षेपश्चेत्थम्—जाम्बवती - सत्यभामा-कालिन्दी - मित्रविन्दादीनां परिणयात्परं द्वारवत्यां सुखासीनं श्रीकृष्णमभ्युपेत्य इन्द्रः नरकासुरस्य अदितेः कुण्डलापहरणम्, बलाद्वरुणाच्छत्राधिकरणम्, हठान्मणिपर्वतग्रहणम्, राज्ञां षोडशसहस्रकुमारीणां हरणञ्चेत्यादीनि दुश्चेष्टितानि विज्ञापयामास। सद्यः नरकासुरवधं संकल्प्य ससत्यभामः श्रीकृष्णोवैनतेयमारुह्य प्राग्ज्योतिषपुरं ययौ।

तत्र स पर्वतदुर्गाणि, शस्त्रदुर्गाणि, जलदुर्गाणि, अग्निदुर्गाणि, अनिलदुर्गाणि, मुरस्य असंख्यातान् पाशांश्च गदया, सायकैः, असिना चक्रेण च निर्भिद्य पुरि प्रविश्य रिपुहृदयविदारणं पाञ्चजन्यं दध्मौ। तद्ध्वनिं निशम्य जलमध्ये शयानः पञ्चशिराः मुरो नाम दैत्यः सद्य उत्तस्थौ त्रिशूलमुद्यम्य तार्क्ष्यमभ्यद्रवच्च। भगवान् तच्छूलं तीक्ष्णैश्शरैश्छित्वा मुरस्योपरि बाणवर्षणं चकार। मुरेण प्रयुक्तां गदां सहस्रधा निर्भिद्य तस्य पञ्चापि शिरांसि चक्रेणाच्छिनत्। एवं निपतिते तस्मिन् तस्य सप्त पुत्राः—ताम्रः, अन्तरिक्षः श्रवणः, विभावसुः, नभस्वान्, अरुण—"पीठ" नामानं सेनापतिं पुरस्कृत्य युद्धाय आजग्मुः। रणोद्भटानेतान् निमेषेणैव भगवान् प्राणैर्वियोजयामास।

अथ युद्धभूमौ निपतितानेतान् निरीक्ष्य धरासुतो भौमासुरः समुद्रोद्भवैः स्रवन्मदैः पर्वतोपमैः द्विपैः सह युद्धाय निरगात्। अनेकसहस्रै रथैः परिवारितो नरकासुरः सभार्यं कृष्णं दृष्ट्वा प्रवृद्धक्रोधस्तस्योपरि शतघ्नीं व्यसृजत्। कृष्णस्तां शतधा खण्डयित्वा, युगपद्युध्यतो योधान् छिन्नबाहूरुशिरोधरान् कृत्वा, अपरांश्च क्षणेनैकेन कान्दिशीकान् चकार। वैनतेयोऽपि तुण्डेन, पक्षाभ्यां नखैश्च बहुधा कदनं चकार। विप्लावितं स्वसैन्यं दृष्ट्वा क्रोधानलप्रज्वलितेन दानवाधमेन शक्त्याहतस्यापि वज्रायुधप्रमाथिनो वैनतेयस्य न कापि कथा जायत। सर्वाणि विफलानि स्वायुधान्यवलोक्य कोपाविष्टः स श्रीकृष्णं हन्तुकामो यावच्छूलमाददे, तावदेव सकुण्डलं चारु किरीटभूषणं तस्योत्तमाङ्गं चक्रेण कृष्णश्चिच्छेद।

विजयश्रीसमुल्लसितः श्रीकृष्णः सत्यभामया सहैव प्राग्ज्योतिषपुरं प्रविवेश। तत्र स्थिता नरकदानवमाता भूमिदेवी कृष्णं नमस्कृत्य नरकासुरेणापहृतानि सर्वाणि वस्तूनि समर्प्य तुष्टाव। अतित्रस्तं नरकपुत्रं भगवतश्चरणयोः प्रणमय्याभयं ययाचे। माधवोऽपि तस्मै अभयं दत्त्वा नरकदानवस्यावरोधगृहं प्रविष्टवान्। तत्र भौमासुरेण बलादपहृताः षोडशसहस्रं राजकन्या वन्दीकृता अपश्यत् कृष्णोलोकरक्षकः। ताश्च तं निरीक्ष्य "भूयात् पतिरयं मह्यं धाता तदनुमोदताम्"[1] इति पृथक्-पृथक् स्वहृदये प्रार्थयामासुः। कारुणिको मधुरभावापन्नहृदयश्च भगवान् स्वपाणिभ्यामेव ता भूषयामास। ततः शिबिकाधिरूढाः सर्वाः द्वारवतीं प्रेषिताः।

अथ स्वमातुः अदित्याः कुण्डले दातुं तथैव कृष्णोऽमरावतीं जगाम। तत्र सभार्यः शची सहायेन देवराजेन यथाविधि पूजितोऽसौ अदित्यै कुण्डले प्रादात्। इन्द्रस्य नन्दनकानने विहरन् सत्यभामया प्रेरितो भगवान् वासुदेवः पारिजाततरुमुत्पाट्य गरुत्मतः पृष्ठमारोपितवान्। अथ तदननुमन्यमानान् क्रोधाविष्टान् योद्धुकामान् ससुरेन्द्रसुरवीरान् समरे विजित्य तत्तरुं द्वारिकामानीय सत्यभामाया उद्याने चातिष्ठिपत्। नरकवधाय पादयोः प्रणम्य प्रार्थितवानपि देवराजः सिद्धार्थः सन् भगवता सह योद्धुमाययौ। तमसः प्रभाव एव तदासीत्।

अथ नरकावरोधादानीताः राजकुमारी नानाभवनेषु तावद्रूपधरो भूत्वा भगवान् श्रीकृष्णश्शुभे मूहूर्ते विधिनोपयेमे। दासीशतैः परिचर्यमाणो भगवान् नानारूपधरो भूत्वा ताभिः सह पृथक्-पृथक् कल्पितेषु निरन्तरमवस्थाय विविधान् भोगान् बुभुजे।

श्रीमद्भागवतगते पारिजातहरणेतिवृत्ते हरिवंशपुराणगतादितिवृत्तादधस्तनानि परिवर्त्तनानि दृश्यन्ते—

(१) हरिवंशपुराणान्तर्गता प्रथमैव कथा अत्र प्रतिपादिता नतु द्वितीया।

---

१—श्रीमद्भागवत-दशमस्कंध-उत्तरार्ध १.५६.३५

(२) हरिवंशपुराणे प्रथमकथायां कृष्णकृतं पारिजातापहरणं "कृतकर्मा" इति कथयित्वा इन्द्रेणानुमन्यते किन्तु भागवते द्वयोः युद्धसंकेतः प्राप्यते—

(३) हरिवंशे नरकदानवेन अपहृतानां राजकुमारीणां कृते नगराद्बहिः मणिपर्वते अलकापुर्यां निवासव्यवस्था वर्तते। भागवते तु प्राग्ज्योतिषपुरे एव तासामवरोधगृहं वर्ण्यते।

(४) हरिवंशे मणिपर्वतं हरिः स्वयमेवोत्पाद्य गरुडमारोप्य देवलोकं गच्छति किन्तु भागवते रत्नैः सह मणिपर्वतमपि पृथिवी कृष्णाय प्रददाति।

(५) हरिवंशपुराणे सुविस्तृता प्रथमा कथा किन्तु सा भागवतेऽतिसंक्षिप्ता।

(६) हरिवंशपुराणे काश्यपागमनेन युद्धस्य विरामो दृश्यते, न तु इन्द्रः सर्वथा पराजितो भवति।

(७) हरिवंशे प्रथमकथायामपहृतस्य पारिजातस्य किं कृतं कृष्णेनेति न क्वापि वर्णितं भागवते तु सत्योपवने स्थापनं कृतं तस्येति।

विजयध्वजीय पाठानुसारेण तु अन्यान्यपि परिवर्तनानि सन्ति यथा--

(१) भगवतः कृष्णस्य देवैः सह संग्रामकोलाहलः यथा हरिवंशस्य द्वितीये वृत्ते दृश्यते।

(२) सत्यभामाया वीर्यातिशयो विस्तरशः उपलभ्यते; यदा हरिवंशे अन्येषु च भागवतपाठेषु स पारिजाततरुं द्वारवतीं नेतुं प्रेरयत्येव।

(३) पारिजाततरोः क्षीरोदधि मथनकाले प्रादुर्भावः, तस्य स्वर्लोकैकनियतत्वं नानारत्नस्वर्णमयत्वञ्च निरूप्यते।

(४) अष्टानां दिक्पालानां देवेन्द्रपक्षादरेण युद्धं, पराजितानां पलायनं देवराजस्यापि पराभव इत्यादिकं विस्तरशोवर्णितमत्र। प्रधान-कथा-शरीरस्य तु न कश्चिदन्यथाभावः। एतेन हरिवंशस्य द्वयोः कथयोः समन्वयः कल्पनानवत्वञ्च लक्ष्येते।

वैदिकवाङ्मयेषु इन्द्रस्य चरित्रगाम्भीर्यं बहुशः निरूपितं किन्तु पौराणिकसाहित्ये न तथा दृश्यते। प्रायशः स स्वार्थसिद्धौ निरतः, लोलुपः कामान्धश्चावलोक्यते। तथैव श्रीकृष्णभक्तिरपि लोकेषु बद्धमूला जाता। विष्णुः

एव कृष्णरूपेणावतीर्ण इति प्रतिपादनमपि साहित्यस्योत्तमो विषयः संजातः। भगवतश्चारुचरित्रप्रख्यापनेन लोकसंग्रहादर्शोऽपि ऋषिभिर्न-विस्मारितः।

एकपदे एव सकलेप्सितार्थसिद्ध्यर्थं भगवतः पारिजातहरणाख्यं वृत्तं कवयः काव्येषु सुमधुरमगायन्। पूर्वकविभिः कल्पनया संस्पृष्टा अपि विषया प्रति-भासम्पन्नानां नवानां कवीनां कल्पनामवाप्य वसन्ते द्रुमा इव नवत्वमाप्नुवन्तीति तथ्यमाश्रित्य—पुलस्त्यवसिष्ठवरप्रदानलब्धपरदेवता पारमार्थ्यज्ञानेन भगवता पराशरेण स्वविरचिते विष्णुपुराणेऽप्येषा कथा सरसतया प्रतिपादिता—

## विष्णुपुराणे

अत्रापि हरिवंश पुराणस्य प्रथमैव कथा प्राधान्येनोपलभ्यते। तथापि हरिवंशपुराणस्य द्वयोः कथयोरत्र समन्वयमभिदधता नवया कल्पनया च कथाशरीरेऽन्यथाभावमप्रतिपादयतापि महर्षिणा पराशरेण कथायाः सरसत्वमवर्धयत्।

विष्णुपुराणस्य पञ्चमेंऽशे ऊनत्रिंशतितमादध्यायादारभ्य एकत्रिंशति-तमाऽध्यायमियं कथा परिस्फुरति। इन्द्रप्रार्थनया नरकासुरवधाय सत्यभामा-सहायवान् श्रीकृष्णः प्राग्ज्योतिषपुरं जगाम। तत्र नरकासुरवधवर्णनं हरिवंश-भागवतानुकूलमेव। नरकासुरवधानन्तरं सत्यभामया सहितो हरिः अदित्याः कुण्डले दातुं देवराजनगरीमगच्छत्। शचीसनाथेन देवेन्द्रेण सभार्यस्य श्री-कृष्णस्य सपर्यायां क्रियमाणायां, मनुष्यानर्हाणीमानीति बुद्ध्या, स्वयं पारिजात-प्रसूनैरलङ्कृतापि शची सत्यभामायै तानि न ददौ। तेन कुपिता सत्यभामा नन्दनं परिभ्रमन्ती पारिजाततरुं स्वोद्यानं नेतुं चकमे। सत्यभामा-कोपकारण-मित्यमन्यथा दृश्यतेऽत्र।

पश्चादुपेन्द्रेन्द्रयोः युद्धं प्रववृते। यदा इन्द्रस्य सर्वाणि शस्त्रास्त्राणि विफलानि बभूवुस्तदा क्रोधाकुलः स वज्रं कृष्णस्योपरि चिक्षेप। कृष्णस्तु अनायासेनैव तं हस्तेन जग्राह परन्तु स इन्द्रं हन्तुं चक्रं न मुमोच—

क्षिप्तं वज्रमथेन्द्रेण जग्राह भगवान् हरिः।
न मुमोच तथा चक्रं तिष्ठ तिष्ठेति चाब्रवीत् ॥[१]

अथ प्रनष्टवज्रं गरुडक्षतवाहनं पलायनपरायणञ्च वीरं देवेन्द्रं सत्यभामाब्रवीत्—हे महेन्द्र! शची-भर्तुः पलायनं न युक्तम्, पारिजातस्रगामोदा शची त्वामुपस्थास्यते। हे शक्र! प्रयातेन व्रीडया चालम्। अयं पारिजातो नीयताम्। देवाश्च गतव्यथा भवेयुः। बहुमानवती शची पतिगर्वावलेपेन स्वगृहागतामपि मां न समुपचारेण सभाजयामास। अतः स्त्रीस्वभावाद्गुरुचित्ता भर्तुश्श्लाघनापरा चाहं, भवता सह विग्रहं कृतवती। तत्पारिजातेन परस्वहृतेन चालम्।"

अतः परं श्रीकृष्णमहिमा स्वीकारपूर्वकमिन्द्रेण युद्धं समापितम्; भगवतः स्तवनञ्च कृतम्। इत्थं देवराजेन संस्तुतः केशवः प्रहस्य भावगम्भीरमिदमुवाच—हे इन्द्र! हे जगत्पते! वयं मर्त्याः स्मः। मया कृतमेतदपराधं क्षमस्व सत्यभामायाः वचनान्मया गृहीतोऽयं पारिजाततरुर्नीयताम्। स्वकीयं वज्रमपि त्वं गृहाण, यतो हि वैरिविदारणमिदं प्रहरणं तवैव।

इत्थं सत्यभामायाः कृष्णस्य दाक्षिण्यौदार्यसमन्वितं भावनिगूढञ्च वचनमाकर्ण्य लज्जया विगलित इव देवराज उवाच—

नीयतां पारिजातोऽयं कृष्ण द्वारवतीं पुरीम्।

ततः श्रीकृष्णः द्वारवतीमागत्य सत्यभामाया उपवने पारिजाततरुं स्थापयामास इति।

## विष्णुपुराणस्य कथाया वैशिष्ट्यम्

(१) अत्र हरिवंशपुराणान्तःपातिन्योः द्वयोः कथयोः समन्वयोऽवलोक्यते।

(२) हरिवंशपुराणे भागवते च अकारणमेव पारिजाततरुं सत्यभामा हारयति किन्त्वत्र शच्या सत्यभामायै पारिजातपुष्पाप्रदानस्य कल्पनां विधाय

१. विष्णु० पञ्चम अंश अ० ३०, ६६।

महर्षिणा पाराशरेण कथाशरीरे सौन्दर्यं सत्यभामा—स्वभावे औग्र्यं वास्तविकत्वञ्चानीतानि ।

(३) सत्यभामया शच्या उपालम्भनमतीव सुमनोहरं ओजोमिश्रितञ्च वर्तते। एवमेव सत्यभामेन्द्रयोः उपेन्द्रेन्द्रयोश्च सम्भाषणं समर्यादं, स्वाभाविकं, रसपेशलञ्च विद्यते ।

(४) हरिवंशपुराणे नेयं कथा सुसंघटिता। भाषणान्यपि इतस्ततो विकीर्णानि, वस्तु वर्णनमपि नाति चारु—यथा-द्वयोः कथयोरापतनम्, पारिजातोत्पत्तिविषये –कदाचित् काश्यपः कारणम्, कदाचिच्छंकरः, कदाचिच्च समुद्रमन्थनमिति। भागवते कथां सुसंघटितां कर्तुं प्रयत्नो लक्ष्यते किन्तु संक्षेपाधिक्यात् न कथातत्त्वानि विकसनमर्हन्ति तत्र। विष्णुपुराणे पुनः कथा तथा सुसंस्कृता यथा कस्यचित् महाकाव्यस्य भवेत् ।

(५) हरिवंशे श्रीकृष्ण इन्द्रश्च तदा युद्धाद् विरतौ भवतः यदा काश्यप आगत्य निवारयति। एवं कृत्वा पुराणकर्त्रा पाठकानां नाभिमतमाचरितम्। कथारसास्वादनकाले नायकाय स्वसहानुभूतिं प्रदाय पाठकाः प्रतिनायकस्याधः पातं ऐकान्तिकं पराजयञ्च कामयन्ते। वैपरीत्ये विरसता च स्वाभाविकी। हरिवंशे काश्यपागमनेन इन्द्रस्य पराजयो नैकान्तिकः कथायाः नैरस्ये इदमप्येककारणम्। विष्णुपुराणेऽस्यान्तरायस्यानुभवो दृश्यते। अत एव विफलसकलायुध इन्द्रः पलायनपरायणे दृश्यते। सत्यभामाकृष्णाभ्यामेव स त्यज्यते। एवं सर्वथा पराजितं देवराजमवलोक्य पाठकानां सन्तोषो जायते वैरस्यापत्तिरपि दूरीक्रियते ।

एतावता पर्यालोचनेन पारिजातहरणकथाया उत्पत्तिः विकासश्च दृश्यते। श्रौतसाहित्ये कथागतवस्तूनाम्, नारदस्य, पात्राणाञ्च नामानि सन्ति किन्तु कैश्चित् कारणैस्तत्र नेयं कथा परिस्फुरति। पौराणिकसाहित्ये विनिपतिते देवराजमहत्त्वे, बद्धमूले च लोकेषु श्रीकृष्णस्य गौरवे, प्राप्तकाले पूर्वसमुपेक्षितेयं कथा कवीनां कल्पनामधिरोहति। हरिवंशपुराणे उत्पन्नेयं

कथा असंस्कृतैव वर्तते। भागवते संस्कृतापि सा कार्श्यान्न तथा मनांस्या-ह्लादयति। विष्णुपुराणे विष्णुसामीप्याल्लक्ष्मीरिव राजते। अतः परमपि क्षणे क्षणे नवतां लभमानेयं लौकिकसाहित्यदेवतामन्दिरोपासकानां कवीनामपि चेतांसि चकर्ष।

# रामावतारशर्मणां समाजोद्बोधनम्

अच्युतानन्दः झा

कीर्तिस्तम्भभूता व्यक्तिविशेषाः कस्यचित्कालविशेषस्य कासाञ्चित् प्रमुख-प्रवृत्तीनां प्रधानप्रवर्तकाः भवन्ति। तेषामादर्शो निश्चयेन चिरं समाज-मनुप्राणयन्ति। यथाकालं तेषां यशः विविधेषु क्षेत्रेषु लोके स्फुरितमा-लोक्यते। समाजे कदाचिदापतितानां कदाचाराणां वैपुल्येन तत्कालस्थि तीनाञ्चाघातेनैकतो दुष्कर्मणामाविर्भावो दृश्यते। अपरतस्तेषां निराकरणाय समाज संस्कर्तृभिस्तत्त्वान्वेषिभिर्बहूत्साहैः समाजपरिचालने सर्वथा नवीनाः विचारसरण्यः सतर्कं संस्थाप्यन्ते। ते किल तत्तद्विशेषस्थितिजनितं मानवान्तःस्वभावमभिज्ञातुं सर्वतोभावेन चेष्टन्ते। अनन्तरं व्यापारेऽस्मिन्नधि-गतसाफल्यानामेकतस्तद्विशेषभावनापरिष्कृतः उच्चादर्शानुप्राणिते मार्गे विधीयते यस्मिन् परित्यक्तपरम्परागतप्राचीनरूढयोजना नियुज्यन्ते।

ईदृशं परिवर्तनं दीर्घसमयसापेक्षं भवति। महापुरुषव्यपदेश्यो जनः स्वल्पीयसैव कालेन व्यापकं परिवर्तनमुपस्थाप्य लोककल्याणं करोति।

आसीदेतादृशां महापुरुषाणामन्यतमः कर्मनिष्ठो महामहोपाध्याय पं० रामावतार शर्म्मा। तेन स्वकीयप्रतिभाप्रभया, अतर्क्यतर्कसरण्या, कर्मयोगेन च समाजस्य सर्वेषु क्षेत्रेषु महत् परिवर्तनमैष्यत। सर्वाः परम्पराः रूढयश्च कालक्रमेण स्वीयमुपयोगित्वमपहाय निःसारा भवन्ति। अतः काले काले परि-वर्तनमपेक्षितं भवतीति निश्चितम्।

कस्यापि व्यक्तिविशेषस्य कर्तृत्ववैशिष्ट्यं केवलं तेषां कर्मणां साफल्येन तद्भारवहनयोग्यत्वेन वा नैव तथा स्फुटं भवति यथा कीदृशयोर्देशकालयोस्तत्कर्म कृतमिति विचारेण। अनया रीत्या म० म० शर्ममहाशयस्याद्यन्तं जीवनं संघर्षाणां क्रीडाक्षेत्रमिवाभाति। एतस्य निखिला विचारसरणिरूर्ध्वगामिनी

प्रेक्षावतां समुत्तेजनसमर्था चासीत्। समाजे कर्कशबन्धनेन रूढिप्रेम्णा च किंचित् खिद्यमानमानसोऽयं जनः प्रतिपक्षानगणयन् तदानीन्तनं मोहाच्छन्नं समाजं संस्कर्तुमैच्छत्।

समाजसंस्कारकस्यास्य सर्वेऽपि प्रयासाः भगीरथप्रयासवत् पराक्रमपरा एव। सार्वजनीनं तद्रचितं विपुलसाहित्यम् तपस्साध्यमहानद इव लोकस्य पावकमभवत्। निरन्तरमभ्यासयोगेन स सर्वोपकारित्वात् नायकत्वं स्वयमर्जितवान्। काले काले समागतानां जिज्ञासुसुहृदां वि० म० काशी प्रसाद जायसवाल—डा० श्यामसुन्दरदास—डा० राजेन्द्र प्रसाद—म० म० गोपीनाथकविराज-प्रमुखाणां विद्वद्वराणां विविधाभिर्वाचोयुक्तिभिः सामाजिकप्रश्नान् सप्रमाणं समाधाय चेतांस्यनुरञ्जयन्नात्मनः प्रज्ञानं प्रकटयामास। यदि नामैतस्य समस्तं जीवनं मीमांस्येत तर्हि यादृशं बुद्धेः प्राबल्यं स्फुटति न तादृशं भावकसौहार्दम्। संक्षेपेण तस्य सम्पूर्णं जीवितं ऊर्ध्वगामिन्या बुध्यानुप्राणितम्।

प्रस्तुतेऽस्मिन्निबन्धे तस्य केऽप्यनवद्या विचारादर्शा स्थाप्यन्ते।

## धर्मः

पुरा धर्मशब्दो व्यापकेऽर्थे प्रयुक्तो महर्षिभिः। कालक्रमेणायं शब्दः सीमितार्थबोधकोऽजायत। साधारणेन पुष्पाक्षतमालादिभिः देवानां समभ्यर्चनम्, कण्ठे तुलसी—रुद्राक्षादिमाल्यानां परिधारणम्, ललाटे भस्मचन्दनादिभिस्त्रिपुण्ड्रोर्ध्वपुण्ड्रादि विलेपनम्, स्थाने स्थाने मठमन्दिराणां स्थापनम्, काले काले रुद्रयाग-विष्णुयागादिसमारोहः इतीदृशानि कर्माण्येव धर्मपदवाच्यान्यभूवन्। धर्मस्यैतादृशैर्बाह्यलक्षणानुसरणैरेव धार्मिकम्मन्याः स्वार्थलोलुपाः श्रुतिस्मृतिविगर्हिताः पाखण्डा धूर्तास्तेन विनिन्दिताः।

धर्मभावनाभावितो रामावतारशर्मा तेषां व्यर्थतां प्रतिपादितवान्। तथा च मन्वादिस्मृतिप्रोक्तो धर्म एव शाश्वतधर्म इति व्याचख्यौ। धर्मे आचाराणां नैयत्यं कथमपिशर्ममहोदयस्य न सम्मतम्। यतो हीमे देशकालानुसारं परिवर्तनं भजन्ते। शाश्वस्तु सनातनो धर्मो न तथा। सिद्धिलोभतः चौर्यं निषेवमाणैः

परस्वहरणैर्यदि देवो पूज्यते तर्हि तत्कर्म क्षेमं नैवावहति, अपितु तेषां द्रव्य-शक्त्यायुषां व्यर्थं व्ययः।

सर्वैरनुष्ठेयस्य शाश्वतधर्मस्य वैलक्षण्यं मनसि निधायान्तरबाह्यरूपेणासौ तस्य द्वैविध्यं प्रत्यपादयत्। प्रथमः शाश्वतस्य मूलरूपकत्वादान्तरः, अपरस्तु फलात्मकत्वाद् बाह्याख्यः। तत्र मूलरूपको यथा—

"परमार्थानुसरणमनर्थस्य च वर्जनम्।
सत्यप्रियत्वं धर्मस्य मूलं सर्वत्र कीर्तितम्॥"[1]

ननु किं नाम परमार्थ इति चेदुच्यते—

"प्रत्यक्षेणानुमानेनाबाधेनाप्ताज्ञयापि वा।
यो ज्ञापितः स सत्याख्यः परमार्थ इति स्मृतः॥"[2]

दृश्यते हि लोकेऽजानन्तोऽपि जना यस्य कस्याप्याज्ञया तत्तत्कर्मसु व्यापृता भवन्ति। नैतदाज्ञापालनं शर्ममहोदयेन साम्प्रतं मन्यते। तेनोक्तम्—

"आज्ञा राज्ञामृषीणां वा मातापित्रोर्गुरोस्तथा।
निर्हेतुकं ग्रहीतव्या.......................॥"[3]

वाराणसी हिमाद्रौ वर्तते, गृहान्तरे वन्ध्यापुत्रशिरोवर्ति हेमपात्रमस्ति तदानयेतीदृशी व्याहताज्ञा भूतिमिच्छद्भिर्जनैः सर्वथा न पालनीया।

शर्ममहोदयो मूर्तिपूजां नैवानुमोदत इति ज्ञायते। तथा चोक्तम्—न हि सत्यात् परमार्थाद् वा परः कश्चिद्देवोऽस्ति। यदि जनैरव्याहतं सत्यमन्विष्यते, अथ च तज्जन्यज्ञानेन परेषां प्रतिकूलानि नाचर्यते तर्हि कुत्र मूर्त्यादि पूजन-द्वारेण धर्मार्जनावकाशः? भक्तिभावेन पित्रादीनां मूर्तीः संस्थाप्य पूजयन्तु जनाः किन्तु तासां पूजनेन तेषु गुणा नोत्पद्यन्ते। उक्तञ्च—

---

१. निबन्धावली पृ० २५६
२. तत्रैव
३. तत्रैव

धेनौ दुग्धादि दृष्ट्वैव तज्जातौ भक्तिमाञ्जनः ।
न भक्त्या शूकरी हन्त बहुक्षीरा भविष्यति ॥[१]

आराधनीयानां देवानां महापुरुषाणां वा भवन्ति केचनानिर्वचनीया गुणा यैराकर्षिता वयं तेषां मूर्तीनां पूजका भवामः । तथा च शर्म महोदयो मातापित्रोः सर्वेषु च श्रेष्ठेषु जनेषु समीचीनां भक्तिं कल्याणदात्रीममंस्त । भक्त्या हि तेषां मूर्तिरपि समभ्यर्चनीया । विविधधातुप्रस्तरादिनिर्मितानां देवमूर्तीनां पूजनेन भक्त्या च न कश्चन गुण समुदेति पूजकानामित्यतस्तत् कर्म सर्वथा निरर्थकम् ।

**आश्रमधर्मः**

"आश्रमादाश्रमं गच्छेदिति महर्षिप्रणीतसिद्धान्ततत्त्वस्यैकान्ततः समर्थको विलोक्यते रामावतारशर्मा । विषयेऽस्मिन् महाकविकालिदासीयमाश्रमधर्मम्—

"शैशवेऽभ्यस्त विद्यानां यौवने विषयैषिणाम् ।
वार्धक्ये मुनिवृत्तीनां योगेनान्ते तनुत्यजाम् ॥"

इति समीचीनं मन्यमानः स धर्मार्थकामानसम्पाद्याकाले संन्यासिव्रतनिरताञ्जनान् दृढमनिन्दन । इमे समाजस्य कृमयः सन्तीति गंभीरमुद्घोषितवान् ।

स्वरचितस्य "शतश्लोकोयं धर्मशास्त्रमित्यस्य" षष्ठेऽध्याये विवाहवर्णनावसरेऽतीत तारुण्यानां पुरुषाणामल्पवयस्कया कन्यया सहोद्वाहः, अथ च प्राप्ततारुण्याणां युवतीनां स्वल्पवयस्केन केनचिद् बालकेन सहोपयमं विगर्हितम् । विवाहकाल उभयतो योग्यायोग्यपरीक्षा विधेयेति स्पष्टं सिद्धान्तितम् ।

द्विजातीनां कृते मनुना प्रकीर्तितो धर्म एव शर्ममहाशयेनापि स्वीकृतः । तेषां कृते विधवाविवाहो नानुमतः । कृते हीदृशे परिणये तेषां द्विजत्वं नश्यतीति दृढं प्रतिपादितम् । यथा—

---

१—निबन्धावली पृ० २६३

"अनुलोमो द्विजेष्वेव द्विजानामिह शस्यते।
सदा परिणयस्तस्माद्द्विजत्वं विपर्यये॥"

अ० ७ श्लोक ६

सन्तोऽपि द्विजा येऽध्ययनविमुखास्तिष्ठन्ति तान्मर्त्सयन्नाह—

"निरक्षरत्वं वन्यत्वं वन्यों नैव द्विजः क्वचित्।
विद्याधिगमनं शक्त्या द्विजधर्मः सनातनः॥"

अ० ७ श्लोक ६

निरक्षरैः पुम्भिः स्त्रीभिर्वा द्विजः क्वचिदपि ब्राह्मान्यौनांश्च सम्बन्धान्नाचरेत्। अन्यथा सम्बन्धोऽयं तस्य कृते निरयावहो भवेत्। द्विजातीनां लक्षणं कुर्वताऽनेनोच्यते—

"भक्ष्याभक्ष्यविवेकश्च स्पृश्यास्पृश्य विनिर्णयः।
विधवाया अनुद्वाहो मद्यस्य परिवर्जनम्॥
द्विजानुलोमजत्वञ्च विद्वत्त्वञ्च.................."

अ० ७ श्लोक १

एतेन द्विजातीनां भोजनादिविषये सामिषं निरामिषं वा तद्यथेच्छयाऽसौ मन्यते। किन्तु ब्रह्मचारिणां विद्यार्थिनां संन्यासिनां च कृते सर्वथा निरामिषमेव स्वीकरोति। अन्यमांसापेक्षया मत्स्याहारं किमपि विशेषयति। मद्यं हि कायवाङ्मनः शक्तिनाशकृद् भवतीत्यतस्तन्न द्विजातिभिः कदापि सेवनीयमित्यप्युक्तम्।

व्यक्तिधर्मं लक्षयन् शर्ममहोदयः शिल्पशास्त्रोन्नत्यै कृतोद्योगानां सामाजिकानां जगतोऽभ्युदयकारकं धर्मस्वातन्त्र्यमुपादिशत्। यज्ञसूत्रशिखादिभिः बाह्यलक्षणैर्द्विजोः कालात्समुत्थितसाम्प्रदायिकभावाकुलिताज्ञनानेकान्ततो व्यरौत्सीत्। श्लोकमुखेन—

"यज्ञसूत्रं शिखाचेति द्विजातेर्बाह्यलक्षणम्।
तस्माद्द्विजो न भवति द्विजत्वे तत्तु धार्यते॥

उच्छिष्टमद्यप्राशादेः सिद्धतण्डुलभोजनात् ।
विधवोद्वाहकृद्भिश्च मद्यपैश्च सहाशनात् ॥
वेश्यारजस्वलादीनां संसर्गाच्छास्त्रवर्जनात् ।
दारुमृत्काचपाषाणपुनः पक्वादिभोजनात् ॥
स्वयं शौचेऽप्यशुचिभिर्बन्धुभिः सह भोजनात् ।
सम्बन्धाच्च द्विजातित्वं नामशेषं भुवस्तले ॥"

अ० ८ श्लो० २-४

तदा धर्मकञ्चुकिनां समाजाग्रणीनां जनानां समुद्रयात्रा विषयेऽनुमतिर्नासीत् । शर्ममहोदयेनाब्धियात्रामृते तत्तद्देशीयानां भौगोलिकस्थितीनामैतिहासिकतत्त्वानाञ्च ज्ञानं न सर्वथा सुकरमितिधिया विरोधवतो जनानविगणय्य समुद्रयात्राया महत्त्वं सम्यक् प्रतिपाद्यानुमतिर्विहिता । तथा हि—

नित्यं नैमित्तिकं सर्वं काले युक्तः समाचरेत् ।
द्वीपसागरगिर्यादौ धर्मेणोद्योगवांश्चरेत् ॥ अ० ६-५

अत्रेदं विचार्यते यन्महामहोपाध्यायस्य शर्ममहाशस्यायं शाश्वतो धर्मः सर्वथा मानवधर्मः । धर्मस्यास्यानुसरणे "नात्मवत् सर्वभूतेषु" इति सिद्धान्तो मानवानां हृदि स्फुरति । ततः स्वे स्वे कर्मण्यभिरता जना विश्वस्य जगतः कल्याणाय प्रयतिष्यन्त इति तु निःसंशयम् ।

## आचाराः

आचरणमिति भावे घञन्तादाचारशब्दो निष्पद्यते । अस्मात् कारणान्मानवानां तत्तदिन्द्रियसम्पादितानि कर्माण्याचारशब्देनैवाभिधीयन्ते ।

सदसद्भेदेन कर्मणो द्विप्रकारकत्वं मन्यमानैः सुधीभिराद्यस्यानुष्ठेयत्वं द्वितीयस्य प्रहेयत्वमुपपाद्यते । श्रीमद्भगवद्गीतायामपि—"कर्मण्येवाधिकारस्ते-मा ते सङ्गोऽस्त्वकर्मणि" इति भगवता श्रीकृष्णेनोपदिष्टम् । शर्ममहोदयेन भोजनमैथुनजन्मस्वाध्यायमृत्यूत्सवाः षडाचारावसरा वर्णिताः एतेषामनुपालनेन श्रुतिस्मृत्योरपि पन्था नोल्लंघ्यते । प्राक्तनमहर्षिभिराचरिता आचाराः काल-

क्रमानुसारं सम्प्रदायोद्भूतानां दुष्कर्मणामनायासविकासेन स्वार्थिभिर्धूर्तैरन्यथा प्रकल्पिताः। तामाचारपद्धतिमनुसरन्तो जना न कयापिरीत्या तत्त्वमन्वेष्टुं क्षमाः। "आत्मानं विद्धी"ति उपनिषदां शिक्षया सदाचारवद्भिरेव जनैर्जीवनस्योत्कृष्टतमं तत्त्वं स्वायत्तीकर्तुं शक्यमित्यभिलक्ष्य सामाजिकान् सदाचारपद्धत्यासौ तत्त्वमन्वेष्टुमादिदेश। आचाराः सत्कर्माङ्गभूताः। उपयुक्तेषु सदाचारावसरेष्वस्ति किञ्चिद् विचार्यम्। अङ्गेन यथाङ्गी न व्यालुप्येत तथा मनुष्यैः करणीयम्। प्रायशो जना आचारस्य महत्त्वमङ्गीकृत्य तदङ्गिभूतं कर्म समुपेक्षन्ते। अतएव ते सारवस्तु परित्यज्यासारग्रहणेन विवेकहीनमात्मानं प्रमाणयन्ति। शर्ममहोदयेन पुनः पुनरुक्तमाचारा गौणास्तन्मूलकानि कर्माण्येव मुख्यानीति। आचारजालेन सारस्य वस्तुनो गौणत्वान्नकोऽपि स्वजीवने महत्त्वमधिगच्छतीत्यस्माद्धेतोर्विज्ञानपद्धत्या सारं वस्तु सर्वैरन्वेष्टव्यमिति बहु चानेन कीर्तितम्।

## जाति-व्यवस्था

श्रीमद्भगवद्गीतोक्तं गुणकर्मविभागशश्चातुर्वर्ण्यं रामावतारशर्मणानुमोदितम्। तत्राध्ययनविधौ "स्त्रीशूद्रौ नाधीयाताम्" सिद्धान्तपराञ्जनान् बहुधा निर्भर्त्सयन् सर्वविधशिक्षाभ्यासाय समेषां समानाधिकार इति सतर्कं व्याचख्ये। मुस्लिमविश्वविद्यालय—हिन्दूविश्वविद्यालयादिनामकरणेऽपि कतिधानेनाक्षेपो विहितः। केवलं विवाहादिकर्मण्येव जातिर्निरूपणीया न सर्वत्रेति तात्कालिकसभ्यजनगोष्ठीषु सिद्धान्तितम्।

## स्त्रीशिक्षा

वैदिकयुगे शिक्षणविधौ सर्वेषामृषीणामाश्रमे समेषामासीत् समानाधिकारः। कस्मिन्नप्याश्रमे नारीणां शिक्षाधिकारस्तदानीन्तनैर्ऋषिभिर्न निन्दितः। मैत्रेयीगार्ग्यादयः स्वशिक्षाभ्यासेन विख्यातकीर्तयोऽद्यापि संस्तूयन्ते। "यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः" इत्यनेनापि तासां शिक्षणमेव प्रशस्यते। शिक्षा-

क्षेत्रेऽपि "न स्त्री स्वातन्त्र्यमर्हती"ति मतावलम्बिनोऽपराद्धाञ्जनानभिलक्ष्य शर्ममहोदयेनोट्टंकितम् —

"यथा पुंसां तथा स्त्रीणां स्वातन्त्र्यं सर्वकर्मसु।"

अ० ६ श्लोक ६

गृहे नितरामाप्तबन्धुभी रक्षिता अपि ता अरक्षिता एव तिष्ठन्ति यदि ताः स्वयमेवात्मानं न रक्षन्ति। पुनरप्यग्रे—

"अशिक्षणं हि नारीणां हेतुः सोऽवनतेः परः॥

अ० ६ श्लो० ६

धर्मे सनातने शश्वद्विद्यायान्तु विशेषतः।
स्त्रीभृत्यादेरधीकारः परेषामिव शस्यते॥"

अ० ६ श्लोक १०

नारीणामवगुण्ठनरीतिरसौ (पर्दाप्रथा) नान्वमोदत। तद्विषयेऽस्य मतं सर्वथामहीयः प्रतिभाति। यथा—

"निगूहनं गृहे स्त्रीणां स्वास्थ्यवंशादिनाशनम्।
पतिपुत्रादिसहिता गच्छेयुर्यत्र कुत्रचित्॥

अ० ६ श्लोक ८

न केवलमयं सिद्धान्तो भाषणात्मको लेखात्मको वासीत् किन्तु तस्य स्वके व्यावहारिकजीवनेऽप्यलोक्यते। महाभागस्यास्य सर्वाः कन्यकाः सुशिक्षिताः। अस्यैव च प्रेरणया काशीप्रसाद-जायसवालादयस्सुहृदः स्वस्वकन्यकानां शिक्षणे समुद्युक्ता अभवन्।

## विधवाविवाहः

शर्ममहोदयो द्विजेषु विधवोपयमं न मन्यत इति पूर्वमुक्तमेव। द्विजत्वं परिहायैव कश्चिद् विधवाविवाहे प्रवर्तेत। विधवाविवाहसम्बन्धि शर्ममतं खलु—

मैथुनान्तेन विधिना परिणीता ततोऽथवा।
विधवेति मता तस्या द्विजैर्नोपयमः पुनः॥

अमैथुने विवाहे पत्युर्मरणानन्तरं नार्याः कुमारीत्वं न नश्यति । अपि च

> समैथुने विवाहेऽपि विधवा कामतः पतिम् ।
> पुनर्द्वितीयं कुर्वीत न तु गर्भादिपातनम् ॥
> द्विजेतरेषु काम्योऽस्ति विधवायाः पुनर्वरः ।
> अंगीकृत्य द्विजान्यत्वं विधवामुद्वहेत्ततः ॥"

विधवाविवाहविषयको यः सिद्धान्तः शर्म महोदयेन समुपस्थापितः स एव सिद्धान्तोऽधुना शासनेनाप्यनुमोदितः । एतावता तस्य दूरदर्शित्वमुद्भासते ।

## पुराणप्रामाण्यम्

"पुराणमित्येव न साधुसर्वमिति सम्यग्रूपेण शर्ममहोदयेन स्वीकृतम् । तथा च स्वभावोक्ति-रूपकोक्ति-अतिशयोक्तीतिभेदै रुक्तीनामसौ त्रैविध्यं प्रत्यपादयत् । स्वक्रियारूपवर्णनाद् वैज्ञानिकवार्ताः स्वभावोक्तयः । आयुर्वेदभूगोलादयः स्वभावोक्तिप्रधानाः । वैदिकसंहिताद्या रूपकोक्तिसम्पन्नाः । पुराणानि किलातिशयोक्तिप्रधानानि भवन्ति । भारतीयानामज्ञानेनैव पुराणानामीदृशी दुरवस्था संजाता । ते पुराणातिशयोक्तीः यथार्थं नावबुध्यन्ते । वेदशास्त्रादिवाक्यवत् पुराणवाक्यानां प्रामाण्यं न स्वतःसिद्धमतिशयोक्तिमत्त्वात् ।

यदि पुराणोदिताः कथाः स्वभावोक्तिमयज्योतिःसिद्धान्तेन रूपकात्मक वैदिकवाङ्मयेन चाविरुद्धा न भवन्ति तदा तासां याथार्थ्यं नैव स्वीकार्यमिति[1] शर्ममहोदयस्य मतं नितरां समीचीनम् ।

पुराणातिशयोक्तीरेव वैज्ञानिकस्वभावोक्तिदिशा प्रतिपादयद्भिर्जनैर्भारतीयः समाजो वञ्चितः । इदमेव भारतीयानामन्धन्तमः । एतेनैव देशस्यास्यावनतिरभवत् ।[2] केवलं शब्दजापेन न किमपि सिध्यति यद्यर्थो नानुष्ठीयते इति वदता शर्ममहोदयेन पुराणप्रामाण्यवतां व्यामोहः सतर्कं विगर्हितः ।

---

१. निबन्धावली पृष्ठ ११५
२. तत्रैव ,, ११६

## कुप्रवृत्तयः

तदानीन्तने मोहाच्छन्ने समाजे भारतीयानां दौर्भाग्यादनेकविधाः प्रवृत्तयः समुत्पन्नाः। शिल्पशास्त्रविमुखा वेदविद्याविहीना जनाः सिद्धिलोभतो भूतप्रेतादीनां पूजने व्यासक्तचेतसः समजायन्त। तेषामभून्मन्त्रयोर्द्रढीयान् विश्वासः। "कर्मण्येवाधिकारस्ते" इति गीतोक्तसिद्धान्तस्तेषां कृते महत्त्वपदं नाध्यास्त। क्वचित् पाखण्डिनां धर्मकञ्चुकिनां यथेच्छं शाश्वतधर्मकुठाराघातः क्वचिद् वन्ध्यापुत्रान्वेषणवत् मन्त्रतन्त्रशक्तिचर्चा, क्वचित् स्वार्थबुद्ध्या मायावादस्य प्रचारः, क्वचित् पापधिया परस्वहरणम्, इत्येतादृशानि दुष्कर्माणि समाजमभिव्याप्नुवन्। दृष्ट्वैवेमानि दुष्कर्मजातानि सर्वथा खिन्नचेता रामावतार शर्ममहोदयः सधैर्यं स्वकीयैस्तत्तल्लेखैः सभासु गोष्ठीषु च तत्तत्सारगर्भितैर्भाषणैरेषु दाम्भिकेषु धूर्तेषु कटु प्राहरत् पूर्वोक्तानां दुराचाराणां निराकरणं परमार्थज्ञानमन्तरेण न कथमपि सम्भाव्यत इत्यतः सर्वैर्व्यर्थहितानुसन्धानं सन्त्यज्य परमार्थज्ञानपूर्वकं जीवनोपयोग्यव्याहतमनुसन्धेयमिति प्रतिपादितम्।

विचारानन्तरं सिद्धान्तोऽयमवश्यं नवीन इति वयं मन्यामहे। तदा नासीदीदृशः कश्चन पुरुषो यो ह्यनया रीत्या सामाजिकानां कुसंस्काराणां परिमार्ज्जने तथा व्यापृतो भवेत्। तस्मिन् कालेऽस्य महाशयस्य विरोधिन एनं नास्तिकं कथयन्ति स्म। तथापि तादृशं प्रवादसमूहमगणयन्नयं शर्ममहाभागः स्वकर्मतो नैव विरतः। १९१२ तमे वर्षेऽखिलभारतीयसमाजसुधारसम्मेलने सभापतिपदलंकुर्वतानेन सारगर्मितेन भाषणेन समाजस्य कुरीतीः समेषां प्रेक्षावतां सम्मुखमुपस्थाप्य स्वप्रतिपक्षान् हतप्रभान् विधाय कर्त्तव्यस्य कर्मणो दिशानिर्देशो विहितः।

## विज्ञानं प्रति श्रद्धा

शर्ममहोदयस्य विज्ञाने प्रीतिरधिकासीत्। स जगतीतलेऽस्मिन् सर्वं वस्तुजातं विज्ञानपद्धत्या यथायथं परीक्ष्य सत्यममन्यत। विज्ञाने शिल्पशास्त्रस्य प्रमुखं महत्त्वं व्याख्यातवान्। वैज्ञानिकशिक्षाया अनभ्यासेनैव राष्ट्रस्येदृशो ह्रासो जात इति बहुत्र भाषणेऽचकथत्। यदि पुनर्भारतीया भेदवादान्विहाय वैज्ञा-

निकपद्धत्या यथेप्सितं शिक्षामभ्यसेयुस्तदा सपद्येव तद्गौरवं भूयः स्वायत्तीकर्त्तुं वयं प्रभविष्याम इति विचारादर्शी तस्य महात्मनो विज्ञानप्रीतिमेवोद्भावयन्ति। अवलोक्यन्तेऽप्यस्माभिरस्य महोदयस्य देववाण्यां राष्ट्रभाषायां वानेकशो विज्ञाननिबन्धाः।

कस्यचित् स्वतन्त्रस्य राष्ट्रस्य विकासाय यदावश्यकीयं तत्त्वजातमद्य राष्ट्रनेतृभिः सर्वत्र स्वीक्रियते तत्सर्वं भगवता रामावतारशर्मणा पूर्वमेवोच्चैः समुद्घोषितम्। यथा—मातृभाषाद्वारेण शिक्षणविधौ सर्वविधशिक्षासु सर्वेषामनिवार्यः समानाधिकारः धर्ममाश्रित्य मतवादान्विहाय मूलभूतस्य शाश्वतधर्मस्य सर्वत्र संस्थापनम्, आलस्यं परित्यज्य चतुर्वर्गमूलात्मिकासु सुविद्यास्वनुरागः, जातिवादस्य नियतं परित्यागः त्रिकालसंगतस्य सत्यस्यानुष्ठानम्, स्वदेशेऽभ्युदये स्थिरचेतसां मानवानामुद्योगावलम्बनम्, विज्ञानरीत्या वस्तुजातं परीक्ष्य सत्यासत्यविनिर्णयः इत्यादि। किं बहुना! तेषां विचारादर्शीनां सम्यग्ज्ञानाय तद्रचिताः केचन श्लोका "भारतगीतिकायाः" सहृदयानां पाठकानां पुरःस्थाप्य निबन्धोऽयमस्माभिः संक्षिप्यते।

अलं भारतीया मतानां विभेदै-<br>
रलं देशभेदेन वैरेण चालम्।<br>
अयं शाश्वतो धर्म एको धरायां<br>
न सम्भाव्यते धर्मतत्त्वेषु भेदः ॥१॥

गिरं संस्कृतां राजकीयां च वाणीं<br>
समभ्यस्य लोकद्वयस्यापि सौख्यम्।<br>
वशे स्थापयध्वं स्वधर्मं स्वदेशं<br>
तथा प्रापयध्वं पुनर्गौरवं तत् ॥२॥

समभ्यस्य देशान्तरीयाश्च भाषाः<br>
समाहृत्य विज्ञानतत्त्वानि युक्त्या।<br>
गिरा दिव्यया संस्कृतानि प्रकामं<br>
स्वदेशीयभाषासु संचारयध्वम् ॥३॥

न सम्भाव्यते नेष्यते भोजनैक्यं
न चान्यत्तथा बाह्यमैक्यं सुधीभिः।
हृदैकेन बुद्ध्यैकया सर्वयत्नं
स्वदेशोदये भारतीयास्तनुध्वम् ॥४॥

किं पूर्वसूरिभिरभूत् कृतमत्र देशे
द्वीपान्तरेषु कियत् क्रियतेऽधुनापि।
आलोच्य सर्वमिदमङ्ग विधत्त यत्नं
यत्नेन सर्वमिह सिद्ध्यति नात्र शंका ॥५॥

——

# पाददण्डः

वनमाला भवालकर:

( नेपथ्ये नान्दी )

कैलासे केलिकाले प्रियवचनरतार्धाङ्गिनीदत्तदृष्टेः
श्रुत्वा हा हेति दूराज्झटिति शरणिनां रक्षणायोत्थितस्य ।
देव्या सम्भ्रान्तयाङ्कात्परिपतनभयादाश्रितो शंकरस्य
त्रैलोक्याधारहेतुर्दुरितभयहरः पातु नः पाददण्डः ॥

( नान्द्यन्ते ततः प्रविशति वामतो गृहाभ्यन्तरद्वारेण शान्ता पञ्चत्रिंशद्वर्ष-देशीया गृहस्वामिनी । दक्षिणतो गृहप्रवेशद्वारि गत्वा, औत्सुक्येन बहिः पश्यन्ती, उच्चैरामन्त्रयति )

शान्ता—भोः पत्रवितरक, शृणु तावत्, अस्ति किञ्चित्पत्रमस्मत्कृते ? किं भणसि, अद्य नास्त्येव किमप्यस्मानुद्दिश्य ? किं नहि सुधीरस्यापि ?

( खिन्नमुखी द्वारदेशादभ्यन्तरीभूय द्वाराभ्याशे स्थितस्य पुष्प-करण्डकाधार काष्ठफलकोपरि विचारमग्नेव शून्यदृष्टिरुपविशति । नेपथ्ये "शान्ते" इति शब्देन सह वामतोद्वारेण प्रविशति भास्कर-श्चत्वारिंशद् वर्षावस्थो धृतबहिर्गमनवेषः शान्तायाः पतिः )

भास्करः—अहो, किं नु खलु अत्रैवासीना मद्गृहिणी उच्चैराहूयमानापि न ददातिप्रतिवचनम् ! अयि, सुप्तोत्थितं मां मधुरोष्णचायपानपिपासा बाधते । मध्याह्ननिद्रानन्तरमुद्घाटितनयनस्य ममाभिमुखं पर्यङ्कपार्श्वे पेयपात्रहस्ता स्मेरानना मामनुनयन्ती क्व सा मे पतिपरायणा प्रिया क्व चैषा रुष्टवदना पेयप्रतीक्षापरिश्रान्तं कृतवेषान्तरमपि भर्तारमुपेक्ष-माणा क्षारजलपूरितमुखीव जोषं निषण्णा मम सहधर्मचारिणी । हम्, ते हि नो दिवसा गताः । हम् किं ममेदमाकाशभाषितं कस्यापि श्रवणपुटप्रवेशमपि नार्हति ? युज्यत एवैतद्यदुपस्थिते भ्रातरि किं भर्तृभाषणेन ।

शान्ता—( सोद्वेगम् ) किं ममापि श्रवणेन वृथाप्रलापेन वा। गृहस्वामिनः शासने स्थितायामपि मयि तस्य पिपासाशमनाय नास्ति गृहे शर्करा।

भास्करः—अलं मिथ्याकदेन। भवादृश्याः सुगृहिण्याः कोष्ठागारे शर्करा नास्ति संचितेति को विश्वसेत्।

शान्ता—( सरोषम् ) कुतः संचीयते। किं नहि जानाति महाभाग आपणे शर्करा दुर्लभेति। तव तु प्रतिदिनं द्विहोरापर्यन्तं वृत्तपत्रपठनं कालापव्यय एव प्रतिभाति मे। न जाने कुत्र लुप्ता शर्करा। युद्धकालेऽपि नासीत्तथा शर्कराया अभावो यथाद्य युद्धावसानानन्तरम्।

भास्करः—किं नावगच्छति त्वादृशी विदुषी समवसितेऽपि समरे देशोऽयमद्याप्यापद्दशापन्न एव वर्तत इति। व्यर्थं तव प्रत्यहं निरन्तरमाकाशवाणीश्रवणम्।

शान्ता—आपद्दशां कर्णेन श्रुत्वा कर्णान्तरेणापसारयितुमर्हन्ति पुरुषा एव। कथमस्माभिर्विस्मर्यते। प्रातरुत्थाय गृहादस्तंगतो गृहपतिः कार्यालयाद् दीपप्रकाश एव पुनरुदेति गृहे। दिने दिने गृहिण्या गृहकर्मण्यनुभवितव्यामापद्दशां स किं वेत्ति?

भास्करः—सह शर्करया वाङ्माधुर्यमपि लुप्तमिव दृश्यते यदहं निपुणमुपालब्धोऽस्मि। बाढम्। यत्किमपि हृदये कृत्वैष उपालम्भस्तत् श्रोतुमवहितस्तिष्ठामि। प्रारभ्यतां वाग्वर्षणम्। किन्तु न दण्डनीयोऽयं जन एवं पेयनिरोधेन।

शान्ता—तद् गच्छ मित्रगोष्ठीम्। परिहीयते गमनवेला। तत्रैव कुत्रापि शममेष्यति ते पिपासा।

भास्करः—सत्यं भीतोऽहं गृहदेवताया रोषेण। किन्तु कथमपरिज्ञानकोपकारणः प्रतिकारोपायमपि चिन्तयेदेष दासः। शान्तेति स्थाने खलु कृतनामधेयाया अनुपपन्नोऽयमदृष्टपूर्वः कोपः।

शान्ता—( साश्रुकण्ठा ) कुपिते भगवति किं मम कोपेन ।

भास्करः—हम्, विदितम् । शान्ते अरण्यरुदितमिव मे समुपाश्वासनम् । तदुपेत्य त्वं मुहुरेकमेव मार्गमनुधावसि । लंघितासि पुनः सन्तापेन । मुदोऽप्यवसरे वृथा विषीदन्ती नात्मानं गणयसि न गृहागतान् । युद्धकाले चिन्तया विक्लवं ते चित्तं दिष्ट्या निर्वृतमद्य । समरव्यसनेन विपन्नस्तव भ्रातेति बहुलीभूतेन वृत्तान्तेन प्रवर्तितस्तवाश्रुप्रवाहो भगवत्प्रसादेन प्रमार्जितः । बहुशोचितस्तवानुजो यमसदनमिव प्रविश्य सकुशलः प्रत्यागतः ।

शान्ता—कथं सकुशल इति ! पंगुः, एकपादः—

भास्करः—अलमतिमात्रं संतप्य । मातृभूमे रक्षणाय प्राणार्पणमपि न बहु मन्यन्ते वीरयुवकाः किं पुनश्चरणदानम् । पश्य तव प्रतिवेशिनीमेकपुत्रापि या सुतं समरे सम्प्रेष्य तन्मरणदुःखमपि धृत्या वहति शान्तचित्ता । सुधीर एकपादोऽपि चिकित्सालयं संस्थाप्य सुखेन जीवनं यापयिष्यति ।

शान्ता—न पश्यामि तस्य जीवने कमपि सुखस्यावकाशम् । तस्याशादीपो निर्वापित एव यदि तस्य सर्वस्वभूतायाः प्रेयस्या अनुरागोऽवस्थान्तरं गतो भवेत् ।

भास्करः—यथार्थं प्रेयसी चेत् सुधीरलग्नं तस्या हृदयं कथमन्यगामि भवेत् ? यदि यथा त्वं वदसि तथा ललिता चलचित्ता प्रत्याख्यानपरुषा भूत्वा सुधीरमवधीरयति तर्हि नैव सा प्रेयसीपदमर्हति ।

शान्ता—तर्कविसङ्गते लोकव्यवहारे निरर्थक एष युक्तिवादः ।

भास्करः—बाढम् । अनभिज्ञो लोकव्यवहारस्य तवैव वचनं प्रमाणीकरोमि । कामं सुधीरो भवतु ललितया विप्रलब्धः । तथापि हस्तसन्निहितं उपाये, अस्थानमेतत्खलु चिन्तायाः । चिरं मे मनसि कृतं मन्त्र— यामि किञ्चित् । ललिता यदि सुधीरं प्रत्यादिशेत् तर्हि निशामेव तस्मै दातुकामोऽहम् । सुधीरे बद्धरागेव भाति सा । तां प्रति

सुधीरस्यापि दृष्टिरागोऽनुकूल इव प्रतीयते। अनयोर्विवाहेन सा यथानुरूपभर्तृगामिनी भवेत् तथैव सुधीरोऽपि तवार्तिविषयान्तं न प्रपद्येत।

शान्ता—अलं दूराधिरोहिण्या एवमाशया। अविचारणीय एष विषयः। तरुणीभूताऽपि परिणयपराङ्मुखी निशा पाञ्चालिकावत् केनाऽपि कस्मा अपि कथं दीयेत। सौंदर्यस्य मापदण्डेनैव यत्र कन्यामूल्य-नियमः, गुणानां तु न कापि गणना तत्र विवाहविपणो मुहुरनुभूत-परिभवा सा निर्विण्णतया परिणयस्य मनो न करोति। अन्यदपि चिन्तनीयम्। सुधीरोऽपि सुशिक्षितां रूपवतीमभिजातां सुशीलां गुणसम्पन्नां ललितां पत्नीपदाय संकल्प्य भग्नमनोरथोऽपि कथं तत्स्थाने निशामारोपयिष्यतीत्यपि महान् सन्देहः।

भास्करः—यद्येवं ललिता शीलगुणोपेता सुशिक्षितोन्नतकुलोत्पन्ना कथं सापि स्वेच्छया सकृद्वरणानन्तरं सुधीरं विहाय पतिमन्यं चिन्तयेत्। अस्थाने खलु संशयितं ते मनः।

शान्ता—यदि अलीका मम शङ्का तर्हि किं चिरायते ललिता। गृहागतस्य सुधीरस्य सप्ताहोऽद्य। आयाते तस्मिन् तद्दिने एवाविलम्बं पत्रं प्रेषितम्। अद्यापि सा नायाता न वैतावत्कालं पत्रोत्तरमपि विसृजति। किं न तर्कयसि किमप्यस्या दुर्व्यवहारेण? सेनाधिकार-पदारूढस्य धनमानवतोऽर्धाङ्गिनी भवितुं लालायिता सा मम भ्रातृकं वशीकृतवती। किन्तु पङ्गुत्वे पतितः स इदानीं नाधिकार-पदार्हः एतादृशीनामाढ्ययुवतीनां पतिपदस्याप्ययोग्यः संवृत्तः। किमत्र चित्रं यदि जीर्णवस्त्रवद् निःशङ्कं त्यज्यते आभिः। दुष्टे, अद्य भव सकामा। मातृपितृविहीनो ममानुजो मयाऽऽबाल्यात् पुत्रत्वे परिकल्प्य संवर्धितः। प्राणपणेनापि तस्य सुखमसाधयिष्यं यदि त्वं तस्य जीवने पदं नाकरिष्यः। तव प्रेरणयैव शत्रुसम्मुखं

गत्वा चरणहीनो जातः। इदानीं स्वार्थान्धा तं प्रत्यादिशति चेत् का गतिः, कथं सुधीरः समाश्वासनीयः।

भास्करः—प्रथमं तावत् त्वमेव समाश्वासनीयासि संवृत्ता यान्यं समाश्वासितुकामा।

शान्ता—किं करोमि ? अनया वामया विप्रलब्धोऽपि सुधीर विमनस्कतया तामेव चिन्तयन् शय्याप्रान्तविवर्तनैर्निशां गमयन् प्रजागरकृशो लक्ष्यते। अतिमात्रं शोचनीयतां गतस्य तस्य कृते बलवदुत्कण्ठिताहं न पारयामि चित्तं स्थिरीकर्तुम्। हा कष्टम्। (बाष्पं विसृजति)

भास्करः—मा मा। न शोभते तवेदं वैक्लव्यम्। सर्वदर्शी भगवान् यथापूर्वं तव दुःखभयं दूरीकृतवान् तथैवेमामपि विपदं निवारयिष्यति। यत् सत्यं, केनापि दुर्निवारेण कारणेन चिरायितापि ललिता अचिरेणैवागमिष्यतीति मेऽन्तःप्रवृत्तिर्दृढं प्रमाणीकरोति।

शान्ता—भवतु ते मुखं शर्करापूरितम्।

भास्करः—हा। कुत्र शर्करा। शर्कराभावे पेयमपि प्रतिषिद्धं त्वया।

शान्ता—नहि नहि। क्षणेन सिध्यते तव पेयम्। किन्तु वेषेणानेन तर्कयामि पुनर्बहिर्गमनोद्यतो भवानिति।

भास्करः—साधु तर्कितम्। अद्य विश्रामदिवसः। सप्ताहेऽयमेवैको वारः स्वच्छन्दानुवर्तनाय। दिनषट्कं तु कार्यालयबन्दिनो वयम्।

शान्ता—अत एवाधिकतरं युज्यते विश्रामदिने गृहे स्थातुम्। एकाकी सुधीरः पदमपि गन्तुमक्षमो विवशीभूय पर्यङ्कस्थ एव दिनमेकैकं शून्यमनसा गणयति। तत्पार्श्वे उपविश्य वार्तालापैस्तस्याकुलं चित्तं विनोदयितुं त्वमेव जानासि। स्त्रियस्तु वयं तेन सह संभाषणाय नालम्।

भास्करः—एषा तव चाटुवचनचातुरी स्वकार्यसिद्धये। यत् सत्यं, अद्यापि न जातो भुवि स पुरुषो यो वाग्विलासे दत्तपत्रेण नारीवर्गेण स्पर्धितुमुत्सहेत। भवतु भवतु, भ्रूकुटिभङ्गेन सूचितं रोषं तावत् संहर। एष परित्यक्तो मया बहिर्गमनविचारः। (उष्णीषं शिरसोऽवतारयति)

( नेपथ्ये गीतध्वनिः )

अहो, निशाया गीतध्वनिः श्रूयते। मन्ये, सुधीरस्य मनोरञ्ज-नाय निशा गातुमपि प्रवृत्ता। अन्यथा गाननिपुणाऽपि सा न कस्य-प्यनुनयवर्तिनी। अतोऽपूर्वोऽयमवसरः। एहि तत्रैव गत्वा शृणुवः। अथवा प्रथमं तावत् तृषार्तं कण्ठं शमयित्वा पश्चादेव श्रोत्रविनोदनं भवेदित्युदारः कल्पः। अतो महानस एव पूर्वं गच्छावः। एहि।

( निष्क्रान्तौ )

( ततः पटोद्घाटनादनु प्रविशति प्रावृतशरीरार्धः पर्यङ्कशायी युवा सुधीरः, समीपे काष्ठासनस्था गायन्ती निशा )

निशा—( जाति—पादाकुलिका )

तमसान्तरितं गगनवितानं
जलद न वितरसि तृषिते नीरम्।
आतपतप्तं परितः पुलिनं
नापसारयसि दिनकर तिमिरम्॥
रजसि विकीर्णं विकसितकुसुमं
न हि विसारयसि पवन परिमलम्॥
अन्धयितेव सुधांशो वसुधा
सुधया संजीवयसि नहि निशाम्॥

सुधीरः—अहह, अनेन गीतमाधुर्येण लब्धमद्य श्रोत्रनिर्वाणम्। निशादेवि, न मया कदापि संभावितं कोकिलकण्ठी भवतीति।

निशा—कोकिलवर्णाया कोकिलस्येव कण्ठ इति किमाश्चर्यम्। अथवा रूपं विना स्वरमाधुर्यं कुत इति युज्यते भवतो विस्मयः।

सुधीरः—( सलज्जम् ) मा मा, एवं विचिन्त्य। नासीदीदृशी मे विवक्षा। तथापि यदि मम वचनैरवज्ञाता भवती तर्हि बद्धाञ्जलिरहं क्षमां याचे।

निशा—अलमात्मानमुपालभ्य। मयापि परिहासेन विजल्पितम्। भवतु, अह-मपि भवतानुग्रहीतव्या गीतमेकं श्रावयित्वा।

( घाटिका-यन्त्रे चतुर्वादनध्वनिः )

सुधीरः—( ससंभ्रमम् ) हम्, किं चतुर्वादनवेला संजाता। भवत्या गीतरागेण हृतमनसः समयगणनापि विस्मारिता। पत्रवितरकादप्राप्तं पत्रमद्यापि।

निशा—( सस्मितम् ) भवत्कृत आगतं पत्रं पत्रवितरको अदत्त्वा निजगृहं न नेष्यति। सुधीर महाभाग, भवल्लिखितपत्रस्योद्दिष्टस्थानप्रापणे ततो विसर्जितस्यात्रागमने च कालाकालव्यपेक्षा भवेदेव। मन्येऽहं विरहिजनहिताय विशेष पत्रप्रेषण-व्यवस्था संस्थापयितव्येति। आगामिपञ्चवार्षिकयोजनार्थमेष प्रस्तावो राज्यशासनायावश्यमेव मया प्रेषणीयः। किन्तु महाशय, एतादृश्याः सेवाया वेतनमप्यपेक्षेऽहं भवत्संगीतश्रवणम्।

सुधीरः—मधुरस्वररुचेरपि मम न गानक्षमतेति लज्जितोऽहम्।

निशा—नाहं विश्वसिम्येतादृशं विनयवचः। ललितादेवी तु लब्धयशा संगीतज्ञेति बहुश्रुतम्। किमतीवमधुरं तस्या गायनम्?

सुधीरः—( सोत्साहम् ) तस्यास्तु गीतमधुरिमा वर्णनातिगः प्रतिभाति।

निशा—अथ साऽस्मिन् छायाचित्रे इव प्रत्यक्षमप्येवं मनोहराकृतिः?

सुधीरः—मम नयनयोस्तु सा सौन्दर्यस्य साक्षान्मूर्तिरेव। एषा प्रतिकृतिस्तस्या रूपसम्पदोऽवशमपि नावतारयति। किंतु परमार्थेनाहं तु तस्या हृदयस्य सौंदर्यातिशयेनैवाधिकतरमाकृष्टोऽस्मि। प्रेमामृतस्यन्दि सुकोमलं तच्चेतः।

निशा—यद्येवं, भवतो रुग्णावस्थां जानन्त्यपि कथमद्यापि नायाता।

( ततः प्रविशति ससंभ्रमं भास्करः शान्तानुगतः )

भास्करः—( जनान्तिकम् ) शान्ते, मधुरः कथायोगो विसंवादितो निशया। ( सुधीरसकाशं गत्वा ) सुधीर, त्वद्गानश्रवणाशया सोत्सुकौ बहिरेव विलम्बितवन्तौ। त्वया नन्वावयोराशाभङ्गः कृतः।

सुधीरः—आर्य, अनभ्यस्तसंगीतस्य मे कलाया अप्रदर्शनमेव वरम्। सम्प्रति बद्धा मुष्टिर्लक्षाधिकमूल्येति। तथाप्यतःपरं सत्यमेव मया कन्दुकक्रीडाजलावतरणादीन् प्राक्परिचितान् विनोदान् विसृज्य अयमेव संगीतच्छन्दोऽङ्गी करणीयः।

भास्करः—साधु चिन्तितम्। स्वान्तः सुखमिव बहुजनचित्तरंजनमपि संगीतं नाम। अद्यैव किं न प्रारभ्यते। किं न जानासि त्वं श्वः कार्यमद्य कुर्वीतेति।

सुधीरः—(सहास्यम्) किन्तु नाहमिदानीं मृत्युना गृहीतः। मृत्युरपि मत् बिभेति यतो गृहीतोऽपि तेन मुक्तोऽहम्।

शान्ता—तात, सत्यमप्येतदवचनीयम्। न युक्तं दैवमुपहसितम्। ललाटे लिखितं केनाऽपि न ज्ञायते।

सुधीरः—अस्या भीरुताया औषधमस्ति समराङ्गणदर्शनम्। भवतु अक्क, यदि तुभ्यं न रोचते ममेदृशं वचनम्, एषोऽहं तूष्णीं स्थितः। स्थातव्यं मया कुत्र ? शय्यायामेव। आर्य, शयनाधीनेन किमन्यदपि क्रियेत। कियत्कालं मामित्थं पर्यङ्कस्थमेव द्रष्टुमिच्छति भवान्। द्वित्रिदिनेषु प्रतिपालितो मे पाददण्डः किमद्य शिल्पिनानीयते न वा। इदं शुश्रूषणपरायां निशादेव्यां नानुभूयते मया कण्ठलेशोऽपि। सुखेन व्यतीतान्येतावद्दिनानि। किन्तु भवत्या अनुग्रहोऽप्यनतिक्रमणीयः। को नाम मधुरमितीक्षुदण्डं समूलं चूषति।

निशा—अहो चाटुवचनपटुर्भवान्। तव सहवासत्रस्त इतः शीघ्रातिशीघ्रं पलाय्य प्रियजनसकाशं गन्तुमुत्कण्ठितोऽस्मीति स्पष्टं किं न कथ्यते।

भास्करः—सम्यगनुमितम्। उक्तमेव अभीष्टे नायातेऽभीष्टं प्रतिगन्तव्यम्।

शान्ता—यत्किञ्चिदपि त्वया उक्तं, अशिक्षिताप्यहमलमधिगतवती तदर्थम्। शृणुत सावधानं ममापि सुविचारितं विमर्शम्।

यूयं सर्वे मनसि कृतवन्तस्तन्न कदाप्यहमनुमन्ये। ललिता सुधीरमुपेक्षेत चेत्, अनेनापि न गन्तव्यं तस्या द्वारि। सा तु रूपयौवनमदोद्धता कामं विस्मरतु प्रतिज्ञातवचनानि। किन्तु तस्याः पलितशिराः पिता मामधिकतरं विस्मापयति। प्रियवचनैः प्रथमं तावत् सुधीरं वशीकृत्य इदानीमित्थमवधीरितवान्। अत एवासीन्ममाग्रहो युद्धक्षेत्रे गमनमनिवार्यं चेत् विवाहं परिसमाप्यैव प्रस्थातव्यं सुधीरेणेति। किन्तु तदानीं सर्वैरेव दुराग्रहिणीत्यवहेलिताहम्।

सुधीरः— न हि अक्क, यद्यस्मिन्नेवाहवेऽहं मृत्युना······

शान्ता—( कर्णौ पिधाय ) प्रतिहतममङ्गलम्। चिरं जीव वत्स।

( बहिर्घण्टानादः )

भास्करः—निशे, पश्य क उपस्थितः।

शान्ता— यो वा को वा भवेत् कृपया चायपानप्रबन्धायाहं न पुनराज्ञापयितव्या।

सुधीरः— किन्तु, अक्क, मयाप्यभिलष्यते उष्णपेयम्। मध्याह्नपानं कदुष्णमिति न मे तृप्तये।

शान्ता— विदितस्तवाशयः। यत्सत्यमिदानीं मम पाकसिद्धिर्न रोचते तुभ्यम्। बाढम्, निशैव प्रसाधयेद् यथेच्छं पेयम् सैवास्ति तव प्रियंकरी।

(ततः प्रविशति द्रुतसंदेशपत्रहस्ता निशा)

निशा— प्रियं करोमि सुधीरमहाशय, भवत्कृते द्रुतसंदेशपत्रमेतत्। इष्टवृत्तं भवेत्।

( सुधीरः सत्वरं पत्रं गृहीत्वा स्वयमेवोद्घाट्य पठति )

शान्ता— कस्य संदेशोऽयं सुधीर?

सुधीरः— ( सहर्षम् ) अक्क, ललिता आगच्छति, अद्य, अधुनैव। पितुरस्वास्थ्येनासीदवरुद्धा सा।

भास्करः—सुधीर, अभिनन्दामि त्वाम्।

सुधीरः— आर्य, युवयोराशीर्वादस्यैव फलमेतत्। एकाकिन्येव ललिता ह्यो वाष्पयानेन स्वस्थानात्प्रस्थिता। अस्मन्नूतनावासस्य मार्गं न जानाति

सा । आर्य, अवतरणस्थानात् तामत्रानेतुं स्वयमेव यातु भवान्। उपस्थिता तस्या आगमनवेला । नास्ति समयो विलम्बितुम्।

भास्करः— का गतिः । मद्गृहिणी मम गृहाद्बहिर्गमनं नानुमन्यते। अपि च सुधीर ललिता मार्गदर्शकं विना गृहमायातुमक्षमेति वृथावादः। वद तावत् प्रियवसतिमार्गणे कदापि कापि प्रिया स्खलति!... मा मामनुनय । एष गच्छाम्यहम् । तव छन्दानुवर्तिना मया भवितव्यमित्यपि शान्ताया आदेशः । तेन निश्चिन्तो गच्छामि। त्वमपि सज्जो भव स्वागताय । सुधीर, तव पाददण्डः प्रागेव आगमिष्यच्चेत् सुखावसरः सुखदतरोऽभविष्यत् । किन्तु शिल्पिनो यदि समयपरिरक्षणपरा भवेयुः क तेषां प्रतीक्षा प्रतिष्ठा वा । एवमपि का हानिः । काष्ठपाददण्डस्थाने सम्प्राप्तस्तवावलम्बनाय सचेतनः सुकुमारोऽन्य एव पाददण्डः ।

( प्रस्थातुमुद्यतः )

सुधीरः— ( गाम्भीर्येण ) आर्य, तिष्ठतु क्षणम्। शृणोतु...ललितायाः श्रवणगोचरो न करणीय एष विषयः ।

शान्ता— ( साश्चर्यम् ) किमिति ? सुधीर, किं वदसि ? कथमद्यापि तया ललिता न ज्ञापिता तव विपद्वृत्तान्तम् ।

सुधीरः— शोकाकुला भवेदिति न मया पत्रे लिखितम् । ( आर्जवेन ) तथापि युष्माभिर्न कैरपि सा निवेदनीया । अहमेव यथावसरं प्रत्यक्षं तां विदितवेदितव्यां करिष्यामि ।

भास्करः— यथाभूतं ज्ञात्वैवागता भवेद् चेत् सुकरं भवेत् । युवयोर्द्वयोरपि हितसाधनं...

सुधीरः— युज्यते यद्भवान् मन्यते । किन्तु, इदानीं भवता सा नैवावबोधनीया।

भास्करः— बाढम् । तथैवास्तु । हर्षस्यावसरे मा गमो वृथा वैक्लव्यम् । प्रतिजानामि मौनमुद्राम् । शान्ते त्वमपि वाचं संहर । अलं चिन्तया

सुधीर। भवतु तव कार्यसिद्धिः। गच्छामीदानीं पुनरागमनाय। (निष्क्रान्तः)

शान्ता— (सचिन्तम्) सुधीर, कथय किं कारणमेवं त्वया ललिता प्रतारिता! किमयमप्रियस्य कालहरणोपायस्त्वया चिन्तितः। नास्ति चेत् तस्या दृढतायां ते विश्वासः तर्हि न किमप्यौचित्यं पश्याम्यस्मिन् व्याक्षेपे। यदा कदाचित् तस्याः स्थिरभावस्य परीक्षाभविता। अतस्तस्याः प्रतिकूलनिर्णयमपि सोढुं त्वमिदं हृदयदौर्बल्यं त्यक्तुमर्हसि।

सुधीरः— मा अक्क, नैतत्कारणं मम वृत्तगोपनस्य। परोक्षे कृत आघातोऽतीव दुःसहो भवेदिति समक्षमेव ललितां समाश्वसितुकामोऽस्मि। त्वमपि जानासि कियती मृदुहृदया ललितेति।

शान्ता— मृदुहृदया चेत् दृढबद्धानुरागा च चेत् किमिति परिणये विलम्बः कृतः। क्वासीत्तदा तद् मृदुहृदयं यदा त्वं युद्धाय प्रस्थितः।

सुधीरः— प्रागेव याचितोऽहं तया परिणयम्। अनुद्वाह्य मम गमनं कदापि नानुमतमासीत् तस्याः। किन्तु मयैव हठात् निवारिता। अक्क, निष्कारणमेव ललितायामेष तव रोषः।

शान्ता— नास्ति कोऽपि रोषः तात। किन्तु न मम मनो विश्वसित्यासु महाविद्यालयशिक्षितासु युवतीषु। प्रतिज्ञातपरिणयाभिरप्याभिर्विवाहविधिसम्पादने किमिव चिरायते इति नाहं मूढमतिरद्याप्यवगन्तुं पारयामि। न तथा वाग्दानस्य बन्धनं यथा विवाहविधानस्य। अतः स्वच्छन्दमुक्तेर्द्वारं न स्यात् पिहितमित्येव भवति तासामेषा विचारणा।

सुधीरः— मा मा। न खलु, ईदृशी मम ललिता।

शान्ता— सत्यमेव विमूढाऽहमस्मिन् विषये। प्रीतिविवाहस्यानभिज्ञाप्येतावन्मात्रं सुष्ठु जानामि यद् कस्मा अपि सकृदात्मसमर्पणं कृतवती नारी तस्यैव सुखदुःखयोराजीवनं सहभागिनी भवितुमर्हति। (दीर्घं निःश्वस्य) किं भावीति विकल्पनया कम्पितमिव मे हृदयम्।

भवतु, कक्षान्तरं सज्जीकरोमि यावदायाति ललिता। इयमपि कक्षा निशे, नन्दिनि अत्रस्थान्युपकरणानि त्वमेव विरचय शीघ्रम्। तवावेक्षणे सर्वमस्ति सुसज्जमेव, तथापि (निशां निरीक्ष्य) अम्भो किमस्वस्थासि निशे। निष्प्रभं ते मुखम्। अतिपरिश्रमस्यैव परिणाम एषः। एहि नन्दिनि, स्वशयने कुरु क्षणं विश्रामम्। अहं करणीयं सर्वं निवर्तयिष्यामि।

**निशा**—नहि नहि। आर्ये, सर्वथा स्वस्थाऽहम्। अतिथिस्वागतसंविधाने मा भूत् विलम्बः। गच्छतु भवती कार्यानुष्ठानाय। अहमप्यवेक्षे किमत्र करणीयमिति।······(सस्मितम्) सत्यं कथयामि विस्रब्धा भूत्वा यातु भवती निःशङ्कम्।

(निःश्वस्य निष्क्रान्ता शान्ता)

**सुधीरः**—निशादेवि, कृपया देहि मे दर्पणम्। प्ररूढकेशश्मश्रूरहम्········ कुत्र मे संस्कारसाधनानि? (दर्पणं गृहीत्वा तस्मिन् स्वमुखं विलोक्य) अथवा तिष्ठतु तावत् प्रसाधनम्। नास्ति समयः। इच्छामि केवलं धौतं चोलकवस्त्रम्। (निशया दत्तं वस्त्रं धारयित्वा) कुत्र केशप्रसाधनी कंकतिका? (निशया दत्तां कंकतिका गृह्णाति तथा च केशरचनां कुर्वन् सस्मितम्) आयास्यते भवती मया।

**निशा**—अतः परमन्तं यातो ममायासावसरः। शुश्रूषाया अधिकारिण्यधुनैवागत्य भवतो मनोनुकूलं साधयिष्यति सर्वम्।

**सुधीरः**—आ तावत् तु भवती एव मम शरणम्। कुत्र मम प्रकोष्ठघटिकायन्त्रम्। (प्रकोष्ठे तद् संस्थाप्य समयं निरीक्ष्य) अहो, सार्धपञ्चवादनवेला समुपस्थिता। मुहूर्तेनागन्तव्यं तया। निशादेवि. प्रावरणेनाच्छादय मे चरणौ·····नहि नहि·····चरणम्····· (सोद्वेगं हसति) कुत्राद्यापि मे चरणौ। (बहिर्घण्टिकानादः)— पश्य पश्य क आयातः।

निशा—( खिन्नं हसित्वा ) महाभाग, ललितादेवी वाहनेन आगमिष्यति न पद्भ्याम् । भवेदन्यः कोऽपि पादचारी ।

शान्ता—( ससंभ्रमं प्रविश्य ) तव पाददण्ड आनीतः शिल्पिना । अपि प्रयुज्य पश्यसि समीचीनो वा न वेति ? तवानुज्ञां प्रतिपालयन् शिल्पी द्वारि तिष्ठति ।

सुधीरः—नहि, नहि, अवकाशो नास्त्यधुना ।

शान्ता—तत् किमत्रैव दण्डं निक्षिप्य तेन गन्तव्यं श्वः पुनरागमनाय ?

सुधीरः—अयुक्तमेतद् । प्रतिनिवर्तय दण्डमपि । पुनरायातु शिल्पी घटिकानन्तरम् । गच्छ अक्क, सत्वरमपसारय सदण्डं शिल्पिनम् ।

( निष्क्रान्ता शान्ता । दूरतः वाहनध्वनिः )

सुधीरः—( ससंभ्रमं ) हा—निशादेवि, कृपया निगूह्य शिल्पिनम् । न भवेदेष ललितायाः शङ्कास्थानम् । गच्छ, शीघ्रं गच्छ—

निशा—अलं संभ्रमेण । निह्नुवे शिल्पिनं दण्डं च । किन्तु भवानपि ललितादेवी मचिरेणैव संज्ञापयतु भूतार्थम् ।

( निष्क्रान्ता निशा )

( पटावतरणम् । प्रथमदृश्यस्थो द्वारदेशः । ततः प्रविशति बहिर्द्वारदेशात् दक्षिणतः शान्ता, वामतश्च निशा )

निशा—आर्ये, किं निर्गतः शिल्पी ।

शान्ता—त्वरितं निर्यापितो मया । अन्तिक एवास्ति तस्य किमपि करणीयम् । तत् समाप्य पुनरेष्यति घटिकार्धघटिकया ।

( वाहनावरोधस्य नादः )

शान्ता—अम्भो, सम्प्राप्तैव ललिता । ( उपद्वारं गच्छति )

( ततः प्रविशति ललितयानुगम्यमानो भास्करः )

भास्करः—गृहाण चिरं प्रतिपालितं गृहरत्नमिदम् । तव हस्ते निक्षिप्यानृणो भवामि सत्यशंसी च । ( पुनर्बहिर्निष्क्रान्तः )

ललिता—( शान्ताया चरणाभिवन्दनं कृत्वा ) अक्क अभिवादये चरणौ ।

शान्ता—चिरं जीव वत्से, सुखं जीव।

ललिता—अक्क क क।

शान्ता--( सास्मितम् )--एहि, इतो अन्तः कक्षायां तवागमनदत्तदृष्टिरेव तिष्ठति सुधीरः।

ललिता—अवशीकृताहं तातस्य मान्द्येन। एतावद्दिनानि तु, अत्रैव बद्धचित्ता केवलं शरीरेण तत्रस्थाऽऽसम्।

शान्ता—चिरायितेति कष्टं, आगतेति तु प्रमोद एव। कच्चिदिदानीं कुशली ते पिता।

ललिता—युष्माकं प्रसादेन भविष्यति तथा। चिन्तयैवाहारानिद्राविमुखो आधिनेव व्याधिना गृहीतः। श्रुत्वा तु तत्रभवतः शुभागमनवार्ताम् अर्धमिव नीरोगो जातः। क्षीणतया स्वयमायातुमक्षमोऽपि मां बलात्प्रेषितवान्। अक्क, अपि गच्छेमाभ्यन्तरम्?

शान्ता—तव पेटिका?

भास्करः—( प्रविश्य ) निशा वाहनादानाययति। कथमद्याप्यत्रैव तिष्ठति ललिता। सुधीरो नः प्रतीक्षमाणः सोत्कण्ठो मा भूत्। इतः इतः ( निष्क्रान्ताः सर्वे )

(पटोद्घाटनादनु प्रविशति यथापूर्वं शयनस्थः सुधीरः। मुहुर्तेन प्रविशति भास्करः, शान्ता, ललिता च।)

ललिता—( द्वारतोऽवरुद्धकण्ठा )—सुधीर........

( ललिता सोत्कण्ठापि स्तब्धा द्वाराभ्याशे सुधीरे बद्धदृष्टिः मौनं तिष्ठति )

भास्करः—सुधीर, एष ते मनोरथः साक्षादुपस्थितः। सावधानमभिमत-रक्षणं विधेहि। कृतकृत्यस्य मम बहिर्गमनमिदानीं त्वमिव मद्गृहिण्यपि न प्रतिषिध्येत्। शान्ते, अनतिपात्यं तवापि महानसकार्यम्। ( प्रविशति निशा ) एहि निशे, चिरान्न दृष्टा कापि सखी त्वया। स्वैरं गच्छेदानीं सखीगृहम्।

शान्ता—नहि नन्दिनि, उष्णपेयं तु त्वयैव साधनीयम्। अन्यहस्तसिद्धं चाय-पेयं न रोचते सुधीराय। तद् महानसमेव गच्छावः। अस्ति मयापि किंचिदल्पाशनं भर्जनीयम्।

भास्करः—बाढम्। तावदहमपि गतप्रत्यागतो भवामि। सुधीर, वर्धस्व अभि-प्रेतसंपादनेन। (निष्क्रान्ताः भास्करः शान्ता निशा च)

(ललिता ससंभ्रमं शयनपार्श्वमधिगम्य बाष्पाभिभूता भूमौ जानुभ्यामुपविश्य पर्यङ्कस्य पार्श्वोपान्ते शिरो निधाय मन्दस्वरेण रोदिति)

सुधीरः—(कम्पमानकरेण तस्या शिरः स्पृशन् अवरुद्धकण्ठः)—मा मा ललिते दिष्ट्या पुनर्मिलितौ। किमिदानीं रोदिषि।

ललिता—नहि नहि, नाहं रोदिमि। हर्षनिर्भरानन्दबाष्पैरर्चयामि प्रियचरणौ। एषा हसाम्यमृतसरसि मज्जितेव। सुधीः, मम तृषार्तनयनयोस्तृप्तिं विदधातु त्वद्दर्शनम्। नूनं तव मार्गप्रतीक्षायां भयकातरहृदये-नाकुलाहं कथमप्येकैकं शून्यमिव उन्निद्रां गता दीर्घकालं व्यतीतवती। दुःस्वप्नात्प्रतिबुद्धेवाद्यापि कम्पेऽहम्। प्रिय, अतः परमशरणां मामेवं दैवाधीनां कृत्वा न कदापि गन्तव्यम्।

सुधीरः—यथा त्वमिच्छसि तथैव भविता। नाहं पुनर्गमिष्यामि।

ललिता—नूनमनुकम्पिताहं भागधेयेन। समवसितेऽपि समरे नाद्यापि सर्वे प्रतिनिवृत्ताः। अहं तु भगवत्प्रसादेन पूर्वजन्मपुण्यफलं त्वद्दर्शन-सुखमनुभवामि। जागरे, स्वप्ने निद्रायां वा क्षणमपि यन्न हृदया-दपसृतं तन्मम मनसि चिरारूढं साध्वसं सम्प्रति तव सान्निध्येन विद्रावितम्। अक्षतस्य-शरीरस्य तवागमनं स्वप्न एवेति विशङ्कमा-नाऽहं पुन पुनः तव पत्रपठनेनात्मानं प्रत्याययन्ती भूयो भूयो भय-मुक्तेरानन्दमनुभूतवती। अद्य धन्याहं त्वां कुशलिनं साक्षात्कृत्य। सुधीः, किं ते व्यथा। कति दिनानि व्याधितोऽसि। कथमद्यापि शयनाधीनः, कस्ते व्याधिः ?

सुधीरः—न कोऽपि विशिष्टः।

ललिता—अहो भाग्यम्। ततस्तु केवलं युद्धपरिश्रान्तस्त्वमिति मन्ये। इदानीमहमागता तव शुश्रूषणाय। अचिरेणैव स्वस्थो भूत्वा शयनं विहायास्मद्गृहगतः पुष्टिवर्धकाहारेण सुष्ठु व्यायामेन मनोविनोदन-केलिभिश्च पूर्ववदेव तेजोबलयुतो भविष्यसि। त्वच्चिन्तया क्षीय-माणस्तातोऽप्यावयोः सहवासेन स्वस्थः सम्पत्स्यते। तवात्रागमनं श्रुत्वा जानासि किं किं मया कृतमिति। अभिलषिततमं कन्दु-कक्रीडनं तवेति तव विरह एतावद्दिनान्युपेक्षितं कन्दुकक्रीडांगणं नूतनजालाद्युपकरणैः पुनः सज्जीकृतं प्रतिसायं तव विनोदनार्थम्। यदा कदाचिदेतत् ते चित्ताय न रोचेत चेत्, जलावतरणं नौका-विहारो, अश्वारोहणं, रम्यस्थानेषु स्वच्छन्दभ्रमणं वास्तु ते आह्ला-दनायेति सर्वमपि यथोचितमायोजितम्। किमिति उदासीन इव प्रतिभासि?

सुधीरः—अक्षमोऽहं तवैतान् छन्दानवलम्बितुम्।

ललिता—हुम्—तावदेव यावन्न प्रकृतिस्थः। तदपि न दूरम्। न दृश्यते रोगातुरस्येव ते मुखकान्तिः। अम्भो, जानामि ते औदासीन्य-कारणम्। सुधीः, प्राप्ते त्वया विसर्जिते पत्रे त्वन्मिलनातुराप्यहं तातस्य कारणान्नागतेति मयि रुष्टस्त्वम्। किन्तु प्रतिदिनं पत्रं सम्प्रे-ष्यावेदितो मया तद्गतवृत्तान्तः। उत्तराभावे कियती मे चिन्ता भवे-दित्यपि त्वया न विगणितम्। किमिदं युज्यते रुष्टस्यापि तव।

सुधीरः—तव तु पत्रमेकमपि नासादितं मया। अपि नूतनावासमिदमुद्दिश्य प्रेषितवती न वा?

ललिता—हा धिक्। त्वया निर्दिष्टमपि स्थानान्तरं हर्षोन्मत्तमानसाहं पत्र-प्रेषणसमये कथमिव विस्मृतवती। क्षमस्व दयित, सत्यमेव त्वद्-रोषणार्हाऽहम्। किन्तु महतोऽस्यापराधस्य परिमार्जनमिदानीमेव करोमि त्वत्सेवापरायणीभूत्वा। अहो भाग्यम्। सुधीः, नहि त्वं

तावदवधारयसि मम सौभाग्यस्य परां काष्ठां यावन्नावगच्छसि मम सखीगतं दैवदुर्विलसितम्। वाग्दत्तायास्तस्या वल्लभो वरः समराङ्गणात् प्रत्यागतः किन्तु लूनहस्तः। अस्यास्तापस्या दशा दयनीया संजाता यतोऽनुरुद्धेनाऽपि तस्याः पित्रा प्रतिषिद्धस्तेन सह परिणयः। चिरकाल-शोक-संतप्ताप्यन्ते जनकाज्ञया केनाप्यन्येनैव वरेण परिणीता साद्यापि खिद्यते। किन्तु शनैः शनैःरुद्धृतविषादशल्या निर्वृत्ता भविष्यतीत्याशंसे।

सुधीरः—वृतप्रणयिनि दैववशात् संवृत्तेऽपि हस्तहीने स्वेच्छया विवाहवचनबद्धायास्तस्याः किं युक्त इत्थं विसंवादः ?

ललिता—किमन्यत्करोति सा वराकी। अयं जन इव साऽपि पितुरेकमेवापत्यम्। कथं सा पूजार्हस्य पितुरवज्ञां कर्तुमुत्सहेत।

सुधीरः—तस्याः पित्राप्यनेन विश्वासघातेनानुचितमेवाचरितम्।

ललिता—किन्तु सुधीर, इदमपि किं न विचारयसि। दुहितृवत्सलः स कथं प्राणसमां पुत्रीं पाणिहीनाय दत्वा तामाजीवनमापन्मग्नां पश्यन्नार्तिं प्रपद्येत। कस्मा अप्यन्यस्मै योग्यवराय प्रदाने, अस्पावधि दुःखिताऽपि कालान्तरेण सुखभागिनी भवेदिति विमृश्यैव तेनैतत् कृतम्।

सुधीरः—ललिते, अहमपि तव सख्याः प्रणयीव करविहीनः क्षतपादो वा यद्यागमिष्यं किं त्वया कृतं भवेत्।

ललिता—किमनया दुःसहेन वितर्केण। दिष्ट्या तु त्वमक्षत शरीरः प्राप्तोऽसि।

सुधीरः—एवमप्यस्ति मम कुतूहलम्। क्षणमुत्प्रेक्षस्व संभावनाभिमाम्। यदि त्वं स्व वयस्यायाः स्थाने स्थापिता ततः किं करिष्यसि ? वद, वद ललिते, मनसा कल्पयित्वा कथय तवावधारणम्।

ललिता—यद्येवं, ततो मम तातस्यादेशोऽपि कल्पनीयो भवेत्।

**सुधीरः**—बाढम्। पिता मे नानुमोदते पंगूभूतेन मया तव पाणिग्रहणम्। ततः किम्।

**ललिता**—कठोरोऽसि त्वम्। अनपायां मामेवं भीषणे कल्पितगर्ते पातयित्वा किमाकुलीकर्तुमीहसे। अपेत, नाहं वदिष्यामि।

**सुधीरः**—प्रतिनिवृत्तस्य मे प्रथमोऽनुनय एष परिहासे कृतः। अपि सुकरमपि ममेप्सितमवमानयसि।

**ललिता**—सुधीर कथं त्वमपि बालिशो जातः। क एष नव दुराग्रहः।

**सुधीरः**—भवतु, एनं दुराग्रहं बालिशस्यैव कृत्वा कुरु मे कौतूहलविनोदनम्।

**ललिता**—आः ज्ञातम्। तातस्यादेशात्तवानुरागोऽतिरिच्यते सर्वथेति मम मुखाद् निःसार्य प्रियवचनैरात्मानं श्लाघयितुकामोऽसि। किन्तु, सुधीः, नाहं परिहासेप्यनृतवादिनी। न हि त्वं जानासि यदनयैव विपत्संभावनया दिवारात्रं चिन्ताकुलाऽहं कियती भयत्रस्तासम्। निरन्तरम् नयैव प्रश्नविभीषिकया गृहीताहं बहुरालोचितवती। यद्यहं सत्यमेवेत्थं विपदापन्ना भवेयं तर्हि येन जनयित्रा यौवनेऽपि स्वसुखमविगणय्याजन्मनो मातृविहीनाहं स्नेहेन संवर्धिता ललिता च तं वृद्धावस्थं मत्सुखाभिलाषिणमाज्ञाव्यतिक्रमेण कथं दुःखसागरे मज्जयामि कथं वा हृदि चिरारूढेन मत्प्राणायितेन कान्तेन त्वया शाश्वतविप्रयुक्ता जीवितुमुत्सहे, इत्येतयोर्द्वयोर्विकल्पयोरन्यतरं पारयितुमक्षमया मया, आत्महत्यां विना न कोऽप्यपर उपायो दृष्टो भवेत्—

(सुधीरः मूर्छां नाटयति)

हा—अत्याहितम्।...सुधीः, सुधीः...विसंज्ञ इव जातः। किं करोमि...अक्क, आर्य-परित्रायस्व...

**निशा**—(सत्वरं प्रविशति)—किं-किमित्याक्रोशः। हा कष्टम्। अचेतनः सुधीर महाभागः। (जलमानयति)

सुधीरः—(लब्धसंज्ञः) न भेतव्यम् । स्वस्थोऽस्मि । क्षणं मूर्छाभिभूतोऽन्धतमसीव पातितः । ललिते कृपयापसर । निशे देहि मे पानीयम् । (जलं पीत्वा) ललिते, संत्रस्तासि मत्कारणादिति क्षमस्व । यदाकदाचिदित्थमेव मूर्छा मां बाधते । निशा तु जानाति तदुपायम् । ललिते, अपि विद्यते निशायाः परिचयः ? एषा मम भगिन्या ननान्दा यया शुश्रूषणसंजीवन्या मृत्युमुखात् प्रतिनिवर्तिता मे प्राणाः सैव मम वाग्दत्ता वधूः, मे भविष्यत्पत्नी...

ललिता—(कर्णयोर्दग्धेव) हा, किमिदं श्रूयते ? सुधीर, अद्यापि किं चेतनाहीन इव प्रलपसि ।

सुधीरः—नहि ललिते, लब्धचेतनोऽहं सुष्ठु विचार्य कथयामि ते भूतार्थम् । अवहितं शृणु । मम पत्नीपदवी त्वया भूषयितव्येत्यासीन्मे मनीषा । किन्तु दत्तावसरापि त्वं संकटकाले मामुपेक्षितवती । आगन्तव्ये समये नागता । तव प्रतीक्षायां निराशितेन मया मार्गान्तरं कृतम् ।

ललिता—(साश्रुकण्ठा) किन्तु सुधीर, तव प्रतीक्षायामहं वर्षद्वयं व्यतीतवती ।

सुधीरः—को लाभः । मरणासन्नोऽहं त्वदागमनदत्तदृष्टिर्यावद् त्वया वञ्चित स्तावदनया दयितया जीवदानेन क्रीतोऽहम् । अनयैव रक्षितं मे जीवनमतः परमस्या एव आयत्तीकृतमिति युज्यत एव । यथा मया त्वद्रीक्तस्थान अन्या स्थापिता तथैव त्वमपि मम स्थाने—

ललिता—(सक्रोधं) वाचं संहर । अनार्य, मया करणीयं न त्वयोपदेष्टव्यम् । (सबाष्पं) किमापन्मुक्तस्त्वमिदानीं स्नेहबन्धनादप्यात्मानं मोचयितुमिच्छसि ? (सक्रोधं) आहवे यथा मनुष्या हता तथैव किमवशिष्टजीवितानां हृदयान्यपि हन्यन्ते ? (रुदन्ती) हा धिग् हतभागिनीं माम् ।

निशा—ललितादेवि

सुधीरः—(कठोर स्वरेण) निशे, न त्वया किंचिदप्यावयोर्विषये व्यवहर्तव्यम् । कियन्तं कालमतिपातं सहेतैष विषयः ? कदाचित्करणीय उच्छेदे किं विलम्बेन ।

ललिता—दुष्ट, कृतघ्न, कथं न लज्जसे कैतवेन ? मामनागसमित्थं प्रद्वेष्य कुरूपां कुब्जां—

सुधीरः—तूष्णीं भव। नाहं श्रोतुकामो स्ववध्वा निन्दाम्। तस्या हृदयं परममधुरं—

ललिता—(सव्यंग्यम्)—यथा तया सिद्धं पेयमपि। मूढाऽहं न तदा गृहीतवत्यक्कवचनानामभिप्रायम्। अन्यसिद्धं पेयं न रोचते सुधीरायेति। (सकरुणं) अक्का अपि यदि वेत्ति सर्वं तर्हि किमिवाहं सर्वैरेव मिथ्योपचारवचनैरित्थं विप्रलब्धा ? किं कारणमेष वज्राघातः पत्रमारोप्य मयि न कृतः। मामत्राहूय शतधा मम हृदयस्येदं विदारणं—(सक्रोधं) एषोऽप्यस्याः कुटिलहृदयाया एव परामर्शो भवेत्। बहिरिवास्या अन्तःकरणमपि कृष्णवर्णमेव—

सुधीरः—निशे, अश्राव्यमपलपन्तीमिमामपनय। बहिर्मार्गमादिश—

ललिता—(सक्रोधम्) न कोऽपि मां मार्गं दिशेत्। यथा स्वयमेवैवागता तथैव एकाकिनी स्वयमितो निर्गच्छामि (रुदन्ती) किन्तु, आर्यान्त्य मया सहासीन्मे प्रेमपरिपूर्णं हृदयम्। स्फुटितस्य तस्य सहस्रखण्डानत्रैव विकीर्य निवर्तीभीदानीं रिक्ताहमेकाकिनी। क्व यामि हतभागिनी। हा हतास्मि।

(निर्गच्छन्ती रुदन्ती ललिता द्वारि प्रविशन्त्या शान्तया निरुद्धा)।

शान्ता—ललिते, बहु विलम्बितं मया। उपविश वत्से, आस्वादय किञ्चिदुष्णभोज्यम् श्रान्तासि, चायपानेन सह—

ललिता—(सक्रोधम्) चायपानम् ? धिग् धिग्, इतो जललवमपि नार्हति मम मुखस्पर्शम्। (सकरुणं) अक्क, कथं त्वयाप्यहमेवं निष्करुणं प्रतारिता ? लोकेऽस्मिन् विश्वासोऽपि कस्मिन् क्रियेत ? न कोऽपि प्रत्ययार्हः। (रुदन्ती ससंभ्रमं निष्क्रान्ता)

शान्ता—हा कष्टम्। ललिते—वत्से—कुत्र प्रस्थिता (अनुगन्तुमुद्यता)

सुधीरः—(जडस्वरेण) अक्क, तिष्ठ, तिष्ठ, गच्छतु सा।

शान्ता—किमिति ? किमापन्नम्।

सुधीरः—दैवस्य दुर्विलसितम् !

शान्ता—कथमिव —

सुधीरः—जातो भाग्यनिर्णयः।

शान्ता—किं विवक्षसि सुधीर ? अपि ललितया प्रत्यादिष्टोऽसि धिक् कदर्याम्। प्रागेव मया दृष्टमेतद्भावि। धिगेतासां विश्वविद्यालयशिक्षाम्। धिगनभिजातसुलभे प्रेमाभिनय-नैपुण्येऽभिविनीताम्। एषा निर्भर्त्सयाम्येनामनार्याम्। (गन्तुं प्रवृत्ता)

सुधीरः—विरम, अक्क, प्राणशपथेन त्वां निवारयामि। मा प्रकाशय किंचिदपि। न तया ज्ञातव्यं याथार्थ्यम्।

शान्ता—(साश्चर्यम्) कोऽभिप्रायः ? सुधीर, किं त्वया ललितायै न निवेदितःस्व पादक्षयः। प्रमत्तोऽसि सुधीर—

सुधीरः—क्षन्तुमर्हसि, अक्क ! याचेऽहं बद्धाञ्जलिः। अज्ञातवृत्तान्तैव यातु ललिता। मा व्याहर हृदयमर्मच्छेदेन निर्मथ्यमानं रहस्यमिदानीं न प्रष्टव्यं त्वया। गच्छेदानीमितः। एकान्ते स्थातुमिच्छामि। अनुकम्पनीये मयि मा रोषं कुरु, इमामेव भिक्षां त्वत्तो याचे (कराभ्यां मुखमावृत्य निःश्वसिति)

शान्ता—( शिरसि स्पृष्ट्वा ) मा तात, कुतो रोषस्त्वयि संभाव्यते। अपि नाम न प्रज्वलेन्मम क्रोधदहनस्तव दुःखदवथुं दग्धुं, न प्रवहेद् वाष्पवारि तवैव शोकानलं शमयितुम्। त्वत्कृते किमस्त्यकरणीयं मे।

सुधीरः—(तस्या वदने दत्तदृष्टिः) यद्येवं, अस्ति मे अन्यदपि प्रार्थनीयम्। इतः शोकोपहता ललिता न जाने क्व गता। अविचार्य मा कुर्यादकरणीयं किमपि। तां समाश्वासयितुमार्यमनुप्रेषय। केनापि ससहाया कृत्वा वाहने संस्थापनीया मां च कुशलिनं मन्यमानैव पितुः सकाशं प्रापणीया। अक्क, प्रसीद, कुरु मयीममनुग्रहम्।

शान्ता—हा कष्टम् । मादृशीनां मृत्पिण्डमतीनां दुर्बोध एष नवयुगयुगमस्य प्रीतिपथः । अहं तु वराकी तवेदं वैक्लव्यमुद्घाटितनयनाभ्यां पश्यन्त्यपि तत् प्रतीकाराक्षमा । अनन्यगतिका किमन्यत् करोमि । यथेच्छसि तथा भवतु । ( अश्रूणि प्रमृज्यन्ती निष्क्रान्ता )

( सुधीरः शयनीये मुखमपवार्य दीर्घं निश्वसिति )

निशा—सुधीर महाभाग—

सुधीरः—निशे, क्षमस्व माम्, येन तव नाम्नो दुरुपयोगः कृतः । अवसरे सम्प्राप्ते किंकर्त्तव्यमूढतया विवेकशून्योऽहं यन्मुखान्निसृतं तदुक्तवान् । न कोपः कार्यो हतदैवकेऽस्मिन् ।

निशा—नहि सुधीर, मम नाम्नः कोऽन्यो भवेन्महत्तरः समादरः ।

सुधीरः—विकलाङ्गस्य वधूपदे नियोजनमिति क एष आदरः ।

निशा—मैवमात्मावमाननं करोतु भवान् । विकलाङ्गस्यापीदृशस्य दुर्लभनररत्नस्य पत्नीपदं या भाग्यवत्यारोहति सफलं तस्या जन्म ।

( नेपथ्ये ललितायाः शब्दः—"अक्क" इति )

सुधीरः—अहो । निशे, ललितायाः शब्दः श्रूयते । त्वरस्व, पश्य किं निमित्तं प्रतिनिवृत्ता । गच्छ, निवारयैनाम् ।

( निष्क्रान्ता निशा )

( पटावतरणम् । पूर्ववत् द्वारदेशः । बहिर्द्वारेण प्रविशति सोत्कण्ठा ललिता )

ललिता—( सोत्कण्ठं ) अक्क-अक्क…

( वामतः प्रविशति शान्ता )

शान्ता—( साश्चर्यं ) ललिते…

ललिता—अक्क, इतो निर्गत्य दुःखाकुलाहं पदात्पदमपि गन्तुमक्षमा यावद् गृहाभ्याश उपवनद्वारि विसंज्ञेवोपविष्टा तावदेव पाददण्डमेकं करे कृत्वा गृहाभिमुखमागच्छन् कोऽपि मम दृष्टिपथे आयातः । पृष्ठे

मयानुत्तर एव निवृत्य चलितः। वद, वद किं स पाददण्डः, सुधीरकृते तेनानीतः।

( शांता तूष्णीं स्थिता )

ललिता—( आकुलीभूय ) किं मौनीभूतासि अक्क, कथय—किमर्थं मामार्तामार्ततरां करोषि। किं सुधीरः चरणेन हीनो जातः।

शान्ता—तव प्रश्नस्य प्रतिवचनं दातुमक्षमाऽहम्। शपथेन निरुद्धास्मि ?

ललिता—केन। सुधीरेण ? अम्मो, ज्ञातम्। पत्रवृत्तान्तप्रत्ययेनाश्वस्ताहमानन्दनिमीलिताक्षी न दृष्टवती सुधीरस्य कपटवचनानां विशदमपि याथार्थ्यम्। किन्तु तस्यापरप्रस्तावे तु मम मनोऽद्यापि संशयमेव गाहते।

शान्ता—कथमपरः प्रस्ताव इति।

( प्रविशति निशा )

ललिता—निशे त्वमपि मामुपकुरु ममसंशयच्छेदनेन। किं त्वं सत्यमेव सुधीरस्य वधूर्भाविनी ?

शान्ता—किं ब्रूषे ! निशा सुधीरस्य वधूरिति ? कः कथयति ?

ललिता—कोऽन्यः सुधीर, वद निशे, यदि त्वमपि प्रमाणयसि तद्वचनं तर्हि त्वत्सङ्क्रान्तहृदयं तमवधार्यास्मिन्नेव क्षणे निर्गच्छाम्यपुनरागमनाय। नाहं युवयोः सुखाधिगममन्तरयामि।

निशा—( अवरुद्धकण्ठा ) नहि नहि ललिते, पङ्गुत्वे पतितेन सह प्रसह्य तव जीवनयापनं मा प्रसज्येदिति किमपि मनसि कृत्वा सुधीरेण छलः कृतः।

ललिता—सुधीर—( सरभसमन्तः कक्षां प्रति धावति। )

शान्ता—निशे, धन्यासि। महान् तव स्वार्थत्यागः अमृतकलशः करतलगतोप्यन्यस्यै प्रदत्तस्त्वया।

निशा—अमृतकलशोऽयमन्यस्या एव न्यास इव क्षणमात्रं मम हस्ते निक्षिप्तः। नाहं तस्याधिकारिणी।

शान्ता—भवेच्चेत् सर्वदर्शी खलु भगवान्, अस्य पुण्यस्य फलं ननु लप्स्यसे वत्से।

( निशा सावेगं निष्क्रामति । निःश्वस्य निष्क्रान्ता शांता। )

( पटोद्घाटनादनु प्रविशति पर्यङ्कस्थः सुधीरः, समीपस्था ललिता )

ललिता—सुधीः, आवयोरनेन प्रमादेन द्वावप्याजीवनमार्तिमग्नौ कथं चिरमन्तर्दहन्तौ अधारयिष्यावेति मे हृदयमद्यापि कम्पते। पुण्य सुकृतेनैव परित्रातौ स्वकरेण विरचितादस्माज्जीवन्मरणात्। निष्क रुणोऽसि मामित्थं वञ्चयित्वा......

सुधीरः—(सस्मितं) किन्तु ललि त्वयैवोक्तं विकलाङ्गेन सह विवाहाद् मरणमेव वरमिति ।

ललिता—मा मा। अविचार्य तत्खलु भणितम्। इदानीमनुभवेन पूतं मनः अन्यदेव मन्त्रयति। कल्पितानि व्यवहर्तव्यानि सारहीनानि एव यावन्नानुभवपथमवतरन्ति। मनसा संकल्पितस्य परीक्षा साक्षात्प्रसङ्गे नैव भवति। इतो प्रनष्टसर्वस्वं निवृत्तया मयानुभूतं स्वजीवन्म रणम्। त्वया शश्वद्विरहिताऽहं न जीवितं धारयितुं पारयामि वाऽऽत्मानं प्राणैर्वियोक्तुमित्यनुभवेन सहसा सम्यक् शिक्षिताऽहम्। अन्धो वा पङ्गुर्वा यथासि तथैव मामकीनो भवेरित्येवाधीन् मम चिरारूढाभिलाषः। मनसि निरन्तरं प्रार्थितमप्येतन्नाद्यावधि सम्यक् प्रतीतं मया। किन्तु, असम्पन्नेऽपि परिणये आवयोर्जीवितं मिथो निगडितमित्येष प्रत्ययोऽनेनाघातेन साक्षात्कारितः दुर्भावना अद्य बलाज्जागरिताः ।

सुधीरः—किन्तु ललि, यदि तव पिता पङ्गवे वराय......

ललिता—पङ्गुरेवास्तु मे वरो यो मम प्राणेभ्योऽप्यधिकः। तातभयमपि कालनिकमेव। अन्यच्च, तातस्यापि न शक्तिर्मा निवारयितुम्। यदि सावित्र्या अल्पायुषिवरे दृढभावेन न केवलं तस्याः पितरमपितु यमराजमप्यनुनेतुमलं ततो ममानुरागो मत्सुखैकचित्तं तातं किं प्रसादयितुं न शक्नोति? अथ चातः परं न जपनीयं पङ्गु

पङ्गुरिति। अहमस्मि द्वितीयः पाद एकचरणस्य ते। भवामि तव सजीवः पाददण्डः।

( नेपथ्ये शांतायाः सुधीर इति शब्दः )

ललिता—( ससंभ्रममुत्थाय द्वारदेशं गच्छन्ती ) प्रविश अक्क, किमापन्मुक्तां मां न सभाजयसि ?

शान्ता— सानन्दं हृदयेन त्वामभिनन्दामि। मिष्टान्नेनेदानीं तत् त्वन्मुखं पूरयामि येन जलकणस्यापि स्पर्शोऽत्र प्रतिषिद्धः। वद, इदानीं चायपेयं पास्यसि वा न वा। ( हसन्ती ) सुधीर, नाहं तव शपथातिगा। किन्तु पालितप्रतिज्ञायामपि मयि तव वाचालेन पाददण्डेन गोप्यं स्फोटितमेव।

ललिता— अक्क, पठितमितिहासे मया—शिवराजकुरूणां समर्थरामदासानां पाददण्डस्याद्भुतसामर्थ्येन प्रस्तरखण्डात् प्रवाहिता जलनिर्झरिणीति। तथैवानेनाद्भुततरेण पाददण्डेन मे शुष्यमाणजीवने उद्भाविता प्रेमामृतधारा। अक्क भवादृशानां गुरुजनानामाशीर्भिः संभाव्यते सकलविपन्निवारणम्। युष्मच्छत्रच्छाये सुधीरस्य चिकित्सालयोद्घाटनयोजनायां······

( प्रविशति विषण्णं हसन्ती निशा )

ललिता— इतः इतः निशे, एहि मत्समीपम्। ( हस्तेन तां गृहीत्वा ) त्वं मम पूज्या भगिनी मां परिष्वजस्व। शृणु सुधीराय ममानुरोधोऽस्ति तस्य नूतनचिकित्सालये शुश्रूषा विभागस्तवैव हस्तेन स्थापनीय इति।

निशा— मद्दर्शनेनैव मूर्च्छिष्यन्ति रोगिणः।

ललिता— नास्ति चिन्ता। तव हृदये संभृतोनिधिरमृतस्य मृतानामपि संजीवनाय भविष्यति किं पुनर्मूर्छितानाम्। त्वं यथा सुधीरस्य प्राणदात्री तथैव सुधीरं मह्यं समर्प्य ममापि जीवदात्री संभूता। निशे, कथं तवानृणा भवामि।

निशा— अक्क, वितराम्यहमल्पाहारम् । आसनेऽत्र विश्रमस्व क्षणम्। (पेयपात्रं ललिताया हस्ते निक्षेप्तुकामा)—ललिते, यच्छ सुधीराय।

ललिता—(सस्मितं) नहि, नहि, तवैव हस्ताद् रोचते सुधीराय अहमप्यभिलषामि तव हस्तान् मधुरं पेयम्।

(ततः प्रविशति—भास्करः)

भास्करः—अहो, इत्थं चिरायितेऽपि मयि नाद्यापि समापितं चायपानम्। नारीत्रयवार्तालापे का गणना समयस्य।

शान्ता— नहि जानासि महतो नाट्याभिनयदर्शनाद् वञ्चितोऽसीति।

भास्करः—कथमत्र नाट्याभिनय इति ?

शान्ता—स्वार्थत्याग एतत् त्रिभिरहमहमिकया स्पर्धितम्।

भास्करः—ततस्ततः ?

शान्ता—ततो निर्णयस्तु सुधीरस्य पाददण्डेन कृतः। पारितोषिकरूपेण पतिं प्राप्तवती ललिता—

सुधीरः—(सस्मितम्)—किंतु पङ्गुमेवेति न खलु स्पृहणीयं पारितोषिकम्।

ललिता—अक्क, नावधारितं कियान् लाभः पङ्गुपतिप्राप्तेरिति। पतिः पलाय्य पुनः पुनर्बहिर्भ्रमेदित्यस्याश्चिन्ताया अपहारः किं नाभिलषणीयः।

भास्करः—शान्ते श्लेषवचनानभ्यस्तं मां त्वमेव किंचित् स्फुटं वक्तुमर्हसि।

शान्ता—शृणु तर्हि......

ललिता—अपेहि अक्क। आर्य, परिहासवचनानि न परमार्थेन गृह्णातु। वरमास्वाद्यतां मिष्टभोज्यमेतत्।

भास्करः—(मिष्टान्नमदन्)--मिष्टान्नेन मुखमिव गीतेन श्रोत्रमपि पूरयितव्यं, इच्छसि चेन्मम वाग्विरामः। ललिते, चिरान्न श्रुता तव मधुरकण्ठात् स्वरविलासः। श्रावय गीतमेकम्।

ललिता—किमेकमेवेति। यावदार्यः श्रोतुकामस्तावद् गायामि। न केवलं

कण्ठेन, हृदयतन्त्र्यापि। अद्य मम हृदयं संगीतमयमिव, नृत्यमयमिव संजातम्।

( गायति ) :—

नन्दनं प्रियरञ्जनम्॥

कलमञ्जुल मञ्जीरशिञ्जितं मानसहंसी विभ्रमम्। प्रभुवन्दनम्।
नन्दनं प्रियरञ्जनम्। मङ्गलं प्रभुवन्दनम्॥१॥

पयोदगर्जितमृदङ्ग-वादन-मत्तमयूर-सुनर्तनम्। प्रभुवन्दनम्।
नन्दनं प्रियरञ्जनम्। मङ्गलं प्रभुवन्दनम्॥२॥

कदम्बचम्पकबकुलालम्बित-कुन्दमालतीमण्डनम्। प्रभुवन्दनम्।
नन्दनं प्रियरञ्जनम्। मङ्गलं प्रभुवन्दनम्॥३॥

मन्दसमीरणमुखरितवंशं निकुञ्जलतिकांदोलनम्। प्रभुवन्दनम्।
नन्दनं प्रियरञ्जनम्। मङ्गलं प्रभुवन्दनम्॥४॥

इन्दीवरमकरन्दमदकलं मिलिन्दालि-मधुगुञ्जनम्। प्रभुवन्दनम्।
नन्दनं प्रियरञ्जनम्। मङ्गलं प्रभुवन्दनम्॥५॥

वसन्तकेतर-सालमञ्जरी-मञ्जुल-कोकिलकूजनम्। प्रभुवन्दनम्।
नन्दनं प्रियरञ्जनम्। मङ्गलं प्रभुवन्दनम्॥६॥

इन्दुबिम्बमभितो गगनाङ्गणतरलतारकारङ्गणम्। प्रभुवन्दनम्।
नन्दनं प्रियरञ्जनम्। मङ्गलं प्रभुवन्दनम्॥७॥

सर्ग-नृत्य-संगीतसङ्गतं हृद्वीणासंवादनम्। प्रभुवन्दनम्।
नन्दनं प्रियरञ्जनम्। मङ्गलं प्रभुवन्दनम्॥८॥

हरिचरणार्चनचन्दन-चर्चितनतशिरसाञ्जलि-बन्धनम्। प्रभुवन्दनम्।
नन्दनं प्रियरञ्जनम्। मङ्गलं प्रभुवन्दनम्॥९॥

( पटावतरणम् )

इति शम्॥

---

# संस्कृतवृत्तम्

विश्वनाथभट्टाचार्यः

## संस्कृतलेखकाः पुरस्कृताः

संस्कृतभाषायाः समुन्नतये प्रचाराय च श्लाघ्योऽयं प्रक्रमो भारतशासनेन स्वीकृतो यत्खलु अभिनवसंस्कृतग्रन्थप्रणेतॄणां पुरस्करणम्। केन्द्रशासनेन सार्धं प्रदेशशासनाधिकारिणोऽपि कर्तव्यमिदं अभ्यर्हितमिति स्वीकृतवन्तः। उत्तरप्रदेश-शासनं प्रतिवर्षं प्रक्रममेतमनुसृत्य संस्कृतलेखकान् मानधनप्रदानेन पुरस्करोति। रीतिरियं नूनं सर्वेषां संस्कृतानुरागिणां हर्षास्पदम्। सर्वस्मिन्नेव प्रदेशे शासनेने-त्थमेव प्रोत्साहनीया अभिनवसंस्कृतकविनिबन्धकनाट्यकारादय इत्यस्माकं सविनयं प्रणोदनम्।

अस्मिन् वर्षेऽधोलिखिता विद्वांसोऽभिनवग्रन्थप्रणेतृरूपेण उत्तरप्रदेशशासनेन मानधनप्रदानेन पुरस्कृता इति सूचयतो मोदप्राप्तिः स्वाभाविकी। चतुर्णां पुर-स्कृतविदुषां सामान्यपरिचयप्रदानेन तेषां संवर्धनं कर्तुकामा वयम्।

१—महामहोपाध्याय-शास्त्ररत्नाकर-अनन्तकृष्णशास्त्रिमहाभागो वाराणसेय-संस्कृतविश्वविद्यालयस्य आनरेरी प्रोफेसरपदाधिष्ठितः स्वरचितस्य अद्वैततत्त्वसु-धाग्रन्थस्य विरचनेन सर्वातिशायिना रूपकसहस्रमितेन डा० गङ्गानाथझा-पुरस्कारेण सम्मानितः।

२—प्रोफेसर डा० रामजी उपाध्यायः, एम० ए०, डी० फिल, डी० लिट् उपाधिभूषितः सागरविश्वविद्यालये संस्कृतविभागाध्यक्षः कृष्णसुदाम्नोराख्यान-मवलम्ब्य विरचितेन 'द्वा सुपर्णा' इति कथाग्रन्थेन ५०० रूप्यकमितेन पारितोषि-केण सम्मानितः।

३—एम० ए०, एम० ओ० एल, साहित्यरत्न श्रीशिवप्रसादः भारद्वाजः, होशियारपुर-विश्वेश्वरानन्दवैदिकशोधसंस्थानस्नातकोत्तर-महाविद्यालय-प्राध्यापको भारतसन्देशाख्यकाव्य-प्रणयनेन ७५० रूप्यकप्रदानेन पुरस्कृतः।

४—आन्ध्रप्रदेशान्तर्गतवारंगलनगरस्थे आर्टस् एण्ड साइंस महाविद्यालये प्राध्यापको विद्वान्-वेदान्तशिरोमणिः डा० पी० श्रीरामचन्द्रः, एम० ए०, पी० एच० डी, रवीन्द्रनाथठाकुरस्य वङ्गभाषानिबद्धगीताञ्जलिकाव्यस्य मन्दाक्रान्ता-च्छन्दसा संस्कृतरूपान्तर-सम्पादनेन ७५० रूप्यकमितेन पुरस्कारेण सम्मानितः।

सर्व एवैते विद्वांसो नितरां श्लाघनीयाः यतो हि तेषां मार्गानुसरणेनैव संस्कृतभाषाया अमरवाणीत्याख्या यथार्थत्वं प्रापयितुं शक्या संस्कृतानुरागिभिः। सर्वभारतगतेभ्यो विद्वद्भ्यः पुरस्कारप्रदानेन भारतभारत्याः सर्वाङ्गीणोन्नतिः सुखसाध्येति निश्चितम्।

दिष्ट्या वर्धन्त इमे सरस्वतीप्रसादधन्याः। एवमेवैते भविष्येऽपि नूतनकृतिभिः संस्कृतसाहित्यभाण्डारं परिपूरयन्तोऽन्यानपि स्वानुसरणार्थं प्रणोदयन्तु।

सर्वे च संस्कृतलेखकाः स्वरचितान् ग्रन्थान् पुरस्कारयोजना—समिति, उत्तरप्रदेश, विधानभवन, लखनऊ इति संकेतेन समितेः मन्त्रिसकाशं प्रेषयन्तु इति सर्वेभ्यो लेखकेभ्यः सागरिकामण्डलस्य निवेदनम्। अमरं जीवतु संस्कृतं संस्कृतानुरागिणां सेवया।

---

# सम्पादकीयम्

## आधुनिकसंस्कृतसाहित्यम्

संस्कृतभाषायाः प्राचीनहस्तलिखितग्रन्थानां संग्रहणे संरक्षणे वा भारतवासिनां प्रमादवृत्तिरेवासंख्यानां बहुमूल्यकृतीनां विलोपाय वर्तते। तथा हि त्रिशतवर्षे प्राक् प्रादुर्भूतस्य पण्डितराजजगन्नाथस्यापि कृतयो न सर्वाः प्राप्यन्ते। किन्त्वेयं महती हानिर्भारतीयविद्यानाम्। शासनैरपि हस्तलिखितसंस्कृत-ग्रन्थानां प्रकाशनाय, संरक्षणाय वा यथोचितः प्रयत्नो न विधीयते। संस्कृतग्रन्थानां प्रकाशनेन संरक्षणेन च प्रायशस्तादृशानां रत्नानामन्वेषणं क्वचिद् भवत्येव येषां प्रकाशनेन संस्कृत-साहित्यस्य बहुक्षेत्रेषु व्यापकत्वम्, ज्ञान-विज्ञानादीनां खनित्वं वा स्पष्टतरं दृश्येत। तादृशेन प्रकाशनेन संस्कृतं प्रति लोकस्य बहुमानः सम्भवेदित्यपि विचार्य हस्तलिखित-संस्कृतग्रन्थानां संग्रहणं तेषां प्रकाशनं च प्रयत्नपुरःसरं साधनीयं सर्वैर्देववाणीविलासानुरागिभिः।

न केवलं प्राचीनयुगस्य संस्कृतसाहित्यं महत्त्वपूर्णं वर्तते, मध्ययुगस्य, आधुनिकयुगस्य वापि यत्किञ्चित् साहित्यमस्ति तस्य महिमापि सातिशयं वर्तते इति नास्ति सन्देहास्पदम्। तथा हि—कस्याश्चित्कृतेः महत्त्वं बहुविधं भवति। न केवलं काव्यात्मकप्रकर्ष एव कस्यचिद् ग्रन्थस्य माहात्म्यं जनयति, अपितु ऐतिहासिक-भौगोलिक-सामाजिक-राजनीतिक-धार्मिक-सांस्कृतिक-विषयाणां ज्ञान-विज्ञानादीनां वा शेवधीनां प्राप्तिरपि तेषां माहात्म्यं विदधाति। काव्यगुणहीनोऽपि कश्चिद्ग्रन्थ इतरेतर ज्ञान-विज्ञानादीनां प्रकाशपुञ्जेन समालोचनार्हो भवति। तद्विचार्य यस्य कस्यचिदपि ग्रन्थस्य यस्यां कस्यामपि भाषायां प्रणीतस्य वा रक्षा कर्तव्या सर्वैः भारतीयसंस्कृतिशूरैः।

विगणितमाहात्म्या एव गतपञ्चशताब्दीषु प्रणीताः संस्कृतग्रन्था अनवधानत एवास्माभिरुपेक्षिता अपि यदि ते जीवन्त्यस्माकं मध्ये तत्तु केवलं विधिवशादेव।

पुराकालीन संस्कृतग्रन्थेषु सत्सु का आवश्यकता वर्तते एतेषामवराणामाधुनिक-युगस्य संस्कृतग्रन्थानामिति तथाकथितसंस्कृतज्ञानामपि जिज्ञासा उपर्युक्तवक्तव्येन प्रशमनं लभेतेत्यस्माकं निवेदनम्।

अधुनापि एतेषामाधुनिकसंस्कृतग्रन्थानां कश्चित् सर्वाङ्गीणेतिहासो न वर्तते। अस्यां स्थितौ साधारणजना न जानन्ति यत् कीदृशं बहुविधो विशालो वाधुनिकसंस्कृतसाहित्यराशिः। तत्सर्वं समीक्ष्य वयं सागरिकायां प्रत्येकस्य जन-पदस्याधुनिकसंस्कृतलेखकानां जीवनवृत्तं तेषां कृतीनामालोचनया सह प्रकाशयि-तुकामाः सर्वान् संस्कृतप्रणयिजनान् निवेदयामहे तत्सम्बन्धिकृतीनां प्रेषणाय।

## त्रिभाषासूत्रम्

भारते भाषावैषम्यनिवारकं त्रिभाषासूत्रमिदं सुप्रथितमेव। तद्धि सर्वे विद्या-र्थिनः (१) मातृभाषाम् (२) काञ्चिदितरप्रादेशिकभाषाम् तथा च (३) आंग्ल-भाषां पठेयुरिति। सूत्रेऽस्मिन् द्वितीयकोटौ 'इतरप्रादेशिकभाषागणनायां संस्कृतस्य नाम नायातीति खेदकरं वृत्तम्। तत्रबङ्गाली-मराठी-तामिल-तेलगु-गुजराती-कन्नडादि भाषाणामवस्थानं वर्तते किन्तु न संस्कृतस्येति कथं न दूयेत चित्तं भारतस्यैक्यप्रवर्तनोत्सुकानां संस्कृतानुरागिणाम्।

प्रथमं तावद् भारते संस्कृतमेव सा भाषा वर्तते यस्यै सर्वेषां विविध-प्रदेश-वासिनामननुरागं न वर्तते। इयं सा भाषा यया सुदूरप्राचीनकालतः भारतस्यैक्यं विनिबद्धम्। तथा च प्रायशः सर्वासां भाषाणां धात्रीरूपेण प्रतिष्ठितेयं भाषा तासां समृद्धेरुपकारिका च। द्वितीयकोटौ अस्माकं मते प्रादेशिकभाषाभिः सह सार्वदेशिकभाषारूपेण संस्कृतस्य प्रतिष्ठापनं न केवलं यथोचितमपि तु भारतस्यैक्यनियोजकं च। ततश्च सर्वासु प्रान्तीयभाषासु पूर्वतोऽप्युच्चतरं भार-तीयपरम्परानुसारि च साहित्यं वर्धिष्यते इति मनागालोचितं बहुज्ञेयं विद्वद्भिः।

## संस्कृतं सहराष्ट्रभाषा भवेत्

राष्ट्रस्य शासनिकव्यवहारार्थं संस्कृतं सहराष्ट्रभाषापदे प्रतिष्ठापनीयमिति कल्पो व्यक्तिगतरूपेण श्रीमता चपलाकान्तभट्टाचार्येण प्रस्तावितो लोकसभायाः

समक्षं वर्तते । प्रस्तावेऽस्मिन् बहुगुणाः सन्त्येव । 'बहवस्तत्र भारतीयताधुरीणाः संस्कृतमेव राष्ट्रभाषा संघुष्येत' इति सविनयमेवराष्ट्रहितापेक्षं महत्त्वपूर्णं निजमतं प्रतिपादयन्ति । एतस्य प्रस्तावस्य ग्रहणेन तेषां परितोषो यथार्हं भवेदिति सुनिश्चितम् ।

अपरञ्च राष्ट्रभाषाया अन्यासां वा प्रादेशिकभाषाणां परिपोषणार्थं संस्कृतस्य किंचिदपूर्वं महत्त्वं विद्यते इति निःसन्देहमेव । किन्तु स परिपोषः तावत्कालं न सम्भाव्यते यावत् संस्कृताध्यनाध्यापनयोः लोकप्रियत्वं तयोरुच्चस्तरेण सह न विधीयेत । उद्देश्यमिदमभिलक्ष्य संस्कृतस्य राष्ट्रभाषया सहानुषङ्गित्वमपेक्षितं यथोचितं च प्रतिभाति ।

भारतीयभाषासु सुदूरप्राचीनकालतो भारतस्यैक्यविधायकं संस्कृतमेव प्रवर्तते। अस्या भाषायाः तत्स्वरूपमधुना किञ्चित्क्षीणमपि भूयो भूयो दरीदृश्यते । आंगलभाषायाः प्रचारात् पूर्वं संस्कृतस्य राष्ट्रैक्यविधायकं स्वरूपं भृशं प्रतिफलितमेवासीत् । स्वतन्त्रे भारते पुनरपि भारतस्येयं चिरन्तनभाषा सम्मानास्पदं स्थानं यथा लभेत तथा प्रयतनीयमस्माभिः ।

भारतस्य साम्प्रतिकीं प्राचीनां वा स्थितिं समीक्ष्य संस्कृतं सहराष्ट्रभाषापदे प्रतिष्ठापनीयमित्यस्मादृशानां सम्मतम् ।

## विश्वविद्यालयेषु संस्कृत-शिक्षणम्

भारतीय विश्वविद्यालयानां पाठ्यक्रमेषु संस्कृतस्य स्थानं वैकल्पिक-विषयेषु वर्तते एव । बी० ए०, एम०ए० आदिकक्षासु संस्कृताध्येतॄणां विद्यार्थिनां संख्या प्रचुरा दृश्यते । तथाप्येतदुपाधिधारिणां योग्यता यथोचितं प्रकर्षपरा न प्रतिभाति । न च तावत् संस्कृतविश्वविद्यालयादीनां शास्त्र्याचार्योपाधिधारिणामपि योग्यता शास्त्रपारङ्गतत्वं प्रतिभासयति । इयं स्थितिरस्माभिर्विविच्यते केचिदुपायाश्च संस्कृतस्याध्ययनाध्यापनयोर्विकसनार्थं निदर्श्यन्ते ।

प्रथमं तावदध्ययनोद्देश्यं विस्फारणीयम् । प्रायशो विद्यार्थिनः संस्कृतं पठित्वा संस्कृतं पाठयिष्यामः' इति मनसि निधाय स्वकीयगुरोः पद्धतिमेवानु-

सरन्ति । जीवनस्य विशालः कार्यपरिधिश्चेत्तेषां समक्षं वर्तेत स एव तेषामध्ययन-विधौ किञ्चिन्नवीनदृष्टिकोणं जनयेत् । इत्थमासीदेव प्राचीनकाले तदनु असंख्याः दार्शनिकाः; आचार्याः, राष्ट्रनीतिसंचालकाश्च बभूवुः ।

प्रायशः संस्कृतच्छात्राः किञ्चिन्नवीनं तात्पर्यमध्ययनपदेषु नानुध्यायन्ति । परिणामतः संस्कृतसाहित्यस्य तेषामध्ययनं नवनवोन्मेषविरहितं भवति । रसानु-भूतिमेवोपायस्वरूपं निवेदयामः । पुरातत्त्वान्वेषिणां मनीषिणामनुसन्धानसरणि-मापन्ना आचार्या एव संस्कृतस्याकरस्वरूपं व्याख्यातुं क्षमा भवन्ति । संस्कृत-निष्ठा इदमभिलक्ष्यानुसन्धान-ग्रन्थानामध्ययनाध्यापनमध्यापकानां कृतेऽत्यावश्यकं वयं मन्यामहे ।

अपरञ्च संस्कृतमभिनवसाहित्यसर्जनायाधुनिकयुगेऽपिनुत्तमा भाषेति विद्या-र्थिनां मानसे प्रतिष्ठापनीयम् । आधुनिकयुगस्य काव्यादिग्रन्थानां निर्धारणं यदि पाठ्यक्रमे भवेत्तर्हि विद्यार्थिनः सम्बोधिष्यन्ति यद् वयमपि संस्कृतलेखका भवितुं क्षमाः । अनेन विचारेण संस्कृतभाषायाः साहित्यस्याध्ययनविधौ तेषां काचिन्नवीना स्फूर्तिः समुपजायेत, विद्यार्थिनश्च सूक्ष्मेक्षिकया सांस्कृतिकरत्नसारं ग्रहीतुकामा प्रोत्साहिता भविष्यन्तीत्यस्माभिः सुपरीक्षितमेव ।

## राजस्थानसंस्कृतविश्वविद्यालय-स्थापना

राजस्थानं प्राचीनकालत एव भारतीयविद्यानां महत् केन्द्रं वर्तते । जयपुरा-दिराज्यानां न केवलं पण्डिता अपितु राजानोऽपि संस्कृतज्ञानगरिम्णा सुप्रथिता अभवन् । वर्त्तमानयुगेऽपि प्रदेशेऽस्मिन् बहवो महाकवयः शास्त्रधुरीणाश्च संस्कृतवाङ्मयं नितरामुन्नयन्ति' इति विदितमेव ।

प्रदेशेऽस्मिन् शासनस्य संस्कृताभिवृद्धये महती रुचिर्दरीदृश्यते । प्राचीन-पद्धतिमनुसृत्य संस्कृताध्ययनाध्यापनस्य विलसनं समीहमानेन शासनेन पृथक् संचालनालयः कारितः । नैतावन्मात्रेण सन्तुष्टैः शासनाधिकारिभिस्तत्र संस्कृत-विश्वविद्यालयस्य स्थापनार्थं समितिरेका नियोजिता । एतत्सर्वं राजस्थानस्य कर्म-

योगिनां राज्यपालानां सम्पूर्णानन्दमहोदयानां सत्परामर्शेन विधीयते इति तेषां कृतित्वं यथापूर्वं विलसतितराम्।

संस्कृतविश्वविद्यालयानां काचिदपरा प्रकृतिरेवानुसन्धेया। नाद्यावधि वर्त्तमान संस्कृतविश्वविद्यालया अस्यां दिशि दत्तावधानाः दृश्यन्ते। एतदधिकृत्य गताङ्केऽस्माभिराकलितमेव। राजस्थान-संस्कृतविश्वविद्यालयः संस्कृतस्य संस्कृतज्ञानां च सनातनगौरवं संरक्षितुकामः प्राचीनपरम्परायाः सौरभं सम्यक् प्रसारयिष्यतीत्याशास्महे वयम्।

## संस्कृतोपाधीनां कृते केन्द्रीयप्रयत्नः

स्वतन्त्रे भारते भारतीयविद्यानां यथोचितसम्मानो नाचिरमेव भवितेति केन्द्रीयशासनाधिकारिणां सत्प्रयत्नैः स्पष्टं प्रतिभाति। तथा हि—महाविद्यालयेषु संस्कृतस्याध्यापनार्थं एम०ए० उपाधिधारिभिः सह आचार्याणामपि तत्समवेतनादिप्रदानेन नियुक्तिः कार्या' इति आदेशः प्रसारितः सर्वेषु केन्द्रशासितप्रदेशेषु। तथापि कतिपयप्रान्तीयराज्याधिकारिणः केन्द्रीयशासनस्य पद्धतिं स्वत एवानुकर्त्तुं न पराक्रममाणा दृश्यन्ते। अस्माकं मध्यप्रदेशस्यापि शिक्षानीतिः काचिदीदृशी अभवत्पुरा। एतत्परिलक्ष्य केन्द्रीयशासनेन प्रान्तीयराज्येष्वपि संस्कृतोपाधीनां सम्मानार्थमपरं पदं सुगृहीतम्।

तद्यथा—No. F. 46—1/63--S.U., Government of India, Ministry of Education दिनांकितं जनवरी २३, १९६४ प्रपत्रं डिप्टी सिक्रटरी महोदयतः सर्वेषां राज्यशिक्षा सचिवानां, विश्वविद्यालयानां कर्मसचिवानां च सविधे प्रेषितमेव। पत्रस्यास्य कतिपयांशः मूलत एवोद्ध्रियतेऽत्र—

(a) That it may be impressed upon all the universities that they should employ at least one traditional Sanskrit Scholar and the scholar so employed should enjoy the same status and pay-scales as his counter-

parts trained on modern lines with equivalent degrees.

(b) That employment of traditional Sanskrit Pandits in High/Higher Secondary Schools/Colleges should also be given due encouragement. Teachers so employed should be treated on a par with other teachers possessing equivalent qualifications of the general educational set up.

With regard to this, the Board has suggested an interim equivalence of traditional Sanskrit examinations conducted by the various examining bodies with examinations in general educational set-up.

उपर्युक्तनिर्णयानुसारं विश्वविद्यालयेष्वपि आचार्यादीनां एम० ए० वत् नियुक्तिः कार्या। अपरं च, माध्यमिकशालासु शास्त्रिमध्यमोत्तीर्णानां नियुक्तिः संस्कृताध्यापनार्थं भविता।

प्रपत्रेऽस्मिन् आचार्य-शिरोमणि-विद्वदुत्तमा-शास्त्रभूषण-विद्याप्रवीण-तीर्थादीनामुपाधीनां एम० ए० वत् तथा च शास्त्रि-विशारद-उपाधि-कोविद-उपाध्यायादीनामुपाधीनां बी० ए० वत् मान्यता समीहिता। प्रथमा-माध्यमादीनां परीक्षाणामुच्चतरावरमाध्यमिकपरीक्षाभिः सह समकक्षता समाधेया।

राज्यशासनाधिकारिणः विश्वविद्यालयाधिकारिणश्च संस्कृतोपाधीनां यथोचितसम्मानं कृत्वा भारतस्य भारतीयतां विधास्यन्ति शीघ्रमेवेत्यस्माकं भृशमनुमोदनम्।

———

## अस्याङ्कस्य नवीनलेखकाः

**पं० जगन्नाथः उपाध्यायः आचार्यः**— वाराणसेय संस्कृतविश्वविद्यालयस्य प्राध्यापकः, प्रसिद्धः संस्कृतलेखकः ।

**श्री० श० श्री० पराञ्जपे, एम०ए०, पी० एच० डी०, वाग्विशारदः**—रींवास्थे टी० आर० एस० महाविद्यालये संस्कृताध्यापकः ।

**श्री जगन्नाथः वेदालंकारः**—श्रीमदरविन्दशिष्यः पाण्डिचेरीवास्तव्यः साधकोत्तमः ।

**श्री गौतमप्रसादमिश्र एम० ए० व्याकरणाचार्यः**— सागरविश्वविद्यालये संस्कृतविभागे शोधच्छात्रः ।

**श्री अच्युतानन्दः झा, एम० ए०**— सागरविश्वविद्यालये शोधच्छात्रः ।

——

# सागरिका

## त्रैमासिकी

द्वितीयवर्षे चतुर्थाङ्कः

२०२०

प्रकाशिका

संस्कृतपरिषद्, सागरविश्वविद्यालयः

सागरम् ( म० प्र० )

सागरिकासम्पादनसमितिः

सम्पादकः—डा० रामजी उपाध्यायः

कोषाध्यक्षः—डा० वनमाला भवालकरः

मन्त्री—डा० विश्वनाथ भट्टाचार्यः

# प्रासङ्गिकं निवेदनम्

ग्राहकमहाभागाः,

विदितमस्तु भवतां यदनेनांकेन सागरिकाया द्वितीयं वर्षं पूर्यते। उत्तरोत्तरं वर्धमानेन सहयोगेन स्फुटं ज्ञायते सागरिका भवतां रुचिकरीति। मानोत्कर्षं धारयन्तीयं यथा निर्बाधं प्रचरेत्तथा भवद्भिरेव करणीयम्।

अतएव येषां ग्राहकमहोदयानां

ग्राहकशुल्कमनेनांकेन समाप्यते तेभ्यो सविनय निवेदनं यत्ते कृपया शीघ्रमेव तृतीयवर्षस्य शुल्कं षट् रूप्यकाणि प्रेषयन्तु। यदि ग्राहकत्वमनभीष्टं स्यात्तदपि पत्रेण सूचनीयम्। सूचनायामप्राप्तायां सागरिकास्माभिः प्रदेयमूल्यप्रैषेण ( वी० पी० पी० ) प्रेषयिष्यते। तथाभूतायाः पत्रिकायाः अग्रहणमस्माकं हानये भविष्यतीत्यतः सूचना सनिर्बन्ध प्रार्थ्यते।

सर्व एव ग्राहका ग्राहकत्वं स्वीकरिष्यन्ति, संस्कृतसेवया धन्यवादार्हाश्च भविष्यन्ति इत्यस्माकं दृढः प्रत्ययः। इति शम्।

———

# सूचीपत्रम्


| विषयः | लेखकः | पृष्ठसंख्या |
|---|---|---|
| १—नायकविमर्शः | —विश्वनाथभट्टाचार्यः ... ... | २९३ |
| २—परमं सत्यम् | —खरे लक्ष्मणशर्मा ... ... | ३०० |
| ३—महाकवेर्हरिदासस्यैतिहासिकनाटकानि | —गुलाबचन्द्रजैनः | ३०९ |
| ४—भवभूतिर्विशिष्यते | —रामजी उपाध्यायः ... ... | ३१८ |
| ५—संस्कृतपत्रकारिता | —रामगोपालमिश्रः ... ... | ३३७ |
| ६—निबन्धको रामावतारशर्मा | —अच्युतानन्द झाः ... | ३५७ |
| ७—संस्कृतसाहित्ये पारिजातहरणकथा | —गौतमप्रसाद मिश्रः ... | ३८३ |
| ८—महाभारते नारीशिक्षा | —वनमालाभवालकरः ... | ४०४ |
| ९—शब्दादर्थसम्प्रत्ययः | —शिवचन्द्रभट्टाचार्यः ... | ४२८ |
| १०—संस्कृतवृत्तम् | —विश्वनाथभट्टाचार्यः ... ... | ४३४ |
| ११—ग्रन्थसमालोचनम् | —विश्वनाथभट्टाचार्यः ... ... | ४३८ |
| १२—वार्षिकसूचीपत्रम् | ... ... ... | ४५१ |


———

# नायकविमर्शः

विश्वनाथभट्टाचार्यः

नाट्यं हि नाम प्रकृत्या रसास्वादोन्मुखानां मनुष्याणां निर्मलानन्दजननं तद्द्वारा च हेयोपादेयबुद्धिविवर्धनं प्रयोगयोग्यं काव्यम्। आदित एव नाट्ये प्रमुखतया उपदेशप्रदत्वं समावेशितम्। तथा च मुनिः पञ्चमवेदत्वेन परिकल्प्य ब्रह्मणा सृष्टस्य नाट्यस्य प्रशस्यत्वानुवादमुखेन नाट्यस्वरूपं प्रतिपादयन्नाह—

धर्म्यं यशस्यमायुष्यं हितं बुद्धिविवर्धनम्।
लोकोपदेशजननं नाट्यमेतद् भविष्यति॥ इति (ना० शा० १।११५)

सर्वाण्येवात्र समुल्लिखितानि पदानि काव्यलक्षणेषु तत्तदालंकारिकैरपि परवर्तिभिः समावेशितानि। अतः काव्याद् व्यतिरेकं प्रदर्शयितुं प्रयोगयोग्यत्वस्य समावेशो नाट्यलक्षणेऽवश्यं करणीयः। एतदेवाभिप्रेत्य विश्वनाथेन दृश्यश्रव्यरूपेण काव्यद्वैविध्यं प्रतिपादितम्। तच्च दृश्यत्वं अभिनेयत्वं, आङ्गिकवाचिकसात्त्विकाहार्याभिनयैः प्रयोगयोग्यत्वमिति यावत्।

एतादृशं नाट्यं विषयभेदेनापि काव्याद् भिद्यते। काव्यस्य वर्ण्यं प्राधान्येन अर्थरूपं धत्ते, नाट्यस्य पुनस्तत् चेष्टारूपम्। अत एव मुनिवचनम्—

नानाभावोपसम्पन्नं नानावस्थान्तरात्मकम्।
लोकवृत्तानुकरणं नाट्यमेतन्मया कृतम्॥ (ना० शा० १।११२)

यथात्र लोकवृत्तस्य प्राधान्यंप्रदर्शितं तथैवान्यत्र नाट्ये वृत्तीनामपि वैशिष्ट्यं सूचितम्। भावानामवस्थानां च लोकवृत्तत्वेन प्रतिपादनं काव्यादिष्वपि भवति, अत्र पुनर्नाट्ये तस्य लोकवृत्तस्यानुकरणयोग्यत्वमपेक्षितम्। नाट्यकाव्ययोर्भेदमेतं मुनिर्दशरूपनिरूपणाख्येऽष्टादशाध्याये सुस्पष्टं प्रदर्शितवान्—

सर्वेषामेव काव्यानां मातृका वृत्तयः स्मृताः।
आभ्यो विनिस्सृतं ह्येतद् दशरूपं प्रयोगतः॥ (१८।४)

इत्थमत्र काव्यमात्रस्य वृत्तिप्रभवत्वं प्रदर्शितं दशरूपाणां को विशेष इति शङ्कां मनसिकृत्य श्रीमदाचार्याभिनवगुप्तपादः श्लोकस्यास्यार्थमेवं व्याचष्टे—

'यद्यपि सर्वेषामभिनेयानभिनेयानां काव्यानां वृत्तयः चेष्टा मातर इव, ताभ्योऽपि वाच्यरूपत्वेन कविहृदये व्यवस्थिताभ्यः काव्यमुत्पद्यते। तथापि प्रयोगं प्रयुज्यमानत्वात् प्रयोगयोग्यत्वमभिसन्धाय वृत्तिभ्यो विनिस्सृतमभिनेय-काव्यं प्रत्यक्षभावनायोग्यवृत्तिचतुष्टयाभिधायकत्वं दशरूपं सामान्यलक्षण-मित्यर्थः।' इति। ( ना० शा० II पृ० ४०८ )

एवं च नाट्यस्य सर्वत्रैव प्रयोगयोग्यत्वमनुसन्धेयं भवति। सर्वेष्वेव नाट्य-प्रकारेषु सामान्यत्वेनाभिमतं प्रयोगयोग्यत्वं वस्तुतो नाट्यस्य विशेषलक्षणमेव तदभावे नाट्यस्य सामाजिकहृदयावर्जनसामर्थ्याभावस्य स्पष्टत्वात्।

प्रयोगयोग्यत्वेन वर्णनीयं वस्तु 'इतिवृत्त'मुच्यते तस्य भेदादयोऽन्यत्र[1] प्रतिपादिताः। नाट्ये प्रयोगयोग्यं किं भवतीत्येष प्रश्नः समुत्तिष्ठति। तस्य सामान्यत उत्तरं मनुष्यचरितम्। त्रिभिः श्लोकैर्मुनिः दशरूपेषु सर्ववृत्ति-विनिष्पन्नत्वान्नाटकं मुख्यं मत्वा तत्स्वरूपं विवृण्वन्नाह—

प्रख्यातवस्तुविषयं प्रख्यातोदात्तनायकं चैव।
राजर्षिवंश्यचरितं तथैव दिव्याश्रयोपेतम्॥
नानाविभूतिभिर्युतमृद्धिविलासादिभिर्गुणैश्चैव।
अङ्कप्रवेशकाढ्यं भवति हि तन्नाटकं नाम॥
नृपतीनां यच्चरितं नानारसभावचेष्टितं बहुधा।
सुखदुःखोत्पत्तिकृतं भवति हि तन्नाटकं नाम॥

(ना० शा० १८।१०-१२)

अत्र च नृपतिचरितं नाटके प्रयोगार्हमिति मुनिमतम्। कथं नृपतेरेव चरितं प्रदर्शनीयमित्यत्र चिरन्तनैराचार्यैरतत्र रञ्जनावैशिष्ट्यं उपदेशप्रदान-योग्यत्वं च हेतुत्वेन निर्दिष्टे। इत्थञ्चाप्यूहितुं शक्यते-काव्यनाट्याभ्यां पाठक-दर्शकचित्तावर्जकाभ्यां भाव्यम्। तच्चावर्जनं वैचित्र्यलोकोत्तरत्वविस्मयावहत्वा-

१. सागरिका I, २ अंक।

दिभिः सुखसाध्यम् । सामान्यजनस्य चरितं तथा चित्ताकर्षकं न भवति यथा बहूनां जनानां भाग्यविधायकस्य नृपस्य । तथा च राजप्रधाने समाजे राजैव प्रामुख्यं भजते । भारतेऽस्मिन् वर्षे आदिकालादेव राज्ञो दिव्यांशमत्त्वं देव-तुल्यत्वञ्च स्वीकृते । अस्मादेवात्र नृपतिचरितस्य नाट्यादावुपादेयत्वं पुनः पुनः प्रतिपादितम् । ग्रीसादिपाश्चात्यदेशेषु चानेनैव हेतुना राजानस्ते च जना नायकत्वेन सम्मता येऽसामान्या लोकोत्तरविभूतिभूषिताश्च ।

एतदेवाभिप्रेत्य दिव्य-अदिव्य-दिव्यादिव्यभेदात् प्रकृतित्रैविध्यं प्रदर्श्यादिस्य नाट्यादौ नायकरूपेण प्रयोगो निषिद्धः । यतो हि उपदेशसाधकत्वेन कल्पिते नाट्येऽत्यन्तालौकिकमहिमवद्भिर्दिव्यनायकैर्मनुष्याणां सुखोपदेशसिद्धिर्नैव भवति । उक्तं च श्रीमदभिनवगुप्तपादेन 'प्रख्यातत्वेऽपि देवचरितं वरप्रभा-वादिबहुलतया उपायोपदेशायायोग्यमिति' न निबन्धनीयम् । देवानां पूर्णकाम-त्वाद् दुःखशोकाद्ययोगाच्च फलविशेषप्राप्तये तेषां प्रारम्भादिरपि नैव युज्यते । अतो नाट्ये अदिव्यानां वत्सराजदुष्यन्तादीनां दिव्यादिव्यानां रामकृष्णादीनामेव नायकत्वमुचितम् ।

नाटकादौ अदिव्यदिव्यादिव्यकोटिकानां नायकानां समावेशं समर्थ्य सर्वेषामेव स्त्रीपुरुषाणामुत्तममध्यमाधमत्वेन त्रिधा प्रकृतिविभागो नाट्यशास्त्रे प्रदर्शितः । एषु चाधमप्रकृतीन् विहाय उत्तममध्यमकोटिका एव नायकाः कल्पनीया इति भरतमतम् । तथा च—

> अत्र चत्वार एव स्युर्नायकाः परिकीर्तिताः ।
> मध्यमोत्तमप्रकृतौ नानालक्षणलक्षिताः ॥
> धीरोद्धता धीरललिता धीरोदात्तास्तथैव च ।
> धीरप्रशान्तकाश्चैव नायकाः परिकीर्तिताः ॥
> देवा धीरोद्धता ज्ञेयाः स्युर्धीरललिता नृपाः ।
> सेनापतिरमात्यश्च धीरोदात्तौ प्रकीर्तितौ ॥
> धीरप्रशान्ता विज्ञेया ब्राह्मणा वणिजस्तथा ॥
>
> ( ना० शा० २४. १६–१८)

अपि चान्यत्र—

व्यसनी प्राप्य दुःखं वा युज्यतेऽभ्युदयेन यः ।
कथापुरुषमाहुस्तं प्रधानं नायकं बुधाः ॥ इति ।

(२१-२२)

इत्येतेभ्यः श्लोकेभ्यो नायकस्वरूपं भरतसम्मतं ज्ञायते। ननु 'देवा धीरोद्धता ज्ञेया' इत्यादिश्लोकार्थः पूर्ववचनेन विरुध्यते, देवादीनां नाटक-नायकत्वानुपपत्तेः, अतो नाटके धीरललितो नृप एव नायकः स्यादिति शङ्कां निराकर्तुं स्वविवृतौ श्रीमदभिनवगुप्तपादस्यैवं निर्देशो दृश्यते—'तत्र धीरललितत्वं राज्ञ एव वर्णनीयं नान्यस्य, सेनापत्यमात्ययोर्धीरोदात्तत्वमेव, देवानां धीरोद्धतत्वमेव, द्विजातीनां धीरप्रशान्तत्वमेवेति, एवं परं द्रष्टव्यम्। अत एव 'प्रख्यातोदात्ते'त्यत्र चत्वारोऽपि नायकाः स्वीकृता इति व्याख्येयम्।' (ना० शा० II पृ० ४१४)

भारतीये नाट्यशास्त्रे नायकसम्बन्धिनी स्थितिरीदृशी। उत्तममध्यमान्यतरप्रकृतिः फलविशेषप्राप्तये प्रयत्नपरो धीरोदात्तादिष्वन्यतमः पुरुषो नाट्यादौ नायकः। दशरूपकाणां लक्षणश्लोकेषु तत्र तत्र धीरोदात्तादीनां नायकत्वेन प्रयोज्याप्रयोज्यत्वं च पुनर्मुनिना निर्दिष्टम्। तथा च नाटक उदात्तो नृपतिः, प्रकरणे च 'विप्रवणिक्सचिवानां पुरोहितामात्यसार्थवाहाना'मन्यतमो नायकः स्यात्। वीथ्यादिडिमान्तभेदेषु प्रधानपुरुषसंख्याया भूयिष्ठत्वान्नायकानुसन्धानं व्यर्थप्रायमिति मुनिमतं प्रतिभाति। उक्तं च तेन—

यत्रानेकस्य भवतो व्यसनाभ्युदयौ पुनः ।
सुपुष्टौ यत्र तौ स्यातां न भवेत्तत्र नायकः ॥ इति ।

(ना० शा० २४।२२)

नाटकेषु नायकस्यैव मुख्यत्वं भवति, अतश्च तत्सम्बद्धवृत्तमाधिकारिकमित्युच्यते। वृत्तान्तरस्य योजनायां सत्यां तन्नायकानां गौणत्वं मुख्यनायकवृत्तोपकारित्वं च कल्पितम्।

नाटकविशेषे नायकानुसन्धानं कथं कर्तव्यमिति प्रश्नो न दुःसमाधेयः।

यस्य पुरुषस्य कार्याणि प्रत्यङ्कं दृश्यन्ते, यश्च नाटकान्ते फलसम्पत्तिभाग् भवति स एव नायक इति स्पष्टं ज्ञातुं शक्यते। प्रत्यङ्कं नायकानां 'प्रत्यक्षचरित-सम्भोग'स्य विन्यासः कार्यः, अङ्कश्च 'सन्निहितनायको' भवेदिति च सूचयति मुनिः। यथा लोके तथैव नाट्यादौ प्रयोजनं किमप्युद्दिश्य मनुष्यः प्रवर्तते। तत्प्रयोजनस्य पूर्त्यर्थं मनुष्यः प्रयत्नपरायणो भवति, प्रयतमानश्चासौ विघ्ना-दीनपास्य फलसम्पत्त्या युक्तो भवति। एवं हि सर्वेष्वेव प्रयत्नसाध्यफलेषु पुरुषस्य पञ्च कर्मावस्था भवन्ति। ता एवावस्था आरम्भयत्नप्राप्त्याशानियताप्तिफलाग-माख्या नाट्यशास्त्रे प्रतिपादिताः।

'यथा बीजाद् भवेद् वृक्षो वृक्षात्पुष्पं फलं तथा' इति रसाध्याये भावरस-सम्बन्धनिरूपणश्लोके मुनिप्रयुक्तोपमा दृश्यते। सैवोपमात्रापि परमोपयोगिनी। बीजमेव समाश्रित्य भवत्यङ्कुरोद्गमः। वर्णनीये वस्तुन्यपि तादृशं बीजं किञ्चित्स्याद् यदवलम्ब्य नायकस्य कर्मारम्भो भवेत्। बीजरूपेण यत्प्र-योजनमादावुप्यते नाट्यकारेण तस्यैव आफलावाप्ति प्रपञ्चनं नाट्यम्। तच्च फलं नायकगामि। शकुन्तलाया दुष्यन्तेन प्रथमदर्शनं बीजं तस्मादेवान्ततः दुष्यन्तस्य शकुन्तलामिलनफलप्राप्तिः। बीजं बीजानुस्यूतश्च क्रियाकलापो यत्परः स एव नायक इति मन्तव्यः। आदित अन्तं यावत्तस्यैव मुख्यत्वम्। अत एवाह नायकलक्षणे सागरनन्दी—'नायक इति बीजबिन्द्वादिसम्वलितस्य नाटकस्य नाट्यमन्तं नयतीति नायकः। स एव धर्मकामार्थफलभाग् भवति' इति। मनुष्यप्रवृत्तेश्चतुर्वर्गमूलत्वे सत्यपि मोक्षरूपा फलप्राप्तिर्नाट्यादौ नायकस्य नैव प्रदर्शयितुं शक्या, अतस्त्रिवर्गफलप्राप्तिरेवात्र निबध्यते। शान्तरसमभ्युपगम्यापि तत्प्रधाने नाटके मोक्षप्राप्तिर्नैव फलत्वेन कल्पयितुं युज्यते। विषयवासना-विमुखं तत्त्वज्ञानोन्मुखं महापुरुषमाश्रित्य पार्थिवभोगानामसारत्वं तत्त्वज्ञानस्यो-पादेयत्वं च प्रतिपाद्य विनेयानां तदुन्मुखीकरणमेव तत्र फलत्वेन युक्तम्। मोक्षस्याभ्यर्हितत्वं लक्ष्यभूतं तल्लक्ष्यप्राप्तिमार्गे निरोधकविघ्नैर्यः संघर्षः स एव नायकस्य तत्र प्रदर्शनीयः। तद्दर्शनेन च सामाजिकानां मोक्षविषयिणी बुद्धिर्द्र-ढीयसी स्यात्।

## शास्त्रानुशासनं नाट्यकाराश्च

अलंकारशास्त्रं नाट्यशास्त्रं च काव्यनाटकान्यभिलक्ष्य रचितानि। लक्ष्याणां विवेचनादेव लक्षणग्रन्थानां निर्माणं भवतीत्यनुभवसिद्धः क्रमः। दुर्भाग्यवशादस्माकं न ज्ञायन्ते ते नाट्यग्रन्था यानवलम्ब्य भरतमुनिना नाट्यशास्त्रं ग्रथितम्। स्वयमासीत् स मुनियुगपदेव नाट्यकारः प्रयोजकोऽभिनेता च। अस्मादेव मुनिकृतेषु लक्षणेषु दृश्यते किमप्यौदार्यं यदुत्तरकालभाविषु नाट्यशास्त्राचार्येषु धनञ्जयादिषु नैव प्राप्यते। लक्ष्यमेव प्रधानं मत्वा प्रवृत्तं भरतमुनिलक्षणं, धनञ्जयादीनां लक्षणं पुनर्न तथेत्याभाति। रङ्गमञ्चसम्बन्धरहितो वस्तुस्थित्या नाटकादीनामव्यवहितज्ञानरहित एव धनञ्जयो बभूवेति प्रतिभाति। उक्तं च तेनैतदेवाभिप्रेत्य—

'उद्धृत्योद्धृत्य सारं यमखिलनिगमान्नाट्यवेदं विरिञ्चि'रित्यादि। ग्रन्थरचनायां स्वप्रवृत्तिप्रतिपादकेऽस्मिन् श्लोके नाटकानां नाट्यकाराणां वा न कोऽप्युल्लेखो लभ्यते। अतः केवलं 'मुञ्जमहीशगोष्ठीवैदग्ध्य'भाग्सौ 'विद्वन्मनोरागनिबन्धहेतोरेव दशरूपं प्रणीतवानिति ज्ञायते। भरतस्येव नासीदस्य नटशिक्षणे नाट्यकारसमस्यासमाधाने वा कश्चिद् भरः। अत एव क्वचित् क्वचित्तदुक्तयः—'यथासंख्येन जायन्ते मुखाद्याः पञ्चसन्धयः', 'एक एव भवेदङ्गी शृङ्गारो वीर एव वा' इत्यादयश्चिन्त्या एव। रङ्गमञ्चस्यानुल्लेखोऽपि विस्मयावहः। अभिनेता-रङ्गमञ्च-प्रेक्षकाणां नाट्यविधावपरिहार्यत्वं सुस्पष्टम्। एषामन्यतरस्योपेक्षणं नाट्यविधेरपूर्णत्वमेव सूचयति।

एष एव हेतुः प्रसिद्धानां नाटकानां कुत्रचित् तच्छास्त्रविरोधितायाः। भरतस्य नियमा नासन् तथानुल्लंघनीयाः। वस्तुगतिस्तेन नैवोपेक्षिता। नाट्यशास्त्रं दृष्ट्वा स्पष्टं प्रतिभाति यत्स मुनिः शास्त्रनिर्देशपालने ध्वनिकारसिद्धान्तस्य पूर्वभावी समर्थक एव। नियमादीनुल्लिख्य स्पष्टमुद्घोषयति ध्वनिकारः—

सन्धि सन्ध्यङ्गघटनं रसाभिव्यक्त्यपेक्षया।
न तु केवलया शास्त्रस्थितिसम्पादनेच्छया॥ इति (३.१२)

विहितविधानस्य शास्त्रकारस्येदृशं वचनं तस्य दृष्टिप्रसादं तत्त्वबोधप्रकर्षं च सूचयति। नाट्यकाव्यरचनासु कविरेव प्रधानं, यथास्मै रोचते विश्वं तथेदं परिवर्तयितुं शक्तः। तत्र यदि भवत्यपेक्षा कस्यचिदङ्कुशस्य स पुनः कवेरौचित्यबोध एवौचित्यसम्मतः।

ये च किल नाट्यकलानिष्णाताः श्रेष्ठकोटिका नाट्यकारा भासकालिदासशूद्रकादयस्ते कदापि नाट्यशास्त्रं पुरतो धृत्वा नाट्यरचनां न कृतवन्तः। अनेन च मुनावश्रद्धा न प्रमाणीक्रियते तेषां, प्रत्युत स्पष्टरूपेण माहात्म्यमेव। नाटकानां विचारकाले वयं प्रायः शास्त्रानुसारं तेषां समीक्षणं कुर्मः। नैष विधिः सर्वथा सुफलप्रदः। नाटकमेव मुख्यं मत्वा विचारे कृते शास्त्रविशेषस्यापि न्यूनत्वं दूरीभवेत्, शास्त्रसिद्धान्तानामपि समुचितं परीक्षणं संस्करणं च सम्भवेत्। सिद्धान्तपक्षो व्यवहारपक्षश्च परस्परं परिपूरकौ। एकं विनापरो व्यर्थ एव। तत्रापि सिद्धान्तपक्षो व्यवहारपक्षमवलम्ब्य प्रवर्तत इति तस्यैव तुलनया गौणत्वमिति मन्तव्यम्।

न च नाट्यादिशास्त्रसिद्धान्ताः प्रभुसम्मितश्रुतिसिद्धान्ता इवाक्षरशः पालनीयाः। 'तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ' इति भगवदुक्तिः श्रुतिस्मृतिशास्त्रविषयिणी एव। लोकोत्तरकल्पनाप्रभवेषु काव्यादिषु योग्यस्य कवेः प्रतिमा, नैपुणं बहुदर्शित्वं च हेतुत्वेन प्रमाणम्। अन्यथा शास्त्रमात्रानुसरणेन वैचित्र्याभावस्तेन च निबद्धवस्तुनोऽरञ्जकत्वं दुर्वारं स्यात्।

अथैतावतीं भूमिकामादाय वेणीसंहारमुद्राराक्षसयोर्नायकनिरूपणं प्रस्तूयते। अनयोर्नाट्यकाराभ्यां सर्वथा शास्त्रानुसरणं न कृतमित्यतो हेतोः प्रश्नोऽयं जायते।

## वेणीसंहारे

वेणीसंहारे धीरोदात्तो युधिष्ठिर एव नायक इति सर्वे प्राचीना व्याख्यातारोऽभिप्रयन्ति। तथाहि भीमसेनस्य प्राधान्ये सत्यपि पर्यन्ततो तद्वीरकर्मणां फलभाग् युधिष्ठिर एव भवति। युधिष्ठिरश्च पाण्डवपक्षस्य प्रधानभूतो राजा। तदनुमोदनेनैव भीमस्य युद्धकर्म सम्भवति। भीमस्य दुःशासनवक्षःशोणित-

पानदुर्योधनोरुभङ्गरूपेण प्रतिज्ञापालनेन द्रौपद्या वेणीसंहारो भवति तेन च युधिष्ठिरस्यैव पाण्डवप्रमुखस्य निःसपत्नराज्यलाभरूपा फलप्राप्तिर्जायते। सेनापतेर्विजये यथा राज्ञ एव विजयो भवति तथैवात्र भीमसेनस्य विजये युधिष्ठिरस्य। अतश्च तस्यैव नायकत्वमुचितम्। तथा चास्मिन् वृत्ते युधिष्ठिर एवाधिकारी। उक्तं च दशरूपके—

अधिकारः फलस्वाम्यमधिकारी च तत्प्रभुः।
तन्निर्वर्त्यमभिव्यापि वृत्तं स्यादाधिकारिकम्॥

इति (१. १२)

एतच्च धनिकेनेत्थं व्याख्यातम्—'फलेन स्वस्वामिभावसम्बन्धोऽधिकारः, फलस्वामी चाधिकारी, तेनाधिकारेण अधिकारिणा वा निर्वृत्तं फलपर्यन्ततां नीयमानमितिवृत्तमाधिकारिक'मिति। एतदनुसारं यद्यपि फलं नाधिकारिणा युधिष्ठिरेण निर्वृत्तं तथापि फलस्वाम्यरूपोऽधिकारस्तस्यैव। भीमसेनस्य धीरोद्धतत्वेनापि नायकत्वं न युज्यते, नाटके धीरोदात्तस्यैव नायकत्वं स्वीकृतमिति युधिष्ठिर एव नायक इति।

एतच्चापरे न सहन्ते। तथाह्येतादृशः सिद्धान्तो नाटकीयं वृत्तं व्यभिचरति। नाट्यकाराभिप्रायश्च नैनमनुसरति। नाटकस्य नामापि व्यर्थप्रायं भवति। वीररसप्रधानत्वं चास्यैवं नाटकस्य व्यालुप्येत। युधिष्ठिरस्य भवतु नाम धीरोदात्तत्वम्, किन्तु नासौ वीररूपेण महाभारतकारेणापि प्रतिपादितः। सामदानपरो ह्येष धर्मराजो राज्ञामादर्शभूतः। न च धीरोद्धतस्य नाटकनायकत्वमनुचितमिति सिद्धान्तः क्षोदक्षमः। आधिकारिकवृत्तस्य यादृशं लक्षणं धनञ्जयेन कृतं यश्चार्थस्तस्य धनिकेन व्याख्यात इत्येतदुभयं तयोः पाण्डित्यप्रकाशकमपि मुनिवचनविरोधात् नैवोपादेयम्।

तथा च नाटकेऽस्मिन् द्रोणदुःशासनकर्णपुत्रकर्णवधदुर्योधनोरुभङ्गादिका घटना द्रौपद्याश्च भीमेन प्रतिज्ञां पूरयता वेणीसंयमनं वर्णनीयत्वेन गृहीतानि। विस्तृते महाभारतयुद्धे भीमार्जुनावेव पाण्डवपक्षस्य प्रमुखौ वीरावास्ताम्। वीररूपेणार्जुनस्य महत्तरमपि युद्धकर्म नाट्यकारेणात्र प्रधानरूपेण न वर्णितम्।

प्रथमाङ्के सन्धिप्रयासमसहमानो भीमः स्पष्टं स्वप्रतिज्ञापूरणार्थे व्यग्रो दृश्यते। 'स्वस्था भवन्तु मयि जीवति धार्तराष्ट्रा' इति सक्रोधं पृच्छन् भीमः प्रविशति, शान्तिवादिनं ज्येष्ठभ्रातरं सक्षोभमुपालभते च। युधिष्ठिरे युद्धविमुखे सत्यपि प्रतिज्ञापूरणार्थमसौ निःसङ्ग एव युद्धं करिष्यतीति घोषयति। तस्येयमुक्तिः—

'प्रवृद्धं यद्वैरं मम खलु शिशोरेव कुरुभि-
र्न तत्रार्यो हेतुर्न भवति किरीटी न च युवाम्।
जरासन्धस्योरःस्थलमिव विरूढं पुनरपि
क्रुधा सन्धिं भीमो विघटयति यूयं घटयत॥' (१. १०)

भीमचरित्रं प्रकाशयन्ती तस्य निश्चयदार्ढ्यं प्रतिपादयति। 'चञ्चद्भुजे'—त्यादिश्लोकेन च पुनः स एव द्रौपदीमाश्वासयन् सन्धिभङ्गे प्रहृष्टतरो भूत्वा प्रतिजानीते—

'भूयः परिभवक्लान्तिलज्जाविधुरिताननम्।
अनिःशेषितकौरव्यं न पश्यसि वृकोदरम्॥'
इति (१. २६)

द्रौपदी च पञ्चपाण्डवेषु भीम एव शत्रुनिपीडनार्थमास्थावती, संधुक्षयति च पुनः पुनर्भीमक्रोधम्। यद्यपि स्वयं भीम एव युद्धं यज्ञरूपेण वर्णयन् चतुर्णामृत्विजत्वं युधिष्ठिरस्य च यजमानत्वं प्रतिपादयति (१. २५) तथापि होतार एव स्वक्रियाभिर्यज्ञसम्पादका यजमानश्च केवलं फलभागिति चेष्टाप्रधाने नाटके होतॄणामेव मुख्यत्वमुचितम्। तेषु च भीमस्यैव मुख्यत्वमादित अन्तं यावन्नाट्यकारेण प्रदर्शितम्। अर्जुनेन कर्णकर्णपुत्रवधे कृतेऽपि तस्य गौणत्वं स्पष्टमत्र प्रतिभाति। आपञ्चमाङ्कं सर्वत्र भीमस्यैव वीरकर्माणि प्रदर्श्य षष्ठाङ्के च तस्यैव प्रतिज्ञापूरणं निबद्धमिति वृत्ताभिप्रायेण भीमस्यैव नायकत्वं नाट्यकारस्य विधित्सितमिति सुस्पष्टं प्रतीयते।

वेणीसंहारमिति नामापि भीमनायकत्वमस्य सूचयति। नाटकनामानि गर्भितार्थप्रकाशकानि भवन्ति। अतश्च नामविचारेण कवेरभिप्रायो ज्ञातुं शक्यते। वेण्याः संहारमेव फलत्वेन परिकल्प्य नाटकमिदं रचितमिति नाम्नैव

सूचयति नाट्यकारः । स च संहारो भीमेनैव क्रियते, अतः फलमभिलक्ष्य तस्यैव चेष्टाः प्रवर्तन्ते युधिष्ठिरनिरपेक्षस्य । अङ्गी चात्र वीरो रसः । तदुचितोऽपि नायको भीमसेन एव । युधिष्ठिरस्य यत्प्रतिपादनं षष्ठेऽङ्के दृश्यते तन्न वीररसानुकूलम् । राक्षसेनानायासं प्रवञ्चितोऽसौ बालवदाभाति । कापुरुषवच्च भ्रातृघातकं हन्तु नोत्तिष्ठते । सपत्नीको ग्निं प्रवेष्टुं निश्चनोति, अर्जुनार्थमपि क्षात्रपदवीं परित्यज्य वनगमनं निर्दिशति । एतादृशस्य युधिष्ठिरस्य वीररसप्रधाननाटकस्य नायकत्वं कथं सम्भवतीति सुधियो विभावयन्तु ।

यच्च धीरोद्धतस्य नाटकनायकत्वमनुचितमिति तत्र विचार्यते । निषेधेऽस्मिन् पूर्वोक्तं नाटकलक्षणे 'प्रख्यातोदात्तनायकमिति मुनिप्रयुक्तं पदमेव प्रमाणम् । मुनिना कुत्रापि धीरोद्धतादीनां नायकत्वं न निषिद्धम् । अतश्च तत्रोदात्तपदं उत्तमकोटिसूचनार्थं प्रायोवादार्थं वा प्रयुक्तमित्येवावगन्तव्यम् । केवलं यदि धीरोदात्तस्यैव नायकत्वं मुनिसम्मतमभविष्यत्तर्हि कथमङ्कलक्षणप्रस्तावे—

'ये नायका निगदितास्तेषां प्रत्यक्षचरितसम्भोगः ।
नानावस्थोपेतः कार्यस्त्वङ्कोऽविकृष्टस्तु ॥'
(ना० शा० १८.१७)

इति वचनं संगच्छेत ? कथं वा तेन देवानां धीरोद्धतत्वम्, नृपाणां धीरललितत्वम्, सेनापत्यमात्ययोर्धीरोदात्तत्वं निर्दिष्टानि ? अतोऽत्र औद्धत्यादीनामौचित्यमात्रप्रतिपादनमेव मुनिविवक्षितमिति श्रीमदभिनवगुप्तसरण्याऽवसेयम् । 'प्रख्यातोदात्तनायकमिति व्याचक्षाणेन स्पष्टमुक्तं तेन—'उदात्त इति वीररसयोग्य उक्तः । तेन धीरललितधीरप्रशान्तधीरोद्धतधीरोदात्ताश्चत्वारोऽपि गृह्यन्ते ।' इति । (ना० शा० II, पृ० ४११) 'देवा धीरोद्धता' इत्यादिश्लोकस्य च व्याख्यानं पूर्वमुद्धृतं तत्रापि चतुर्णामेव नायकत्वं स्वीकृतम् । अतो धीरोद्धतस्य भीमस्य नायकत्वं न युज्यत इति कथनमकिञ्चित्करम् ।

यच्च भीमस्य सेनापतिस्थानीयत्वाद् युधिष्ठिर एव नायक इत्युच्यते तदपि न मनोरमम् । सत्यं सेनापतेर्विजये राजैव विजयी भवति, तथापि कवेर्विवक्षा-

वशान्मुख्यत्वं निश्चेतव्यम्। नैपोलियनेन ब्रिटिशवीरनेलसनस्य यद्युद्धं वाटालुंस्थाने समभवत्तदेव यदि प्रधानत्वेन दर्शनीयं भवेत्तदा सेनापतिर्नेलसन एव नायकत्वमर्हति न पुना राजा जर्जाख्यस्तृतीयः। एवमेव भासस्य प्रतिज्ञायौगन्धरायणे यद्यपि यौगन्धरायणस्य सर्वे व्यापारा उदयनसमृद्धिफलास्तथापि महामात्यस्य बुद्धिकौशलं कार्यनैपुण्यं च तत्र प्रदर्शयितुमिच्छति नाट्यकारस्ततश्च तस्मिन् अमात्यस्यैव यौगन्धरायणस्य नायकत्वं विज्ञेयम्। एवमिहापि स्वप्रतिज्ञापूरणार्थमुद्यतो भीमसेन एव सन्धिप्रयासे आदौ खिन्नः पश्चात्तद्भङ्गे प्रहृष्टः सन् यद् यत्करोति यथा च प्रतिज्ञान्तं गच्छति तदेव प्रदर्शितं नाट्यकारेण। पञ्चकर्मावस्थाश्च भीमसेनस्यैव निबद्धाः। निःसंशयं स एव नायकव्यपदेशमर्हति।

आधिकारिकवृत्तस्य यल्लक्षणं धनञ्जयेन कृतं तदपि मुनिवचनविरोधान्न रुचिरम्। केवलं फलाधिकारी, स्वव्यापाररहितः पुरुषश्चेष्टाप्रधाने नाट्ये वस्तुगत्यैव नायकपदं नार्हतीति निश्चितम्। तथापि यदस्मिन् युधिष्ठिरस्य नायकत्वं धनञ्जयध्वनिकाराभ्यां प्रकल्पितं तत्र दशरूपककारस्य सिद्धान्तो धीरोदात्त एव नाटके नायको भवेदित्येव प्रभवति। स च सिद्धान्तो नाट्यशास्त्रविरोधीति समर्थितमेव पूर्वम्।

रसादिविषये पुनः स्पष्टमेव ध्वनिकारादयः स्वानुभवमेव प्रमाणमामनन्ति। वेणीसंहारनाटकस्य प्रेक्षको वा कदापि भीमादन्यं कमपि नायकं नैव मंस्यते। स्वानुभव एव युधिष्ठिरनायकत्वमस्य निराकरोति। धनञ्जयवचनमात्रानुरोधेन युधिष्ठिरे नायकव्यवहारे प्रवर्तितेऽपि तन्न सहृदयहृदयग्राहितां भजते।

साहित्यदर्पणकृद् विश्वनाथो नाट्यनिरूपणे धनञ्जयमेव प्रतिपदमनुसरति। अतस्तस्यापि नाटकलक्षणे धीरोदात्तस्यैव नायकत्वं समर्थितं दृश्यते। पूर्वोक्तयुक्त्यैव तल्लक्षणस्य संकीर्णत्वं प्रमाणीक्रियते। तथा च श्रुतिस्मृतिविरोधे यथा श्रुतिरेव बलीयसी तथैव विरोधस्थले मुनिवचनमेव प्रमाणं न धनञ्जयादिवचनम्।

अतोऽपि विस्मयकरो विश्वनाथस्य विर्देशो 'वेण्यां भीमादे'रिति। भीमवृत्तं तन्मते पताकारूपं प्रासङ्गिकम्। न विद्मो वयं वेणीसंहाररूपं भीमकर्म विना किमन्यत्तत्र प्रदर्शितं मुख्यतरं यदाधिकारिकवृत्तमुच्येत। वेणीसंहारमसकृदुल्लिख्यापि कुत्रचिदपि भीमस्य पताकानायकत्वेन युधिष्ठिरस्य वा मुख्यनायकत्वेन निर्देशो न कृतः श्रीमदभिनवगुप्तपादेन।

यत्तु केचित् कथयन्ति भरतवाक्यं य उच्चारयति स एव नाटकादौ नायक इति तदपि विनिगमकाभावात् न प्रमाणम्। नाट्यशास्त्रे अन्यत्र चाप्येतत्समर्थकं वचनं नैवोपलभ्यते। वस्तुतोऽपि केवलं भरतवाक्यसमुच्चारणमात्रेण नायकत्वं सर्वथा न युज्यते कस्यापि। प्रायशो नायकेनैव भरतवाक्यमुच्चार्यत इति सत्यं परं न तदेव नायकत्वनिश्चायकम्। अत्र तु वृत्तौचित्यवशादेव ज्येष्ठभ्राता स्वपक्षनायको युधिष्ठिरः समुच्चारयति भरतवाक्यम्। न तन्मात्रेण तस्य नायकव्यपदेशो युज्यते।

इत्थं वेणीसंहारे धीरोद्धतो भीमसेन एव नायको न युधिष्ठिर इति निःसंशयम्।

## मुद्राराक्षसे

संस्कृतनाट्यसाहित्ये विशाखदत्तस्य कृतिरनुपमा द्वितीयरहिता च। नाट्यकारोऽयं कदा बभूवेत्यत्र विदुषां मतिविसम्वादो दृश्यते। तथापि खृष्टीयाष्टमशतकमस्य स्थितिकालत्वेन निश्चेतुं शक्यते। नाटकेऽस्मिन्नन्दवंशोच्छेदं कृतवता ब्राह्मणेन चाणक्येन मौर्यस्य चन्द्रगुप्तस्य प्रतिष्ठापनं वर्ण्यत्वेन गृहीतं नाट्यकारेण। सप्ताङ्कमिदं नाटकं चरित्रप्रदर्शननैपुण्येन, पञ्चावस्थाप्रतिपादनसौकर्येण, रसानुकूलशैलीमाधुर्येण च निःसंशयमतिशेते नाटकान्तराणि।

नाटकस्येदृशे गुणोत्कर्षबाहुल्ये सत्यपि नाट्यशास्त्राचार्या ग्रन्थमेनं न समादृतवन्त इति दशरूपकादिषु एतदीयोदाहरणसन्निवेशस्य स्वल्पतया ज्ञायते, तत्र च कारणमस्येतरवैलक्षण्यमेव। विशाखदत्तो लक्षणानुसरणे नासीदृयग्रः। तस्य प्रतिभा वर्ण्यवृत्तौचित्यमनुसरति। नियमैरेतन्नाटकं बद्धुमशक्नुवन्तः शास्त्राचार्या एतद्विषये मौनमवलम्बितवन्त इति प्रतिभाति।

'आदौ तावदस्य वृत्तमेव नवीनम्। मौर्यस्य चन्द्रगुप्तस्यैतिहासिकं वृत्तं प्रख्यातं वा न वेति विवदन्ते सैद्धान्तिकाः। कालिदास एव बभूव प्रथमो नाट्यकारेषु येन पुराणाप्रसिद्धोऽग्निमित्रो नाटकनायकत्वेन प्रदर्शितः। तदनु विशाखदत्त एव द्वितीयो येन चन्द्रगुप्तकथा नाट्यार्थं स्वीकृता। ततश्च शृङ्गारवीरावेव नाटकेऽङ्गिनाविति सिद्धान्तयन्तो विचारका 'नानारसभावचेष्टित'प्रधानेऽस्मिन् वीरस्यापि सम्यक् परिपोषं न पश्यन्ति। पुनश्च नाटकेऽस्मिन् सुस्पष्टं चाणक्यस्य चरितं प्रदर्शितं, स च ब्राह्मणत्वेन न धीरोदात्तकोटिकः, फलं चास्य चन्द्रगुप्तगामीति चन्द्रगुप्त एव नायक इति लक्षणलंघनविधुरैः कथञ्चित् समाधीयते। एतेषु पक्षेष्वन्तिम एव पक्षोऽत्र विचार्यते—कः खल्वत्र नाटके नायक इति।

यथा वेणीसंहारे तथात्रापि नायकविचारो लक्ष्यमुखेन कार्यो न लक्षणमुखेन। इदञ्चात्रासंगतम्—नाटके धीरोदात्तनायकत्वं शृङ्गारवीरयोरन्यतरस्याङ्गित्वमित्यादयः सिद्धान्ता नाट्यकारादर्वाचीनकाले सूत्रिताः, अतस्तेषां प्रतिपालनं नाट्यकारेण कथं सम्भाव्येत? पूर्वमेवेदृशानां सिद्धान्तानां भरतविरोधित्वं वस्तुगतिवैमुख्यं च प्रतिपादिते। तथापि बोधसौकर्यार्थं नायकनिरूपणं सप्रपञ्चं क्रियते।

नाटकेऽस्मिन् चत्वारः प्रधानपुरुषा दृश्यन्ते। ते च स्वस्वप्राधान्यक्रमेण चाणक्य-राक्षस-चन्द्रगुप्त-मलयकेतवः। चन्द्रगुप्त-मलयकेतू राजानौ स्वस्वसचिवायत्तसिद्धी क्रमशश्चाणक्यराक्षसमुखापेक्षिणौ। नाटकान्ते विरोधिनो मलयकेतोरुच्छेदेन, राक्षसस्य च चाणक्यानुरोधेन मन्त्रित्वस्वीकृत्या चन्द्रगुप्तस्य स्वराज्ये सुदृढं प्रतिष्ठापनं भवति। इत्थं स्वराज्ये चन्द्रगुप्तस्य दृढीकरणं चाणक्यप्रतिज्ञाङ्गभूतमेवास्य नाटकस्य फलमिति स्पष्टमनुभूयते। तच्च तन्मार्गे संस्थितानां विघ्नानामपसारणेन चाणक्यः सम्पादयति। अतः स एवात्र प्रधानपुरुषः।

नाट्यकारस्याप्यभिप्राय एवमेवेति प्रतिभाति। मुद्राराक्षसमिति नाम्ना राक्षसस्य ग्रहणमेवात्र मुद्रया परिगृहीतो राक्षसो यत्रेति कृत्वा मुख्यम्। केन गृहीतो राक्षस इत्यपेक्षायां चाणक्येनेत्येव लभ्यते। पुनः कस्माद् गृहीत इत्यनु-

सन्धानेन स्वप्रतिज्ञातनन्दवंशोच्छेदपुरःसरं तत्पक्षपातिना मन्त्रिबृहस्पतिना राक्षसेन संयोज्य चन्द्रगुप्तस्य दृढीकरणार्थमित्याययति। चन्द्रगुप्तस्य दृढीकरणं न चन्द्रगुप्तप्रयासेन, किन्तु चाणक्यप्रयास एव तत्र प्रभवति। व्यापारप्रधानं च नाट्यम्, व्यापारवत एव पुरुषस्य कर्मावस्था नाट्ये प्रदर्श्यन्ते। अतश्चाणक्यव्यापारप्रदर्शकत्वात्स एवात्र नायकः।

नाटकस्य बीजमपि चाणक्यस्यैव नायकत्वं निर्दिशति। सूत्रधारस्य चन्द्रोपरागसम्बद्धं वाक्यार्थं विमृश्य 'क एष मयि स्थिते चन्द्रगुप्तमभिभवितुमिच्छति बलाद्' इति सक्रोधं पृच्छन् चाणक्यः प्रविशति। चन्द्रगुप्तस्य स्वमतिपरिगृहीतस्य सर्वतोऽभिभववारणबुद्धिरेवात्र बीजम्। अस्मादेव बीजात् सम्पादितसम्पादयिष्यमाणव्यापाराणां विमर्शनं तस्य युज्यते। चन्द्रगुप्तस्य सर्वेऽभिभवहेतवः, राक्षसं विना, चाणक्येन दूरीकृताः। स एव नित्यं चन्द्रगुप्तोच्छेदाय पूर्वभर्तृगतानुरागवशाद् यतत इति तं ग्रहीतुं चाणक्यः स्वबुद्धिं नियोजयति। स्वकीयामतिसूक्ष्मां बुद्धिमाश्रित्य तथा कूटजालं विस्तारयति यथान्ततो राक्षसो वश्यतां गच्छति। एवमस्मिन्नाटकेऽमात्यद्वयस्य कूटबुद्धिकौशलस्य प्रदर्शितः कश्चिदपूर्वः संघर्षः, यस्य च परिणामे चाणक्यमतिरेव विजयिनी भवति।

चन्द्रगुप्तः सचिवायत्तसिद्धिरतस्तस्य फलं सचिवेन चाणक्येनोपनीतमिति हेतोश्च चाणक्यस्यैव मुख्यत्वम्। फलं चात्र रत्नावल्यामुदयनस्येव न नायिकाप्राप्तिः। तथा सति तत्रेवात्रापि चन्द्रगुप्तस्य नायकत्वं स्यात्। यद्यपि यौगन्धरायणेन सर्वमायोजितं रत्नावल्यां तथापि नायिकाभियोगं प्रति तु उदयन एव व्यापारवानतः स एव नायकः। अत्र पुनः स्वप्रतिष्ठार्थमुदासीनश्चन्द्रगुप्तः। नन्दवंशोच्छेदरूपप्रतिज्ञांशभूतं चन्द्रगुप्तप्रतिष्ठापनं चाणक्यस्यैव व्यापारः। अतः स एव नायकः।

नाट्यकारोऽपि स्पष्टं चाणक्यस्य प्राधान्यं प्रत्यङ्कं प्रतिपादयति। प्रथमतृतीयसप्तमाङ्केषु चाणक्यः स्वयं प्रविशति, इतरेष्वङ्केषु तस्यैव नीतिः प्रचरति। चन्द्रगुप्तस्य रङ्गमञ्चे द्विवारं प्रवेशो विहितः, उभयत्र चासौ चाणक्यनिर्देशेनैव समागच्छति। नाटकस्यान्ते चन्द्रगुप्तः समुत्तरयति चाणक्यम्—

'किमतः परं प्रियमस्ति,

राक्षसेन समं मैत्री राज्ये चारोपिता वयम्।
नन्दाश्चोन्मूलिताः सर्वे किं कर्तव्यमतः परम् ॥ इति (७।१७)

इत्थञ्च नन्दोन्मूलनम्, राज्यप्राप्तिः, राक्षससम्बन्धश्च सर्वमेवैतत् चाणक्य-नेतृत्वेन सञ्जातमिति सूत्रयति नाट्यकारः। चाणक्योऽपि राक्षसपरिग्रहेणैवा-त्मानं तीर्णप्रतिज्ञं समर्थयति, कथयति च...

'सह वाहनहस्तिभ्यां मुच्यतां सर्वबन्धनम्।
मया पूर्णप्रतिज्ञेन केवलं बध्यते शिखा ॥' इति (७।१८)

शिखामोचनेन या प्रतिज्ञा कृतासीत्तस्या एव पूर्णतो निर्वाहो राक्षसग्रहणेन भवत्यतश्चाणक्यस्य प्रतिज्ञापूरणमेवात्र प्रधानम्, स एव चौचित्यप्राप्तो नायकः। जात्या ब्राह्मणश्चाणक्यः स्वभावतो धीरप्रशान्तकोटिमध्यास्ते। तथाभूत एवासौ नायकः, धीरोदात्तादीनां चतुर्णामेव मुनिना नायकत्वाभ्युपगमात्। वस्तुगतिश्च तथा निर्दिशति। सेनापत्यमात्ययोर्धीरोदात्तत्वमिति भरतवचनमप्यत्र संगच्छते। सदमात्यस्य धीरोदात्तत्वं चौचित्यप्राप्तम्। अतो धीरोदात्तत्वमपि चाणक्ये दृश्यते। तथा च यथा परशुरामो वस्तुगत्या, धीरप्रशान्तोऽपि धीरोद्धतो धीरोदात्तश्च प्रतिपाद्यते तथैव विशाखदत्तोऽपि चाणक्यं कदाचिद् धीरोद्धतरूपेण, कदाचिद् धीरोदात्तरूपेण, कदाचित् पुनर्धीरशान्तरूपेण प्रदर्शितवान् शिष्येण स्वदूतैश्च सहास्य व्यवहारः शान्ततामस्य प्रकाशयति। कृतककलहाङ्के उद्धतोऽसौ, अन्तिमाङ्के च राक्षसगुणवर्णने उदात्तः, मन्त्रित्व-समर्पणे च पुनः शान्तो दृश्यते। वस्तुगतिमनुरुध्य चाणक्यस्येदृशं प्रतिपादनं नाट्यकारस्य कौशलं प्रमाणयति।

भरतवाक्योच्चारको यदि नायको भवेत्तर्हि राक्षसो नायकः स्यात्। राक्षसस्य नाकत्वं चाणक्येन तद्ग्रहणं विदधता अपास्तम्। राक्षसं ये नायकं मन्यन्ते ते न समीक्ष्यवादिनः। तस्य नायकत्वे नाटकमिदं दुःखान्तं मन्तव्यं वस्तुतस्तु न तथेति चाणक्य एवात्र नायकः सिद्ध्यति।

---

# परमं सत्यम्

खरे लक्ष्मण शर्मा

मित्राऽऽकर्णय सावधानमनसा शंसामि ते हृद्गतं
अस्मिञ्जन्मनि चैतदेव परमं सत्यं मयाऽऽसादितम् ।
संसारार्णव-जीवनभ्रम-महावीच्याहताऽपि स्थिरा
नेतुं या प्रभवेत्समुद्रपरतः सैका तरीविद्यते ॥ १ ॥

प्राणायाम उपासनस्य विधयो भिन्ना, विभिन्नान्यपि
विज्ञानानि च दर्शनानि निचयस्त्यागस्तथा संपदाम् ।
इत्याद्याः सकला भवन्ति मनसो ह्याभासमात्राः किल
प्रेम, प्रेम हि सत्यवस्तु परमं, चैकं निधानं महत् ॥ २ ॥

जानीहि प्रथमं यदस्ति च भवाञ्जातोह्यनंतांशभाग्
हृद्देशे भवतश्च शांतविततः प्रेमोदधिवर्तते ।
प्रत्याशां त्यज देहि वित्तमखिलं मुक्तेन हस्तेन भोः
प्रत्यावर्तनमिच्छतस्तु भवति प्रेमोदधिर्बिंदुवत् ॥ ३ ॥

सर्वं भूतगणं चिदंशसहितं कृम्यंतमा ब्रह्मणः
आकाशस्थविशालगोलनिवहानत्यंतसूक्ष्मानणून् ।
व्याप्य प्रेमदयामयो हि भगवानीशः स एव स्थितः
आत्मानं स्वशरीरमानसयुतं तेभ्यो वयस्याऽर्पय ॥ ४ ॥

आकारा विविधा इमे भगवतस्तिष्ठन्ति ते सम्मुखम्
सर्वांस्तान् परिहाय कुत्र भवता सर्वेश्वरो मृग्यते ।
यो भूतेष्वखिलेष्वभेदमतितः स्निह्येत्तु सौहार्दवान्
पूजामुच्चतमां करोति स पुमानीशस्य निःसंशयम् ॥ ५ ॥

---

( श्रीस्वामिविवेकानन्दकृतेरनुवादः )

—

# महाकवेर्हरिदासस्यैतिहासिकनाटकानि

गुलाबचन्द्रजैनः

अर्वाचीनसंस्कृतवाङ्मये ऐतिहासिकनाटकानां परम्परा सर्वाधिका समृद्धिशालिनी दृश्यते। अस्यामैतिहासिकपरम्परायां वङ्गदेशस्य नाट्यकर्तुर्महामहोपाध्याय-महाकवि-भारताचार्यस्य हरिदाससिद्धान्तवागीशस्य नाम प्राथम्यमर्हति। संस्कृते तेनाधुनिकरीत्यां त्रीण्यैतिहासिकनाटकानि प्रणीतानि। तानि च वङ्गीयप्रतापम्, मिवारप्रतापम्, शिवाजीचरितञ्चेति। एतेषां नाटकानां रचना भारतीयस्वातन्त्र्यान्दोलनावसरे कृता।

नाट्यकर्तुरेतेषामैतिहासिकनाटकानां रचनाप्रयोजनं प्राधान्येन स्वाधीनताभिलाषिणां राष्ट्रभक्तानामुद्दीपनमेव। नाट्यकर्ता हरिदासः पुराकालिकैतिहासिकस्थितीनां ब्रिटिशशासनाधीनस्य भारतस्य वर्तमाने समुपस्थिताभिः स्थितिभिः सहानुरूप्यं प्रदर्श्य पराधीनदशां दूरीकर्तुं तत्तत्प्रसिद्धनायकवद् व्यवहाराय भारतीयान् नवयुवकान् प्रेरयति। एवं तस्य नाटकानां मूले प्रायः राष्ट्रियभावनायाः संस्कृतेश्च पुनरुत्थानार्थं बलवत्याकांक्षा सन्निहितावलोक्यते।

हरिदासस्य नाटकरचनायाः द्वितीयं प्रयोजनं संस्कृतभाषायाः पुनर्जागरणस्य महत्त्वपूर्णः प्रयास एव। यतः—

"भाषाणां भारतीयानां मूलमेकं हि संस्कृतम्।
मूललोपे च शाखेव सा सर्वा शोषमेष्यति॥"[1]

शिक्षितजनानां मुखात् 'संस्कृतभाषा मृतभाषेति' श्रुत्वा नाट्यकर्तुर्मनः विकलतामाप्नोति। एतादृशान् शिक्षितजनान् अल्पज्ञा इति निश्चित्य नाट्यकारः प्राह—

---

१. शिवाजीचरिते प्रस्तावनायाम्।

"वेदादिशास्त्रनिचयस्फुटदिव्यमूर्तिः
सा वाक् किमन्यवचनादमरा म्रियेत।
मध्याह्नसूर्यकरगो हि यदि ब्रवीति
रात्रिः किलेयमिति हन्त ! स एव मूढः॥"[२]

एवमेषु ऐतिहासिकनाटकेषु रचनाकौशले प्राचीनपरिपाट्या सह नवीन-युगस्य भावनाः सम्यग्रूपेण सम्मिलिताः दृश्यन्ते। विंशशतके भारतस्य सर्वत्र या जागर्तिः यश्च स्वदेशगौरवाभिमानो दृश्येते तयोरत्रापि दर्शनेन नाटकाना-मेतेषां विशेषं महत्त्वं स्वीकरणीयम्।

निबन्धेऽस्मिन् हरिदासविरचितानामैतिहासिकनाटकानां प्रस्तूयते कश्चिद् विमर्शः।

## वङ्गीयप्रतापम्

नाटकेऽस्मिन् वङ्गप्रान्तस्य यशोराख्यजनपदस्य राज्ञः प्रतापादित्यस्य वीर-त्वप्रदीप्तं महनीयचरितमितिवृत्तत्वेन प्रदर्शितम्। महाराजः प्रतापादित्यः भारतेश्वरस्याकबरस्य समकालीन आसीत्। स वङ्गाधिपतेर्नवाबस्यानाचारैः पीडितानां वङ्गीयानां स्वाधीनतायै बहुवारं वङ्गीयनवाबेन अन्ततश्चाकबरेण सह शौर्येण ससाहसञ्च संघर्षयामास। प्रस्तुतं नाटकं सुखान्तं कर्तुं नाट्यकारेण हरिदासेन अकबरसेनापतिना मानसिंहेन सह युद्धस्य प्रथमे द्वितीये च दिवसे सम्प्राप्ता प्रतापादित्यस्य विजयसम्बन्धिनी कथैव समावेशिता। ऐतिहासिक-प्रमाणानुसारेण तृतीये दिवसे तु समराङ्गणे वसन्तरायसूनो राघवरायस्य मंत्रणया युद्धक्षेत्रैकदेशे 'प्रतापादित्यो हत' इति कुटिलकौशलिनो मानसिंहस्य मिथ्याप्रचारेण वङ्गीयसेनायां विशृङ्खलतां गतायां निःसहायः प्रतापादित्यो बन्दीकृतो हतश्चेति। प्रतापादित्यस्य जीवनस्येयं दुःखपूर्णा घटना नाटकेऽस्मिन्न समाविष्टा।

२. मिवारप्रतापे प्रस्तावनायाम्।

मिवारप्रतापम्

नाटककारेण हरिदासेन 'मिवारप्रतापे' सुप्रसिद्धस्य महाराणाप्रतापस्य भारतेश्वरेणाकबरेण युद्धविषयका घटनाः समावेशिताः। मथुराप्रसाद-दीक्षितकृते 'वीरप्रताप' इव अत्र न—घटनानां बाहुल्यम्। अत एव नाटकमिद-मतिसमीचीनत्वं रोचकत्वञ्च याति। नाटकस्य संपूर्णं कथानकं षट्स्वङ्केषु समाविष्टम्। कथावस्तुनः प्रारम्भे बीजरूपेण सा घटना संयोजिता या—अकबरप्रतापयोर्मध्ये युद्धस्य मूलकारणं जाता। अकबर-सेनापतिः मानसिंहः प्रतापसमीपं समायाति तं च सहभोजनार्थं साग्रहमाह्वयति। किन्तु प्रतापस्य दर्शनन्तु दूर एव, प्रतापपुत्रेणामरसिंहेन सहभोजविषये बहुविधमपमानितो मानसिंहः। मानसिंहात् प्रतापकृतानादरस्य वार्तामिमाकर्ण्य कूटनीतिज्ञोऽकबरः खिन्नचित्तेन मानसिंहेन प्रतापं प्रत्याक्रमणस्य स एव सुयोग्योऽवसर इति मन्यते। फलतः स स्वपुत्रस्य सेलिमस्य सेनापतित्वे चतुरङ्गिणीसेनासमेतं मानसिंहं प्रेषयति।

अत्र च भिल्लराजं स्वपक्षे विधाय युद्धसन्नद्धः प्रतापोऽपि सेलिमसेनां निरोद्धुं हरिद्राघट्टं[१] प्रति प्रस्थितः। किंत्वस्मिन् भीषणयुद्धे रणकुशलस्य प्रतापस्यैव पराजयो भवति। मृत्युमालिङ्गितानात्मीयान् वीरानवलोक्य शोणि-ताप्लुतशरीरः प्रतापो नितान्तक्लान्तः सन् चेतकनामतुरङ्गमारुह्य रणाङ्गणादप-क्रामति। पुनरपि प्रतापमनुसरन्तौ मुगलसेनायाः द्वौ सैनिकौ दैवागतेन संजात-श्रद्धेन शक्तसिंहेन हतौ। अनन्तरं स्वदेशस्य गौरवरक्षणाय स्वाभिमानी प्रतापो निरन्तरमेव विषमान्पर्वतप्रदेशान् भीषणकान्तारप्रान्तांश्च पर्यटति। कालान्तरे स्वमन्त्रिणः भीमसिंहाद्धनसाहाय्यं समासाद्य स पुनः सैनिकसंघटनं करोति, स्वपराक्रमेण च देवीदुर्गाध्यक्षं विजित्य क्रमेण द्वात्रिंशद्दुर्गाणि स्वाधिपत्ये विदधाति। एवं विजयशीले प्रतापे नाटकस्य कथानकं समाप्यते।

---

१. हल्दीघाटीति हिन्दीभाषायां प्रचलितः शब्दोऽयम्।

"वेदादिशास्त्रनिचयस्फुटदिव्यमूर्तिः
सा वाक् किमन्यवचनादमरा म्रियेत।
मध्याह्नसूर्यकरगो हि यदि ब्रवीति
रात्रिः किलेयमिति हन्त ! स एव मूढः ॥"[१]

एवमेषु ऐतिहासिकनाटकेषु रचनाकौशले प्राचीनपरिपाट्या सह नवीनयुगस्य भावनाः सम्यग्रूपेण सम्मिलिताः दृश्यन्ते। विंशशतके भारतस्य सर्वत्र या जागर्तिः यश्च स्वदेशगौरवाभिमानो दृश्येते तयोरत्रापि दर्शनेन नाटकानामेतेषां विशेषं महत्त्वं स्वीकरणीयम्।

निबन्धेऽस्मिन् हरिदासविरचितानामैतिहासिकनाटकानां प्रस्तूयते कश्चिद् विमर्शः।

## वङ्गीयप्रतापम्

नाटकेऽस्मिन् वङ्गप्रान्तस्य यशोराख्यजनपदस्य राज्ञः प्रतापादित्यस्य वीरत्वप्रदीप्तं महनीयचरितमितिवृत्तत्वेन प्रदर्शितम्। महाराजः प्रतापादित्यः भारतेश्वरस्याकबरस्य समकालीन आसीत्। स वङ्गाधिपतेर्नवाबस्यानाचारैः पीडितानां वङ्गीयानां स्वाधीनतायै बहुवारं वङ्गीयनवाबेन अन्ततश्चाकबरेण सह शौर्येणससाहसञ्च संघर्षयामास। प्रस्तुतं नाटकं सुखान्तं कर्तुं नाट्यकारेण हरिदासेन अकबरसेनापतिना मानसिंहेन सह युद्धस्य प्रथमे द्वितीये च दिवसे सम्प्राप्ता प्रतापादित्यस्य विजयसम्बन्धिनी कथैव समावेशिता। ऐतिहासिकप्रमाणानुसारेण तृतीये दिवसे तु समराङ्गणे वसन्तरायसूनो राघवरायस्य मंत्रणया युद्धक्षेत्रैकदेशे 'प्रतापादित्यो हत' इति कुटिलकौशलिनो मानसिंहस्य मिथ्याप्रचारेण वङ्गीयसेनायां विशृङ्खलतां गतायां निःसहायः प्रतापादित्यो बन्दीकृतो हतश्चेति। प्रतापादित्यस्य जीवनस्येयं दुःखपूर्णा घटना नाटकेऽस्मिन्न समाविष्टा।

---

१. मिवारप्रतापे प्रस्तावनायाम्।

## मिवारप्रतापम्

नाटककारेण हरिदासेन 'मिवारप्रतापे' सुप्रसिद्धस्य महाराणाप्रतापस्य भारतेश्वरेणाकबरेण युद्धविषयका घटनाः समावेशिताः। मथुराप्रसाद-दीक्षितकृते 'वीरप्रताप' इव अत्र न—घटनानां बाहुल्यम्। अत एव नाटकमिद-मतिसमीचीनत्वं रोचकत्वञ्च याति। नाटकस्य संपूर्णं कथानकं षट्स्वङ्केषु समाविष्टम्। कथावस्तुनः प्रारम्भे बीजरूपेण सा घटना संयोजिता या—अकबरप्रतापयोर्मध्ये युद्धस्य मूलकारणं जाता। अकबर-सेनापतिः मानसिंहः प्रतापसमीपं समायाति तं च सहभोजनार्थं साग्रहमाह्वयति। किन्तु प्रतापस्य दर्शनन्तु दूर एव, प्रतापपुत्रेणामरसिंहेन सहभोजविषये बहुविधमपमानितो मानसिंहः। मानसिंहात् प्रतापकृतानादरस्य वार्तामिमाकर्ण्य कूटनीतिज्ञोऽकबरः खिन्नचित्तेन मानसिंहेन प्रतापं प्रत्याक्रमणस्य स एव सुयोग्योऽवसर इति मन्यते। फलतः स स्वपुत्रस्य सेलिमस्य सेनापतित्वे चतुरङ्गिणीसेनासमेतं मानसिंहं प्रेषयति।

अत्र च भिल्लराजं स्वपक्षे विधाय युद्धसन्नद्धः प्रतापोऽपि सेलिमसेनां निरोद्धुं हरिद्राघट्ट[1] प्रति प्रस्थितः। किंत्वस्मिन् भीषणयुद्धे रणकुशलस्य प्रतापस्यैव पराजयो भवति। मृत्युनालिङ्गितानात्मीयान् वीरानवलोक्य शोणिताप्लुतशरीरः प्रतापो नितान्तक्लान्तः सन् चेतकनामतुरङ्गमारुह्य रणाङ्गणादपक्रामति। पुनरपि प्रतापमनुसरन्तौ मुगलसेनायाः द्वौ सैनिकौ दैवागतेन संजातश्रद्धेन शक्तसिंहेन हतौ। अनन्तरं स्वदेशस्य गौरवरक्षणाय स्वाभिमानी प्रतापो निरन्तरमेव विषमान्पर्वतप्रदेशान् भीषणकान्तारप्रान्तांश्च पर्यटति। कालान्तरे स्वमन्त्रिणः भीमसिंहाद्धनसाहाय्यं समासाद्य स पुनः सैनिकसंघटनं करोति, स्वपराक्रमेण च देवीदुर्गाध्यक्षं विजित्य क्रमेण द्वात्रिंशद्दुर्गाणि स्वाधिपत्ये विदधाति। एवं विजयशीले प्रतापे नाटकस्य कथानकं समाप्यते।

---

१. हल्दीघाटीति हिन्दीभाषायां प्रचलितः शब्दोऽयम्।

## शिवाजीचरितम्

आधुनिकसंस्कृतसाहित्ये छत्रपतेः शिवाजीमहाराजस्य जीवनचरित्रमवलम्ब्य काव्यनाटकादीनि विरचितानि । प्रस्तुतं 'शिवाजीचरितम्' सर्वैः पताकास्थान-कैरङ्कैश्च दशभि र्निवद्धत्वान्महानाटकमिति कथितम् । तल्लक्षणं यथा 'साहित्यदर्पणे'—

"एतदेव यदा सर्वैः पताकास्थानकैर्युतम् ।
अङ्कैश्च दशभिर्धीरा महानाटकमूचिरे ॥"

नाटकस्यास्य कथानके शिवानन्दस्य (शिवाजी इत्याख्यस्य) जीवने प्रमुख-घटनानां यन्मनोज्ञविधिना समावेशो जातः तत्स्पृहणीय एव । स्वपूर्वरचित-नाटकानपेक्ष्य नाटककारस्य नाटकमिदं कथावस्तुनो नाटकीयतायाश्च दृष्ट्याऽधिकतरं सफलमुपलक्ष्यते । कथानकस्यारम्भः पाठशालायाः पृष्ठभूमिमधिकृत्य भवति । मुगलैर्विहितां भारतदुर्दशामवलोक्य संतप्तहृदयस्य छात्रस्य शिवा-नन्दस्य चित्तं शास्त्राध्ययनं विहाय शस्त्रमादातुकाममस्ति । अत एव सः सतीर्थ्यवर्गमाहूय हिन्दूनामेकतायै भारतीयस्वाधीनतायै च तं प्रेरयति । तदैव स मुगलशासकारङ्गजीवकृतानामत्याचाराणां प्रतिविधानाय सुनियोजितां योजनां रचयति । अनन्तरं च छलेन तोरणदुर्गं बलेन च पुरन्दरदुर्गं स्वाधि-पत्यकरणम्, बीजापुरसुलतानेनाज्ञाभङ्गापराधहेतोः बन्दीकृतस्य शिवानन्दपितुः पुण्यपत्तनभूस्वामिनः साहनाथस्य कारागाराद्विमोचनम्, छलेन जेतुकामस्य 'अफजलखां' इत्याख्यस्य सेनापतेरुदरविदारणम्, दिल्लीनरेशस्यारङ्गजीवस्य सेनापतिना सह मिलित्वा शिवानन्देन बीजापुरसुलतानस्य पराजयविधानम्, दिल्लीश्वरेण छलेनामन्त्रितस्य शिवानन्दस्य सहसा बन्दीकरणम्, दानच्छलाद् गतागतपरायां करण्डिकायामन्तर्हितीभूय सपुत्रस्य शिवानन्दस्य दिल्लीश्वर-हस्तादपक्रमणम्, कालान्तरे च जयसिंहपुत्रस्य मुरार्दनसिंहस्य शिवानन्दस्य च द्वयोः सेनयोर्मध्ये भीषणयुद्धप्रदर्शनं शिवानन्दस्य च विजयप्राप्तिरित्येताः सर्वा घटना नाटकेऽस्मिन् समाविष्टाः ।

## हरिदासस्य नाटकेषु कलाविधानम्

महाकविना हरिदासेन स्वैतिहासिकनाटकानां रचनायै कथावस्तु तादृशा-द्युगाद् गृहीतं यदितिहासे हिन्दू-मुस्लिमराजानां परस्परवैमनस्यात् धार्मिका-सहिष्णुताहेतोश्च सर्वाधिकं प्रसिद्धं बभूव। अस्य प्रमुखकारणं हरिदासस्य व्यक्तित्वं हिन्दुत्वेन प्रभावितमित्येव। यद्यपि यस्मिन् काले हरिदासस्य नाटकानां प्रणयनं जातं तस्मिन्काले गान्धिमहोदयस्य हिन्दू-मुस्लिमैकत्वस्य धार्मिक-सहिष्णुतायाश्च राष्ट्रवादिविचारधाराणां पर्याप्तं प्रवाह आसीत्, तथाप्यखिल-भारतमनेन गान्धिवादेन न प्रभावितं जातम्। हरिदासस्य व्यक्तित्वेऽपि एतादृ-शीनां विचारधाराणां प्रभावो नैव दृश्यते। अत एव तस्य नाटकेषु हिन्दू-मुस्लिमयोः विद्वेषभावनायाः प्राधान्यं हिन्दूनाञ्च गौरवसम्वर्द्धनाय प्रयासोऽव-लोक्यते।

हरिदासस्य सर्वेषां नाटकानां नामानि नायकनामानुसारं कृतानि। प्रायः सर्वेष्वेव नाटकेषु घटनानां समावेशः सरलेन मनोज्ञेन च विधिना कृतः। तथापि कथानकस्य समाप्तिकाले नाटककारस्य प्रतिभायाः सम्यग् निर्वाहो न जातः। तथाहि — 'मिवारप्रतापे' प्रतापं द्वात्रिंशद्दुर्गाणां विजयवैजयन्तीं प्रापय्य नाटकमिदं समापितम्। प्रतापस्यास्य विजयस्याकबरमानसिंहयोरुपरि कीदृक् प्रभावो जात इति निर्देशमात्रमपि न कृतं नाटककारेण। एतद्विपरीतं मथुरा-प्रसाददीक्षितेन वीरप्रतापनाटकस्य समाप्तिकाले प्रतापपराक्रमाद् भीतेनाकबरेण प्रतापाय संधिपत्रं प्रेषितमिति संयोज्य कथानकस्य समाप्तौ नाटकीयकौशलं प्रदर्शितम्।

हरिदासस्य नाटकेषु पात्राणां संख्याबाहुल्यमस्ति। 'शिवाजीचरिते' तु पात्राणि चत्वारिंशत्संख्याधिकानि। अनेन नाटकस्यैतिहासिकं महत्त्वन्तु निश्चि-तमेव वृद्धिमाप्नोति किन्तु नाटकीयप्रभावस्य हानिर्जायते। वस्तुतः, नाटकं दृश्यात्मकं वस्तु। सामाजिका एतावदल्पकाले सर्वेषां पात्राणां परिचयं प्राप्तुं स्मर्तुं वा न शक्नुवन्ति। तथापि सर्वेषु नाटकेषु प्रमुखपात्राणां चरित्रचित्रणे नाटककारस्य प्रयासः प्रशंसनीय एव। 'वङ्गीयप्रतापे' शान्तिशीलस्य महाराज-

विक्रमादित्यस्य, वीरवरस्य प्रतापादित्यस्य, विलासिनः वङ्गीयनवाबस्य च चरित्राङ्कने; मिवारप्रतापे गम्भीरप्रकृतेः सहनशीलस्य च प्रतापसिंहस्य, कूटकौशलिनः भारतेश्वरस्याकबरस्य च स्वभावप्रदर्शने; शिवाजीचरिते' च साहसमूर्तेः तीक्ष्णबुद्धेश्च शिवानन्दस्य चरित्रचित्रणे नाट्यकारः स्वसाफल्यमधिगच्छति। त्रिष्वेव नाटकेषु स्त्रीपात्राणामधिकं महत्त्वं नास्ति। उचितं चैतद् वीररसप्रधाननाटकानाम्। तथापि 'शिवाजीचरिते' जयन्तीदेव्याः चरितं वीराङ्गनानां प्रतिनिधित्वं दधाति। अबला रक्षयितुमसमर्थान् भारतीयवीरपुरुषानवलोक्य सा स्वयमेव वैरिवर्गस्य संहारार्थं स्त्रीसेनां नियोजयितुमुद्यमशीला समवलोक्यते। अन्यत्र नाटकेषु कल्याणी, कमला गौरी च भारतीयपरम्परानुसारेण पातिव्रत्यादिनारीधर्मसंरक्षिका एव सन्ति। नाटकीयदृष्ट्या तासां महत्त्वमल्पमेव।

संलापः ( कथोपकथनं ) नाटकमात्रस्य विशेषतत्त्वम्। हरिदासस्य नाटकेषु गुणोऽयं नाटकीयशोभां सम्वर्द्धयति। तस्य नाटकेषु कथोपकथनानि प्रायः लघूनि, मनोहराणि चमत्कारीणि च सन्ति। अत्रोदाहरणद्वयमुल्लिखामः—

"प्रतापादित्यः—किंस्विदपकारणमुपप्लुतो भवान् केनाऽपि राजपुरुषेण!

शंकरचक्रवर्ती—कथं भवानिति मात्रम्, देश एवेति कथं न पृच्छयते!"

[ वङ्गीयप्रतापे प्रथमाङ्के ]

"कमला—अथ श्रूयते–महिलामेला निषिद्धपुरुषप्रवेशेति। तत्कथं तत्र वादशाहः प्रविशति ? तत्किमसौ न पुरुषः ?"

उद्यानपाली—स न पुरुषः, किन्तु महापुरुष एव। तत्तस्य प्रवेशे न दोषः।

कमला—तर्हि यज्ञवाटे महाकुक्कुरप्रवेशेऽपि न दोषः ?

[ मिवारप्रतापे द्वितीयाङ्के ]

इत्थंभूतेऽपि नाट्यकारः कथोपकथनसम्बन्धिभ्यः दोषेभ्यः न विनिर्मुक्तः। नाटकानां बहुस्थलेषु कथोपकथनान्यतिविस्तृतानि सन्ति। कुत्रचित् स्वगतप्रयोगोऽप्यतिदीर्घः जातः। 'वङ्गीयप्रतापे' चतुर्थाङ्केऽकबरस्य स्वगत-भाषणस्य सुदीर्घत्वं नाटकीयतामधःकरोति। तत्राकबरेण सहोपस्थितानि पक्षविपक्षयोः सर्वाणि पात्राणि निष्क्रियाण्यवलोक्यन्ते। एवमेव बहुस्थलेषु कथोपकथना-

मनुपयोगित्वमप्युपलक्ष्यते । यथा—'मिवारप्रतापे' चतुर्थाङ्के शम्भु-शक्तसिंहौ संग्रामस्थले युद्धस्य भयङ्करतां पश्यन्तावपि युद्धक्रियां विस्मृत्य शस्त्राणां निर्माणेषु वैज्ञानिकतायाः विषये स्व-स्वविचारान् प्रकटयितुमारभेते तल्लीनौ च भवतः, तयोर्युद्धेन सह कोऽपि सम्बन्ध एव नोत्प्रेक्ष्यते । नाट्यकारः सर्वेष्वेव नाटकेषु युद्धस्थलानां दृश्येषु द्वयो र्द्वयोः परस्परविरोधिनोः पात्रयोर्मध्ये दीर्घकालपर्यन्तं वार्तालापं कारयति । नाटकीयतायाः दृष्ट्या तद्दोष एव मन्यते । वस्तुतः युद्धस्थलस्य दृश्येषु पात्राणामाङ्गिकाभिनयस्य प्राधान्यं वाचिकाभिनयस्य च गौणत्वं वाञ्छनीयम् । हरिदासस्य नाटकेषु एतद्विपरीतैव स्थितिरुपलक्ष्यते ।

प्राय अन्यैतिहासिकनाटकेष्विव हरिदासस्य नाटकेष्वपि वीररसस्य प्राधान्यं वर्तते । तेषु शृङ्गाररसस्य न किञ्चिदपि स्थानम्, किन्तु शृङ्गाराभासस्य सर्वत्रैवोद्भावना क्रियते । 'वङ्गीयप्रतापे' नवाबसम्बन्धिशृङ्गाराभासः नाटके रोचकत्वं समर्पयति । दरिद्रस्य शङ्करचक्रवर्तिनः पतिव्रतायां धर्मपरायणायां कल्याणीत्याख्यायां भार्यायामासक्तो नवाबः शङ्करचक्रवर्तिनं दरिद्रं न मन्यते । यतः—

"वङ्गदेशपतिरेष सर्वथा यस्य याचकतया समाकुलः ।
तत्तु रत्नमभिभाति यद्गृहे तस्य सम्भवति किं दरिद्रता ?"

अन्ययो र्नाटकयोरपि शृङ्गाराभासेन पर्याप्तं स्थानमाप्तम् । नाट्यकारेण स्वनाटकेषु हास्यरसस्य प्रयोगः मध्यमाधमपात्रै र्निर्विशेषं कृतः, किन्तु स नैव गम्भीरप्रकृतेर्हास्याय न वा किञ्चिदश्लीलत्वान्नीचपुरुषोचितवार्तालापहेतो श्रोतृमकाव्यानुकूल एव । तत्र न कोऽपि व्यङ्ग्यात्मकः संकेतः समवलोक्यते । 'वङ्गीयप्रतापे' द्वितीयाङ्के शान्तरसस्य धारा प्रवहति—

"प्रकृतामृतं ननु निपीय मानवः
सुलभां व्रजत्यमरतां विनश्वरीम् ।
हरिनाम नाम परमामृतं पिवन्
अमृतं ध्रुवन्तु लभतेऽति दुर्लभम् ॥"

भाषायाः सुगमता, सजीवता स्वाभाविकत्वञ्च हरिदासस्य नाटकानां प्रमुखानि वैशिष्ट्यानि । तस्यां प्राचीननाटककाराणां नाटकेष्विव क्लिष्टत्वं,

वैचित्र्यमात्राधायकस्यालंकारप्राचुर्यस्य च दुरूहता नास्ति, अपितु विंशशतकानुकूलानि नाटकीयतत्त्वानि विद्यमानानि यानि च नाटकानामैतिहासिकीं स्थितिं प्रभावयितुमलं सन्ति। 'शिवाजीचरितस्य' भास्करशर्मणः कथनेऽस्मिन् कीदृशी गम्भीरता वर्तते—

"कुमारः कामयते जीवन्तमेनं विश्वासहन्तारं बन्दीकर्तुम्,
कृतान्तः पुनरिच्छति मृतममुं नीत्वा निरये निमज्जयितुम्,
तन्नूनमनयोः कृतान्त एव सफलमनोरथो भवेत्।"

मिवारप्रतापेऽपि मानसिंहस्य मनःस्थितिं प्रकटयितुं भाषायाः सौष्ठवमवलोकनीयम्—

"मानसिंहः—(सोन्मादम्) मानसिंह! मानसिंह!
अथवा अन्धे पद्मलोचननामेव नितरामपमानिनि
मानपदमनन्वयमेव, धराधुराविरहे चतुर्धुरीणोपाधिरिव
च नितान्तकातरे सिंहोपाधिरपि सर्वथैवार्थशून्यः......"

नाटककारेण यत्र तत्र केषाञ्चिद् व्यावहारिकशब्दानामपि प्रयोगः कृतः। यथा—'जनाव', 'मुसलमान', 'अल्ला', 'वादशाह' इत्यादयः शब्दाः नाटकीयवस्तुनो व्यावहारिकतायामुपयोगिनः सञ्जायन्ते। नाटकेषु यवनपात्राणां नामान्यपि न परिवर्तितानि।

हरिदासस्य नाटकेषु सर्वत्र मनोहरोक्तीनां बाहुल्यमपि समवलोक्यते। राज्यलिप्सुमपि शान्तिकामं जनं प्रति कीदृशी मनोज्ञोक्तिरियम्—

"चरामि कण्टकारण्ये कण्टकं न स्पृशामि च।
ईदृशी कामना काचिदुन्मत्तस्यैव जायते॥"

नाटकेषु गीतानामपि यथोचितस्थलेषु समुचितः प्रयोगः कृतः।

## नाटकेषु सामाजिकसंस्थानम्

महाकविर्हरिदासो नाटकेषु तात्कालिकप्रवृत्तीनां, व्यवहाराणां परम्पराणाञ्च सम्यक्प्रदर्शनमकरोत्। 'शिवाजीचरिते' भैरवीजयन्तीसंवादयोः सामाजिकसंस्कारं प्रति प्रेक्षकाः प्रणोदिताः। सतीप्रथां निरोद्धकामा भैरवी कथयति—

"मृते भर्तरि ब्रह्मचर्यं तदन्वारोहणं वा' इति स्मृतौ
ब्रह्मचर्यमेव मुख्यः कल्पः, सहमरणस्तु गौण-
मात्महत्याया एव प्रकारभेदश्च बहूनां तत्प्ररोचनादयोऽपि
स्त्रीहत्याप्रयोजिका नितान्तनृशंसव्यापारा एव।"

महाकवि हरिदासः सन्ताननिरोधं विधवाविवाहनिरोधञ्चानुमोदयति। भारतीयसंस्कृतौ यद् ब्रह्मचर्यविधानं कृतं, नास्यकर्तुं रीप्स्या तस्य मुख्यप्रयोजनं प्रजावृद्धिनिरोधनमेव। 'शिवाजीचरिते' भैरवीकथयति—

"............तत एव चेदं प्रजावृद्धिनिरोध-
निमित्तमवसरोपयोगि ब्रह्मचर्यविधानम्।"

एतन्निमित्तं ब्रह्मचर्यव्रते पुरुषवर्गात् स्त्रीवर्गस्याधिकतर आग्रहः काम्यः। यतः सन्तानोत्पत्तिः प्राधान्येन नारीमेवापेक्षते। नाटककार एतत्सामाजिक-समस्यामैतिहासिकपृष्ठभूमिमानीय वर्तमानं प्रति संकेतयितुकामोऽस्ति, यतः प्रत्येकसंस्कृतेर्वर्तमानपरिस्थितयः स्वातीतमुपलक्ष्य विकसिताः भवन्ति।

समुपजातकतिचिद्दोषाभिसङ्गान्यपि हरिदासस्य नाटकानि विंशशताब्दी-रङ्गमञ्चानुकूलानि प्रतीयन्ते। यथावसरं तेषां बहुवारमभिनयोऽपि सञ्जातः। यथा—'वङ्गीयप्रतापस्य' प्रथमोऽभिनयः १९४२–४३ खृष्टाब्दे वङ्गदेशे कोटालिपाड़ान्तर्गते ऊनसियाग्रामे, द्वितीयोऽभिनयः १९४५–४६ खृष्टाब्दे कलिकातायां मिनर्भारङ्गमञ्चे, तृतीयश्चाभिनयः तस्मिन्नेव वर्षे कलिकातायामेव ष्टाररङ्गमञ्चे सञ्जातः। सर्वत्र च तस्य रचनाया अभिनयस्य च गरीयानेवा-भवत् प्रशंसावादः। तत्र नाटकस्याभिनयकलामवलोक्य सुप्रसिद्धेन पं० हरि-नन्दनझामहोदयेन स्वभाषणावसरे सहर्षं प्रकटीकृतम्, "नाटकमिदं प्राचीन-वीररसनाटकानां शीर्षस्थानमधिकरोति।" पश्चात् १९४६ खृष्टाब्द एव प्राच्यवाणी-प्रतिष्ठानोद्योगेन 'मिवारप्रताप'मपि प्रथममभिनीतं प्रशंसास्पदञ्च गतम्।

संस्कृतस्यार्वाचीननाट्यसाहित्ये महाकविर्हरिदासः सर्वथा अविस्मरणीय एवेति।

# भवभूतिर्विशिष्यते

रामजी उपाध्यायः

'उत्तरे रामचरिते भवभूतिर्विशिष्यते' तत्कथमिति विषयमधिकृत्य तस्य महाकवेः कलाविशेषाः, अभिनवप्रेमादर्शादयश्च समुपस्थाप्यन्तेऽत्र।

## कला

उत्तररामचरिते भवभूतिना बहुक्षेत्रीया काव्य-कला प्रदर्शिता। कथावस्तुनः प्रपञ्चस्य, पात्रचयनस्य, चरित्रचित्रणस्य वर्णनस्य रसनिष्पादनादेश्च प्रत्येकं स्वतः संघटनया, अन्यकाव्यात्मकतत्त्वानुसङ्गेन वा कलाया वैचित्र्यं स प्रस्तौति।

### कथावस्तु

भवभूतिनोत्तरे रामचरितेऽतिशयोदात्तभूमिकायां कथावस्तु अतन्यत। तथा हि नाटकीयं वस्त्वेव तावत् केवलं नायकनायिकयोः प्रवृत्तिपरमेव नास्ति, अपि तु सन्ति तत्र बहवः शक्तयः याः सुखदुःखात्मिकासु निखिलासु व्यापृतिषु साहाय्यं कुर्वन्ति। तद्यथा सीतां प्रति वसिष्ठस्य सन्देशेन व्याक्रियते—

विश्वम्भरा भगवतीं भवतीमसूत<br>
राजा प्रजापतिसमो जनकः पिता ते।<br>
तेषां वधूस्त्वमसि नन्दिनि, पार्थिवानां<br>
येषां कुलेषु सविता च गुरुर्वयं च ॥ १. ९

श्लोकेऽस्मिन् सा भूमिकाङ्किता यया भविष्यमाणमेकं महत्कार्यं विज्ञाप्यते। एकांशेन तत्—

केवलं वीरप्रसवा भूयाः।

सीता वने वसतु, किन्तु तस्या जननी विश्वम्भरा यदि स्वकीयं नाम सार्थकत्वेनाभिमन्येत तर्हि सर्वत्र सीतायाः संरक्षणं तस्याः कर्तव्यमिवाभाति। रघु-

कुलगुरुः सविता वनौकसः वसिष्ठवाल्मीकिप्रमुखा महर्षयश्च तां रक्षितुं कुत्र न प्रभवन्ति ? अर्थात् सीता कुत्राप्यरक्षिता न तिष्ठति ।

वीथिकाचित्रदर्शनप्रसङ्गेन, सीतायाः परवर्तिकरुणकथां सोढुं पाठकास्तथा क्षमाः क्रियन्ते यथा दुर्बलकीटाणुप्रवेशनेन, महामारीप्रभृतिरोगप्रसरणकाले, रोगभयार्त्ता जना रोगं सोढुं क्षमा क्रियन्ते । यथा—

सीता—हा अज्जउत्त एत्तिअं दे दंसणं ।

रामः—अपि विप्रयोगत्रस्ते, चित्रमेतत् ।

सीता—जहा तहा होदु । दुज्जणो असुहं उपपादेइ ।

रामः—हन्त, वर्तमान इव जनस्थानवृत्तान्तः प्रतिभाति ।

उत्तररामचरितस्य कथा-विन्यासे भवभूतिस्तत्तत्पात्रविशेषान् प्रतिरङ्गेऽन्य-पात्राणामनुमानेनेषत्परिचितान् विधातुमपूर्वं कौशलं प्रकटीकरोति । तद्यथा—केवलं वाल्मीकिरेव सर्वान् जनान् जानाति । रामकौसल्याजनकादयोऽनुमानेन लवकुशौ निश्चिन्वन्ति । रहस्यमेतत्सर्वां कथां परिचरति । सीतायाश्छाया-नुवृत्तेरपि रहस्यमीदृशमेव विद्यते । नाटकस्य अस्य तृतीयेऽङ्के सीता सर्वान् द्रष्टुं समर्था तां च ज्ञातुं न कोऽपि समर्थः । रामः सीतायाः वास्तविक-स्पर्शसुखमनुभवति परं तामवलोकयितुं च न प्रभवति । अस्मिन्नेव रहस्या-त्मके भावस्थितौऽतिहृद्यस्य काव्यस्य प्रवृत्तिरभवत् । एवमेव षष्ठेऽङ्केऽलवकुशौ रामं जानन्तावपि "अयमेवावयोः पितेति" न मनागप्यवधारयामासतुः । तत्क्षणमेव कुशश्च ब्रूते—

> विना सीता देव्या किमिव हि न दुःखं रघुपतेः
> प्रियानाशे कृत्स्नं जगदिदमरण्यं हि भवति ।
> स च स्नेहस्तावानयमपि वियोगो निरवधिः
> किमेवं त्वं पृच्छस्यनधिगतरामायणमिव ॥ (६।३०)

भाविनो घटनाविधेः संकेतः कविना यथास्थलं विधीयते यथा—चतुर्थेऽङ्के भगवतो वसिष्ठस्य वचनमिदं पौनः पुन्येनोच्यते "भवितव्यं तथेत्युपजातमिव । किन्तु कल्याणोदर्कं भविष्यतीति ।"

प्रथमाङ्के चित्रदर्शनप्रकरणस्य तत्परवर्तिकथाभागस्य च निर्वहण-प्रसङ्गे सन्निवेशितत्वात् कथा-विन्यासस्य सुश्लिष्टत्वं प्रमाणितमेव। तद्यथा नेपथ्यो-च्चरितोऽयं संवादः—

"उक्तमासीदायुष्मता वत्सायाः परित्यागे यथा "भगवति वसुन्धरे, श्लाघ्यां दुहितरमवेक्षस्व जानकीम्" इति तदधुना कृतवचनास्मि प्रभोर्वत्स-स्येति।"

गर्भाङ्कस्य मूलनाटकस्य च दृश्ययोः संश्लेषपाटवं संस्कृतनाट्यसाहित्ये अपूर्वमेव। तत्रैकमेव पात्रं (दर्शकश्च) अभिनेतुः प्रेक्षकस्य च भूमिकां वहति। रामलक्ष्मणावेतादृशौ स्तः।

उत्तररामचरितस्य तृतीयेऽङ्के कथावस्त्वात्मकः कलाचमत्कारः प्राप्यते। स्वप्रियतमाया लोपस्य पश्चात् तस्याः प्रत्यागमनस्य संस्पर्शनस्य च वृत्तं भास-कृते स्वप्नवासवदत्तनाटकेऽपि सुपरिचितम्। संभाव्यते नाटककारस्य भासस्य कथा पुरा प्रचलित-किंवदन्त्याधारभूता किन्तु भवभूतेरिदं घटनासंयोजनं तस्य प्रतिभावैलक्षण्येन विकसितमिति प्रतीयते। यदा रामः पञ्चवटीमागच्छति तदा गङ्गापि केनचिद्गृहकार्येण गोदावरीमुपायाति। तत्र सीता गङ्गया सह वर्तते। पञ्च-वटीदर्शनकाले रामस्य समाश्वासनपरमेवेदमुद्दिष्टम्। गङ्गा सीतां प्रतिवक्ति—

"न च त्वामवनिपृष्ठचारिणीमस्मत्प्रभावाद् वनदेवता अपि द्रक्ष्यन्ति किं पुनर्मर्त्याः"। इत्थं पञ्चवटीदर्शनसमये पुनः पुनः मूर्च्छामुपगते रामे सीता स्वीयोपस्थित्या रामस्यात्मवियोगजं दुःखावेगं लघूकरोति। दृश्यस्यास्य संविधानं विन्यासो वा एतादृशेन महता कौशलेन सरसविधिना च विहितम्, नैतन्नाट्य-साहित्येऽन्यत्रावलोक्यते। नैतादृशं नायकनायिकयोः युगपत् योगवियोगात्मकं सरसं वृत्तं केनापि कविना प्रकल्पितम्।

एतावता शक्यमेतत् प्रतिपादयितुं यद्भवभूतिर्न केवलं भासमपि तु कविकुलगुरुं कालिदासमपि उपर्युक्तदृश्यप्रकल्पने, अतिशेते। कालिदासेन पुरूरव-उर्वश्योः दुष्यन्त-शकुन्तलयोश्च विन्यस्तं मिलनदृश्यं न तावन्मात्रं मार्मिकं प्रतिभाति।

तृतीयेऽङ्के कलादृष्ट्या करिकलभकस्य प्रासङ्गिकघटनानियोजनं महत्त्वपूर्णं वर्तते। यदा रामः सीता च स्मृत्यातिशयं हार्दिकं विषादं लभेते, उभयोः समक्षं करिकलभकस्य वृत्तान्तं स्थापयित्वा नाटककारस्तयोः मानसिकमवसादं ह्रासतां नयति। भवभूतिनात्राभिनवकलाया अनुत्तमः सुयोगोऽदर्शि।

तृतीयेऽङ्के छायासीताया वागपि श्रोतुं न कश्चित् समर्थः किन्तु प्रसङ्गेऽस्मिन् सीताया वाचोऽश्रुत्वैव केवलं रामस्येदृशा वचनक्रमा विन्यस्ता यतस्तेषां सीतया सह उक्तिप्रत्युक्तिरेव संवदति। तथा हि—

रामः—क्रव्याद्भिरंगलतिका नियतं विलुप्ता।

सीता—अज्ज उत्त धरामि एसा धरामि। इति रामेण सीतायाः प्रतिवचनं नाकर्णितं किन्तु प्रोक्तं च—

रामः—हा प्रिये, जानकि, क्वासि ?

अन्तिमेयमुक्तिः सीतायाः प्रतिवचनमनुसरति रामोक्तिक्रमं च संगच्छति।

अस्मिन्नेव दृश्ये रामः सीतायाः स्पर्शमनुभूयेव वदति—

रामः—सखि, वासन्ति, आनन्द-निमीलितेन्द्रियः साध्वसेन परवानस्मि। तत् त्वं तावदेनां धारय। रामस्येतामुक्तिं विभाव्य वासन्ती प्रतिवक्ति—

वासन्ती—कष्टमुन्माद एव। सापि सीताया स्पर्शस्य याथार्थ्यं नाजानात्। सीतायाः कृते रामस्य स्पर्शो यथार्थोऽभवत् किन्तु सा अदृश्यैव आसीत्। रामोऽपि स्वप्नायित इव सत्यमपिसीतायाः स्पर्शमसत्यमिवाकलयति। एतदेव नाटककारस्य कलानैपुण्यम्।

भावानां वेगवत्यां धारायां प्रवहन्ति पात्राणि अप्रकृतस्थानि प्रदर्शितानि। अस्यां स्थितौ तद्दृश्यं वर्तते यस्मिन् पात्राणि सीताहरणं जटायुमरणादिकं दृश्यं प्रत्यक्षमिवावबुध्यन्ते। अथ च सीता ब्रवीति—

सीता—[सास्रम्] अज्जउत्त तादा वावादीअदि। अहं वि अवहारिज्जामि। ता परित्ताहि परित्ताहि।

रामः—[सवेगमुत्थाय] आः पाप, तातप्राणसीतापहारिन् क्व यासि ?

कथाप्रपञ्चे पूर्वानुस्मृतेरभिन्नाश्रयत्वमादाय रसस्य चरित्रस्य च चित्रणोत्कर्षः द्विगुणायितः। पात्राणामौदात्त्यं दर्शयितुकामः कविरनपेक्षितप्रकरणोल्लेखनान्न विरमति। एतादृशा घटनोल्लेखा पूर्वानुस्मृतिपरिधौ सन्ति। तथा हि—

अरुन्धती

एष वः श्लाघ्यसंबन्धी जनकानां कुलोद्वहः।
याज्ञवल्क्यो मुनिर्यस्मै ब्रह्मपारायणं जगौ॥ ४.९

श्लोकेऽस्मिन्द्वितीयया पंक्तया जनकस्य चरित्रं प्रकाश्यते। किन्तु कथाप्रसङ्गे तस्य नास्ति कश्चिदवसरः। ईदृश एवापरः श्लोकः—

यथा पूतंमन्यो निधिरपि पवित्रस्य महसः
पतिस्ते पूर्वेषामपि खलु गुरूणां गुरुतमः।
त्रिलोकीमङ्गल्यामवनितललोलेन शिरसा
जगद्वन्द्यां देवीमुषसमिव वन्दे भगवतीम्॥ ४.१०

रसनिष्पत्तयेऽपि पूर्वानुस्मृतेः प्रकरणानि परिकल्पितानि। वीथिका-चित्रदर्शनं जनकेन सीतायाः शैशवस्मरणं, कौसल्यायाश्चेदं प्रकथनम्—"सुमारिदम्हि अणिव्वेद-रमणीये दिअसे" इत्याद्यन्यान्यपि प्रकरणानि प्रधानतो रससाध्यान्येव सन्ति। सम्यग् विरक्तोऽपि जनकः पूर्वानुस्मृतिभावितः कथं न कथयतु—

"क एतत्प्रत्येति सैवेयमिति"—

आसीदियं दशरथस्य गृहे यथा श्रीः
श्रीरेव वा किमुपमानपदेन सैषा
कष्टं बतान्यदिव दैववशेन जाता
दुःखात्मकं किमपि भूतमहो विपाकः॥ ४–६

य एव मे जनः पूर्वमासीन्मूर्तो महोत्सवः
क्षते क्षारमिवासह्यं जातं तस्यैव दर्शनम्॥ ४–७

इमामेव पूर्वानुस्मृतिमधिकृत्यारुन्धती भूयोऽपि करुणारसमयीं निर्झरिणीं प्रवाहयति। यथा—

स राजा तत्सौख्यं स च शिशुजनस्ते च दिवसाः।
स्मृतावाविर्भूतं त्वयि सुहृदि दृष्टे तदखिलम्॥ ४–१२

जनकस्यापि स एव पन्थाः—

स सम्बन्धी श्लाघ्यः प्रियसुहृदसौ तच्च हृदयम्
स चानन्दः साक्षादपि च निखिलं जीवितफलम्।
शरीरं जीवो वा यदधिकमतोऽन्यत्प्रियतरम्
महाराजः श्रीमान् किमिव मम नासीद्दशरथः॥ ४–१३

इयं पूर्वानुस्मृतिकला भवभूतिनाधोलिखिते श्लोके निदर्शिता—

सुहृदिव प्रकटय्य सुखप्रदः
प्रथममेकरसामनुकूलताम्।
पुनरकाण्डविवर्तनदारुणो
विधिरहो विशिनष्टि मनोरुजम्॥ ४–१५

प्रत्यक्षमेवास्याः पूर्वानुस्मृतेरुदाहरणं कौसल्यायाः वचनेषु विलोकनीयम्—

कौसल्या—[आश्वस्य] हा वच्छे, जाणइ कहिंसि सुमिरामि दे णवविवाहलच्छी परिग्गहेक्कमण्डलं पप्फुरन्त सुद्धविहसिदं सुद्धमुहपुण्डरीअं। आप्फुरन्तचन्दचन्दिआ सुन्दरेहिं अङ्गेहिं पुणो वि मे जादे अज्जो एहि उच्छङ्गं। सव्वदा महाराजो भणादि एसा रहुउलमहत्तराणां बहु अम्हाणं दु जणअसुआ दुहिदेव्व।"

इयमेव पूर्वानुस्मृतिररुन्धती कौसल्याजनकैः सह लवस्य मिलनवेलायां पुनरपि उद्बुध्यते। रामायण-कथायां लवः कृताभ्यास आसीत्। ते तं प्रष्टुमारब्धवन्तः। जनकेन पृष्टो लवः—वत्स, कथय कथाप्रसङ्गस्य कीदृशः पर्यन्तः। भूयश्च लवेनापि पूर्वानुस्मृतेः कारुण्यं प्रवाहितम्—

  

"अलीकपौरापवादेनोद्विग्नेन राज्ञा निर्वासितां देवीं देवयजनसंभवां सीतामासन्नप्रसववेदनामेकाकिनीमरण्ये लक्ष्मणः परित्यज्य प्रतिनिवृत्तः। किन्त्वै-कस्मिन्नेव वाक्ये निखिलाया रामकथायाः कारुण्यं निभृतम् ?

गर्भाङ्के सीतायाः करुणकथानां पुनरावृत्त्या वर्तमानस्थितिज्ञापनेन च भवभूतिना प्रेक्षकवर्गस्तथा करुणायिता यथा ते निःशेषाश्रुकोषकास्संजाताः कथावस्तुनि यथासमयमन्तरायकरणे भवभूतिर्नितरां दक्षः। शोकावेगं दूरयितुं कालिदास इव भवभूतिरपि—आकस्मिकसंरम्भं संयुयोज। सीताया वनवास-प्रसङ्गाद्रामो निर्विण्णहृदयोऽसह्यवेदनामनुभवति। तदैव नेपथ्ये—

> ऋषीणामुग्रतपसां यमुनातीरवासिनाम्।
> लवणत्रासितः स्तोमः शरण्यं त्वामुपस्थितः ॥ १-५

अमुं श्लोकं श्रुत्वा रामः सीतामर्धं विसस्मारेति।

## चरित्रचित्रणकला

पात्रचयनद्वारा कविरेतस्य नाटकस्य महत्त्वम् उदात्ततरमकार्षीत्। लोको-त्तराभ्यां सीतारामाभ्यां सहैव वाल्मीकि-वसिष्ठजनकादयो महर्षयः, पृथ्वीभागी-रथी-वासन्ती-गोदावरी-तमसा-मुरला अरुन्धत्यादयो देव्यश्च नाटकेऽस्मिन् विविधपात्ररूपेण प्रस्ताविताः। एतेषामुपस्थित्यैव नाटकमिदं महत्त्वशालि संजातम्। निम्नलिखितश्लोकेनास्य तद्वैशिष्ट्यं ज्ञातुं शक्यते—

> त्वं वह्निर्मुनयो वसिष्ठगृहिणी गंगा च यस्या विदु-
> र्माहात्म्यं यदि वा रघोः कुलगुरुर्देवः स्वयं भास्करः।
> विद्यां वागिव यामसूत भवती तद्वत्तु या दैवतं
> तस्यास्तं दुहितुस्तथा विशसनं किं दारुणेऽमृष्यथाः ॥ ४.५

स एव यथार्थतो महानुभावो यस्य प्रभावेण चान्तर्दिशं प्रभावितं वर्तते। भवभूतेः पात्राणि तादृशान्येव सन्ति। यथा चतुर्थेऽङ्के समुपस्थितं लवं विलोक्य कौसल्या जनकारुन्धतीप्रभृतयः प्रभाविताः सन्ति शृण्वन्तु तेषां मनोभावाः—

कौसल्या—अम्महे एदाणं मज्झे कोएसो रामभद्दस्स कोमारलच्छीसरिसेहिं सावट्टम्हें म्भेहि मुद्धं ललिदेहिं अंगेहिं अम्हाणं लोअणाइं सीअलावेदि ।

अरुन्धती—झटिति कुरुते दृष्टः कोऽयं दृशोरमृताञ्जनम् ।

जनकः—भिद्येत वा सद्वृत्तिमीदृशस्य निर्माणस्य ।

उपर्युक्तवचनैः व्यञ्जनावृत्त्या भवभूतिना निर्दशितं यत्तस्य हि काचिद् विशेषा विभूतिरिति । पञ्चमांके शत्रुरूपेण आयातोऽपि चन्द्रकेतुर्लवस्योदात्ततमेनानुभावेन प्रभावितोऽभूत् । अवधीयतामेकस्मिन्नेव श्लोके भावद्वयस्य निवेशन-कौशलं भवभूतेः ।

चन्द्रकेतुः—

अत्यद्भुतादसि गुणातिशयात्प्रियो मे
तस्मात्सखा त्वमसि यन्मम तत्तवैव ।
तत्किं निजे परिजने कदनं करोषि
नन्वेष दर्पनिकषस्तव चन्द्रकेतु. ॥ (५।१०)

लवस्याधोलिखितेन वाग्विन्यासेन भवभूतिः चरित्रचित्रणकलायाः रहस्यमुद्घाटयति—

लवः—अहो महानुभावस्य प्रसन्नकर्कशा वीर-वचन-प्रयुक्तिर्विकर्तनकुलकुमारस्य ।

अपरं च—

यथेन्दावानन्दं व्रजति समुपोढे कुमुदिनी
तथैवास्मिन् दृष्टिर्मम कलहकामः पुनरयम् ।
रणत्कारक्रूरक्वणितगुणगुञ्जद्गुरुधनु-
र्धृतप्रेमा बाहुर्विकचविकरालोल्बणरसः ॥ (५।२६)

रामस्य चरित्राङ्कनेऽपीयं कला प्रस्फुटिता । चन्द्रकेतुं दृष्ट्वा लवेनान्वभूयत—

विरोधो विश्रान्तः प्रसरति रसो निर्वृतघन-
स्तदौद्धत्यं क्वापि व्रजति विनयः प्रह्वयति माम् ।

३

झटित्यस्मिन् दृष्टे किमिव परवानस्मि यदि वा
महार्घस्तीर्थानामिव हि महतां कोऽप्यतिशयः ॥ (६।११)

चरित्रचित्रणार्थममुमेव "भवति कोऽपि महापुरुषाणामनिर्वचनीयोऽतिशयः" इति, आदर्शमुरीकृत्य वस्तुसंयोजनं भवभूतेः कलेति वक्तुं शक्यते।

सीतां निर्वास्य रामेण यत् किमप्यपकृतं तत्कवेश्चरित्रचित्रणकलयैव परिमार्जितम्। सीताया विषये परगृहवासदूषणं दुर्मुखमुखादभिज्ञाय रामस्ताः स्थितीः सम्यगाकलयति यासु सीता सुखेन परित्याज्यते। ता हि लोकाराधनव्रतम्, वसिष्ठसन्देशः सूर्यवंशचरित्रशुद्धेरवधानं च। इमा एव शम्बूकस्य वधेऽपि वक्तुं पार्यते। कवेः कला रामचरितस्यौदात्र्यं तत्रापि निर्वाहयति। पूर्वं भवभूतिना ब्राह्मणपुत्रस्य रक्षणार्थं शम्बूकवधात्मकं कर्म उचितं प्रतिपादितम्। पुनश्च पञ्चत्वमधिगतः शम्बूकोऽभ्युदयं लभते। तत् सर्वं प्राक्कलितमासीत्। ततः कविना तत् क्रूरं कर्म रामस्य कर्तव्यमिति निर्दिशितम्। किन्तु नायमपराधो रामस्य, अत्र तु केवलं तस्य एकमंगमेव अपराध्यते इतीदृशः उदघोषः सत्यं कलावैशिष्ट्यं प्रकटयति। इयमेव स्वीकारोक्तिरपराधमार्जनोपायः। पुनः सर्वाङ्गतया रामेण कथमपि नापराद्धम्। भवभूतिना अत्र शम्बूकवधः कियत्या कलात्मकरीत्या व्यञ्जितः। तदिदं कर्म न स्वभावतो रामस्य। तद्विपरीतमेव राम आचरति। तथापि यदपराद्धं तदपवादस्वरूपमेव—एकाङ्गेन कृतम्। अस्मिन् प्रसङ्गे कलानिर्भरितः निम्नाङ्कितः श्लोक उदाहरणीयः—

हे हस्तदक्षिण, मृतस्य शिशोर्द्विजस्य
जीवातवे विसृज शूद्रमुनौ कृपाणम्।
रामस्य गात्रमसि निर्भरगर्भखिन्न
सीताविवासनपटोः करुणा कुतस्ते ॥ (२।१०)

रामेणैवोच्यते कृतं रामसदृशं कर्म।

वाक्येनानेन स्पष्टमिदमाभाति यच्छम्बूकहन्ता अस्ति कश्चन रामादितरः। इयं सा कला अभिव्यक्ता।

## वर्णनकला

भवभूतेर्वर्णनकलायां स्निग्धतमवस्तूनां परिगणनपद्धतिर्निर्वचनीया। नहि भवभूतिः कस्यापि वस्तुनः भावगाम्भीर्ये निमज्जयितुं क्षमः। स तु भावपक्षमगृहीत्वैव चतुर्दिशं सर्वांशदर्शि वा चित्रं प्रस्तौति। भवभूतेर्वर्णनं सत्यं चित्रग्रहणयंत्र ( केमरा ) मिव कस्यापि वस्तुनस्तस्य परिसरस्य च सर्वस्य चित्रग्रहणं करोति तथा हि—

इह समदशकुन्ताक्रान्तवानीरवीरुत्-
प्रसवसुरभिशीता स्वच्छतोया वहन्ति।
फलभरपरिणामश्यामजम्बूनिकुञ्ज-
स्खलनमुखरभूरिस्रोतसो निर्झरिण्यः॥ २–२०

श्लोकेऽस्मिन्, निर्झरिण्यः, जम्बूवृक्षसमूहः, पक्वानि फलानि, मदोन्मत्तपक्षिभिर्व्याप्तवानीरवृक्षाः, तत्पुष्पैः सुरभितं स्रोतस्विनीनां पयः, जम्बूवृक्षाणामन्तरे तासां मुखरितप्रवाहादयश्च वर्तन्तेतराम्। श्लोकेनानेन यद्यपि भावैर्हृदयं नाप्लावितं किन्तु तस्मिन् प्रतिपादितं प्रकृतिचित्रं निरीक्ष्य नेत्राणि अवश्यं सफलानि।

उपर्युक्तवर्णने चित्रगृहीतवस्तूनामेव महत्त्वं न तु तद्विशेषणानाम्। अधोलिखिते श्लोके वर्णनकलाया इदमुदाहरणं निर्विशेषं प्रस्फुटति—

पश्चात्पुच्छं वहति विपुलं तच्च धूनोत्यजस्रं
दीर्घो ग्रीवः स भवति खुरास्तस्य चत्वार एव।
शष्पाण्यत्ति प्रकिरति शकृत् पिण्डकानाम्रमात्रां
किं वा ख्यातैर्व्रजति स पुनर्दूरमेह्येहि यामः॥ ४–२६

## रसकला

भवभूतिः करुण-रसनिष्पत्तये केवलं भावुकतामेव अलं न मन्यते। स करुणं दृश्यं स्पष्टं पुरोनिधाय हृदयं विदारयतीव। यथा—

अपत्ये यत्तादृग्दुरितमभवत्तेन महता
विषक्तस्तीव्रेण व्रणितहृदयेन व्यथयता ।
पटुर्धारावाही नव इव चिरेणापि हि न मे
न कृन्तन्मर्माणि क्रकच इव मन्युर्विरमति ॥ ४-३

प्रायश इदमेव दृश्यं कौसल्याया वचनेनोपस्थापितम् ।

"ता ण सक्कुणोमि उव्वहमाण मूलबन्धनं हिअअं पज्जवत्थावेदुं ।

करुणस्य धारा भवभूतिनोत्तररामचरितेऽजस्रं प्रवाहिता । किन्तु पाठकानां चेतः अस्य रसस्य भौतिकवेगेन न प्रस्फुटेदित्युद्देश्येन तेन यथास्थानं किमप्याश्वासकारि विधानं प्रस्तुतम् । तथा हि सीतामभिलक्ष्य जनककौसल्यारुन्धतीनां वार्तालापो वर्तते । करुणोऽत्र सर्वोच्चं शिखरमधिरोहति ।

जनकः—घोरेऽस्मिन् मम जीवलोकनरके पापस्य धिग्जीवितम् ॥ ४-१७

कौसल्या—दिढवज्जलेव पडिबद्धणिच्चलं हद—
जीविदं मं मन्दभाइणीं ण पडिच्चअदि ।

अरुधन्ती—आश्वसिहि राजपुत्रि, वाष्पविश्रामोऽप्यन्तरे कर्तव्य एव।

अन्यच्च किन्न स्मरामि यदवोचदृष्यशृंगाश्रमे युष्माकं कुलगुरुर्भवितव्यं तथेत्युपजातमेव किं तु कल्याणोदर्कं भविष्यतीति ।

यदा कौसल्या—"कुदो अदिक्कन्दमणोहराए मह एदं" इत्यवोचत् तदारुन्धती प्रोवाच—

तत् किं मन्यसे राजपुत्रि, मृषोद्यं तदिति । नहीदं सुक्षत्रिये, अन्यथा मन्तव्यम् । भवितव्यमेव तेन—

आविर्भूतज्योतिषां ब्राह्मणानां
ये व्याहारास्तेषु मा संशयोभूत् ।
भद्रा ह्येषां वाचि लक्ष्मीर्निषिक्ता
नैते वाचं विप्लुतार्थां वदन्ति ॥४-१८

अरुधन्तीद्वारेण प्रेक्षकवर्गान् सान्त्वनार्थं भवभूतिरपवारितविधिना तानबोधयत्—

"इदं नाम भागीरथी निवेदितरहस्यं कर्णामृतम् । न त्वेवं विद्मः कतरोऽयमायुष्मतोः कुशलवयोः ।"

एतद्रहस्योद्घाटनं नाम करुणरसात्पाठकानां रक्षणार्थमेव ।

कवेः रसविन्यासपटुतायाः स्पष्टाभिव्यक्तिः पञ्चमेऽङ्के जायते । आचतुर्थाङ्कं भवभूतिना करुणस्य पूरः प्रवाहितः । अत्र कविना स्पष्टं प्रत्यायितं यन्नातः परं करुणस्य प्रसरः सहनीयः । करुणस्य सीमा नातिगा भवति । न हि तस्य परिधिरनन्तो विधेय इति ॥ पञ्चमेऽङ्के करुणस्य नामापि न गृहीतम् । दर्शकान् वीररसे निमज्जयितुं झटिति कविना लवचन्द्रकेतोः युद्धं वर्णितम् । एतावता कारणेन प्रेक्षावतां चेतांसि पुनः करुणधारायामेवावगाढुं प्रवृत्तानि । पञ्चमेऽङ्के मिश्रीकृतरसक्रमे सर्वाधिगतप्रयोगसाफल्यः कविलक्ष्यते । यथा—

यथेन्दावानन्दं व्रजति समुपोढे कुमुदिनी
तथैवास्मिन् दृष्टिर्मम कलहकामः पुनरयम् ।
रणत्कारक्रूरक्वणितगुणगुञ्जद्गुरुधनु-
र्धृतप्रेमाबाहुर्विकचविकरालोल्बणरसः ॥ ५।२६

इह श्लोके भ्रातृप्रेम वीरोत्साहेन मिश्रितं दृश्यते । प्रेमवीरयोः सम्मिश्रणं भवभूतिना षष्ठेऽङ्के साधु साधितम् । विशेषतस्तस्मिन्प्रसङ्गे, यदा रामः कुशं साक्षात्कुरुते । भवभूतेर्वीरो रसो मूर्तिमानिव वर्तते । रामस्य ध्वनिरियम्—

दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा
धीरोद्धता नमयतीव गतिर्धरित्रीम् ।
कौमारकेऽपि गिरिवद्गुरुतां दधानो
वीरो रसः किमयमेत्युत दर्प एव ॥ ६।१६

**अभिव्यक्तिः**—

तृतीयाङ्कस्याभिव्यक्तिः सविशेषं कौशलपूर्णा विद्यते । उभौ करिकलभगिरिमयूरौ स्वस्वप्रियतमाभ्यां साकं सानन्दौ स्तः । विधानमिदं प्रकृतेरस्ति । प्राकृतिकेऽस्मिन् विधाने रामसीतयोः पार्थक्यमेवास्वाभाविकं प्रतीयते । इदं हि अशाश्वतम् । यदि पतिपत्न्योश्चिरमिलनमेव प्रकृतेर्नियोजनं तर्हि यथाशीघ्रं

 

सीतारामयोः पुनर्मिलनमवश्यं संभाव्यते । इयमेवास्याङ्कस्य प्रथमाभिव्यक्तिः। इमामभिव्यक्तिं स्पष्टीकरणायैव भवभूतिः सीतामुखेन प्रकटयति—

सहि, वासन्दि किं तुए किदं अज्ज उत्तस्य मह अ एदं दंस अन्तीए । हद्धी हद्धी । सो एव्व अज्जउत्तो तं एव्व पञ्चवटी–वणं, सा एव प्रियसहि वासन्दी, दे एव विविह विसम्भसक्खिणो गोदावरीकाणणुद्देशा, दे एव जादणिव्विसेसा, मिअपक्खिपाअवा, सा अज्जेव चाहं । मह उण मन्दभाइणी ए दीसन्तं विसव्वं एव्व एदं णत्थि त्ति सो ईदिसो जीवलोअस्स परिवत्तो ।

तृतीयेंऽके रामचरित्रस्योदात्ततमं स्वरूपमभिव्यज्यते । यद्यपि सीता शरीरतो रामस्य पार्श्ववर्तिनी नासीत् तथापि तन्मनसि सा सदा वर्तमानासीत्। सीतायाः प्रेमबाहुल्येन रामेण पुनरुपयमनं नानुमोदितम् । सर्वमेतदनेनांकेन स्फुटीभवति ।

**प्रेमविश्लेषणम्—**

भवभूतिना प्रेम्णः उत्कृष्टस्वरूपस्य सीमातिगस्य परिधेश्च परिचयो विहितः । एतस्य सारभूतं तत्त्वं रामस्य शब्देषु–वर्तते । यथा––

व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते ।[१]
विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ।। ६।१२

प्रसङ्गेऽस्मिन् दम्पत्योः प्रेम सर्वातिशायि वर्तते । पत्न्याः स्नेहपूर्णं वाक्यमेकं किं किं न विदधाति ? यथा––

म्लानस्य जीवकुसुमस्य विकासनानि
सन्तर्पणानि सकलेन्द्रियमोहनानि
एतानि ते सुवचनानि सरोरूहाक्षि
कर्णामृतानि मनसश्च रसायनानि ।। १।३६

१. प्रसङ्गेऽस्मिन्नुपाधिनोऽनावश्यकत्वम्––उत्तररामचरिते । २।२२ अपि द्रष्टव्यम्

एतेनाद्वैतं सिध्यति । यथा पश्यन्तु तावत्--

अद्वैतं सुखदुःखयोरनुगुणं सर्वास्ववस्थासु यद्-
विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः ।
कालेनावरणात्ययात् परिणते यत्स्नेहसारे स्थितं
भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत् प्राप्यते ॥ १।३९

सैव पत्नी रामशब्देषु गृहलक्ष्मीरिति ।[१] यो हि यस्मिन् स्निह्यति स तस्य सर्वस्वम् । अस्मिन् प्रसङ्गे पत्न्याः प्रेम अनिर्वचनीयमस्ति । सीतायाः प्रेमाधिकृत्य रामस्योक्तिः--

न किञ्चिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति ।
तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः ॥ २·१९

रामस्य पत्नीव्रतम् —

देव्याः शून्यस्य जगतो द्वादशः परिवत्सरः ।
प्रणष्टमिव नामापि न च रामो न जीवति ॥ ३·३३

तथापि भवभूतिर्दम्पत्योः प्रेमविषये विश्वसितिस्म—

हृदयं त्वेव जानाति प्रीतियोगं परस्परम् ॥ ६·३२

सत्संगस्नेहस्वरूपं तु सर्वोत्कृष्टं विकसति ।

सत्संगतिः महता पुण्येनावाप्यते । यथा—

सतां सद्भिः सङ्गः कथमपि हि पुण्येन भवति ॥ [ २-१ ]

इयमेव सत्सङ्गतिः सलक्षणमग्रे निदर्शिता

प्रियप्राया वृत्तिर्विनयमधुरो वाचि नियमः
प्रकृत्या कल्याणी मतिरनवगीतः परिचयः ।
पुरो वा पश्चाद्वा तदिदमविपर्यासितरस-
रहस्यं साधूनामनुपधि विशुद्धं विजयते ॥ २·२

---

१. उत्तर १·४९

  

शिशुप्रेम्णः वासन्तिकस्वरूपं भवभूतिना प्रकटितम्। यथा स्थाणुमपि वसन्ततुः सरसं करोति तथैवेदं वात्सल्यमपि महर्षीणां चराचराणां च चेतः प्रेमनिर्भरं करोति। तद्यथात्रेयी निदर्शयति—

"दारकद्वयमुपनीतम्। तत्खलु न केवलमृषीणामपि तु चराचराणां भूतानामन्तराणि तत्त्वान्युपस्नेहयति कोऽयं शिशुर्जनिसंबन्धात्—

अन्तःकरणतत्त्वस्य दम्पत्योः स्नेहसंश्रयात्।
आनन्दग्रन्थिरेकोऽयमपत्यमिति बध्यते॥ ३'१७

स्वसन्ततिशोकः कियत्प्रगाढो भवति, इति जनकस्योदाहरणेन स्पष्टं भवति। सीतायाः निर्वासनं श्रुत्वा स वैखानसः संवृत्तः सन् तपोऽतप्यत। तथापि सीतावियोगजनितपीडया न तस्य नितरां मुक्तिः—

हृदि नित्यानुषक्तेन सीताशोकेन तप्यते।
अन्तःप्रसृतदहनो जरन्निव वनस्पतिः॥ ४·२

स "सीतायां वदनकमलं शिशोः स्मरामि" इत्यनुसारं सदैव सचिन्तोऽलक्ष्यत।

चराचरैः साकं महानुभावानां प्रेमदर्शनं भवभूतिनानुमोदितम्। पञ्चवटी-नामस्मरणेन आत्रेयी सीताया वृक्षसम्बन्धि-बन्धुत्वं स्मरति—

"स एष ते वल्लभशाखिवर्गः"॥ २·६

रामस्तादृशीं सीतां परिलक्षयति प्रियरामा हि सर्वथा वैदेह्यासीत्। सीता राममुदिदृश्याकथयत्—

"त्वया सह निवत्स्यामि वनेषु"

रामस्य प्रेम्णा प्रकृतिरनुप्राणिता। पंचवटीप्रदेशेऽस्य साजीव्यस्योपाख्यानं यथा—

"तदत्रैव सा पंचवटी यत्र चिरनिवासेन विविधविस्रम्भातिसाक्षिणः प्रदेशाः प्रियायाः प्रियसखी च वासन्ती नाम वनदेवता"।

पंचवट्या अयमेव साजीव्यभावः रामस्य कृते वरीवर्ति। अत एव रामेणोक्तम्—

"हन्त, परिहरन्नपि मामितः पंचवटीस्नेहो बलवदाकर्षति"।

रामः स्वकर्तव्यत्वेन अगस्त्यादिमहर्षीणां स्मरणमिव पञ्चवट्याः स्मरणं करोति[१]।

प्रकृतिं तु मानवनिर्विशेषं परिलक्ष्य भवभूतिः नदीः, वनदेवीम्, वसुन्धरां च पात्रीकृतवान्।

सीतायाः पशुपक्षिषु विहितं प्रेमातीवोदात्तं वर्तते। सल्लकीपल्लवाग्रदानेन तया एकः करिकलभः संवर्धितः। स्वपालितमेकं मयूरमपि असौ नर्तयतिस्म। सीतायाः प्रेम प्रकृत्या सह सौदार्दपूर्णमभवत्। हस्तिशावकस्तया पुत्रीकृतः। भवभूत्यनुसारं सीतारामयोः प्रकृतेः कुटुम्बभावनासीत्। यथा—

येनोद्गच्छद्बिसकिसलयस्निग्धदन्ताङ्कुरेण
व्याकृष्टस्ते सुतनु, लवलीपल्लवः कर्णमूलात्।
सोऽयं पुत्रस्तव मदमुचां वारणानां विजेता।
यत्कल्याणं वयसि तरुणे भाजनं तस्य जातः॥[२]

प्रकृतेः प्रेमव्यापारे मानवीकरणं स्पष्टमभिव्यज्यते। अस्यैव करिकलभस्य कान्तानुवृत्तिचातुर्यमपि भावनीयम्—

---

१. रामेण स्वयमेवोच्यते--

यत्र द्रुमा अपि मृगा अपि बान्धवा मे
यानि प्रियासहचरश्चिरमध्यवासम्।
एतानि तानि बहुनिर्झरकन्दराणि
गोदावरीपरिसरस्य गिरेस्तटानि॥

२. उत्तररामचरिते ३.१५। एतादृश एव कौटुम्बिकभाव अग्रेऽपि सम्प्रतिष्ठते—

कतिपयकुसुमोद्गमः कदम्बः
प्रियतमया परिवर्धितोऽयमासीत्।
स्मरति गिरिमयूर एष देव्याः
स्वजन इवात्र यतः प्रमोदमेति॥३.२०॥

तत्रैव ३.२१ श्लोके हरिणानां कौटुम्बिकवृत्तमुपलभ्यते।

  

लीलोत्खातमृणालकाण्डकवलच्छेदेषु सम्पादिताः
पुष्यत्पुष्करवासितस्य पयसो गण्डूषसंक्रान्तयः।
सेकः शीकरिणा करेण विहितः कामं विरामे पुन-
र्यत्स्नेहादनरालनालनलिनीपत्रातपत्रं धृतम् ॥३·१६॥

स नागरक इव प्रियानुवर्तने निष्णातोऽभवत्। हस्तिरिव मयूरोऽपि वधूसखः सञ्जातः। तमभिलक्ष्य रामेण कथ्यते—

"सुतमिव मनसा त्वां वत्सलेन स्मरामि ॥३.१६॥

सीतारामयोः पशुपक्षिणां योहि मित्रभावः प्रकृतिप्रेम्णा स्नेहसूत्रे ग्रथितः तस्य प्रत्यक्षं सकार्यं वा परिचयः निम्नश्लोके प्राप्यते—

ददतु तरवः पुष्पैरर्घ्यं फलैश्च मधुश्च्युतः
स्फुटितकमलामोदप्रायाः प्रवान्तु वनानिलाः।
कलमविरलं रज्यत्कण्ठाः क्वणन्तु शकुन्तयः
पुनरिदमयं देवो रामः स्वयं वनमागतः॥

इदमस्ति प्रेयस्या प्रकृत्या रामाभिनन्दनम्। इयं सैव प्रकृतिः यस्या विषये कदाचिदासीदेतत् सत्यमिव—

करकमलवितीर्णैरम्बुनीवारशष्पै-
स्तरुशकुनिकुरङ्गान्मैथिली यानपुष्यत्।३.२५

भवभूतिः प्रथमदर्शने समुत्थितस्य स्नेहस्य वर्णनमपि कृतवान्। ईदृशः प्रेम्णो व्याख्या सुमन्त्रशब्देषु—

"भूयसा जीवितधर्म एष यद्रसमयी कस्यचित् क्वचित्प्रीतिः, यत्र लौकिकानामुपचारस्तारामैत्रकं चक्षूराग इति।" तमप्रतिसंख्येयमनिबन्धनं प्रेमाणमामनन्ति।"

अहेतुः पक्षपातो यस्तस्य नास्ति प्रतिक्रिया।
स हि स्नेहात्मकस्तन्तुरन्तर्भूतानि सीव्यति ॥५.२०

अयं प्राथमिकः दृष्टिगतस्नेहः महानुभावेनोत्पाद्यते[1] । एतादृशो महानुभावस्य सम्पृक्तौ । शत्रुभावेनाप्यागतस्य जनस्य कीदृशी स्थितिर्भवति—

एतस्मिन् मसृणितराजपट्टकान्ते
मोक्तव्याः कथमिव सायकाः शरीरे ।
यत्प्राप्तौ मम परिरम्भणाभिलाषा-
दुन्मीलत्पुलककदम्बमङ्गमास्ते ।।५.१८

इति श्लोकेन वर्णितम् ।

जीवनदर्शनम्

उत्तररामचरिते मानवजीवनस्य दर्शनं भवभूतिना स्थाने स्थाने विवेचितम् । एतदनुसारं दैवस्य प्रभावः सर्वोपरि वर्तते । भागीरथ्याः शब्देषु—

को नाम पाकाभिमुखस्य जन्तो-
र्द्वाराणि दैवस्य पिधातुमीष्टे ।।७.४

भवभूतिः गीतायाः कर्मयोगं जीवनस्य सर्वोत्तमसाफल्यमिवामन्यत । तस्यादर्शपुरुषो राम आसीत् यस्य व्रतं लोकाराधनमभवत् । अस्मिन् लोकाराधने जनः सदैव प्रशस्यो भविष्यतीति तु न निश्चितम् । कर्तव्यपथारूढोऽपि रामो यया कया रीत्या बहुधा उपालम्भितः । तथापि—

सर्वथा व्यवहर्तव्यं कुतो ह्यवचनीयता ।।१.५

सतां सङ्गत्या जनः प्रायशः स्वजीवनं सुखयति सफलयति च । भवभूतेरनुसारं सत्सङ्गतिस्तु पुण्यैरेव लभ्यते ।

कीदृशं मानवचरितं स्यादित्याकांक्षायां भवभूतिः मानवं साधारणासाधारणभेदेन द्विधा विभजति । असाधारणजनमयं "लोकोत्तर" इति विशेषेण सम्बोधयति । एतादृशो लोकोत्तरमानवस्य—

---

१. भवभूतिना कृतं महानुभावस्य वर्णनं यथा—

आश्वासः स्नेहभक्तीनामेकमायतनं महत् ।
प्रकृष्टस्येव धर्मस्य प्रसादो मूर्तिसुन्दरः ।।६.१०

चेतांसि—"वज्रादपि कठोराणि मृदूनि कुसुमादपि" भवन्ति। अन्यथा केवलं मृदुर्मधुरो वा शठैः धूर्तैर्वा लुण्ठितोऽपि न जानाति स्वकीयां महतीमपि हानिम्। तदनुसृत्य पुनरप्युक्तम्—न तेजस्तेजस्वी प्रसृतमन्येषां विसहते।

स्वव्यवहारेण लोके मधुरताया आपादनं महापुरुषैरनुमोदितम्। अतः सत्यानुसृता मधुरा वाक् सर्वथा जीवनेऽपेक्षिता भवति। भवभूतिमतेन ईदृशी वाणी—

कामं दुग्धे विप्रकर्षत्यलक्ष्मीं
कीर्तिं सूते दुष्कृतं या हिनस्ति।
तां चाप्येतां मातरं मङ्गलानां
धेनुं धीराः सूनृतां वाचमाहुः ॥१.३३

———

# संस्कृत पत्रकारिता

(१९३५-१९४०)

रामगोपाल मिश्रः

## वल्लरी

'वल्लरी'—इति मासिकपत्रिका १९३५ ई० तमे खिस्ते वाराणसीतः प्रकाशिताऽऽसीत् । 'वल्लरी' कार्यालय ६०।३१ सिद्धमाता-गली, बनारस सिटी' इत्यस्याः पत्रिकायाः प्राप्तिस्थानमभूत् । पं० केशवदत्त पाण्डेयः, साहित्याचार्य, पं० तारादत्तपन्त साहित्याचार्यश्चोभौ सम्पादकौ आस्ताम् । द्वात्रिंशत्पृष्ठात्मिकायाः संस्कृतमासिकपत्रिकायाः द्विरूप्यकं मूल्यमासीत् विदेशे तु पञ्चरूप्यकाणि, प्रत्यङ्कमाणकत्रयम् ।

अस्यां पत्रिकायां काव्य-पुष्पाणि पुष्पितानि । पुष्करिणीवदेषा पुष्पागमे काव्य-पुष्कराणि पुष्यतिस्म । प्रमुखपृष्ठे वृन्दावनविहारी-कृष्णस्य चित्रमतीवाकर्षकमभवत् । रमणीया एषा पत्रिका यावत् प्रथमवर्षं न समाप्ता तावदेव 'विचित्रा कालस्य गतिः' इति रीत्या पं० केशवदत्तमहाभागः प्रमुखसम्पादकः पार्थिवं शरीरं त्यक्त्वा वैकुण्ठमगमत् । तथा च कालहतकस्य शिवस्य नगरीं 'वाराणसीं' परित्यज्य पं० तारादत्त पन्तोऽपि भूस्वर्गभूतां नगरीललामभूतां 'कश्मीरप्रदेशस्य अल्मोड़ा' नगर्यां वसतिं चक्रे । तत्र गत्वा स जनः 'वल्लरीं' विस्मृतवान् । अत एव पत्रिका प्रथमवर्षे एवाम्रियत । तथापि प्रकाशिताङ्कैः स्पष्टं दृश्यते यदेषा उत्कृष्टा पत्रिका विविधवाङ्मयभूषिता विद्वद्भिः सेविताऽऽसीत् ।

श्रीमाधवाद्ब्दयतृतीयायां[1] प्रथमगुच्छके प्रथमं प्रसूनमस्याः प्रकाशितम् । शालिग्रामशास्त्रि—बलदेवउपाध्याय-बाबूरामसक्सेना-हाराणचन्द्रभट्टशास्त्रिहरिदत्तपाण्डेय-वासुदेव उपाध्याय-राजारामशास्त्रि- अनन्तशास्त्रि-घनानन्द-जग-

---

१. संवत्सरः १९९२

न्नाथहोशिङ्ग-प्रयागदत्त-कान्तानाथशास्त्रि तैलङ्ग—इत्यादीनां महाभागानां निबन्धादिकृतिभिरेषा भूषिता।

साहित्याचार्य पं० जगन्नाथहोशिङ्ग-महाभागस्य 'मङ्गलचम्पूः' पत्रिकायां प्रकाशिता। भाषास्यात्रतीव मधुरा मण्डन-मण्डिता ध्वनियुक्ता। कविः प्रारम्भे 'रत्नगर्भा' नगरीति वर्णनपूर्वके तस्याधिनायकं नायकं 'मङ्गल' नामकं भूपतिं वर्णितवान्। कात्स्र्येन एकेन श्लोकेन कविः स्वचातुर्यं प्रदर्शयन्नेवं लिखति—

'आसीदसीमगुणमण्डलमण्डिताङ्ग-
नारीललामकमलीयमनङ्गवासम्।
रत्नाद्यगण्यमणिजातसुरथ्यशोभं
श्रीमङ्गलं पुरमनन्तबुधप्रतिष्ठम्॥
'मनोविनोदकारिणीं निकुञ्ज-पुञ्जमञ्जुलाम्।
विलोक्यवाटिकां नवां विलासिनां मुदाश्रयाम्॥'

गद्येऽपि

'पृष्ठनिक्षिप्तान्तरितः, स्वध्वनिधिक्कृतस्फूर्जथुर्नयनाकृष्टचञ्चलो द्रंष्ट्रावकृष्टसहस्रधृष्टिनक्षत्रेशः प्रावृट्पयोदभूतपङ्कश्यामलमूर्तिः खुराघातैः पृथिवीं कम्पयन्, किल स महाक्रोड उद्यानमध्यमभ्येत्य वृक्षान् क्षोदयन्, फलानि चूर्णयन्, रथ्या विदारयन्, निकुञ्जान् भक्षयन्, भीतानुद्यानपालकबालकान्, प्रधावयन्, सक्रोधमुपस्थितान् मालाकारान् भर्त्सयन्, समन्तादुद्यानं ध्वस्ततामनयत्' इत्येवं प्रकारकं स्निग्धमलंकारात्मकं वर्णनं सर्वत्र निदर्शितम्।

अस्यां पत्रिकायामनुसन्धान-प्रधान-निबन्धानामपि प्रकाशनं यदा कदा अभवत्। पण्डितानन्तशास्त्रि फडके महोदयस्य 'भगवत्याः राधिकायाः विषये किञ्चित्', दीनानाथशर्म-सारस्वतमहाभागस्य 'ग्रहणविज्ञानम्' परमार्थवाद-प्रवर्तकाचार्य-साहित्याचार्य-रामावतारशर्मविद्वत्प्रवरस्य 'भाषातत्त्वम्' इति प्रौढाः युक्तिपूर्णाः निबन्धाः प्रकाशिताः। घनानन्दपन्त-वैद्यः 'फिरङ्गरोग' विषये राजारामशास्त्रि-गाडिगिलः 'श्रुतिविमर्श' वेदविषये तारादत्तपन्तः 'अघात-

इन्द्रियार्थमीमांसा' इन्द्रियार्थविषये निबन्धं विलिख्यास्यां वल्लर्यां प्रकाशितवन्तः। पत्रिकायामाधुनिक-भाषाविज्ञानविषयेऽपि पर्याप्तचर्चा गोचरीभवति।

तत्र लघुगीतयः प्रकाशिता अभवन्। समस्यापूरणस्तम्भ आसीत्। विनोदवाटिकायां रुचिरुचिता मधुराः श्लिष्टहास्ययुता विनोदाः प्रकाशिताः। 'संगृहीतसमाचारे'ति शीर्षके विशिष्ट-महत्त्वपूर्णाः समाचाराः प्रकाश्यन्तेस्म। 'देववाणी' विषये निरन्तरं सम्पादकीयलेखेषु चर्चा भवतिस्म। वैज्ञानिक आयुर्वेदः ( पीताम्बरदत्त )—संगीतसौरभम्—इत्यादिषु विषयेष्वपि निबन्धाः प्रकाशिताः।

गद्यप्रधानैषा संस्कृतमासिक-पत्रिका प्रतिमासं शुक्लपक्षीय प्रथमसप्ताहाभ्यन्तरे प्रकाशिता। राजनीति-विषयकनिबन्धानां प्रकाशनं नाभवत् तथैव विवादविषयाणामपि स्थानं नासीत्।

विवादान्धकाररहिता 'वल्लरी' मासिक-पत्रिका विना मूल्यं लेखकानां कृते प्रदीयतेस्म। विद्वच्चरितानि कैलाशचन्दशास्त्रि-गङ्गाधरशास्त्रि—इत्यादिमहापण्डितानां प्रकाशितानि। लक्ष्मणशास्त्रि—नारायणशास्त्रि—परमानन्दशास्त्रि—इत्यादयः कतिपयप्रधाननिबन्धकाराः पत्रिकायां विलसन्ति। इयं पत्रिका बहूनि प्रसूनानि प्रकटीकृत्य तिरोहिता सती दुनोत्याधुनिकानां रसिकप्रवराणां गीर्वाणवाणीसेवापराणां विदुषामपि चेतांसि। सर्वसिद्धा 'सिद्धमाता' मार्गतः प्रचरन्त्याः पत्रिकायाः प्रमुखपृष्ठे श्लोकोऽयं निरन्तरं प्रकाश्यतेस्म—

'संश्लाघ्याऽऽगमराजिते बहुसुपर्वोच्चैर्लसन्मन्दिरे
गङ्गोत्तुङ्गतरङ्गभङ्गिभिरहोरात्रं पवित्रीकृते।
एषाऽऽनन्दवने बुधाः सुरगवी हृद्या नवा 'वल्लरी'
माधुर्योल्लसिता विकासमयते श्रीमाधवानुग्रहात्॥

**कालिन्दी**

मारीचमासे १६३६ ई० तमे वर्षे कालिन्दी नाम्नी त्रैमासिकी पत्रिका 'सुम्नपत्तन' ( आगरा ) नगरीतः प्रकाशिता। प्रकाशन-स्थानमासीत् 'आर्यसमाज-भवनम्, सुम्नपत्तनम् (आगरा)। मूल्यं प्रतिकल्लोलमाणकपञ्चकम्,

वार्षिकं सपादरूप्यकमासीत्। श्री हरिदत्त-शास्त्रिणः सम्पादकत्वे पत्रिकायाः प्रकाशनमभवत्। श्री ज्वालाप्रसाद-शास्त्री साहित्याचार्य, श्री घनश्याम-गोस्वामी च सहकारिणौ सम्पादकौ आस्ताम्। चैत्रसुदिरामनवमीपावनतिथौ कालिन्दी-पत्रिकायाः तरणि-तनूजा-तटे प्रथमः कल्लोलः समुत्पन्नः। कल्लोलोऽयमनवरत-कलकलध्वनिसमुद्गिरन् अग्रे सरन् सर्वेषां सुखदायी अभवत्।

आर्यसमाजान्तर्गतसंस्कृतमहाविद्यालयस्य त्रैमासिकी मुखपत्रिकारूपेण कालिन्दी द्विवर्षपर्यन्तं प्राचरत्। पश्चात् तस्याः कल्लोलाः सपदि सागरे विलीनाः संजाताः। द्वितीये प्रवाहे तृतीयः कल्लोलः प्रकाशितः। आर्थिकदशा सुस्था पत्रिका-प्रकाशनाय पर्याप्ता नासीदिति कारणेन पश्चात् कल्लोलानां दर्शनं नाभूत्।

प्रथमे कल्लोले 'प्रस्थानचर्चा' (यज्ञेश्वर शर्मशास्त्री)--भट्टभवभूतिः (श्रीद्विजेन्द्रनाथगुहः)--प्रार्थनापञ्चकम् (विश्वनाथ शर्मा)--संस्कृतोन्न-तिसमीक्षा (द्रव्येश झाः)--इत्यादयः प्रकाशिताः। 'संस्मरणम्' शीर्षके सचित्र-विद्वद्चरितानि, संक्षिप्तसंस्कृतसमाचाराश्च प्रकाश्यन्तेस्म। पत्रिकायां शास्त्रीयाः धर्मदर्शनविज्ञानादिविवेचनपराः, विनोदोपयुक्ताः, शिक्षापद्धति-सम्बन्धिनश्च लेखाः प्रकाश्यन्तेस्म। अतिविस्तृताः विवादग्रस्ताश्च प्रबन्धाः तस्यां दृश्यन्ते। संरक्षकेभ्यः सहायकेभ्यो विशिष्टसदस्येभ्यश्च पत्रिकैषा विना-मूल्यं प्रदीयतेस्म।

हृषीकेशभट्टाचार्यमहाभागेन विद्योदयं सम्पाद्य या पद्धतिः प्रकाशिता सैव प्रणाली कालिन्द्यामपि स्वीकृताऽऽसीत्। सम्पादकमहाभागस्य 'महारण्यं पर्यवेक्षम्' निबन्धं पठित्वा हृषीकेशभट्टाचार्यस्य 'उद्भिज्जपरिषदिति' निबन्धस्य शीघ्रं स्मरणं भवति। व्यंग्यप्रधानशैल्यां लिखितोऽयं निबन्धोऽतीव मनोहरो रञ्जको विनोदपरिपूर्णश्च।[१] यथा जीर्णक्षिभल्लकःशनैः शनैर्जराविकलं कलेवर-मुत्थाप्य प्रयत्नेन स्थिरीकृत्य च हस्तस्थितं पत्रमेकं वाचयामास—

---

१. यद्यपि न ज्ञायते कस्यायं निबन्धः तथापि लेखकस्य नामान्यत्र लिखित-मत्र न लिखितमनेनैव कारणेन सम्पादकस्यायं लेखः इति प्रतीयते।

स्वस्ति श्रीविविध-विरुदावली-विराजमानमानोन्नतमहाराजाधिराज-पशुसाम्राज्यैकधुरन्धरचक्रवर्तिपदाधिरूढ–श्री-श्री-श्री गिरिराज–सुन्दरदरिशयहर्य्यक्ष-कुलप्रदीपमृगाधिपचरणसरोरुहदलेषु भूमिलुंठितसाष्टाङ्गप्रणतशिरसामासमुद्र-धरातलावस्थिति यावदरण्यचराशेषपशूनामसंख्य-प्रणिपात-पुरःसरन्सानुनय-विनयावेदनमेतत् विदितमस्तु देवपादानां यदत्र सचराचरसृष्टिप्रवाहे पशूनां सृष्टिर्नाम मनुष्यसृष्टितो बहुकालपूर्वमेव समभवत् । भगवता सृष्टिस्थितिप्रलय-कारिणा हरिणाऽपि प्रथमं मत्स्यादिपशुस्वरूपेणैवात्मावतारित इति पुराणशास्त्रेषु सुस्पष्टमुल्लिखितमधुनातननवसभ्यकलाकुशलैः कृतिभिरपि युक्तिपरम्परोन्यासै-र्मानवसृष्टितः पशुसृष्टेरधिकं प्राक्तनता प्रतिपादिता । ततश्च मानवाः पशुभ्य प्राचीना एव ।"[१]

पत्रिकायां बहवो मुद्रणाशुद्धयःसन्तु नाम, तथापि विषयाणां गम्भीरता दृश्यते। कालिन्दी पत्रिकायां दीनानाथशास्त्रि सारस्वतमहाभागस्य 'संस्कृत-पत्राणां साधारण इतिहासः' निबन्धः प्रकाशितः। मासावतरिका वर्षावतरणिका च प्रकाशिते । यथा मासावतरिका––

अध्यानता विकसितैः कुसुमैर्मरन्द-
पीयूषकान्तवपुरभ्यधिमाववं त्वम् ।
दूरादुपागतवति प्रणयैकसारे
धूनोषि किं मधुकरे नवमल्लि शीर्षम्[२] ॥

कालिन्दीन्दीवरप्रतिपत्रपुटे श्लोकोऽयमभविष्यत्—

काव्यावर्तविवर्तिता सुमनसां नेत्रोत्पला ह्लादिनी
तत्तच्छ्रुस्त्रानिगूढवाच्यनदिका प्रस्फोर सच्चातुरी ।
विद्वद्वृन्दमनोज्ञचारुचरितेन्दिन्दीवरा घूर्णिता
'कालिन्दी' प्रवहत्यजस्रममला सुध्नैकनिध्ना घना ॥

१. कालिन्दी प्रथमे प्रवाहे प्रथमः कल्लोलः।
२. कालिन्दी १.२ मम शोधकर्मणः पूर्त्यर्थमपेक्षितोऽयमङ्कः अधुनापि न लब्धः। यदि कुत्रापि वर्तेत सूचनयानुग्रहणीयोऽयं जनः।
४

## मीमांसाप्रकाशः

१९३६ ई० तमे खिस्ते पूनानगरीतो मीमांसाप्रकाश इति मासिकपत्रं प्रकाशितम्। वस्तुतः मीमांसाग्रन्थप्रकाशनसमित्या प्रकाश्यमानस्य मासिक-मीमांसप्रकाशस्यास्य पत्रस्य विषये नाधिकं जानीमः, ज्ञातुमिच्छामः। एतद्विषये मासिकसंस्कृतरत्नाकरे पत्रे लिखितम् —

'पुण्य (पूना) पत्तनस्थमीमांसाग्रन्थप्रकाशनसमितिद्वारा प्रतिमासं प्रकाश्यमानः किञ्जवडेकरोपनामकाभ्यां मीमांसकशिरोमणिवामनशास्त्रिदीक्षितरामचन्द्र-शास्त्रिभ्यां संपाद्यमानः सोऽयं प्रकाशो नियतमेव कलिकालजलदपटलसमाच्छन्नं मीमांसासुधाकरं पुनरपि सर्वजननयनातिथिं विधत्ते आङ्गलभाषया संस्कृतभाषया चेतिहासधर्मशास्त्रवेदवेदान्तमीमांसाशास्त्रनिबन्धान् परमसुन्दरैर्विशुद्धैश्चाक्षरैः संमुद्रय सर्वसज्जनानां सेवायामुपायनीकुर्वन् सोऽयं मीमांसाप्रकाशः कियतीं वा श्लाघां नार्हति। एवंविध आङ्गलभाषाव्यवहारबहुले काल एतादृशस्य पत्रस्य प्रतीयतेस्म महत्यावश्यकता। तामिमामावश्यकतां पूरयन्नयं सर्वैर्जनैरभिनन्द-नीयोऽनुग्राह्यश्चेति वयं सविनयं प्रार्थयामहे"[1] इतीयं सूचना समुपलब्धा तथैव श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिकायामप्युपलभ्यते[2]। वार्षिकं मूल्यं पञ्चरूप्यकमासीत्। मीमांसाशास्त्रोद्धारार्थं पत्रमिदं समुद्दिष्टं प्रतिभाति।

## ग्वालियरसंस्कृतग्रन्थमाला

ग्रन्थमालेयं १९३६ ई० तमे खिस्ते ग्वालियरपुरीतः प्रकाशिता। प्रथमाऽऽदर्शसंख्या प्रकाशिता। प्रकाशितायामादर्शसंख्यायामतिदुर्लभानामद्यावध्यप्रकाशितानां प्रकाशितानामपीदानीं दुर्लभानां विशेषतश्चोपयुक्तानां ग्रन्थानां विशुद्धतया प्रकाशनमभवत्। उद्देश्यञ्चास्याः मालायाः त्विदं यैः परमपुरुष-महापुरुषादिप्रणीतैर्वर्णाश्रमोपकारकैः सुप्रसिद्धैर्वेदवेदाङ्गश्रौतस्मार्तधर्मशास्त्र-दर्शनादिभिरार्यसंस्कृतेः संरक्षणं, आस्तिकदर्शनानान्तत्त्वाविष्कारः धर्मादितत्त्व-

१. संस्कृतरत्नाकर ५.२ पृ० ५१.
२. श्रीमन्महाराजसंस्कृतमहापाठशाला पत्रिका १३.३

निर्णयः, पूर्वपुरुषाणां यशः, श्रीमतो ग्वालियरनरेशस्य च कीर्तिप्रसरः एवमपरेऽप्यानुषंगिकानेकविधाः सद्विषयसमूहाश्च सम्पद्येरन्, आसीत्। प्रतिवर्षमस्या ग्वालियरसंस्कृतग्रन्थमालाया उपत्रिंशतपृष्ठात्मकं कुसुमं विकसितं तन्मूल्यं न मुद्रापंचकादधिकं नासीत्। प्राचीनयैव रीत्या प्राचीनधर्मशास्त्रग्रन्थाः पूर्वमीमांसाग्रन्थाश्च प्रकाश्यन्तेस्म। चिकीर्षा एषा तु राजाश्रितसदाशिवशास्त्रिमुसलगाँवकरस्य धर्मशास्त्राचार्यस्यासीत्। एषा तु पत्रिका पत्रिकारूपेणासीदियं तु ग्रन्थमात्रेव। तथापि प्रयत्नोऽयं श्लाघ्यतरः। प्राचीनहस्तलिखितपुस्तकानां प्रकाशनेन पत्रिकाक्षेत्रे गणितेयं ग्रन्थमाला काव्यमालापत्रिकावदासीत्। स्मृति-ज्योतिषादिविषयका ग्रन्था अपि प्रकाशिताः आदर्शाङ्के आभारप्रदर्शनपूर्वकं श्लोकः प्रकाशितः—

> श्रीमज्जिवाजि-नृपतेरधिकारमोदे
> ग्रन्थावलेरुपहरामि दलं सुमस्य।
> सिन्देनृपाल-कृपया विविधाः पुराण-
> ग्रन्थाः प्रकाशपदमत्रालभन्त।

### भारतीयविद्या

१९३८ ई० तमे वर्षे 'भारतीय विद्या' नाम्नी त्रैमासिकी पत्रिका बम्बई नगरीतः प्रकाशिता। पत्रिकेयमद्यापि प्रकाश्यते तस्मात् स्थलात्। भारतीयसंस्कृतिविषयप्रधाना पत्रिकेयं पूर्वमासीत् अधुना च सर्वथा संस्कृतसमाचारप्रधाना संजाता।

१९३९ ई०-१९४२ वर्षपर्यन्तं त्रैमासिकी १९४३-४४ अर्धवार्षिकी, १९४५-१९४६ यावत् मासिकी, पश्चात्त्रैमासिकी (१९५४) पुनरपि वार्षिकी बहुरूपा परिवर्तनशीलाऽऽसीत्पत्रिकेयम्।

'भारतीयविद्या' गवेषणा-पत्रिका आसीत्। तत्र भारतीयविद्याविषयेषु विद्वत्तापूर्णरचनाभिः सह संस्कृतहस्तलिखितग्रन्थानां समालोचनात्मिकाः टिप्पण्यः प्रकाश्यन्ते" किमियं 'भारतीयविद्या' भारतीयविद्याभवनबुलेटिनतः

व्यतिरिक्ता वा न वा न जाने[1] प्रश्नोऽयं समूलमस्ति। भारतीयविद्याभवन-बुलिटेनपत्रिकायाः पुरीनगरस्य अधिवेशनाङ्के सूचनेयमस्ति यदैषा त्रैमासिकी पत्रिका १९४९ ई० जानुयारीमासस्य प्रथमदिनाङ्के प्रकाशिता परञ्च 'भारतीय-विद्या' १९३९ ई० नवम्बरमासे प्रकाशिताऽऽसीत्। अत एव तार्किकरीत्या 'भारतीयविद्या' पत्रिका शोधप्रधाना 'भारतीयविद्याभवनबुलेटिनपत्रिकातः व्यतिरिक्ता। द्वितीयं कारणमप्यस्ति यद्भारतीयविद्याभवनसंस्थायाः स्थापना १९३९ ई० तमे वर्षेऽभवदित्यशङ्कम्[2]

तस्याः संस्थायाः 'भारतीयविद्यायाः शोधप्रधानायाः संस्कृतत्रैमासिकी पत्रिकाया अपि किं प्रकाशनमभवदिति सम्यक् न जाने। प्रयत्नेनापि तत्रस्थित-महाभागानामनुकम्पापात्रं नाहम वद्यावधि। तदधिकृत्य सूचनयाऽनुग्रह-णीयोऽस्मि समर्थविद्वद्भिः।

## ज्योतिष्मती

१९३९ ई० तमे वर्षे वाराणसीतः 'ज्योतिष्मती मासिकी पत्रिका प्रका-शिता। सर्वतन्त्रस्वतन्त्र श्रीमहादेवशास्त्रि-कवितार्किक-चक्रवर्तिमहोदयः पत्रि-कायाः प्रधानसम्पादकश्चासीत्। बलदेवप्रसादमिश्र-श्री जितेन्द्रियाचार्यश्च सम्पादकौ आस्ताम्। बलदेवप्रसाद मिश्रमहाभागे पंचत्वं गते सति तस्य भ्राता श्रीमाधवप्रसादमिश्रः सम्पादकोऽभवत्। पत्रिकेयं 'ज्योतिष्मती कार्यालय-मानमन्दिर काशीतः प्रकाशिता। प्राप्तिस्थानं ११, रानीभवानी गली, बनारस सिटी' इत्यासीत्। वार्षिकं मूल्यं सार्धरूप्यकं प्रत्यङ्कस्य द्वे आणके आस्तां च। किञ्चित्कालं पत्रिकेयं १५, सकरकन्दगली काशीतः प्रकाश्यतेस्म। पत्रिकेयं मांगलमासस्य पञ्चमतारिकायां प्रकाशिता।

संस्कृतवाङ्मये परमरमणीया सरला सचित्रा मासिकपत्रिकैषा वस्तुतः हास्य-प्रधाना आसीत्। अद्यावधि प्रकाशितानां काऽपि पत्र-पत्रिका नास्ति

1. National, Library India Catalogue of Periodicals, News papers and Gazettes. P. 133.
2. Bharatiya Vidya Bhavan Bulletin, June 1959.

यस्यां हास्यप्रधाना सामग्री प्रचुरमात्रं प्रकाश्यतेस्म। कतिपयाङ्केषु केवलं हास्यप्रधाना सामग्री प्राप्यते। होलिकाङ्कः विशेषाङ्कः प्रकाशितः। परन्त्वश्लील श्लोकानां रचनानां वा प्रकाशनं तत्राशोभनमासीत्। संस्कृतवाङ्मये एतादृशी रचना नादरणीयाऽस्मिन्युगे। होलिकाङ्केऽश्लीलतायाः चरमदर्शनं जातं कल्पितनामधारिणः श्रीभुजङ्गभूषणमहाशयस्य सम्पादकत्वे। यद्यपि श्यामानन्द झा महोदयस्य मण्डूकसम्मेलनम्' विशिष्टहास्यप्रधानमतीवरमणीयं च वर्तते तथापि अन्याः रचना; निकृष्टतमाः।

श्रीचिन्नस्वामिशास्त्रि-जगन्नाथशर्मवाजपेयि-यदुनारायण उपाध्याय-सूर्यनारायण शुक्ल-पी० यन्० पट्टाभिरामशास्त्रि-दीनानाथशर्मसारस्वत-महादेवशास्त्रि-मथुरानाथशास्त्रि-अयोध्यानाथशास्त्रि-श्रीकर - श्रीप्रभातमिश्र-केदारनाथत्रिपाठि-परमानन्दशास्त्रि-शकुन्तलादेवि-महावीरज्योषि-चिकोटानन्द विश्वेश्वराचार्य-जानकीवल्लभ शर्म-गोविन्दशास्त्रि नारायणयतित्रिपाठि-बालकृष्णमिश्रादीनां रचनाः प्रकाशिताः पत्रिकायाम्।

सर्वेष्वङ्केषु 'विनोदविन्दवः[१]' प्रकाशिताः। दम्भविजयं चायस्तोत्रं, विप्रताः' हास्यप्रधाना उपदेशप्रधाना व्यंग्ययुता विनोदविन्दवः सन्ति यथा—

'मधुरभोजनपानपरायणे
सततचन्दनचर्चितमस्तके।
विधिनिषेधपराङ्मुखदेहिनि
द्विजतमे वद का तव विप्रता ॥१॥

कतिपयगीतयः अतीव हृदयङ्कषा मनोहराऽलङ्कारभूषिताश्च सन्ति यथा—

'माधवी मधुरो मधुरायाति।
शिशिरमथितकोमल-कलिका
कुलमपि विकासमुपयाति। मा०।

---

१. ज्योतिष्मती १.१०

मञ्जुल-वञ्जुल-कञ्ज-निकुञ्जे,
मधुरमोहने मधुकरगुञ्जे,
शालिरसालमञ्जरीपुञ्जे,
विविधा विभा विभाति।
माधवी मधुरो मधुरायाति।

मोहनिद्रा ( केदारनाथ त्रिपाठी ) बुभुक्षितः शिशुः ( पट्टाभिरामशास्त्री) पूर्णिमा ( चिक्रोटानन्द ) इत्येताः सरसाः कथानिकाः प्रकाशिताः। हृदयं वर्जयितुं रुचिं प्रवर्धयितुं चान्याः कथाः सन्ति। अयोध्यानाथशास्त्रि सान्याल-महाभागस्य 'महिला-स्वातन्त्र्ये'[1] निबन्धे आधुनिकयुगस्य परिप्रेक्षणं भवति। काऽधुना दैनिकी व्यवस्था, कथं दम्पती निवसतः इत्यादीनां प्रत्यक्षं रुचिकरं सत्यं च वर्णनमस्ति। 'समालोचनसामयिके' शीर्षके तात्कालिकवृत्तान्तानां दर्शनं भवति। 'विचारवीथीतिं वीथ्यां समारोहाणां सूचना, धार्मिकतिथीनां गणना भवतिस्म। 'संस्मरणे' दिवंगतानां विदुषां चरित्राणि चित्रितानि। गवेषणाप्रधानाः निबन्धा अपि प्रकाश्यन्तेस्म। महाभारतकालिकं भारतवर्षं सृष्टिवैलक्षण्यम्—वीरशान्तयोः उत्कर्षापकर्षविमर्शः— इत्येते प्रधानाः।

ज्योतिष्मती युगधर्मपक्षपातिनी पत्रिकाऽऽसीत्। अस्यां राजनीतिकाः सामाजिकाः ऐतिहासिकाः धार्मिकाः साहित्यिकाः स्त्रीबालकच्छात्रोपयोगिन्यः रचनाः प्रकाश्यन्तेस्म। भारतवर्षे तात्कालिकोत्पन्नान्दोलनादीनामपि चर्चा पत्रिकायामस्ति। श्रीकरस्य तादृश्यो गीतयः प्रकाशिताः यासूद्बोधनं प्राप्यते। तस्यकामना तु—

'स्वराज्यसिद्धिमपहा-
यान्यन्न कामयेऽहम्'[2]

सर्वविधसंस्कृतजनोपयोगिनी समयोपयोगिनी पत्रिका तृतीयवर्षे एव अस्तं गता। ज्योतिष्मती विलीना तमोनिकरे।

१. ज्योतिष्मती ७.६
२. ज्योतिष्मती ३।१.

ज्योतिष्मतीपत्रिकायाः ग्राहका अत्यल्पा आसन् । यथा—

'आज इस अखिल विश्व में फैले संस्कृत समाज को देखते हुए यह कटु सत्य है कि ज्योतिष्मती की जो ग्राहक संख्या हमारे सामने है, वह नहीं के समान नहीं अपितु शून्य है—तथापि ज्योतिष्मती ने इन सभी महान् कठिन परिस्थितियों का सामना किया है और करेगी। इन आपत्तियों से न कभी वह विचलित हुई है न होगी।'[1]

मदनमोहनमालवीयोऽपि पत्रिकायाः प्रशंसां कृतवान्, आशीर्वचनैः तां प्रोत्साहितवांश्च ।

### शंकरगुरुकुलपत्रिका

१९३९ ई० तमे वर्षे त्रैमासिकी 'शंकरगुरुकुलपत्रिका प्रकाशिता। गुरुभक्तशिरोमणिशास्त्रप्रसारभूषणोपाधिधारिणः टी० के० बालसुब्रह्मण्य आयंगरमहाभागाः सम्पादका आसन्। साहित्यिकनिर्देशकारः विद्यासागरः विद्यावाचस्पतिः, पी० पी० सुब्रह्मण्य शास्त्री आसीत्। पत्रिकेयं श्रीरङ्गम् (श्रीरङ्गपट्टम्) पुरीतः प्रकाशिता। वार्षिकं मूल्यमासीत् षड्रूप्यकाणि।

'शंकरगुरुकुलपत्रिका खल्वियं विविधविषयालंकृता। अत्र हि अतिदिव्यकाव्यग्रन्थानां, केनाप्यचुम्बितपूर्वाणां चम्पूग्रन्थानां नवविधरसरत्नपेटिकायमानानां नाटकप्रबन्धानामसंस्तुतपूर्वाणामतिप्रशस्तशास्त्रप्रबन्धानाम्, अनाकर्णितपूर्वेषां विद्वदुपन्यासानां, विविधवृत्तान्तविशेषाणां च समावेशनान्नूनमियं पत्रिका रत्नाकरस्थलीव प्रभूततरग्रन्थरत्नसमावेशभूमिश्च काश्यतेस्म। पत्रदौर्लभ्येऽपि तस्मिन् समये सुचिक्कणमसृणे पत्रे सर्वाङ्गसौष्ठवेन पत्रिकाया अस्या बहिराविष्करणमप्यतीवमनोज्ञं कलापूर्णं चाभवत्। नूतनविषयरत्नावलीपरिष्कृता अतिमधुरशब्दसन्दर्भसमावर्जितसज्जनहृदया बाह्याभ्यन्तरविविधालंकारभासुरा अतिस्फुटरमणीयतरवर्णविशेषा अतिगम्भीरहृदया समुल्लासिततात्का-

---

१. ज्योतिष्मती १-६।

१. श्रीमन्महाराजसंस्कृतपाठशालापत्रिका १५।३

लिककविकोकिलानां चेतांसि सहृदयजनहृदयहारा सर्वाङ्गसुन्दरी चेयं पत्रिका रसिकजनस्य प्रमोदमादधितमानसमानन्दरसपरिप्लुतं च व्यतनोत्।

श्रीमन्महाराजसंस्कृतपाठशालापत्रिकायाः प्रबन्धनिकषे श्रीशंकरगुरुकुल-पत्रिकायाः प्रथमसञ्चिकायाः समालोचनेदृशी वर्तते—

'प्राक्तनैः पण्डितरूपैः प्रणीतानां प्रबन्धानां लुप्तप्रायाणां लुप्तानां च प्रचारणार्थमेषा सुरभाषामयी मासपत्रिका जनिमुपागता। अस्याश्च सम्पादकः श्रीमान् बालसुब्रह्मण्यार्यमहाभाग इतः पूर्वमेव श्रीशङ्करग्रन्थावलिमुद्रणादिना दार्शनिके जगति चिरपरिचितो विराजते। सहकारी चास्य समुचिताधिकारं प्राप्तः श्री पि० पि० सुब्रह्मण्यशास्त्रिमहोदय इति हेम्नः परमामोदः। लेखकाश्च श्रीश्रीमत्परमहंसेत्यादि विरुदभूषिताः चन्द्रशेखरभारतीस्वामिनः, श्रीश्रीसच्चिदानन्दतीर्थस्वामिनः, कल्याणपुरीशंकरपाठशालाध्यक्षाः श्रीवेङ्कटेशशास्त्रिण इति न खलु किमपि पश्यामो न्यूनतानिदानम्। शोधनविषये च महती श्रद्धा समादृतेति सन्तोषेण पुनर्वदामः।

प्रथमसञ्चिकायां'.....शृङ्गेरीमठाधिपतिभिरनुगृहीता 'मीनाक्षीस्तुतिः' मृदुमधुरपदसन्दोहसन्दर्भगर्भा गम्भीरभावभासुरा च परिणतपण्डितानां कवीनां च हृदयानि समावर्जयति।

'शान्तिपारम्यमीमांसा'ख्यस्समुचितो लेखः नैरपृह्यतदभावाभ्यां प्राक्तनाधुनातनयो सूक्ष्मेक्षिकया वैलक्षण्यसमीक्षणपूर्वकं भारतीयदार्शनिकानां जीवातुभूता शान्तिरेव परमगरीयसीति चरमरमणीयशैल्या निरूपयति।

अथान्यः 'सर्वदर्शनानामद्वैतानुगुणत्व'मिति विषयः विबुधवरवेङ्कटेशशास्त्रिमहाभागेन नैकतन्त्रसमालोचनसहकारं विरचितः दर्शनरसिकानां समालोचने कौतूहलमुत्पादयति।'

पत्रिका चैषा पूर्वोत्तरमीमांसानाटककाव्य-चम्प्वादिसुदुर्लभप्राचीनप्रबन्धप्रकाशनपरायणा नूतनविमर्शवेदिकाधारिणी भूत्वा चिरं प्रकाशिता।

पत्रिकेयं द्विविभागे विभजिताऽऽसीत्। प्रथमे विभागे तात्कालिकविकलेखकानां रचना स्थानं लब्धवती, द्वितीये विभागेऽप्रकाशितानां दुर्लभानां

प्राचीनसंस्कृतग्रन्थानां प्रकाशनं सततं क्रियतेस्म। शतादप्यधिकपृष्ठयुतायां पत्रिकायां बहवः काव्यग्रन्थाः प्रकाशमानीताः।

बालभारत (अगस्तपण्डित) शारीरिकमीमांसाशास्त्रम्-सौन्दर्यलहरी-श्रीकामिणीपरिणयः (शालिपाटीपूरस्थ पी॰ एस॰ सुब्रह्मण्य) इत्येते पद्य-काव्य-ग्रन्थाः, श्रीगद्यरामचरितम्—(के॰ यस्॰ कृष्णमूर्ति, मदुरा) गद्यग्रन्थः, कमला-विजयं-समञ्जससनातनं-जीवन्मुक्ति-कल्याणं—(श्रीनीलाध्वरि) इत्येते नाट्य-ग्रन्थाः, कुमार-संभवचम्पूः-मदकन्यापरिणयचम्पूः-(गङ्गाधरकवेः) चम्पूग्रन्थाः, मीनाक्षीस्तुतिः-श्रीहरिहरस्तुतिः-कपिलेश्वरस्तुतिः— स्तुतयः, तथा च अनेकानि अष्टकानि प्रकाशितानि। रामेश्वरमखीमहोदयस्य 'हरिहरतारतम्य-शतकं प्रशंसनीयम्। पञ्चरत्नकारिका[1], नयमञ्जरी[2] चेति द्वौ टीकाग्रन्थौ प्रकाशितौ।

शारीरकमीमांसाशास्त्रे ब्रह्मसूत्रस्य एकैकं सूत्रमधिकृत्य बहवः श्लोकाः विरचिताः। यथा 'अथातो ब्रह्मजिज्ञासा' इति सूत्रं समाश्रित्य—

> जिज्ञास्यं परमं वदन्ति विबुधा ब्रह्माद्वितीयात्मकं
> शिष्यान्साधनजालशुद्धसुमतीन् भक्त्या समेतान्प्रति।
> प्रत्यग्बोधसुखात्मकं तममृतं संशान्तविश्वात्मकं
> मीनाक्ष्या शिवया समेतमुमया श्रीसुन्दरेशं भजे॥

चन्द्रशेखरभारती—सच्चिदानन्दतीर्थ-स्वामिवेङ्कटेशशास्त्रि-सदाशिव-घनश्याम-पण्डित—श्रीनिवासकवि—अगस्तपण्डित—आर॰ कृष्णस्वामि—के॰ यस॰ कृष्ण-मूर्ति शर्मा—रामेश्वरमखी—रामानन्द—सरस्वती—पी॰ जी॰ सुन्दरस्वामि—राज-गोपालस्वामि—गङ्गाधरकवि—श्रीनीलाध्वरि—वंचेश्वरकवि इत्यादिमहापण्डितानां

1. A poetic commentary on the Upadeśapañchaka of Shri Śankar Bhagavatpāda by Shri Sadashiv.

2. A poetic commentary on the Brahmsutra by Shri Appaya Dikshit

परिपक्वबुद्धीनां सञ्जातवितण्डदूरीकरणसमर्थानां प्रथितकीर्त्तीनां विद्वद्वराणां रचनाः प्रकाश्यन्तेस्म।

पत्रिका संस्कृतसाहित्ये कतिपयनूतनविधाः प्रचलिताः। प्रभातकालीनस्य बालारुणस्य चित्रमतीव सुन्दरं द्वितीयपृष्ठे स्थानं लभतेस्म। पत्रिकेयं बहुविधचर्चिता भावार्थभूषिता ज्ञानविज्ञानसहिता दर्शनप्रधानाऽऽसीत्।

**सन्देशः**

१९४० ई० तमे वर्षे रामबालकशास्त्रिमहोदयस्य सम्पादकत्वे 'सन्देशकार्यालय रामापुरा काशी'तः 'संदेशः' इति नाम्ना मासिकं पत्रं प्रकाशितम्। पत्रास्यास्य विषये लिखितं विद्यते तत्र—

"It is a monthly Sanskrit Periodical. The language is simple and the style is lucid. The subject with which it deals is of common interest. Even a high school student with Sanskrit can very easily understand appreciate the articles."

पत्रस्य भाषाऽतीव सरला बालबोधनीयासीत्। समाजे प्राप्तबलानां दुर्व्यवहाराणां विषमस्थितीनां वा विरोध अस्मिन् पत्रे दृश्यते। सामाजिककुरीतीनां सम्यक् दिग्दर्शनं तत्तत्सुधारनिर्देशानामपि प्रकाशनं निबन्धद्वारेणाभवत्। कदापि नाटकादीनां प्रकाशनमनेनैव कारणेन न क्रियतेस्म। समाजसुधार-क्षेत्रविषयेऽस्य पत्रस्य महत्त्वपूर्णो योगः स्थानं च विद्येते। तात्कालिकवृत्तान्ताः मनोविनोदसरण्या निबद्धाः। निबन्धानां बाहुल्यं दरीदृश्यते।

श्रीराजेश्वरशास्त्रि द्राविड–देवनायकाचार्य–हरिरामशास्त्रि–रामेश्वरभा–प्रभातमिश्र–करपात्रि–गणपतिशर्म–विजयानन्दत्रिपाठि–सीतारामचतुर्वेद–दूधनाथ शुक्ल–नीलकण्ठशिवाचार्यादीनां निबन्धाः प्रकाशिताः। प्रभातमिश्रसरसकवेः कतिपयगीतयः प्रकाश्यन्तेस्म। सीताराम चतुर्वेदमहाशयस्य 'मङ्गलप्रभातं' लघुनाटकं प्रकाशितम्।

पत्रस्यास्य वार्षिकं मूल्यं द्विरूप्यकं छात्रेभ्यो रूप्यकमेकमासीत्। पत्रमिद-मतीव लघ्वाकारं वर्तते। अस्य पत्रस्य समाजे सम्मानः आसीद् तथापि काऽपि विशेषता न दृश्यते। सम्पादक-महाभागस्य सम्पादकीयमपि नास्ति गम्भीरम्। सम्पादकमहाभागस्तु साम्प्रतमुच्चतरमाध्यमिकशालायां संस्कृताध्यापकोऽस्ति। आर्थिकस्थितिः दुरावस्थाऽसन्तोषजनका चासीत्। तृतीयवर्षात् पूर्वमेवास्य प्रकाशनं स्थगितम्।

सामान्यसमाचाराणामपि तत्र प्रकाशनमभवत्। शिक्षासुधारवर्णव्यवस्था—इति द्वौ प्रधानौ विषयौ आस्ताम्। पत्रस्य मुखपृष्ठे वीणाधारिण्या मयूरवा-हिन्याःसरस्वतो देव्याश्चित्रमधोलिखितश्लोकपूर्वकं सर्वेष्वङ्केषु वर्तते—

'डिम्भानुत्सुकयन् शिशूंश्चटुलयन् यूनः समासादयन्
प्रौढानुन्नमयन् विदः प्रबलयन् वर्षीयसो हर्षयन्।
विद्वेषं तिरयन् दिशो मुखरयन् हर्षं परवर्षयन्
वाग्देवीं मदयन् सुधामधरयन् 'सन्देश' उज्जृम्भते॥

## संस्कृत सञ्जीवनम्

१६४० ई० खिस्ते 'बिहारसंस्कृत-सञ्जीवनसमाजस्य मुखपत्ररूपेण मासिक-रीत्या पटना—४ स्थानात् संस्कृतसञ्जीवनम्' नामकं पत्रं प्रकाशितम्। यद्यपि पत्रमिदं त्रयोविंशतिवर्षपुरातनं यथाकिल आवरणपृष्ठात् ज्ञायते तथाप्य-स्माभिस्त्वस्य दर्शनं प्रथमवारमेव कृतम्। अस्य पत्रस्यायं जुलाई १६६२ अङ्कोऽस्माकं समक्षं वर्तते। विषयाः गम्भीराः सामयिकाश्चापि केचन।

संस्कृतशिक्षाप्रणालीसुधारार्थं नूतनशिक्षाप्रसारार्थं च श्रीमदम्बिकादत्त-व्यास-महाभागेन (१८५८-१६००) बिहारप्रदेशे 'संस्कृतसञ्जीविन-समाजस्य स्थापना महता प्रयासेन कृता। तां सफलयितुं सञ्जीवयितुं चासौ निरन्तरं प्रायतत्। समाजस्य स्थापना १८८७ खीस्टाब्देऽभवत् यथा 'संस्कृतसञ्जीवनस्य पत्रस्यावरणपृष्ठे समुल्लिखितमस्ति। परञ्च पत्रमिदं निश्चितरूपेण कदा प्रकाशितमिति न ज्ञातमेव। प्रयत्नेनापि प्राचीनाङ्काः नोपलब्धा मया तत्तु शोचनीयमेव।

अस्य पत्रस्य सम्पादकमण्डले पण्डितकेदारनाथ ओझा–पं० भवानीदत्त-शर्म–चन्दकान्तपाण्डेय–त्रिगुणानन्द शुक्ल–रामपदार्थशर्म–हवलदार त्रिपाठि सहृदय–जटाशंकरझा–जगन्नारायणपाण्डेय 'विधुर' महाभागाः वर्तन्ते। डा० नागेन्द्रपतित्रिपाठी पत्रस्य प्रकाशकः। 'बिहारसंस्कृतसञ्जीवन समाज, वारीपथ, पटना—४, इति प्राप्तिस्थानमस्ति। वार्षिकं मूल्यं षड्रूप्यकाणि एकस्याङ्कस्य पञ्चाशत् नवपणाः। संस्कृतभाषायाः भारतीयसंस्कृतेः संस्कृतवाङ्मयस्य च प्रचारः प्रसारश्चास्य पत्रस्योद्देश्यमस्ति। मासिकपत्रमिदं प्रतिमासमाङ्ग्लमासस्य प्रथमतारिकायां प्रकाश्यते। पत्रे प्रकाशितानां रचनानां कृते लेखकेभ्यो यथा-योग्यं पारितोषिकमपि दीयते इति नियमावली-विभागतः ज्ञायते। कस्य सम्पाद-कीयमस्ति इत्यविवेचनीयम्। तथापि सम्पादकीये जागरुकता नवीनता च दृश्येते।

पत्रमिदं परमरमणीयाकारेण प्रकाश्यते। 'भारतस्य प्रतिष्ठे द्वे संस्कृतं खलु संस्कृतिः' इत्यमुद्घोष्य तदधस्तात् नटवर-लीलावपुषस्य श्रीकृष्णस्य चित्रं वर्तते, अधस्तात् श्रीजवाहरलालनेहरूमहाभागस्य संस्कृते न केवलमुच्चतमविचार स्याभिव्यक्तिः साहित्यसौन्दर्यञ्च, परं राजनीतिक-विभाजनेष्वपीदं भारतस्य सङ्घटनकारकं तत्त्वं बिभर्ति' इति वाक्यमञ्जूषाऽस्ति।

श्री श्रुतिदेवशास्त्रि–अणिमासेन गुप्ता–डा० ईश्वरदत्त–रामकिशोरझा-कामेश्वरशर्म 'नयन'—भवानीदत्तशर्म–चन्द्रदेव–रङ्गेशनाथमिश्र 'मधुरेश'-आद्याचरण–मदनमोहनसहाय–कविशेखर–बदरीनाथ झा-डा० भुवनेश्वनाथ मिश्र 'माधव'–इत्यादीनां कविलेखकानां कृतीनां प्रकाशनं पत्रेऽस्ति। श्रीश्रुति-देव शास्त्रिप्रवरस्य 'पृथ्वीराजनाटकं' प्रकाश्यते। प्रारम्भे 'भागलपुरमण्डला-न्तर्गतमहादेवपुराभिजनस्य लवपुरमधिवसतः तरुणकवेः श्रुतिदेवशर्मणः ग्रथितवस्तुकं वीररसप्रधानमभिनवं नाटकमिदम्।[1] सामान्यतया पत्रेऽस्मिन् सर्व-विषयसम्बन्धिनः निबन्धाः प्रकाश्यन्ते। पत्रस्यास्य प्रगतिः दृश्यते। गवे-षणाप्रधानाः कतिपयनिबन्धाः प्रकाशिताः सन्ति। हितोपदेशार्थाः कथाश्च

१. संस्कृत सञ्जीवनम् २२·१

प्रकाशिता: । श्रीविश्वनाथमिश्रस्य 'अस्थाने नियोग:' इति कथा सरसा सरला-स्ति ।[1] हिमनोजादर्शने बन्धमोहकारणं—वायुपुराणस्य भारतीयभूगोल:—वासुदेवतत्त्वनिरूपणमिति निबन्धा: प्रौढा: । कतिपयरसभाववतीगीततत्तय: जगन्मनांसि हरन्ति । पत्रस्यास्य प्रहारो प्रचारश्च भवतु इति विदुषां कामना ।

## संस्कृतभाषामिश्रिता पत्र-पत्रिका:

संस्कृतभाषामिश्रितानां पत्र-पत्रिकाणां संख्या न न्यूनतमा । अनेन संस्कृतभाषाया: सर्वाधिकप्रियत्वं प्रतीयते । संस्कृतभाषामिश्रितासु पत्र-पत्रिकासु यदा-कदाचित् नूतनसामग्री समुपलभ्यते । तासु विविधपत्र-पत्रिकासु नूतन-लेखकानां कृते महत् स्थानं वर्तते । विद्यालय-विश्वविद्यालयादि सम्बन्धितासु पत्र-पत्रिकासु एवंविधा सामग्री तथा च नूतनरचना अपि प्राप्यन्ते । संस्कृत-वाङ्मस्य प्रकाशनमपि एतादृश्यां पत्र-पत्रिकायां भवतिस्म एव ।

१९३४ ई० खिस्ते कुप्पुस्वामि-शास्त्रिप्रवरस्य सम्पादकत्वे 'दि जर्नल आफ ओरियन्टल रिसर्च मद्रास'[2] इति नाम्ना मद्रासत: त्रैमासिकं पत्रं प्रकाशितम् । पत्रेऽस्मिन् शोधनिबन्धानां प्राचुर्यमप्रकाशितग्रन्थानां प्रकाशनमनिर्णीतपूर्वेषां कवीनां ग्रन्थानां च कालादि-निर्धारणं कृतम् । पत्रमिदमांगलसंस्कृतभाषा-त्मकमासीत् ।

तस्मिन्नेव वर्षे 'इर्नाकुलमिति Ernakulam) स्थानत: 'गर्वन्मेट ला कालेज मैगजीन[3]' इति नाम्ना प्रकाशिता । वार्षिकी पत्रिकैषा पञ्चभाषात्मिका (इंगलिश-मलयालम-संस्कृत-हिन्दी-तेलगू) प्रादुरभवत् । नागपुरत: 'एस० बी० सिटी कालेज मैगजीन'[4] वार्षिकी पत्रिका इंगलिश-हिन्दी-मराठी-संस्कृत-भाषायुता १९३४ ई० तमे वर्षे प्रकाशिता ।

---

१. संस्कृत सञ्जीवनम् २३·३
2. The Journal of Oriental Research Madras.
3. Government Law College Magazine.
4. S. B. City College Magazine.

१६३५ ई० तमे वर्षे 'लेडी विलिंग्टन कालेज मैगजीन' मद्रासतः प्रकाशिता। पत्रिकेयं पञ्चभाषामिश्रिता (इंगलिश-संस्कृत-तामिल-तेलगू-हिन्दी) आसीत्।

**पारिजातः**

अर्धवार्षिकीयं पत्रिका कटकतः १६३६ तमे वर्षे प्रकाशिता। पत्रिकेयं ओरिया-संकृत-हिन्दी-इंगलिश-बंगाली-भाषायां प्रकाश्यतेस्म।

**दिवाकरः**

१६३६ ई० खिस्ते साप्ताहिकमिदं पत्रं हिन्दी-संस्कृतभाषयोः प्रकाशितम्। पत्रमिदं प्रतिसोमवारं प्रकाश्यतेस्म। अस्य सम्पादकः श्री पण्डितप्रवरो विष्णुदत्तशास्त्री साहित्याचार्य एम० ए० विरुधदारी वर्ततेस्म। अस्मिन्पत्रे वैदिकवाङ्मयस्य प्रचुरा लेखाः प्रकाश्यन्तेस्म। वार्षिकं मूल्यं सार्धद्विरूप्यकमासीत्। कालिन्दीसंस्कृतमासिकपत्रिकायाः सम्पादकः श्रीहरिदत्तशास्त्रिमहोदयः सम्पादकोऽभवत्। आगरातः पत्रमिदं प्रकाश्यतेस्म। समाचारप्रधानं पत्रमिदं सरलसंस्कृतभाषात्मकं प्रकाशितम्।

१६३६ तमे वर्षे 'पूना ओरियन्टलिष्ट'[1] नामकं पत्रं पूनातः प्रकाशितम्। पत्रमिदं त्रैमासिकरीत्या साम्प्रतमपि प्रकाश्यते। गम्भीराः निबन्धा यदा कदा स्थानं लभन्ते। संस्कृताङ्गलभाषाप्रधानं पत्रमिदमस्ति। दशरूप्यकाणि वार्षिकं मूल्यम्।

**ब्रह्मविद्या The Adyar Library Bulletin**

पत्रिकैषा १६३७ ई० तमे खिस्ते मद्रासतः प्रकाशिता। पत्रिकेयं सोपन्यासा प्रौढनिबन्धयुता अस्ति। प्रथमे विभागे आंग्लभाषायां निबन्धाः सन्ति द्वितीये विभागे प्राचीनार्वाचीनसंस्कृतग्रन्थानां प्रकाशनं क्रियते। वार्षिकं मूल्यम् अष्टरूप्यकाणि। इयं अड्यार लाइब्रेरी मद्रास-२०' स्थानतः लभ्या अस्ति। अविरतरीत्या अद्यापि पत्रिकेयं प्रचरति। त्रैमासिकपत्रिकायां धर्मदर्शनादिविषयसम्बन्धिनश्च निबन्धाः प्रकाश्यन्ते। उद्देश्यं तु—

1. Poona Orientalist.

Its aim is a clear presentation of the main aspects of India's, traditional Culture and its relation to the other civilizations of the world'' It publishes translations of Sanskrit texts, and studies on religion, Philosophy, and the different aspectes of Sanskrit and other ancient Indian literature.

एन श्रीराम शर्म–वी० राघवन् के० कुन्जुन्नी राजा–ए० कीर० इत्येते अस्याः पत्रिकायाः सम्पादकाः। भारतीयविदुषां दिगन्तविश्रान्तकीर्तीनां लेखाः प्रकाश्यन्ते। विशेषतः पत्रिकायामनुवादाः संस्कृतग्रथाश्चैव स्थानं संस्कृत-विभागे लभ्यन्ते। अनेके विलुप्तप्रायाणां संस्कृतग्रन्थानां प्रकाशनमभवत् तत्र। प्रारम्भिक-कतिपयाङ्केषु श्लोकोऽयं प्राप्यते—

तस्मै स विद्वानुपसन्नाय सम्यक्
प्रशान्तचित्ताय समन्विताय।
येनाक्षरं पुरुषं वेद सत्यं
प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्॥

अस्मिन्नेव वर्षे टेरीसियन[1] नामकं पत्रं अर्नाकुलतः इंगलिश–फ्रेन्च–मलयालम्–संस्कृतभाषासु प्रकाशितम्। पत्रेऽस्मिन् 'केरलप्रदेशस्य नैसर्गिक-शोभाप्राप्तानां स्थलानामतीव सुन्दरं वर्णनं प्राप्यते।

**अमृतसन्देशः** The Immortal Message.

संस्कृताङ्गलभाषयोः सम्मिश्रितं पत्रमिदं १६३८ ई० तमे वर्षे विजयवाडतः (विजयवाड़ा) प्रकाशितम्। श्री तिरुमल श्रीनिवास त्रिलिंग महाविद्या पीठम् विजयवाड' इति पत्रस्यास्य प्राप्तिस्थानमासीत्। अस्य संरक्षकः अधि-पति वैद्यराज डा० डी० यस० अवधानी' महाशयस्तथा जी० वी० रेड्डी० बी०

1. Teresian.

ए० सम्पादकश्चासीत्। वार्षिकं मूल्यं चत्वारि रूप्यकाणि। पत्रिका भारतीय-संस्कृतिप्रधानाऽऽसीत् 'शङ्करगुरुकुलम्' पत्रेऽस्य विशदवर्णनं लभ्यते।[1]

१८४० ई० खिस्ते द्वे पत्रे प्रकाशिते। प्रथमं बम्बईत: 'क्वीन्स मारियाने[2]' तिनाम्ना द्वितीयं 'नवद्वीप हिन्दू मैगजीन[3]' इति नाम्ना नवद्वीपतः प्रकाशिते। इत्येतासु पत्रपत्रिकासु यद्यपि नाऽवश्यकता गणनायास्तथापि संस्कृतभाषा-मिश्रितपत्रपत्रिकाणां वैविध्यं दर्शयितुं समासेन समुल्लिखितमिति। उपर्युक्त-कतिपयानां पत्र-पत्रिकाणां महनीयं स्थानमस्ति संस्कृतपत्रकारितायाः विकास-दृष्ट्या।

---

१. शङ्करगुरुकुलम्, १.३.

2. Queens Marian.

3. Navadwip Hindu Magazine.

# निबन्धको रामावतारशर्मा

अच्युतानन्द झा:

संस्कृतसाहित्यस्य विपुलसमृद्धिः कस्य साहित्यप्रणयिनो न प्रमोदावहा। वैदिककालादेवास्य काले-काले प्रचुरप्रचारः प्रसारो वा सर्वासु पद्यगद्यात्मिकासु विधासु दृश्यते। यदि नाम तत्र निबन्धपक्षमवलम्ब्य किमपि विचार्यते तर्हि केवलं निबन्धलेखनस्वल्पत्वं सुतरामस्माकं पुरस्तादापतति। तस्या न्यूनताया अपसारणमेव वर्तमानयुगस्य संस्कृतवाणीजुषां महत्तमं वैशिष्ट्यं प्रतीयते। "गद्यं कवीनां निकषं वदन्ति निबन्धस्तु गद्यलेखकानामि"ति साम्प्रतं मत्वा खिस्तीयोनविंशशतकस्य चरमभागतः द्वित्राः पञ्चषा वा पुण्यश्लोका विद्वद्वरा निबन्धलेखने व्यापृता बभूवुः। तदैतेषां निबन्धास्तात्कालिकसंस्कृतपत्रपत्रिकासु यथाकथञ्चन प्रकाश्यन्तेस्म। अंगुल्या परिगण्यमानाः संस्कृते प्रमुखनिबन्धलेखकाः—श्रीहृषीकेशशास्त्रिभट्टाचार्य-महामहोपाध्याय पं० रामावतारशर्म-विद्यावाचस्पति अप्पाशास्त्रि राशिवडेकर-महेशचन्द्रतर्कचूडामणि-रामकृष्ण शर्म-ताराचरण शर्मादयो दृश्यन्ते। प्रस्तुतेऽस्मिन् प्रबन्धे म० म० रामावतारशर्ममहोदयस्य निबन्धनकलायाः किमपि वैशिष्ट्यं विविच्यते।

प्रथमं तावन्निबन्धशब्दो विचार्यते। अस्य पर्यायवाची Essay—शब्द आंग्लभाषायां प्राप्यते। सोऽयं प्राचीनफ्रेञ्चभाषातः समागत एतत्तु सुविदितम्। काचिच्छन्दोयत्यादिबन्धनेभ्यो मुक्ता स्वच्छन्दरचना तच्छब्देनाभिधीयतेस्मेति पाश्चात्याः। तेषां विचारेणेदृशी निबन्धरचना विषयालङ्कारछन्दोयत्यादिपरिधौ नाबद्ध्यते। तदालोचकैर्निबन्धास्त्रिधा विभक्ताः। तथाहि—आख्यानात्मकाः, वर्णनात्मकाः, समीक्षात्मकाश्चेति।

वस्तुतः सीमितशब्दैः स्वकीयभावगर्भविचाराभिव्यक्तिर्निबन्ध इति नो मतम्। एतेन निःशेषं बद्ध्यन्ते विचारा अस्मिन्निति निबन्ध इत्यर्थोऽपि संगच्छते। एतादृशस्य निबन्धस्य भूमिकायां लेखकस्य व्यक्तित्वं मनोभावश्च

परिस्फुरतः। एकस्मिन्नेव विषये लिखिता अनेकशो निबन्धा लेखकानां मनोभावानां वैभिन्न्यमुपस्थापयन्ति। साधारणोऽपि विषयो लेखकप्रतिभावैशिष्ट्येन निबन्धरूपतामापन्नः सहृदयानां पाठकानां चेतांसि चमत्करोति।

निबन्धलेखकस्य कृते विषयसम्बन्धि गम्भीरं ज्ञानमपेक्ष्यते। वस्तुजातमपि तेन सूक्ष्मेक्षिकया निरीक्षणीयम्। अनन्तरं शब्दभाण्डागारः सुसञ्चेतव्यः। एभिरूपकरणैः सरलया गिरा सुरुचिरया शैल्या च विषयविवेचनपुरःसरं स्वीया विचारादर्शा निबन्धे निबन्धनीयाः। तत्र क्वचिल्लोकोक्तीनामुदाहारः सूक्तीनां प्रयोगश्चावश्यकीयौ मतौ। अनया रीत्या विषयस्वारस्यमुत्तरोत्तरं प्रकर्षवद्भवति। अवसानस्थले सम्पूर्णस्य निबन्धस्य सारांशो निक्षेप्तव्यः। विषयविविक्तिः सुष्ठु कर्तव्या, येन पाठकानां निखिला जिज्ञासाः शान्तिमाप्नुयुरिति।

महामहोपाध्यायस्य रामावतारशर्ममहोदयस्य निबन्धलेखनेऽस्ति किमपि तादृशं वैशिष्ट्यं यद्धि सुतरां पाठकानां मनः समाकर्षति। ऐशवीये १६५६ तमे वर्षे B. A. कक्षायामधीयानैरेवास्माभिर्मिथिलाविद्यापीठग्रन्थमालायां प्रकाशं गताः "प्रकीर्णप्रबन्धाः" समालोकिताः। तद्ग्रन्थस्यामुखमधीत्यैवास्मिन्निकामं बद्धादराः सञ्जाता वयम्। उपर्युक्तग्रन्थे प्राचीनकविविषयकाः सर्वेऽपि निबन्धास्तदैव बहुशः पठिताः। तत्रास्य निबन्धलेखनपाटवं विषयप्रतिपादनशैली, गवेषणात्मकविचारादर्शा इतीमानि सर्वाणि निबन्धनकलावैशिष्ट्यानि सम्यगाकलितानि।

सुप्रसिद्धस्यास्य निबन्धकस्य निबन्धनरीतिं विचारसरणिं भाषासौष्ठवं, विषयगाम्भीर्यं च ज्ञातुकामैरस्माभिस्तेषां सकला निबन्धास्त्रिधा विभज्यन्ते। तथाहि—

(१) साहित्यसमीक्षात्मकाः,

(२) भाषाशास्त्रविषयकाः

(३) विज्ञानसम्बद्धाश्चेति।

आदौ साहित्यसमीक्षात्मकान् निबन्धान् यथामति सम्यग्विविच्य तेषां निबन्धनकला विचार्यते।

जगत्यस्मिन् साहित्यसमीक्षाया द्वौ मार्गौ प्रथितौ दृश्येते — प्राच्यः पाश्चात्यश्च। प्राच्या रीतिस्तु अलंकारशास्त्रत्वेन गुणदोषविवेचनपरा प्रसिद्धा। एतद्विलक्षणा तु पाश्चात्यरीतिः। अस्या रीतेः प्रमुखा आचार्या मैक्समूलर-मैकडानेल-याकोबी-विन्टरनित्जादयोऽभूवन्। इमे समीक्षकास्तानि तानि भारतीयानि ग्रन्थरत्नानि यथायथं समीक्ष्य स्वरचितेषु ग्रन्थेषु स्वकीयान् भावान् व्यञ्जितवन्तः। ततः पूर्वं भारतेऽस्मिन् बहुशो महापण्डिता बभूवुः, तदापि (रामावतारशर्मकालेऽपि) अनेकशो पदवाक्यप्रमाणज्ञास्तत्तच्छास्त्रनिष्णाताः सुधियोऽजायन्त। किन्तु कस्यापि शेमुषीमतः प्राचीनग्रन्थानां तत्प्रणेतॄणां वा समीक्षायां मनो नाबद्धम्। कस्य कः कालः, किं केन निर्मितम्, कस्य किं वैशिष्ट्यमित्येवाभूत् शर्मणादस्य संस्कृते निबन्धलेखनकारणम्।

महामहोपाध्यायस्य निबन्धञ्चिका "साहित्यरत्नावली" कस्य साहित्यरसिकस्य न कर्णगोचरीभूता। नाम्नैवैतेषां निबन्धानां वैशिष्ट्यं तल्लेखकस्य च व्यक्तित्वमनुमेयम्!

साहित्यरत्नावल्या विलक्षणत्वं शर्ममहोदयस्य प्रतिभाऽपूर्वत्वं तदैव सम्यगनुमातुं शक्यते यदा तत्कालस्य विचारः क्रियेत। स आसीत् कालो यदा विचारिता ग्रन्था दुर्लभा अप्राप्या वा प्राय आसन्। तदानीं विघ्नानविगणय्य रत्नभूतान् ग्रन्थानन्विष्य ग्रथितेयं साहित्यरत्नावली। विचारसरणावस्यां यादृशी सरसता दृश्यते सा न सामान्यसमीक्षकसुलभा। अत एव रत्नावल्या विलक्षणत्वं शर्ममिश्रस्य शोधकर्मनैपुण्यं च सिद्ध्यतः। समीक्षायाः सरसत्वं प्रतिपदमास्वादनीयम्।

अस्यां साहित्यरत्नावल्यां प्राचीनकविविषयकानेकनिबन्धेषु महामहोपाध्यायस्य निबन्धनरीतिरीदृशी—

आदौ कवेः कालनिर्णयः, ततः वंशनिर्णयः, तदनन्तरं कविविषये प्रचलितभ्रान्तिनिराकरणम्, तत्पश्चात् तद्रचितकाव्यस्य नामविषययोः ख्यापनम्, अनन्तरं संक्षेपतः काव्यकथासारांश इति। ततः कवेर्वर्णनशैलीं रससिद्धिं रीतिवैशिष्ट्यं कवित्वशक्तिमित्यादिकं सर्वं यथायथमितिहाससरण्या समालोचन-

बुद्ध्या समीक्ष्य कविविषये स्वाभिप्रायप्रकाशपुरःसरमन्ते तत्काव्यस्य कञ्चन शोभनं सन्दर्भं सम्यगुल्लिख्य शर्ममहोदयो निबन्धं समापयति।

१८२६ शकाब्दतो वाराणसीतः प्रकाशं गतायां "मित्रगोष्ठी" पत्रिकायामाप्रथमसंख्यातो द्वादशीं यावत् सुप्रसिद्धानां द्वादशानां प्राचीनकवीनां विषये धारावाहिकरूपेण द्वादश निबन्धाः प्राप्यन्ते। इमे सर्वे निबन्धाः सरलया गिरा प्रौढ्या शैल्या च समलङ्कृता विद्यन्ते। नातिदीर्घा नातिह्रस्वाश्चेमे निबन्धाः संस्कृतभाषायां संस्कृतसाहित्येतिहासरचनायां भित्तिभूताः। इदंप्रथमतया हि संस्कृते प्रचलिता ऐतिहासिकनिबन्धरचनारीतिः। एष एव च महाभागः पथिकृदत्रेति नः परिनिष्ठिता मतिः। विचारकर्मणि प्रवृत्तः शर्ममहाशयः किमपि प्रमाणरहितं न वक्ति। प्रत्यक्षेण सर्वे सन्देहा विलीयन्त इति निश्चित्य सर्वत्रैवानेन स्वमतप्रतिपादनार्थं तत्तल्लेखकानां रचनांशान् समुद्धृत्य शोधकर्ममार्गस्याचार्यत्वमपि कृतवान्। कीदृशोऽयं रसनिष्णातः सहृदय आसीदिति तूदाहरणरूपेणोपन्यस्तैः श्लोकैः स्पष्टं प्रतिभाति। तादृशा एव श्लोका विचित्योदाहृता येन प्रतिज्ञानिर्वाहो भवेत्। रसगुणादिप्रतिपादकाः श्लोकाः सत्यं तत्तत्कविवैशिष्ट्येन सूर्यप्रकाशं प्रकाशन्ते।

## (१) परिमलः

साहित्यरत्नावल्यामादौ परिमलकवेः समीक्षा कृता। निबन्धस्यारम्भः—

"तत्रभवान् मृगाङ्कदत्तसूनुः पद्मगुप्ताख्यः परिमलकविः श्रीभोजराजपितृव्यस्य धारेश्वरस्य वैक्रमीयैकादशशतकोद्भूतस्य वाक्पतिराजदेवस्य सभां भूषयामास।"

ततो महाकविपरिमलविषये निर्णय-सागरमुद्रितप्राचीनलेखेषु पं० दुर्गाप्रसादमहोदयस्योक्तिः—"वाक्पतिराजो भोजपितामह आसीत्" इति प्रमादमूलिका सिद्धान्तिता। तत्र "तत्पादानुध्यातशब्देन न केवलं पुत्रस्यैव ग्रहणं किन्तु तदुत्तराधिकारिणोऽपी"ति व्याचक्षाणेन शर्मपादेन वाक्पतिराजानन्तरं सिन्धुराजो भुवं बुभोजेति सुनिश्चितम्। तयोः सम्बन्धविषये परिमलस्यैकः श्लोक एव प्रमाणरूपेणोद्धृतः। स हि—

दिवं यियासुर्मम वाचि मुद्रामदत्त यां वाक्पतिराजदेवः ।
तस्यानुजन्मा कविबान्धवस्य भिनत्ति तां सम्प्रति सिन्धुराजः ॥

अयं सिन्धुराजो भोजस्य पिताऽसीत् । अस्यापरं नाम कुमारनारायण इत्यभवत् । अनेन नवसाहसांकोपाधिरधिकृतः । अस्य विषय एव परिमलेन नवसाहसांकचरिताख्यं काव्यं प्राणायि । काव्येऽस्मिन् नागकन्यायाः शशिप्रभायाः सिन्धुराजेन सह परिणयो वर्णितः । कवेरस्य विषये शर्ममहोदयस्य मतम्—

"अयं च कविर्भास-सौमिल-कालिदास-भर्तृमेण्ठाश्वघोष-बिल्हणादिवद् वैदर्भीरीतिमेव सर्वदानुसरति । यथा च बिल्हणसूक्तयो द्राक्षापाकोपमास्तथैवास्य सूक्तयः सद्योवृन्तविलूनद्राक्षामधुराः सतां मनोवृत्तय इव च सुप्रसन्नाः । प्रौढौ बिल्हणः प्रकृष्यते । सरसत्वे तु परिमलः । यद्यप्यस्य केचिन्मालवेन्द्रस्तुतिरूपाः—

मग्नानि द्विषतां कुलानि समरे त्वत्खड्गधाराजले
नाथास्मिन्निति बन्दिवाचि बहुशो देव श्रुतायां पुरा ।
मुग्धा गुर्जरभूमिपालमहिषी प्रत्याशया पाथसः
कान्तारे कृपणा विमुञ्चति मुहुः पत्युः कृपाणे दृशौ ॥

इत्याद्याः श्लोकाः सुभाषितग्रन्थेषूपलभ्यन्ते तथापि नाद्याप्यस्य प्रबन्धान्तराणि नाम्नापि विदितानी" त्यहो महीयः शर्मपादस्य गवेषणकर्म ।

अन्ते साहसांकचरितस्य माधुर्यादिकं स्फुटीकर्तुं तस्य चतुर्थसर्गतः सप्तविंशश्लोका उद्धृताः ।

## (२) अश्वघोषः

कवेरस्य कालनिर्णये किमपि द्योदत्तमं प्रमाणं न निश्चीयते किन्तु रामायणेन रघुवंशेन च केषुचित्स्थलेषु साम्यात् कालिदासस्येवास्यापि कवेः प्रसादप्रियत्वान्माघाद्यर्वाचीनकवीनां रीतेश्च क्वचिदपि बुद्धचरिते दर्शनाभावात् कालिदासपूर्वे वा तत्समकालमेव वा कविरयमासीदित्यनुमीयते । यथा बोधिसत्त्वावदान-

कल्पलतायाः प्रणेतारं क्षेमेन्द्रमालोचका बौद्धं न स्वीकुर्वन्ति तथैव बुद्धचरित-प्रणेतारमिमं कविं शर्ममहोदयो बौद्धं न मन्यते ।

तदेकमेव तत्प्रणीतं बुद्धचरितं काव्यं तेन दृष्टम्, किन्त्वन्येऽपि ग्रन्था विविधग्रन्थपरिशीलनादवगम्यन्त इति स्पष्टमुद्घोषितम् । ततः कविकाव्य-विषयिणी विचारणा—

"अत्र शान्तोऽङ्गी, करुणोऽङ्गम् । प्रसादमाधुर्यमयी वैदर्भी रीतिः । स्वाभाविकं चैतत् । तथा हि भवभूतिं विहाय करुणप्रधानो न कोऽपि कविरोजः-प्रियः । न च शान्तस्य परिपोषः शब्दकाठिन्येन क्लिष्टार्थबाहुल्येन च कथञ्चित्साध्यः" ।

अग्रे कवीनां त्रैविध्यं प्रतिपादितम् । एतच्च त्रैविध्यं बहुकाव्यसमीक्षणात् सहृदयोत्तमेनानेन सम्यग्विविच्य कृतम् । राजशेखरेणापि स्वकीयकाव्यमीमांसायां बहवः कविभेदाः कविराज-महाकवि-शब्दकव्यादिकाः प्रदर्शिताः । ते तु तथा स्वारस्यं नावहन्ति यथा राजशेखरस्य पाण्डित्यम् । शर्मकृतास्तु भेदा एतद्विलक्षणाः काव्यपाठक्रमात्रसंवेदनसिद्धाः, अतश्च नितरां युक्तियुक्ताः । यथा हि—

"केचिद्वदन्त्यभिमतं प्रायोऽनभिमतमपि ब्रुवन्त्यपरे ।
किमभिमतं तेषामिति केचिन्नैव प्रकाशयन्ति पुनः ॥

प्राय एतादृशास्त्रिविधाः कवयः सर्वदेशेषूपलभ्यन्ते" । तत्रासौ महाकविं कालिदासमभिमतवादिनां मुख्यत्वेन निश्चिनोति । सन्देहनिरासाय श्लोकमुखेन भणति—

"को हि सन्दिग्धे —

क्लेशावहा भर्तुरलक्षणाहं सीतेति नाम स्वमुदीरयन्ती ।
स्वर्गप्रतिष्ठस्य गुरोर्महिष्यावभक्तिभेदेन वधूर्ववन्दे ॥
(रघौ चतुर्दशे सर्गे)

इत्येतस्य

मृग्यश्च दर्भाङ्कुरनिर्व्यपेक्षास्तवागतिज्ञं समबोधयन्माम् ।
व्यापारयन्त्यो दिशि दक्षिणस्यामुत्पक्ष्मराजीनि विलोचनानि ॥
(तत्रैव त्रयोदशे)

इत्यस्य वा श्लोकस्यार्थग्रहणे ।"

प्रसङ्गतो नैषधीयचरितप्रणेतारमभिलक्ष्य—"नैषधीयकारस्तु कदाचिदनभिमतमपि वक्ति, तद्यथा सुप्रसिद्धे—

"तव वर्त्मनि वर्ततां शिवं पुनरस्तु त्वरितं समागमः ।
अयि साधय साधयेप्सितं स्मरणीयाः समये वयं वयः ।।"

इतिश्लोके। ईदृग्विधेषु तु श्लोकेषु प्रकरणादिना समुचितोऽर्थो निश्चेतुमपि शक्यते। क्वचित्तु कविः किमभिप्रैतीति नारायणपण्डितोऽपि वक्तुमशक्नुवन् "यद्वा किं वेत्यादि" प्रलपन् 'प्राज्ञं मन्यमना हठेन पठतामस्मिन् खलः खेलतु' इति श्रीहर्षो चरितस्योपालम्भस्य भाजनमात्मानं विधत्ते। न हि केनापि—

"महानटः किन्नु स भानुरागे सन्धाय सन्ध्यां कुनटीमपीशाम् ।
तनोति तन्वा वियतापि तारहारस्रजा साम्प्रतमङ्गहारम् ।।"

( नैषधीये द्वाविंशे सर्गे )

इत्यस्य पद्यस्य कः स्वारसिकोऽर्थ इति सुखेन निश्चीयते ।"

इत्थं कवित्रैविध्यं प्रतिपादयन् कीदृक् कविरश्वघोषो बभूवेति प्रस्तौति—

"ईदृशेषु त्रिविधेषु कविष्वश्वघोषः कालिदासवदभिमतवादिनामन्यतमः। अनार्षग्रन्थेषु च करुणशान्तयोरीदृशः परिपोषः, ईदृशो माधुर्यानुबन्धो प्रसादश्च कालिदासीयान्प्रबन्धान्विहाय न क्वाप्युपलभ्यते ।"

ततो बुद्धचरितस्य—

"अभवच्छयिता हि तत्र काचि-
द्विनिवेश्य प्रचले करे कपोलम् ।
दयितामपि रुक्मपत्रचित्रां
कुपितेवाङ्कगतां विहाय वीणाम् ।।
नवपुष्करगर्भकोमलाभ्यां
तपनीयोज्ज्वलसंगताङ्गदाभ्याम् ।
स्वपितिस्म तथापरा भुजाभ्यां
परिरभ्य प्रियवन्मृदङ्गमेव ।।"

इत्यादिप्रबन्धेन वाल्मीकीये सुन्दरकाण्डे—

"स्त्रियो ज्वलन्तीस्त्रपयोपगूढा-
निशीथकाले रमणोपगूढाः।
ददर्श काश्चित्प्रमदोपगूढा-
यथा विहङ्गा विहगोपगूढाः।"

इत्यादिहनुमत्कर्तृकरावणान्तःपुरदर्शनेन साम्य समाकलयति। बुद्धे विनिर्गत्य नगरोपवनं व्रजति विलासिनीनां चेष्टाश्च "बभूवुरन्तःपुरसुन्दरीणां त्यक्तान्यकार्याणि विचेष्टितानी"त्यादिना रघौ कृतस्य वर्णनस्यानुरूपत्वमपि निरूपयति।

निबन्धस्यास्यावसानस्थले बुद्धचरिते समुदाहृतानां गुणानां स्पष्टप्रतिपत्तयेऽत्यन्तमधुरः प्रबन्ध उदाहृतः।

## (३) कुमारदासः

प्रबन्धममुं राजशेखरस्य—

"जानकीहरणं कर्तुं रघुवंशे स्थिते सति।
कविः कुमारदासश्च रावणश्च यदि क्षमौ॥"

इति श्लोकेन प्रारभते। सिंहलाधीशं कुमारदासं वैक्रमीये द्वादशशतकोद्भवं रामावतार शर्मा मन्यते। प्रियदर्शिनो वंशेऽयमभूदित्यत्र बौद्धग्रन्था एव निदर्शनम्। रघुवंशादिप्रणेतुः कालिदासस्यायं मित्रमासीदिति कस्यचिदुक्तिं प्रमाणाभावान्नानुमोदते। तदनन्तरं प्रसङ्गागतकालिदासमधिकृत्य किञ्चिद् व्याख्याति—

"बहवो हि कालिदासाख्यया प्रथिताः कवयः। कालिदासस्य तादृशी प्रसिद्धिर्येन तन्नाम कविसामान्यापरपर्यायत्वेनावतिष्ठते। राजशेखरस्य त्रयः कालिदासा विदिता बभूवुः। तथाहि तस्य श्लोकः—

"एकोऽपि जीयते हन्त कालिदासो न केनचित्।
शृङ्गारे ललितोद्गारे कालिदासत्रयी किमु॥"

एषां त्रयाणामेको मुख्यः कालिदासः श्रव्यकाव्यत्रयस्य नाटकत्रयस्य च प्रणेता विक्रमार्कसभ्यः कविकुलगुरुः।"

निबन्धेऽस्मिन्नष्टौ कालिदासान् नाम्ना कालदृष्ट्या चासौ पर्यगणयत्। कदाचित् कुमारदासमित्रेण केनचित् कालिदासेन सिंहलं गत्वा तत्र राजकीय-वारविलासिनीद्वारे राज्ञा लेखिता "कमले कमलोत्पत्तिः श्रूयते न च दृश्यते" इति समस्या "बाले तव मुखाम्भोजे दृष्टमिन्दीवरद्वयमि"त्यनेन चरणद्वयेन पूरितेति सिंहलवृद्धेषु प्रसिद्धकथा वृथैवेति धिया तां नाद्रियते।

कुमारदासप्रणीतमतिरुचिरं जानकीहरणं रघुवंशशैल्यनुप्राणितमित्येतस्य निश्चयः। कविविषये समीक्षणम्—

नान्यः कोऽपि कविः कालिदासीयां शैलीमनुकृत्यैतादृशीं सफलतामासा-दितवानिति दृढं प्रतिपादयति। जानकीहरणे "महिषधूसरितः सरितस्तटे" इत्यादिस्थले गणरत्नमहोदधिकारेण यमकप्रदर्शनं कृतमिति प्रमाणं लक्ष्यीकृत्य पूर्वसूरीणामस्य ग्रन्थस्य प्रचुरप्रचारोऽभवदित्यपि समर्थयते। पातञ्जले महा-भाष्ये "वरतनु सम्प्रवदन्ति कुक्कुटाः" इत्युद्धृतस्य वाक्यस्यौचित्यविचार-चर्चायां क्षेमेन्द्रेण कुमारदासनाम्नोदाहृतात्—

"अयि विजहीहि दृढोपगूहनं
त्यज नवसंगमभीरु साध्वसम्।
अरुणकरोद्गम एष वर्तते।
वरतनु सम्प्रवदन्ति कुक्कुटाः॥"

इति श्लोकात् पतञ्जलेरपि कुमारदासः प्राचीन इति विदुषां प्रलपनं प्रमादमूलकं सिद्धान्तयति। उपलब्धे खण्डिते ग्रन्थे श्लोकोयं न प्राप्यतेऽतस्तद्-वाक्यं ग्रन्थान्तरे पतञ्जलिना दृष्टं भवेदिति व्याचष्टे। लेखशैलीतः कविममुम-त्यन्तमर्वाचीनं व्याख्यायान्ते तत्काव्यस्य प्रथमसर्गतः कञ्चनादर्शभूतं सन्दर्भ-मुपस्थाप्य निबन्धं समापयति।

## (४) लीलाशुकः

अस्य कवेः कालविषये स्वयं शर्मणादेनापि किमपि निश्चितं वक्तुं न पार्यते। प्रसिद्धटीकाकृता वीरराघवेनोद्धृतं—

"शैवा वयं न खलु तत्र विचारणीयं,
पञ्चाक्षरीजपपरा नितरां तथापि।
चेतो मदीयमतसीकुसुमावभासं,
स्मेराननं स्मरति गोपवधूकिशोरम् ॥"

इतिपद्यमनुसृत्य शैवस्याप्यस्य श्रीकृष्णे परमां प्रीतिं समर्थयति। कविमेतं तत्काव्यञ्च विषयीकृत्य कथयति—

"अयं च न महाकविः, किन्तु हरिभल्लट-मूक-जगन्नाथ-कुलशेखरादिवत् सुमधुराणां भावगर्भाणां श्लोकानां प्रणेता। एक एव चाद्यावधि कवेरस्य पद्यानां संग्रहः शतकत्रयात्मकः "श्रीकृष्णकर्णामृताख्यः" प्रबन्ध उपलब्धः। अस्य माधुर्यमभिनवशैलीविलासं चास्वाद्य चिरं चित्रीयते सहृदयानां चेतः। रामानुजीयैरन्यैश्च वैष्णवैरत्यन्तमादृतोऽस्य ग्रन्थः। कवितार्किकसिंहो वेंकटोऽपि प्रौढिमात्रे एनमतिशेते। माधुर्ये तु नायं केनापि दाक्षिणात्यकविना तुलितः। अपरदाक्षिणात्यकविवदयमप्याद्यनुप्रासप्रियः। आलङ्कारिकैः प्राय उपेक्षितोऽप्याद्यनुप्रासो नवीनकविभिर्विशेषतो दाक्षिणात्यैरत्यन्तमादृतश्चमत्कारप्रदश्चेति सुविदितं सर्वेषां साहित्यरसिकानाम्।"

निबन्धावसाने कर्णामृतस्य केचन रुचिरतमाः श्लोकाः संगृह्य विन्यस्ता दृश्यन्ते। तेष्वेक एवास्वाद्यताम्।

"अयि मुरलि मुकुन्दस्मेरवक्त्रारविन्द-
श्वसनमधुरसज्ञे त्वां प्रणम्याद्य याचे।
अधरमणिसमीपं प्राप्तवत्यां भवत्यां,
कथय रहसि कर्णे मद्दशां नन्दसूनोः ॥"

# (५) पाणिनिः

प्रबन्धेऽस्मिन्नादौ वाल्मीकि-पराशर-पाराशर्यप्रभृतिभ्योऽर्वाचीनानां कालिदासाच्च प्राचीनानां बहूनां कवीनामस्तित्वं स्वीकृत्य तेषां बहवः प्रबन्धाः क्षेमेन्द्र-विश्वनाथादीनां विदिता बभूवुरिति व्याचख्यौ। ततः साम्प्रतिकतद्ग्रन्थदुरवस्थामवेद्य नितरां खिन्नचेता असौ ततो विगतद्वित्रिशतकेषु पण्डितम्मन्यान् जनान् बहुश उपालभमानः सूक्तिसंग्रहकारानतिशयं प्रशंसन्नात्मनोऽभिप्रायमभिव्यनक्ति।

तद्यथा—

"तथापि द्वित्रेषु गतशतकेषु तादृशी दुरवस्था विद्याभ्यासस्य जाता, येन ग्रन्थांशान्नात्युपयुक्तान् वादबहुलानवलम्ब्य तत्परिष्कारात्मकेषु पत्रिकादिषु मुधा श्रमं विदधानैर्जनैस्तथोपेक्षिताः परार्द्ध्या अपि निबन्धाः, येन साम्प्रतं बहूनां कवीनां शास्त्रकृतां नामापि लुप्तप्रायम्। न साम्प्रतं भासस्य स्वप्नवासवदत्तप्रभृतीनि नाटकान्युपलभ्यन्ते, न रामिलसौमिलयोः शूद्रककथा प्राप्यते। क्वाधुना पाणिनेः पातालविजयकाव्यम्, क्व वा वररुचेः कण्ठाभरणम्। किमभून्मेण्ठप्रणीतस्य हयग्रीववधस्य, किं वा जातं धर्मकीर्तेर्महाप्रबन्धानाम्। धन्यास्ते सूक्तसंग्रहकारा, यत्प्रभावादधुना नामाप्येषां महाकवीनां श्रूयते। मोहान्धकूपकुहरादाच्छिद्य वैदेशिकैरुद्धृतेभ्यः सूक्तिमुक्तावली–सदुक्तिकर्णामृत–शार्ङ्गधर–पद्धति–सुभाषितावल्यादिसंग्रहग्रन्थेभ्यः पाणिनि-भास-मेण्ठादिमहाकवीनां विषये किञ्चिद्विदितमास्ते साम्प्रतम्।"

तदनु कविरूपेण पाणिनिमुपश्लोकितवतां कवीनामन्यतमं राजशेखरमुल्लिख्य विवृणोति—

"स्वस्ति पाणिनये तस्मै यस्य रुद्रप्रसादतः।
आदौ व्याकरणं काव्यमनु जाम्बवतीजयम्॥"

इति श्लोकानुसारं वैयाकरणत्वेन प्रसिद्धं दाक्षीपुत्रं पाणिनिं जाम्बवती-

विजयापराख्यस्य पातालविजयकाव्यस्य प्रणेतारं समर्थयति। तत्रैव कविप्रशंसार्हं-मन्यस्यापि कस्यचित्पद्यमुल्लिखितवान्—

"सुबन्धौ भक्तिर्नः क इह रघुकारे न रमते,
धृतिर्दाक्षीपुत्रे, हरति हरिचन्द्रोऽपि हृदयम्।
विशुद्धोक्तिः शूरः, प्रकृतिमधुरा भारविगिर—
स्तथाप्यन्तर्मोदं कमपि भवभूतिर्वितनुते॥"

सुवृत्ततिलके केषां कवीनां कानिच्छन्दांसि प्रियतमानीति प्रस्तावे क्षेमेन्द्रेण पाणिनेरुपजातिच्छन्दस्त्वेन स्वीकृतम्। उपलब्धेषु तत्काव्यश्लोकेष्विन्द्रवज्रो-पेन्द्रवज्राच्छन्दसोर्मिश्रणं प्राधान्येन दृश्यतेऽत एतद्रूपमेवोपजातिच्छन्दः क्षेमेन्द्रेण प्रशस्यत्वेन निर्दिष्टमिति सिद्धान्तयति। जाम्बवतीविजयकाव्यप्रणेता कविः पाणिनिर्वैयाकरणपाणिनेर्भिद्यत इतीदृशमालोचकमतं सर्वथाऽसाम्प्रतं मन्यमानेन शर्ममहाभागेनोच्यते—

"न तत् सयुक्तिकम्, न हि नवप्रणीतं स्वकीयमेव व्याकरणं पाणिनिरनुसर्तुं शशाक। रामायणभारतादिपरिशीलनात् करामलकीभूतानि इन्द्रशाकटाय-नादिव्याकरणानुसारीणि पदानि सततमबोधपूर्वमपि तस्य हृदये स्फुरन्तिस्मेति तेषां तद्ग्रन्थे दर्शनं सुसङ्गतमेव।"

ततः कवेः पाणिनेर्विविधसूक्तिसंग्रहग्रन्थेषूपलभ्यमानानां सूक्तीनामतिरम-णीयत्वात् कवेः काव्यरचनापद्धतिं प्रदर्शयितुकामेन शर्मपादेन विस्तारभयात् केवलं पञ्चदशश्लोकानुल्लिख्य समापितोऽयं निबन्धः।

## (६) भट्टभल्लटः

यद्यप्यस्य कवेः समयोऽनुमेय एव तथाप्यस्य रचनाशैलीमलङ्कारप्रियत्वञ्चो-द्दिश्य भर्तृहरितोऽप्यर्वाचीनत्वं प्रतिपादितम्। तथाहि—

"शब्दालङ्कारप्रियत्वं चास्य कदाचित्तथाविधं येन कालिदासादर्वाचीनत्व-मस्य निश्चितप्रायं प्रतिभाति। न हि भास-कालिदास-भर्तृहरि-मेण्ठप्रभृतीनां प्राचीनतराणां महाकवीनां प्रबन्धेषु—

"दन्तान्तकुन्तमुखसन्ततपातघातसन्ताडितोन्नतगिरिर्गज एव वेत्ति।
पंचास्यपाणिपविपञ्जरपातपीडां न कोष्टुकः स्वशिशुहुंकृतिनष्टचेष्टः॥"

इतीदृशाः परुषानुप्रासप्रायाः श्लोकाः सुलभाः। किञ्च भल्लटः प्रायोऽन्योक्तिप्रियः भर्तृहरिस्तु क्वचिदेव तथेत्यपि विशेषः। अस्य प्राचनेष्वालङ्कारिकेषु महती प्रसिद्धिरासीदिति प्रतीयते।"

स्वकीयं मतं प्रमाणयितुकामेन कस्यचित् पद्यमप्येकं तत्रैव विन्यस्तम्। तदत्र—

"माघश्चोरो मयूरो मुररिपुरपरो भारविः सारविद्यः
श्रीहर्षः कालिदासः कविरथ भवभूत्यादयो भोजराजः।
श्रीदण्डी डिण्डिमाख्यः श्रुतिमुकुटगुरुर्भल्लटो भट्टबाणः
ख्याताश्चान्ये सुबन्ध्वादय इह कृतिभिर्विश्वमाह्लादयन्ति॥"

नाम्नास्य कवेः काश्मीरकत्वं समर्थ्य सुप्रसिद्धस्य भट्टशतकस्य काश्चनादर्शरूपाः सूक्तयो निबन्धावसाने विन्यस्ताः। तासु काश्चन—

"दानार्थिनो मधुकरा यदि कर्णतालै-
र्दूरीकृता करिवरेण मदान्धबुद्ध्या।
तस्यैव गण्डयुगमण्डनहानिरेषा
भृङ्गाः पुनः विकचपद्मवने वसन्ति॥
किं जातोऽसि चतुष्पथे घनतरुच्छायोऽसि किं छायया
युक्तश्चेत् फलितोऽसि किं फलभरैराढ्योऽपि किं सन्नतः।
हे सद्वृक्ष सहस्व सम्प्रति सखे शाखाशिखाकर्षण-
क्षोभामोटनभञ्जनानि भवतः स्वैरेव दुश्चेष्टितैः॥
मृत्योरास्यमिवानतं धनुरिदं चाशीविषाभाः शराः।
शिक्षा सापि जितार्जुनप्रभृतिका सर्वत्र निम्ना गतिः।
अन्तः क्रौर्यमहो शठस्य मधुरं हा हारि गेयं मुखे
व्याधस्यास्य यथा भविष्यति तथा मन्ये वनं निर्मृगम्॥"

## (७) रत्नाकरः

निबन्धेऽस्मिन् राजतरङ्गिण्यां कल्हणस्य—

"मुक्ताकणः शिवस्वामी कविरानन्दनवर्धनः।
प्रथां रत्नाकरश्चागात् साम्राज्येऽवन्तिवर्मणः॥"

इति पद्यानुसारं रत्नाकरो नवमशताब्दीक आसीदिति समर्थितम्। पूर्वमयं कविर्बृहस्पत्युपाधिकस्य चिप्पटजयापीडस्य सदो भूषयतिस्मेति "बालबृहस्पत्यनुजीविनो रत्नाकरस्य कृताविरयादि" हरविजयसमाप्तिलेखान्निश्चीयते। पश्चादयमवन्तिवर्मणा परिगृहीत इति। कवेरस्य कृतिविषये शर्मपादस्य मतम्—

"अस्य चैकमेव हरविजयाख्यं काव्यमुपलभ्यते। तच्च माघस्य शिशुपालवधवद् भारवेः किरातार्जुनीयवच्चैकमपि कवेर्यशः कल्पान्तस्थिरं रक्षितुं कल्पते। अस्मिन् ग्रन्थेऽतिविस्तर एक एव दोषः। स एव चास्य प्रचारे कांचिद्बाधां व्यधत्त। तथापि प्राचीनेषु प्रचुरोऽस्य प्रचार आसीत् साम्प्रतं च मुद्रितोऽयं काव्यमालायामिति सर्वेषां सुलभः।"

ततः षष्ठशतकीये द्वितीयपुलकेशिशिलालेखे—

"येनायोजि नवेऽश्मस्थिरमर्थविधौ विवेकिना जिनवेश्म।
स विजयतां रविकीर्त्तिः कविताश्रितकालिदासभारविकीर्त्तिः॥"

इति श्लोकान्निर्णीतषष्ठशतकप्राचीनतरत्वाद्भारवेरस्य कवेरर्वाचीनत्वम्, अथ चैकादशशतकस्थधारेश्वरभोजसभ्यान्माघाच्च प्राचीनत्वं सम्यङ्निर्णीयते।

माघेन यथा भारविकालिदासादीनां श्लोकाश्चोरितास्तथैव रत्नाकरस्यापीति पौनःपुन्येन प्रतिपादयन् शर्ममहोदयः सत्यं कविमेनं भावगर्भश्लोकनिर्माणे पटुं कल्पते। महाकविक्षेमेन्द्रानुमोदितमस्य कवेरतिप्रसिद्धमतिमनोरमञ्च वसन्ततिलकावृत्तमधिकृत्य कविविषयको विचारः शर्ममहोदयस्य—

"अस्ति चास्य वसन्ततिलकासु कोऽपि विशेषो यो न केनापि कविनाऽद्यापि तुलितः। केवलं भिक्षाटनस्य कवितासु कश्चित् प्रसादचतुरोऽपरविधो

वसन्ततिलकागुणातिशय उपलभ्यते इति स एव कदाचिद्वसन्ततिलका-निर्माणे रत्नाकरस्य तुलामधिरोहेत् ।"

यथा रघुवंशकर्ता कालिदासः—

"संचारिणी दीपशिखेव रात्रौ
यं यं व्यतीयाय पतिंवरा सा ।
नरेन्द्रमार्गाट्ट इव प्रपेदे
विवर्णभावं स स भूमिपालः ॥"

इति श्लोकप्रणयनाद्दीपशिखापद्वाच्यो बभूव । एवम्—

"उदयति विततोर्ध्वरश्मिरज्जा-
वहिमरुचौ हिमधाम्नि याति चास्तम् ।
वहति गिरिरयं विलम्बिघण्टा—
द्वयपरिवारितवारणेन्द्रलीलाम् ॥"

इति पद्यस्य शिशुपालवधे दर्शनात्तत्प्रणेता माघः "घण्टामाघ इति नाम्ना प्रसिद्धिं जगाम । यथा च भारविः—

"उत्फुल्लस्थलनलिनीवनादमुष्मा-
दुद्भूतः सरसिजसंभवः परागः ।
वात्याभिर्वियति विवर्तितः समन्ता-
दाधत्ते कनकमयातपत्रलक्ष्मीम् ॥"

इति श्लोकरचनयाऽऽतपत्रभारविरित्याख्ययाऽऽम्नातः, तथैव—

"अस्तावलम्बिरविबिम्बतयोदयाद्रि-
चूडोन्मिषत्सकलसन्ध्यतया च सायम् ।
सन्ध्याप्रनृत्तहरहस्तगृहीतकांस्य-
तालद्वयेव समलक्ष्यत नाकलक्ष्मीः ॥"

इति श्लोकनिर्माणानन्तरं रत्नाकरस्तालरत्नाकराभिधः सन् प्रथामवा-पेत्यसौ दृढमनुमोदते । एवमन्येषामपि कवीनां तत्तच्छ्लोकप्रणयनाज्जमल-

जह्लिकावासुदेव-छमङ्कमिकारत्न-निद्रादरिद्रादोन्युपनामानि जातानीति प्रतिपादयतः शर्ममहाशयस्य सुतरां गम्भीरमध्ययनं तन्निरीक्षणशक्तिश्च स्फुरतः।

भारविप्रणीतात्किरातार्जुनीयाद्यो हि श्लोको माघेन चोरितः स किलास्मिन्नेव निबन्धे टिप्पणीरूपेण प्रदर्शितः। तद्यथा—

"कृतावधानं जितबर्हिणि ध्वनौ सुरक्तगोपीजनगीतनिःस्वने।
इदं जिघत्सामपहाय भूयसीं न तत्समभ्येति मृगीकदम्बकम्॥"

(किराते)

"विगतसस्यजिघत्समघट्टयत्कतमगोपवधूर्न मृगव्रजम्।
श्रुततदीरितकोमलगीतिकाध्वनिमिषेऽनिमिषेक्षणमग्रतः॥"

(माघे)

काव्यस्यास्यादर्शकल्पान् गुणान् द्योतयितुं कांश्चन् श्लोकानुद्धृत्य निबन्धोऽयं समापितः।

प्रसङ्गत आपतितानां भट्टश्रीशिवस्वामिनः सूक्तीनामत्यन्तकाठिन्येनौचित्यविचारे—बहुशो निन्दितानामपि तासां माधुर्येण नितरां हृतचेताः शर्ममहोदयस्तत्सूक्तिमाधुर्यप्रकाशनायैकं श्लोकमुद्धृतवान्। स हि—

"या बिम्बोष्ठरुचिः क्व विद्रुममणिः स्वप्नेऽपि तां दृष्टवान्
हासश्रीः सुदृशस्तपोभिरपि किं मुक्ताफलैः प्राप्यते।
तत्कान्तिः शतशोऽपि वह्निपतनैर्हेम्नः कुतः सेत्स्यति
त्यक्त्वा रत्नमयीं प्रयासि दयितां कस्मै धनायाध्वग॥"

वसन्ततिलकाच्छन्दसि श्लोकनिर्माणचातुरी रत्नाकरस्य भिक्षाटनश्लोकैः किंचित्साम्यं बिभर्तीति दृशोच्यते—

"ओजस्वितया रत्नाकरस्य वसन्ततिलका प्रकृष्यते। समासाश्चात्र तथा दीर्घा येन प्रायः पादान्तेऽपि न वृत्तिविरतिः।" यथा हरविजये सन्ध्यावर्णनम्—

"स्पष्टोल्लसत्किरणकेसरसूर्यबिम्ब—
विस्तीर्णकर्णिकमथो दिवसारविन्दम्।

शिलष्टाष्टदिग्दलकलापमुखावतार—
बद्धान्धकारमधुपावलि संचुकोच ॥'' इति

रत्नाकरस्य वसन्ततिलकामुद्दिश्य—

"सौकुमार्ये तु भिक्षाटनस्यामृतमधुरा वसन्ततिलकाः सर्वोत्कृष्टा इति प्रतिभाति ।"

तारतम्यतया भिक्षाटनस्य केचन श्लोका उपन्यस्ताः । तेषु एकः—

''तुष्टाव निन्दति जने त्रिपुरारिमेका
पार्श्वस्थिते स्तुवति गाढतरं निनिन्द
मौनावलम्बिनि चुकोप चकोरदृष्टिः
स्नेहः प्रिये दुरवबोधगतिर्वधूनाम् ॥''

## (८) क्षेमेन्द्रः

बहुग्रन्थप्रणेतारं क्षेमेन्द्रमसौ खीस्तैकादशशतकस्य मध्यभागवर्तिनं समर्थयति। अस्यापरं नाम व्यासदासो बभूव। कवेरस्य कृतीनां वा विषये शर्ममहायस्य विचाराः—

"व्यासस्य भगवतो महाभक्तोऽयं पौराणिकीं शैलीमवलम्ब्य सौकर्येण लक्षाधिकश्लोकयुतान् प्रबन्धान् प्राणैष्ट। अस्य रसपरिप्लुतैरनेकैः स्रोतोभिः प्रवहन् कविता गङ्गाप्रवाहः साम्प्रतमपि जगत्पावयति, आ कल्पान्ताच्च पावयिष्यति। क्वचिदनुप्रासप्रियत्वेऽपि प्रायो नायमलङ्कारप्रवणः, किन्तु रसापेक्ष एवेति स्पष्टं प्रतीयते । अस्य च औचित्यविचारचर्चा, कलाविलासः, कविकण्ठाभरणम्, चतुर्वर्गसंग्रहः, चारुचर्या, दशावतारचरितम्, बृहत्कथामञ्जरी, बोधिसत्वावदानकल्पलता, रामायणमञ्जरी, भारतमञ्जरी, समयमातृका, सुवृत्ततिलकम्, सेव्यसेवकोपदेशश्चेत्येते प्रबन्धाः समुपलभ्यन्ते । अमृततरङ्गम्, अवसरसारः, कनकजानकी, चित्रभारतम्, पद्यकादम्बरी, मुक्तावली, राजावली, लावण्यवती, वात्स्यायनसूत्रसारः, शशिवंशमहाकाव्यमित्येते प्रबन्धाः केवलं नाम्ना विदिताः प्रबन्धान्तरेषु धृताभिधत्वात् ।

अन्येऽपि पवनपञ्चाशिकादयोऽस्य प्रबन्धा नाम्ना विदिताः। अस्य कवेः प्रायः कथारसरुचिराः प्रबन्धाः न तु माघादिवदलङ्कारमात्रसाराः। भारतस्य भारतकथापुरुषाणां च महाभक्तोऽयम्।"

अयं पार्थमेव सर्वोत्तमं वीरं स्वीकरोतीति निम्नश्लोकेन शर्मपादः प्रतिपादयति—

"लक्ष्मणो लघुसंधानी दूरपाती च राघवः।
कर्णो दृढप्रहारी च पार्थस्यैते त्रयो गुणाः॥"

इति।

तदनु कवेरस्यालङ्कारकौशलं प्रदर्शयन् तद्रचितश्लोकमुदाहरति—

"निजां कायच्छायां श्रयति महिषः कर्दमधिया
च्युतं गुञ्जापुञ्जं रुधिरमिति काकः कलयति।
समुत्सर्पन् सर्पः सुषिरविवरं तापविवशः
सचीत्काराधूतं प्रविशति करं कुञ्जरपतेः॥"

अन्तेऽस्य चोपलब्धेषु सर्वेषु ग्रन्थेषु सुतरां हृद्यमभिनववस्तुग्रथितं च दशावतारचरितं रघुवंशवदनेककथामयं स्वीकृत्य तस्मादेव संगृह्य प्रबन्धैकदेशं साहित्यविदुपायनीकृतवान्। दशावतारचरिते रावणयात्राप्रकरणे तपसि स्थितां वेदवतीं दृष्ट्वा रावणस्योक्तिः—

"निरञ्जनत्वं कुसुमप्रसक्तिश्चित्रं जटाबन्धनकारणं ते।
अनङ्गरागं कुरु मा शरीरमनङ्गरागं वह चेतसि त्वम्॥
भोगोत्सवं मानय मा नय त्वं क्लेशैरदोषं कृशतां शरीरम्।
अहं हि ते तन्वि समीहिते च हिते च संपादनबद्धकक्षः॥
शृङ्गारस्य गतैव भाग्यगुरुतानङ्गस्य नाङ्गस्पृहा
लावण्यं घनमन्युदैन्यमलिनं का यौवनस्योन्नतिः।
नोद्यानं दयितं मधुर्विधिहतः कस्येन्दुरानन्ददः
कान्ते ते तपसि स्थिता यदि मतिस्तत्सर्वमस्तं गतम्॥" इति।

दशकन्धरोक्तमेतदाकर्ण्य किञ्चिदाकुञ्चितचेतनेव विनिःश्वसन्ती वेदवती खेदेन मन्युना च बभाषे—

"व्रते विवादं विमतिं विवेके सत्येऽतिशङ्कां विनये विकारम्।
गुणेऽवमानं कुशले निषेधं धर्मे विरोधं न करोति साधुः ॥
कचस्य वाचस्पतिसंभवस्य स्वाध्यायजा वेदवती सुताहम्।
देया मयेयं स्वयमच्युताय मनोरथोऽभूत्पितुरित्ययं मे ॥
कालेन दैत्यः स हतः पिता मे मातानलं शोकमिव प्रवृष्टा।
वरार्थिनी देवमनन्यचित्ता तपःप्रवृत्ता हरिमर्थयेऽहम् ॥"

इतीदृशां प्रसङ्गानां चयेनाचार्यस्य शर्मणोऽनन्ततथ्यसमूहेभ्यः प्रेयोवस्तुचयनमपूर्वप्रतिभापरिचायकमिति तु निश्चप्रचम्। निबन्धलेखकस्य व्यक्तित्वमप्यनयैव रीत्या विभावनीयं सुधीभिः।

## (९) कविराजः

कवेरस्य कालं निर्णेतुं रामावतार शर्मणा गयायामुपलब्धाः काश्चित् प्रशस्तय आशिश्रिये। तदनुसारं वंगेषु लक्ष्मणसेनो वैक्रमे ११७३ वर्षे शासको बभूवेति ज्ञायते। कविरयं तस्य सदोभूषणमासीदिति विवृण्वता प्रशस्त्यन्तरपद्यमेकमुदाहृतम्—

"गोवर्धनश्च शरणो जयदेव उमापतिः।
कविराजश्च रत्नानि समितौ लक्ष्मणस्य च ॥"

एतावतायं कविराजं खृस्तीयद्वादशशताब्दीकं प्रमाणयति। उपर्युक्तश्लोकपूर्वार्धे गृहीतनाम्नां चतुर्णां कवीनां केवलं नामग्राहं काव्यादीन् प्रदर्श्य प्रस्तुतं विवेचयति—

"कविराजश्च द्विसन्धानापराख्यस्य रामायणभारतोभयकथाश्लेषरूपस्य राघवपाण्डवीयस्य प्रणेता। क्वचिद् भवभूतिमनुकुर्वन्नपि प्रायोऽयं प्रसन्नशैलीकः कालिदासस्यानुसर्त्ता। श्लेषोऽप्यस्य नितरां प्रसन्नः सार्थकश्च। धनञ्जयकृतमीदृशमेवापरं द्विसन्धानमुपलभ्यते। तत्तु न तथा मनोरमम्,

प्रायो निर्भङ्गश्लेषत्वादरुचिकरं च । कविराजस्तु सभङ्गश्लेषप्रियः प्रायोऽनुरूपां नवां पद्धतिमनुसरति ।"

अमीषां पञ्चानां कवीनां वर्णनं जयदेवेनापि कृतमतस्तदुक्तिमुद्धृत्य स्वीयं प्रमाणं द्रढयति । तद्यथा—

"वाचः पल्लवयत्युमापतिधरः संदर्भशुद्धिं गिरां
जानीते जयदेव एव, शरणः श्लाघ्यो दुरूहद्रुतेः ।
शृङ्गारोत्तरसत्प्रमेयरचनैराचार्यगोवर्धन-
स्पर्धी कोऽपि न विश्रुतः श्रुतधरो धोयी कविक्ष्मापतिः ॥"

'अत्र धोयी नामा कविराजो विख्यातः श्रुतधर इति स्वारसिकोऽर्थः' इति। प्रथमोक्ते श्लोके कविराज उत्तरत्र च धोयी कविक्ष्मापतिरिति च द्वे नाम्नी उपलभ्येते । रामावतारशर्मा उभयोरभिन्नत्वं स्वीकृत्यैवं समाधत्ते—'कविराजः प्राकृतं धोयीति नाम परिहरन् सर्वदात्मानं कविराजशब्देनैव व्यपदिशतीति प्रतिभाति ।'

राघवपाण्डवीये कवेरभिनवकौशलं प्रदर्शयितुकामेन शर्ममहोदयेनोपक्रमभागस्य विन्यस्तेषु श्लोकेषु केचनात्र ।

"निःश्रेण्यौ ब्रह्मलोकस्य वाग्देव्याः कर्णकुण्डले ।
धर्मद्रुममहामूले वाल्मीकिव्यासयोः कृती ॥
पुराणरामायणभारतादिक्षीराणि संयोजितभक्तिवत्सः ।
पुरातनैर्या दुदुहे कवीन्द्रैः सा भारती कामदुघा ममास्तु ॥
श्रीरामायणमाणिक्यं भारतस्वर्णमुद्रितम् ।
न कस्य कुरुते लोके विस्मयोल्लासि मानसम् ।"

## (१०) बिल्हणः

निबन्धमेतं कवेः कालकृतिविषयकं पाश्चात्यसमीक्षकमतपुरःसरं प्रारभते। तद्यथा—"खीस्तैकादशशतकस्यान्तिमे भागे बिल्हणेन विक्रमाङ्कचरितं प्रणीतमिति पाश्चात्याः ।" शर्ममिश्रः पुनरेनं "चौरपञ्चाशिका" इति काव्यस्य

रचयितारं सिद्धान्तयति । बिल्हणेन कथं चौरपञ्चाशिकाया निर्माणं कृतमित्यत्र प्रचलिता कथा सूचिता—"बिल्हणचरिते कस्यचिद्राज्ञो दुहितरि सक्तोऽयं राज्ञा वधायादिष्टो वध्यस्थानं गच्छन्मार्गे पञ्चशिकां प्रणिनायेति ।"

ग्रन्थप्रणयनानन्तरं सदयो राजा स्वां कन्यां तस्मै प्रदाय तं ररक्षेति कथा समूला न वेति निर्णेतुं न शक्यमिति मन्यते । किन्त्वस्य राजकन्यया सह बहवः संवादश्लोकाः प्रसिद्धाः सन्तीति विवृत्यैकं श्लोकमुदाहरणरूपेण प्रस्तौति—

"अङ्गणं तदिदमुन्मदद्विपश्रेणिशोणितविहारिणो हरेः ।
उल्लसत्तरुणकेलिपल्लवां शल्लकीं त्यजति किं मतङ्गजः ॥"

अत्र श्लोके पूर्वार्धं नृपकन्याया उत्तरार्धं च बिल्हणस्योक्तिरिति ज्ञातव्यम् । कविं तत्काव्यं च लक्ष्यीकृत्य सोदाहरणं किमप्यनवद्यं तथ्यजातं शर्मपादेनात्र विन्यस्यते । यथा—

"प्रथममयं कश्मीरेष्वासीत् काश्मीराभिजनश्च । पश्चाद्दक्षिणस्यामागत्य डाहलनरेन्द्रसभायां कविताकौशलेन गङ्गाधराख्यं सदस्यकविं विजित्य चालुक्यनृपं विक्रमाङ्कं प्रापत् । तत्रैव स्वमहाकाव्यं विक्रमाङ्कचरितं प्राणैष्ट । दक्षिणस्यां वसतोऽपि महानस्य कश्मीरेषु बहुमानः । तथा च विक्रमचरिते—

"सहोदराः कुङ्कुमकेसराणां भवन्ति नूनं कवितविलासाः ।
न शारदादेशमपास्य दृष्टस्तेषां यदन्यत्र मया प्ररोहः ॥"

वैदर्भीं रीतिं शृङ्गारं च रसमवलम्ब्य प्रायोऽस्य लेखः प्रावर्ततेति तस्मिन्नेव ग्रन्थे स्फुटम् । शब्दविन्यासप्रौढिर्नेदृशी कस्यचिदन्यस्य कवेः । तदाहैष स्वयमेव—

"प्रौढिप्रकर्षेण पुराणरीतिव्यतिक्रमः श्लाघ्यतमः कवीनाम् ।"

अस्य ग्रन्थः कथादौ प्रायो हर्षचरितमनुकरोति । अन्ते कवेरितिवृत्तं प्रदत्तम् । तत्र प्रवरपुरस्य ( श्रीनगर ) वर्णनमप्यस्ति । केवलं शब्दसौकुमार्ये न्यूनोऽयं परिमलात् ।"

निबन्धसमापनात् पूर्वं कवेरस्य प्रौढिमाधुर्यादयो गुणाः साहित्यरसिकैः सहृदयैरप्यास्वाद्या भवन्तिवति मनसिकृत्य विक्रमाङ्कचरितस्य केवलं त्रयोदश श्लोकाः समुद्धृताः। तत्र नायकस्यौत्सुक्यपरिचायकाः श्लोकाः—

"विजृम्भमाणेष्वथ पञ्चबाण-
कोदण्डसिञ्जाघनगर्जितेषु।
विलासिनीमानसमाविवेश
सा राजहंसीव नरेश्वरस्य॥

गृह्णन् गुणानह्नि विभावरीणां
दिनप्रशंसां विदधन्निशासु।
क्रमादसौ तां क्षितिमाचकाङ्क्ष
यत्र द्वयं नास्ति दिनं निशा च॥

असौ भवित्री सुभगा नतभ्रूः
करिष्यते पञ्चशरः प्रसादम्।
आन्दोलितोऽभूदिति चिन्तयासौ
त्रैलोक्यचिन्ताहरणक्षमोऽपि॥

यथा यथा निःश्वसितिस्म राजा
निरङ्कुशं कार्श्यमदर्शयच्च।
तथा तथा जागरयन्धनुर्ज्यां
भेजे जयास्थां भगवाननङ्गः॥"

## ( ११, १२ ) भास-भर्तृमेण्ठौ

निबन्धोऽयं साहित्यरत्नावल्यां सर्वान्तिमः। अस्मिन्निबन्धे भासभर्तृमेण्ठौ सहैव समीक्षितौ। पूर्वं हर्षचरिते बाणस्य भासविषयकं पद्यम्—

"सूत्रधारकृतारम्भैर्नाटकैर्बहुभूमिकैः।
सपताकैर्यशो लेभे भासो देवकुलैरिव॥" इति,

तदनु भर्तृमेण्ठसम्बन्धि राजशेखरस्य पद्यम्—

"वक्रोक्त्या मेण्ठराजस्य वहन्त्या सृणिरूपताम् ।
"आधूता इव धुन्वन्ति मूर्धानं कविकुञ्जराः ॥"

इति चोल्लिख्य महाकवीनामपि बहुमतयोरेतयोर्विषयेऽत्यल्पमेव विदुषां ज्ञानमिति संसूचितम् । मालविकाग्निमित्रप्रस्तावनायां महाकविना कालिदासेन भासस्य धृताभिधेयत्वात् तं ततोऽपि प्राचीनतरं निर्णयत्यसौ । भासस्य प्रथा कालिदासकाले तदनन्तरं चासीदित्यपि सबहुमानं व्यनक्ति । तदा भासस्य किमपि नाटकमुपलब्धं नासीत् । केवलमेतस्य यत्र कुत्रापि सूक्तिग्रन्थेषु विरल-विरलानि सूक्तान्येव प्राप्यन्तेस्म ।

कालिदासकृतात् सबहुमानोल्लेखात्स्पष्टमस्य कवेर्नाट्यकारत्वं ज्ञायते । परं कान्यासंस्तानीति तु नैव ज्ञातम् । महान्तं नाटककारं विषयीकृत्यैवम-भिप्रैति—

"अयं नाटकानि बहूनि प्रणिनाय । तेषां च नामान्यपि साम्प्रतं न विदितानि । केवलमेकं भासनाटकानां मध्ये स्वप्नवासवदत्तनामकमासीदिति प्रतीयते । तथा च श्लोकः सुक्तिमुक्तावलौ—

"भासनाटकचक्रेऽपिच्छेकैः क्षिप्ते परीक्षितुम् ।
स्वप्नवासवदत्तस्य दाहकोऽभून्न पावकः ॥"

इदानीं तुच्छेकपरीक्षादाधावशिष्टं तदेकमपि स्वप्नवासवदत्तं नोपलभ्यते इत्यहो सर्वंकषः कालस्य महिमा । नूनं प्रसादादिसम्पत्तौ कालिदासोऽपि भासस्य शिष्य इवासीदिति कालभक्षितशेषभाससूक्तीनां परिशीलनतोऽवगम्यते ।"

अत्रेदमवधेयम् । इतस्तत सूक्तिग्रन्थेषु ग्रथितभाससूक्तीरवलोक्यैव "नूनं प्रसादादिसम्पत्तौ कालिदासोऽपि भासस्य शिष्य इवे"ति शर्ममहोदयस्य समुद्घोषः सत्यं तस्यापूर्वप्रतिभायाः परिचायकः । ईदृशी सूक्ष्मनिरीक्षणशक्तिः कुत्रापि समीक्षके दृष्टिपथं नायात्यहो स्थालीपुलाकन्यायसिद्धिः शर्मपादस्य ।

तदनन्तरं भासवदेव भर्तृमेण्ठं तत्काव्यं च विशिनष्टि । यथा भासस्य कालः केवलमनुमित्यर्हस्तथैवास्यापि । तथा चोक्तम्—

"भर्तृमेण्ठस्तु हयग्रीववधमहाकाव्यकर्ता काश्मीरको महाकविरासीत्। स च मातृगुप्तनृपस्य विक्रमादित्यहर्षरक्षितस्य प्रवरसेनेन हर्षमरणानन्तरं पराभूतस्य सभायामासीदित्यादि राजतरङ्गिण्यास्तृतीयेऽध्याये उपलभ्यते। कोऽसौ मातृगुप्तः कश्च भारतसम्राट्पदव्यपदेश्यः स विक्रमापराख्यो हर्ष इति च विशेषतो न ज्ञायते। भाऊदाजीप्रभृतयोऽयं मातृगुप्त एव कालिदासमहाकविरिति प्रसिद्धिं गत इति विक्रमरक्षितत्वादिसाम्याद् वदन्तिस्म। मातृगुप्तसमयोऽप्यनिश्चित एवाद्यापि। एवं समयानिर्णयेऽपि कविताप्रकारादिपरीक्षणेन प्रायो मेण्ठः कालिदाससमकालिकस्तस्मान्नात्यर्वाचीनो वेति वक्तुं शक्यते। एतद्ग्रन्थस्य लोपः शोकायैव विदुषाम्। क्षेमेन्द्रादिप्राचीनग्रन्थकृद्भिर्दर्पणकृदाभिर्नव्यैश्च कतिभिश्चिद्रक्षिता अस्य काश्चित् सूक्तयः। अन्याश्च सूक्तिग्रन्थेषूपलब्धाः। मेण्ठनामसादृश्यादयं हस्तिपककृत्तिः प्रथममासीदिति केषाश्चिदनुमानम्।"

ततः—

> "त्यक्तो विन्ध्यगिरिः पिता भगवतो मातेव रेवा नदी
> ते ते स्नेहनिबन्धबन्धुरधियस्तुल्योदया दन्तिनः।
> त्वल्लोभान्ननु हस्तिनि स्वयमिदं बन्धाय दत्तं वपु-
> स्त्वं दूरे ध्रियसे लुठन्ति च शिरःपीठे कठोराङ्कुशाः॥
> घासग्रासं गृहाण त्यज गजकलभ प्रेमबन्धं करिण्याः
> पाशग्रन्थिव्रणानामभिमतमधुना देहि पङ्कानुलेपम्।
> दूरीभूतास्तवैते शबरवरवधूविभ्रमोद्भ्रान्तरम्या
> रेवाकूलोपकण्ठद्रुमकुसुमरजोधूसरा विन्ध्यपादाः॥"

इति पद्यद्वयानुसारमस्य कवेः हस्तिस्वभावपरिचयः समीचीनः प्रतिपाद्यते। महाकविना राजशेखरेण बालरामायणे प्रचण्डपाण्डवे च प्रस्तावनायां सबहुमानं यथासौ वर्णितस्तदपि तस्यैव श्लोकप्रमाणेन दृढं समर्थयति। यथा—

> "बभूव वल्मीकभवः पुरा कविस्ततः प्रपेदे भुवि भर्तृमेण्ठताम्।
> स्थितः पुनर्यो भवभूतिरेखया स वर्तते सम्प्रति राजशेखरः॥"

ततो विरलविरला अपि नितान्तं मधुराः प्रसादप्रचुरा अपूर्वशैलीपरिशीलनशालिन्यः काश्चित् भासभर्तृमेण्ठयोः सूक्तयोऽत्र निबन्धावसाने रसिकेभ्य उपहारीकृताः।

तासु यथा भासस्य—

"बाला च सा विदितपञ्चशरप्रपञ्चा
तन्वी च सा स्तनभरोपचिताङ्गयष्टिः।
लज्जां समुद्वहति सा वहते च धाष्ट्र्यं
हा कापि सा किमिव वा कथयामि तस्याः॥

पेया सुरा प्रियतमामुखमीक्षणीयं
ग्राह्यः स्वभावललितो विकटश्च वेषः।
येनेदमीदृशमदृश्यत मोक्षवर्त्म
दीर्घायुरस्तु भगवान्स पिनाकपाणिः॥

यदपि विबुधैः सिन्धोरन्तः कथञ्चिदुपार्जितं
तदपि सकलं चारुस्त्रीणां मुखेषु विलोक्यते।
सुरसुमनसः श्वासामोदे शशी च कपोलयो-
रमृतमधरे तिर्यग्भूते विषं च विलोचने॥

दुःखार्ते मयि दुःखिता भवति या हृष्टे प्रहृष्टा तथा
दीने दैन्यमुपैति रोषपरुषे पथ्यं वचो भाषते।
कालं वेत्ति कथाः करोति निपुणा मत्संस्तवे रज्यति
भार्या मन्त्रिवरः सखा परिजनः सैका बहुत्वं गता॥"

भर्तृमेण्ठस्यापि तथैव—

मधु च विकसितोत्पलावतंसं शशिकरपल्लवितं च हर्म्यपृष्ठम्।
मदनजनितविभ्रमा च रामा फलमिदमर्थवतां विभूतयोऽन्याः॥
इदं हि माहात्म्यमशेषसूचकं वदन्ति चिह्नं महतां मनीषिणाम्।
मनो यदेषां सुखदुःखसंभवे प्रयाति नो हर्षविषादवश्यताम्॥

विपदि धैर्यमथाभ्युदये क्षमा सदसि वाक्पटुता युधि विक्रमः ।
यशसि चाभिरुचिर्व्यसनं श्रुतौ प्रकृतिसिद्धमिदं हि महात्मनाम् ॥
न तथा नागरस्त्रीणां विलासा रमयन्ति नः ।
यथा स्वभावमुग्धानि वृत्तानि ग्राम्ययोषिताम् ॥
वाचो माधुर्यवर्षिण्यो नाभयः शिथिलांशुकाः ।
दृष्टयश्च चलद्भ्रूका मण्डनान्यान्ध्रयोषिताम् ॥"

साहित्यरत्नावलीनाम्ना "मित्रगोष्ठी" पत्रिकायां क्रमशः प्रकाशं गताः कवि-काव्यसमीक्षात्मका रामावतारशर्मनिबन्धा अस्माभिः सिंहावलोकनन्यायेन समा-लोचिताः । १८२६ शकाब्दस्य (१६०४ खृ०) वैशाखमासाच्चैत्रमासं यावत्प्रति-मासमिमे प्रकाशिताः । संस्कृतभाषायामीदृशाः कविविशेषाणां कालकलादिनि-रूपका निबन्धा इदंप्रथमतयैव शर्ममहाशयेन रचिता इति तु पूर्वमेवोक्तम् । तत्कृताः समीक्षाश्च लक्ष्याणां विशेषज्ञानसूचिकाः शर्मपादस्याप्रतिमवैदुष्यसहृद-यत्वयोः प्रमापका इत्यपि पाठकमात्रस्य नैवाविदितं भवेत् ।

भासविषये महामहोपाध्यायेन यदुक्तं तस्य विमर्शनेन जायते कश्चिदपारो विस्मयः । यस्मिन् काले शर्ममहाशयेन भासचर्चा कृता तदा तस्य नाममात्र-मेवासीज्ज्ञातम् । अथ च तमधिकृत्य शर्ममहोदयस्य सर्वे निर्णया वस्तुतत्त्व-मनुसरन्तीति नात्र कस्यचिदपि विदुषः सन्देहः । महामहोपाध्याय टी० गण-पतिशास्त्रिभिः १६०६ खृष्टाब्दतः भासनाटकानि प्रकाशयितुमारेभे । तानि दृष्ट्वा न कोऽपि विद्वानद्य संशेते यदसौ नाट्यकारः कालिदासादुत्कृष्टतर आसीदिति । अतश्च कालिदासस्य "प्रथितयशाः" इति भासविशेषणं युज्यत एव । शर्ममहाशयः ग्रन्थानदृष्ट्वापि यन्निर्णयं भासविषये जगौ तत्तस्य-समीक्षणशक्तेरप्रतिमत्वं सूचयति । संस्कृतसाहित्यक्षेत्रे चैतादृशा निबन्धा निरूपमाणाः ।

साहित्यसमीक्षाविषयका अन्या अपि केचन शर्मनिबन्धा अवशिष्यन्ते । तेषामालोचनं परस्ताद् भविष्यतीति ।

———

# संस्कृतसाहित्ये पारिजातहरणकथा

गौतमप्रसादमिश्रः

इयं पारिजातहरणकथा हरिवंशभागवतविष्णुपुराणेष्विव ब्रह्मब्रह्मवैवर्तपद्-माग्निलिङ्गपुराणेष्वपि कुत्रचित् संक्षेपेण क्वचिच्च विस्तरेण परिस्फुरति। इमां कथां प्रति वैष्णवभक्तानामिवान्येषामपि सहृदयानां चित्तानि समाकृष्टान्य-भूवन्। पौराणिककालादद्यावधि बहवः कवयो महाकवयश्च न केवलं संस्कृत-भाषायामेव, अपितु विविधासु प्रान्तभाषास्वपि[1] स्व-स्वकल्पनाभिर्विभूषितामेनां कथां समाश्रित्य बहूनि नाटकमहाकाव्यादीनि विरचितवन्तः। एकतः सभ्यजनाः विचित्रमिदं लीलामानुषविग्रहस्य चरित्रं राज्ञां राजपरिषदि संस्कृतभाषाभिः सुघटितछन्दोभिश्चागायन्, अन्यतोऽतसीकुसुमायितविशालाकाशवितानतले क्षेत्राणां रंगभूमिषु जीवनरूपकमभिनयन्तो ग्राम्यजनाश्छन्दोविहीनैः स्खलि-ताभिर्गीर्भिरिमां कथां बहुशश्च जगुः।

यदा भौतिकचाकचिक्यप्रभाविता आत्मानं सभ्यंमन्यमानाः पौराणिककथाः कपोलकल्पिता" इति कथयित्वा ताभ्यः पराङ्मुखा दृश्यन्ते, तदा अद्यापि भारतीयग्रामक्षेत्रेषु श्रमशीलकृषकललनानां मधुरो गीतध्वनिः श्रूयते। शिला-लेखेष्वपीयं कथा समुत्कीर्णा वर्तते।[2] उपजीव्यभूतेषुमहाभारतादिषु शकुन्तलो-पाख्यानसमानि शताधिकवृत्तानि सन्ति, तानि कविभिरेकदैव संस्पृष्टानि पुनश्चोच्छिष्टानीव मत्वा मन्ये नान्यैस्तानि काव्यविषयत्वेनोपात्तानि, किन्त्विदं

---

१. (अ) वंगभाषायाम्। (ब) असमियाभाषायाम्।
(स) मराठीभाषायाम्। (द) तेलगुभाषायाम्।
(च) मैथिलीभाषायां चेमां कथामाश्रित्य लिखितानां ग्रन्थानां सूचना प्रार्थ्यते।

2. Alina Grant (763) Parijat Harana Episode.

तु वृत्तं पौराणिकैश्चर्चितं, महाकविभिः श्रावितं नाटककारैर्दर्शितमन्यैश्च गीतं तथापि पुराणत्वमुच्छिष्टत्वं च नापादि । अधुनाऽपि पृथ्व्यां पृथिव्यां कियन्तः सरस्वतीसमुपासका लिखन्तो भविष्यन्तीति न जानीमहे ।

प्रथमं तावत् ब्रह्मादिपुराणान्तर्गतेयं कथा पाठकमहोदयानां समक्षं समुपस्थाप्यते—

**ब्रह्मपुराणे—**

ब्रह्मपुराणस्य द्व्यधिकशततमादध्यायाच्चतुरधिकद्विशततमाध्यायमियं कथाऽवलोक्यते—

कदाचिन्नरकासुरकृतात्याचारेणापीडितो देवेन्द्रो द्वारवत्यामाजगाम । तत्र स नरकासुरस्य विचेष्टितानि श्रीकृष्णं प्रत्याचचक्षे—

भौमोऽयं नरकोनाम प्राग्ज्योतिषपुरेश्वरः ।
करोति सर्वभूतानामपघातमरिन्दम ॥
देवसिद्धसुरादीनां नृपाणां च जनार्दन ।
हत्वा सोऽसुरः कन्या रुरोध निजमन्दिरे ॥
छत्रं यत्सलिलस्रावी तज्जहार प्रचेतसः ।
मन्दारस्य तथा शृंगं हृतवान् मणिपर्वतम् ॥
अमृतस्राविणी दिव्ये मातुर्मेऽमृतकुण्डले ।[१]
जहार सोऽसुरोऽदित्या वाञ्छत्यैरावतं द्विपम् ॥

एवं च देवानामुत्पीडनमाकलय्य किंस्वित् सचिन्त इव श्रीकृष्णे वासवं समाश्वासयामास । स्वयं च सत्यभामया सह गरुडमारुह्य प्राग्ज्योतिषपुरं प्रति प्रतस्थे । तत्र युद्धे नरकं निपातयामास । निपातिते नरकदानवे गृहीतादितिकुण्डला तन्माता भूमिर्देवी श्रीकृष्णमुपसृत्योवाच—ममोद्धारकाले भवतः संस्पर्शान्मय्युत्पन्नोऽयं मे सुतो भवता हतः । एवं त्वयैव दत्तोऽयं प्रभो, त्वयैव गृहीत इति न मे चिन्ता, तथापि भयभीतामस्य सन्ततिं परिपालय गृहाण चादित्या इमे कुण्डले । पुनश्च सुतवात्सल्यं प्रसारयन्ती सा भगवन्तमवोचत्—

---

१. ब्रह्मपुराणे २०२, ८-११

प्रसीदसर्वभूतात्मन् नरकेण कृतं च यत् ।
तत् क्षम्यतामदोषाय मत्सुतः स निपातितः ॥[१]

अनेन एकेनैव श्लोकेन "कुपुत्रो जायेत क्वचिदपि कुमाता न भवति" इति सत्यायितां नरकमातरं प्रति तथेत्युक्त्वा श्रीकृष्णो नरकस्य कन्यापुरे कन्यानां शताधिकानि सहस्राणि ददृशे । रत्नादीनि कन्याश्चताः कृष्णेन नरक-किंकरैर्द्वारकां पुरीमनायिषुः । वरुणस्य छत्रं मणिमयं च पर्वतं गरुडे समारोप्य सत्यभामया सहादितेः कुण्डले दातुं स त्रिदशपुरं जगाम ।

तत्र देवैस्तस्यार्चनं कृतम् । स अदितेः कुण्डले तस्मायच्छत् । अदितिश्च तं तुष्टाव । एवमदित्या संस्तुतो वासुदेवस्तां वरमवृणोत्—

एवमस्तु यथेच्छा ते त्वमशेषसुरासुरैः ।
अजेयः पुरुषव्याघ्र मर्त्यलोके भविष्यति[२] ॥

इति सा तस्मै वरं प्रादात् । सत्यभामायै शच्यै अपि अदितिराशिषं प्रायच्छत् ।

मत्प्रसादान्न ते सुभ्रु जरावैरूप्यमेव च ।
भविष्यत्यनवद्याङ्गि, सर्वकर्मा भविष्यसि ॥[३]

अदित्यादिष्टेन देवराजेन सम्पूजितः ससत्यभामः कृष्णो ददर्श सर्वाणि नन्दनादीन्युद्यानानि । तत्र शैत्याह्लादकरस्ताम्रपल्लवशोभितः मञ्जरीपुष्पभूषितः सुगन्धाढ्यश्च जातरूपसमप्रभः पारिजाततरुस्तयोर्नयनपथमगात् । अलौकिकं तं पारिजाततरुं दृष्ट्वा साभिप्राया सत्यभामा एवं हि श्रीकृष्णमवादीत्—

कस्मान्न द्वारकामेष नीयते कृष्ण, पादपः ।
यदि ते तद्वचः सत्यं सत्यात्यर्थं प्रियेति मे ॥

---

१. तत्रैव २०२, २६
२. ब्रह्मपुराणे २०३, २२
३. ब्रह्मपुराणे २०३, २४

बिभ्रती पारिजातस्य केशपाशेन मञ्जरीम् ।
सपत्नीनामहं मध्ये शोभयेमिति कामये ॥[१]

एवं सत्यभामया नोदितः स पारिजातमुत्पाट्य गरुत्मत्यारोपयामास। ततस्तत्रेन्द्रनियुक्ता वनरक्षिणो विप्रियं कुर्वन्तं कृष्णमवादिषुः—

शचीविभूषणार्थाय देवैरमृतमन्थने ।
उत्पादितोऽयं न क्षेमी गृहीत्वैनं गमिष्यसि ॥[२]

इत्थं वनपालकानां वचनं निशम्य शचीं शक्रं वनपालकांश्चाधिक्षिपन्ती सत्यभामोवाच—

का शची पारिजातस्य को वा शक्रः सुराधिपः ।
सामान्यः सर्वलोकानां यद्येषोऽमृतमन्थने ॥
समुत्पन्नः पुरा कस्मादेको गृह्णाति वासवः ।
यथा सुरा यथा चेन्दुर्यथा श्रीर्वनरक्षिणः ॥
सामान्यःसर्वलोकस्य पारिजातस्तथा द्रुमः ।
भर्तृबाहुमहागर्वाद्रुणद्ध्येनमथो शची ॥
तत् कथ्यतां द्रुतं गत्वा पौलोम्या वचनं मम ।
सत्यभामा वदत्येवं भर्तृगर्वोद्धताक्षरम् ॥
यदि त्वं दयिता भर्तुर्यदि तस्य प्रिया ह्यसि ।
मद्भर्तुर्हरतो वृक्षं तत्कारय निवारणम् ॥[३]

पत्युर्गुणा एव नारीणां सर्वस्वं तत्रैव तासां गर्वाधिक्यं च वसतीति प्रतिपादयन्त्या सत्यभामया पारिजातोपरि वासवस्यैकाधिपत्यं विनिन्दितम्। भर्तृबलगर्वोद्धता स्वयं च तेजस्विनी सत्यभामा शच्याः शचीपतेश्च दम्भमसहमाना भूयोऽप्युक्तवती—

---

१. तत्रैव २०३, २६, ३२
२. तत्रैव २०३, ३५
३. तत्रैव २०३, ३६-४३

जानामि ते पतिं शक्रं जानामि त्रिदशेश्वरम् ।
पारिजातं तथाप्येनं मानुषी हारयामि ते ॥[१]

एवं तयोक्ता रक्षिणो वासवं तस्या वचनमश्रावयन् । शच्याः प्रेरितः सगणः स कृष्णेन योद्धुं रणमाजगाम । प्रचण्डे संग्रामे शचीपतेः सर्वाणि बलानि शस्त्रास्त्राणि च निष्फलानि बभूवुः । ततः संक्रुद्धो देवेन्द्रः सत्वरं करे वज्रं जग्राह । एतद्दृष्ट्वा श्रीकृष्णोऽपि चक्रसुदर्शनं हस्तेऽग्रहीत् । वज्रचक्रधरौ देवराजजनार्दनौ दृष्ट्वा सचराचरं सर्वं त्रैलोक्यं हा हेति कृतवान् । वासवेन प्रक्षिप्तं वज्रं भगवान् हरिर्हस्तेन जग्राह स्वयं च—

'न मुमोच तदा चक्रं तिष्ठ तिष्ठेति चाऽब्रवीत् ॥

आत्मानं, प्रनष्टवज्रं गरुडक्षतवाहनं चावलोक्य संगरात्पलायमानं देवेन्द्रं सत्यभामा व्याजस्तुतिनिर्भरं वचनमवोचत्—

त्रैलोक्येश्वर न युक्तं शचीभर्तुः पलायनम् ।
पारिजातस्रगाभोगात्त्वामुपस्थास्यते शची ॥[२]

स्वगृहाभ्यागतानां सकपटमभ्यर्थयितारं शक्रं, मोहजनिताहंकारावलिप्तां शचीं च, समुचिताभिः शब्दावलिभिः, संवादनिपुणा सत्यभामा, बहुशस्तिरस्कृतवती—

कीदृशं देवते राज्यं पारिजातस्रगुज्ज्वलाम् ।
अपश्यतो यथापूर्वं प्रणयाभ्यागतां शचीम् ॥
अलं शक्र, प्रयासेन न व्रीडां यातुमर्हति ।
नीयतां पारिजातोऽयं देवाःसन्तु गतव्यथाः ॥
पतिगर्वावलेपेन बहुमानपुरःसरम् ।
न ददर्श गृहाऽऽयातामुपचारेण मां शची ॥
स्त्रीत्वाद् गुरुचित्ताऽहं भर्तुः श्लाघनापरा ।
ततः कृतवती शक्र, भवता सह विग्रहम् ॥[३]

---

१. ब्रह्मपुराणे २०४, ४४
२. तत्रैव २०३, ६४
३. तत्रैव २०३, ६५-६८

एतावद्भिर्वाक्यैः सत्यभामा शच्या कृतं स्वापमानं गर्वोदारतश्च प्रकाशितवती। इत्थं तयोक्त इन्द्रः सर्गस्थितिसंहारकारकेण भगवता जितस्य मे कीदृशी व्रीडेति बहुधा वचनविलासेन कृष्णं सत्यभामां च तुष्टाव।

एवं स्तुतिपरायणं तं प्रहस्य श्रीकृष्णो भावगम्भीरमित्थमगादीत्—

देवराज, भवानिन्द्रो वयं मर्त्या जगत्पते;
क्षन्तव्यं भवतैवेतदपराधकृतं मम॥
पारिजाततरुश्चायं नीयतामुचितास्पदम्।
गृहीतोऽयं मया शक्र, सत्या वचनकारणात्॥[1]

अमुना प्रकारेण कथयता श्रीकृष्णेनेन्द्राय तस्याशनिरदीयत। श्रीकृष्णस्यैवंविधव्यवहारेण लज्जयाविगलन्निवावोचद्बलारिः—

नीयतां पारिजातोऽयं कृष्ण द्वारवतीं पुरीम्।
मर्त्यलोके त्वया मुक्ते नायं संस्थास्यते भुवि॥[2]

अथानेन विधिना तेनोक्तः श्रीकृष्णस्तथेत्युक्त्वा सत्यभामया सह द्वारकामाजगाम। देवतरुं च सत्याया निष्कुटे संस्थापयामास। ततो नरकासुरावरोधादानीताभिः कन्याभिः सह श्रीकृष्णस्योपयमनं जातमित्येतावती कथाऽस्मिन् पुराणे दृश्यते।

अत्र कथायाः सुसंघटनार्थं कृष्णस्य सत्यभामायाःशीलं शक्रात् शच्याश्चोत्कृष्टतरं प्रतिपादयितुं कथाशरीरेऽपेक्षितोऽन्यथाभावोऽनुभूयते। हरिवंशपुराणे परिस्फुरन्त्योःकथयोःप्रथमा कथाऽत्र प्रधानतया पुराणकर्तुरुपजीव्या। द्वितीयकथायाः केवलं युद्धस्य वृत्तं भागत्यागेन कविनाऽत्र गृहीतम्। नारदस्य, रुक्मिण्याः सत्यभामायाः मानस्य, नारदमुखेन पारिजातयाचनस्य, पुण्यकव्रतस्य चात्र चर्चा न जायते। हरिवंशपुराणस्य प्रथमकथायां नरकासुरवधानन्तरं यथा श्रीकृष्णः देवनगरं याति तथैवास्यामपि कथायाम्। हरिवंशपुराणकथायां

१. ब्रह्मपुराणे २०४, २–३।
२. तत्रैव २०४, ७।

युद्धे श्रीकृष्णस्य सहायकौ सात्यकिप्रद्युम्नौ, वासवस्य च प्रवरजयन्तौ स्तः। सत्यभामा च तत्र न दृश्यते। किन्त्वस्यां तु सर्वे प्रसिद्धाप्रसिद्धा देवगणा इन्द्रस्य सहायका दृश्यन्ते श्रीकृष्णश्च केवलं सत्यभामाद्वितीयः। हरिवंशकथायां युद्धस्य विरामः कश्यपाऽदित्योः प्रयत्नेन जायतेऽत्र तु सर्वथा पराजिते देवेन्द्रे सदयः श्रीकृष्णः स्वयमेव युद्धाद् विरमति। हरिवंशीयकथाया युद्धवर्णनमतीव विस्तृतं वर्तते इह तु संक्षिप्तम्। हरिवंशे सत्यपि कथाविस्तरे पात्राणां चरित्राणि न तथा सुरञ्जितानि यथाऽस्मिन् पुराणे। यादृशं यत् पात्रं तादृशमेव तस्य चरित्रम्। सत्यभामायाः क्रोधोऽत्र शचीकारणको न तु रुक्मिणीकारणकः। भागवतेऽपि इयमेव कथा दृश्यते।

विष्णुपुराणैतत्पुराणकथयोरत्यधिकं साम्यं वर्तते पात्राणां सम्भाषणं चरित्राणां शीलम्, कथायाः संघटनं युद्धादीनां वर्णनं च सर्वमेव तद्रूपं विद्यते[१]। विष्णुपुराणे शक्रस्य पक्षान्न तथा सर्वे देवा योद्धुमागच्छन्ति यथाऽत्र। नामग्राहं तेषां वर्णनमत्र कृतम्। अयमेवैको विशेषोऽनयोः कथयोः।

### ब्रह्मवैवर्तपुराणे

अस्मिन् पुराणे श्रीकृष्णचरित्रवर्णनप्रसङ्गेऽतिसंक्षेपादस्याः कथाया उल्लेखो विद्यते। श्रीकृष्णजन्मखण्डस्य त्रयोदशाधिकैकशततमेऽध्याये त्रिभिश्चतुभिर्वा श्लोकैरियं कथा वर्ण्यते। सर्वे प्रसङ्गा वृत्तानामावर्ताश्च विष्णुपुराणवल्लक्ष्यन्ते।

नरकासुरवधानन्तरमदित्याः कुण्डले दातुं देवनगरगतेन ससत्यभामेन श्रीकृष्णेन बलादपहृत्य पारिजाततरुर्द्वारकामानीयते। तत्र सत्यभामया पुण्यकव्रतं विधीयते—

> जहार पारिजातं च गन्धाहङ्कारमेव च।
> सत्याञ्च कारयामास पुण्यकव्रतमुत्तमम्॥

---

१. ब्रह्मवैवर्तपुराणे ११३, ४१–४३।

७

तत्र व्रते कुमाराय आत्मानं दक्षिणां ददौ।
ब्राह्मणान्भोजयामास तेभ्योर······ ॥
सत्यभामाभिमानं च वर्द्धयामास सर्वतः।
रुक्मिण्या अपि सौभाग्यमन्यासां च नवं नवम् ॥

संक्षिप्तोऽप्ययं प्रसङ्गः स्वस्मिन्परिपूर्णः। इन्द्रप्रार्थनया नरकासुरवधस्य, अदित्याः कुण्डले दातुं भगवतो देवनगरगमनस्य, तत्र "जहार" इति पदेन युद्धेन बलात्पारिजातापहरणस्य, पुण्यकव्रतविधानस्य, सत्यभामायाः मानस्य-चानेन प्रसंगेन सूचना दीयते। सत्यभामाभिमानं, रुक्मिण्या अपि इति द्वाभ्यां पदाभ्यां पुण्यकव्रतमुत्तमञ्चेत्यनेनापि पदेन हरिवंशपुराणस्य द्वितीयाऽपि-कथा विज्ञाप्यते।

**पद्मपुराणे**

आनन्दाश्रमसंस्कृतग्रन्थमालातः प्रकाशितस्यास्य पुराणस्य चत्वारो विभागाः सन्ति। तत्र चतुर्थे विभागे षट्सप्तत्यधिकद्विशततमस्याध्यायस्य द्विचत्वारिंशत् श्लोकाद् दशाधिकैकशतश्लोकमियं पारिजातहरणकथा वर्ण्यते। अत्रापि ब्रह्मपुराणवदेव प्रायः कथास्वरूपं दृश्यते। अतोऽत्र वैशिष्ट्यो-ल्लेखनमेवोचितम्। तानि चेत्थम्—

(१) ब्रह्मपुराणे विष्ण्वादिपुराणे वा नरकासुरविचेष्टितानि इन्द्रमुखेन विज्ञापितानि किन्त्वत्र महादेवः (अस्य पुराणस्य मुख्यः श्रावकः) स्वमुखेनैव-तत्सर्वं कथयति। ब्रह्मपुराणे त्रिभिरध्यायैरियं कथा प्रतिपाद्यते इह त्वेके-नैवाध्यायेन।

(२) इह नरकासुरस्यात्याचरणानि कृष्णं विनिवेदयितुं सर्वे देवगणाः शचीपतिं पुरस्कृत्य द्वारकामाप्नुवन्ति। हरिवंशभागवतब्रह्मविष्णुपुराणेषु वासव एव ससहायस्तत्रैति।

(३) अस्मिन् पुराणे चक्रेणाहतस्य युद्धभूमौ निपतितस्य नरकासुरस्य समीपमुपगच्छति श्रीकृष्णस्तत्र च विनिपातितं सुतं समुपस्थितं च श्रीकृष्ण-मवलोक्य सुतशोकव्याकुलितहृदयाधरा श्रीकृष्णं स्तौति। सोऽपि जाताह्लाद-

हृदयः सन् सकरुणं नरकमवादीत् "वरं वृणु"। नरको गरुडोपरि संस्थितं श्रीकृष्णं प्राह—

न मे कृत्यं वरेणास्ति नरकोऽहं तथापि च।
अन्यलोकहितार्थाय वृणेऽहं वरमुत्तमम्॥
मृताहनि तु मे कृष्ण, सर्वभूतेश्वरेश्वर।
ये नरा मङ्गलस्नानं कुर्वन्ति मधुसूदन॥
न तेषां निरयप्राप्तिर्भवत्वेव भयावह॥[1]

एवमनेन लोककल्याणभावनाभरेण वचनेन तस्य चरित्रोत्कृष्टता पाठकानां चित्तानि हठादाकृष्यानन्दयति। अनेन श्रीकृष्णस्यापि शीलस्य न कापि क्षतिः। एकस्तु लोककल्याणाय द्वितीयप्रार्थयिता द्वितीयस्तु लोककल्याणविधायक एव तत् का नाम कथा चरित्रहानेः। अन्यस्मिन् पुराणे नैतादृश्युदात्तभावना नरकासुरस्य क्वचिद्दृश्यते। अतोऽस्य पुराणनिर्मातुरिदं महद् वैशिष्ट्यम्।

(४) अन्यस्मिन् पुराणे श्रीकृष्णेन सह वैरिभावापन्नो हतो नरकासुरो वैरायित एव प्राणांस्त्यजति किन्त्वत्र तु मरणात्पूर्वं भगवतश्चरणारविन्दानुरागिणं तं प्रतिपाद्य न केवलं तस्य शीलाधिक्यमेव प्रतिपादितं पुराणकर्त्राऽपि तु श्रीकृष्णभक्तिधारायां तस्य शत्रोऽपि प्रवाहिता इत्यपि प्रतिपादितम्। चेन्मनसि समीहा तदनुभवन्तु तद्दृश्यम्—

एवमस्त्विति गोविन्दो ददौ तस्मै वरं प्रभुः।
ततः पश्यन् हरेः साक्षाच्छारदाम्बुजसन्निभौ॥
चरणौ वज्रवैदूर्यनूपुराभ्यां विराजितौ।
अर्चितौ विधिरुद्राद्यैस्त्रिदशैर्मुनिभिस्तथा॥
त्यक्त्वा प्राणान्महीपुत्रः सारूप्यमगमद्धरेः।[2]

---

(१) पद्मपुराणे २७६, ६६–६७
(२) तत्रैव २७६, ६८–९०

अहो खलु महतां प्रभावो यत्र सापत्न्यमपि भक्तिभावतया विपरिणम्यते। मन्ये भवभूतिनाऽत एवेममुदात्तभावं गृहीत्वा शम्बूकस्य भावविधानमकारि। अन्यथा क्व घातको रामः क्व च शूद्रमुनेः—सत्संगजानि निधनान्यपि तारयन्तीति[1]—भावना।

(५) अन्येषु पुराणेषु कृष्णो नरकहृताः कन्याः प्रथमं द्वारकां प्रेषयति, ततो देवनगरात् परिजातमपहृत्य द्वारकां गतवांस्तासां पाणिग्रहणं करोत्यत्र तु प्राग्ज्योतिषपुर्यत्र तासां पाणिग्रहणं करोति ततो द्वारकां प्रेषयति।

(६) अतः पूर्वेषु पुराणेषु भीतं नरकपुत्रं कृष्णस्य पुरस्कृत्य सप्रार्थनं मही तदर्थमभयं याचते। एवं एकदैव भूमिः पाठकानां समक्षं दृश्यते, अस्मिन् तु द्विवारम्—एकदा नरकप्राणत्यागकाले अन्यदा तु नरकपुत्रास्तां पुरस्कृत्य यदा उपकृष्णमागच्छन्ति। अपरेषु पुराणेषु भूमिरेव एकं नरकपुत्रं पुरस्कृत्य कृष्णस्य समीपं क्षमापयितुमायाति, अत्र तु पुत्रा एव भूमिं पुरस्कृत्य तस्य समीपमागच्छन्ति। तत्र नरकस्य एकस्य पुत्रस्य चर्चा विद्यतेऽत्र तु बहूनाम्—

नरकस्य सुताः सर्वे पुरस्कृत्य महीं तदा।
गोविन्दशरणं जग्मुस्तानरक्षद् घृणानिधिः॥[2]

(७) हरिवंशादिषु पुराणेषु पृथिव्याः क्षमायाचनानन्तरं कृष्णो नरकसुतायाभयं ददाति, अत्र तु नरकासुरस्य राज्ये तान् स्थापयति च सः—

तद्राज्ये स्थाप्य तान् सर्वान् पृथिव्या वाक्यगौरवात्।[3]

(८) हरिवंशादिषु पुराणेषु शच्याः सत्यभामावमाननस्य परिजातहरणात्पूर्वं वर्णनं नास्ति पश्चादपि वासवं प्रति सत्यभामयोच्यमानेन वचनेन व्यज्यते एव यत् शच्या, सत्यभामापुरस्तादेव, स्वयं पारिजातकुसुमं धारितम् "मानुषीयमनर्हमेतस्येति" मतिं कृत्वा न च तस्यै प्रदत्तम्—

---

१. उत्तररामचरिते २, ११
२. पद्मपुराणे २७६, ७७-७८
३. तत्रैव २७६, ७८

पतिगर्वावलेपेन बहुमानपुरःसरम्।
न ददर्श गृहायातामुपचारेण मां शची ॥[१]

एवं शच्यावमानितायाः सत्यभामाया व्याकुलो निगूढश्च भावः प्राप्ते काले व्यक्तो भवति। अस्मिन् पुराणे तु शच्या कृता सत्यभामायास्तिरस्कृतिः साक्षादुल्लिखिता विद्यते यथा—

तया समर्चिता देव्या समासीना सुखासने।
तस्मिन् काले सुपुष्पाणि पारिजातस्य किंकराः॥
शच्यै देव्यै ददुः प्रीत्या सहस्राक्षेण प्रेरिताः।
प्रगृह्य तानि पुष्पाणि शची देवी सुमध्यमा॥
नीलनिर्मलकेशे च बबन्ध स्वस्य मूर्धनि।
अवमान्य तदा तत्र सत्यभामां यशस्विनीम्॥
अनर्हा मानुषी चेयं देवार्हं कुसुमं शुभम्।
इति कृत्वा मतिं तस्यै न ददौ कुसुमानि सा॥[२]

(६) एवं शच्याऽपमानिता सत्याऽन्येषु पुराणेषु नन्दनवनं गत्वा तत्र पारिजाततरुं च दृष्ट्वा कृष्णेन हारयति, नहि स्वतिरस्कृतिं कृष्णं कथयति। किन्त्वत्र तु—

विनिष्क्रम्य गृहात्तस्मात् सत्या कोपसमन्विता।
समेत्य कृष्णं भर्त्तारमुवाच कमलेक्षणा॥[३]

**सत्योवाच**

एषा शची यदुश्रेष्ठ, पारिजातेन गर्विता।
अदत्वा मम गोविन्द दधार स्वस्य मूर्धनि॥[४]

---

१. ब्रह्म पु० २०३, ६७
२. पद्मपुराणे २७६, ८५-८८
३. तत्रैव २७६, ८९
४. तत्रैव २७६, ९०

(१०) विष्णुपुराणे ब्रह्मपुराणे च वनपालकैः सह सत्यायाः संभाषणेन यादृशी ओजोधारा प्रवाह्यतेऽत्र तस्या लेशोऽपि न विद्यते। एवमेव वासवेन सहापि सत्यायाः संवादस्यात्र कल्पना न दृश्यते। कृष्ण एव शचीकृतं सत्यभामापमानं श्रावयति।

(११) हरिवंशादिषु पुराणेषु चन्द्रेण सहोपेन्द्रस्य युद्धवर्णनं बहु विस्तृतमत्र तु संक्षिप्तम्।

(१२) गृहीत वासवप्रयुक्तवज्रे श्रीकृष्णे वासवो नगेन्द्रादवरुह्य गदगदया वाचा स्तुत्वा स्तुतिभिरेव च प्राह—

न योग्यो ह्ययं कृष्ण पारिजातस्त्वया पुरा।
दत्तो मम सुराणां च कथं स्थास्यति मानुषे॥[1]

न तु पलायनपरायणो भवति यथा अन्येषु पुराणेषु दृश्यते।

(१३) पुराणान्तरेषु पराजितः सत्यभामया भर्त्सितोऽनुकम्पितश्चेन्द्रो युद्धानन्तरम्-"नीयतां पारिजातोऽयं कृष्णद्वारवतीं पुरीम्"[2]-इति कथयित्वाऽनुमन्यते द्वारवतीमानयनं पारिजातस्य। कृष्णस्तु—

"पारिजाततरुश्चायं नीयतामुचितास्पदम्"[3]—इति वासवं प्रत्युक्त्वा सौमनस्यं प्रख्यापयति। अत्र तु वासवः पारिजातं दातुं नेच्छति किन्तु कृष्णः—

शच्यावमानिता सत्या तवगेहे सुरेश्वरः।
अदत्त्वा पारिजातानि सत्यायै सा पुलोमजा॥
स्वयमेव स्वशिरसि धारयामास ते प्रिया।
अस्या निमित्तं देवेन्द्र, पारिजातो हृतो मया॥

---

१. पद्मपुराणे २७६, १००
२. ब्रह्मपुराणे २०४, ७ विष्णुपुराणे ३१, ७
३. ब्रह्मपुराणे २०४, ३

अस्यै प्रतिश्रुतं दत्तं मया सुरगणेश्वर।
तत्र गेहे पारिजातं स्थापयामीति वासव ॥
तस्माद्य न दातव्यः पारिजातः सुरेश्वर।
मानवानां हितार्थाय प्रापयिष्यामि भूतले[1] ॥

इत्येवमुक्त्वा हठात् पारिजातमपहरति।

(१४) हरिवंशपुराणे एकसंवत्सरानन्तरं पारिजातः पुनः देवलोकं प्रेष्यते विष्णुभागवतयोस्तु कदा पुनः सुरलोके प्रेषित इति प्रसङ्गः समायात्येव न। ब्रह्मपुराणे—मर्त्यलोके त्वया मुक्तेनायं संस्थास्यते भुवि[2]—
इति वचनेन भुवि कृष्णस्थितिसमकाला स्थितिः पारिजातस्य सूच्यते।

अत्रापि—

तावत्तिष्ठतु देवेन्द्र, पारिजातो ममालये।
मयि स्वर्गं गते शक्र, गृहाण त्वं यथेच्छया[3] ॥

अनेन वचनेन अनन्तरोक्तं तथ्यं सूच्यते। हरिवंशं विहायैतेषु पुराणेषु क्वचिदपि पुण्यकव्रतस्य विधानं नावलोक्यते।

गुरुमण्डलग्रन्थमालाया अष्टादशपुष्पमिति ख्यात्या प्रसिद्धं कालिकाता-नगरतः प्रकाशितमेकं "पद्मपुराणम्" वर्तते। अस्याः प्रतेः पञ्च भागाः सन्ति। तत्र चतुर्थे पञ्चमे च भागे इयं कथा परिस्फुरति। तत्रापि पञ्चमविभागगता कथा[4]ऽनुल्लेखनीयमन्यथाभावमावहन्ती हरिवंशस्य प्रथम-कथावत् विष्णुब्रह्मभागवतादिपुराणागतकथावदेव च विद्यते।

अस्य ग्रन्थस्य तुरीयभागवर्तिनी कथा सर्वेषु पुराणेष्वागताभ्यः कथाभ्यो विलक्षणैव[5] वर्तते। तथाहि—कदाचिद् ब्रह्मसुतो नारदः कृष्णं द्रष्टुमिच्छया पारिजातोद्भवानि दिव्यानि पुष्पाण्यादाय द्वारकामगात्। ऋषेर्नारदस्य स्वागतं

१. पद्मपुराणे २७६, १०२-१०५
२. ब्रह्मपुराणे २०४, ७ विष्णुपुराणे ३१, ७
३. पद्मपुराणे २७६, १०६
४. पद्मपुराणे —२४६, ४३-११०
५. पद्मपुराणे—८८, १-१८

सत्कारं च विधाय हरिस्तानि पुष्पाणि षोडशसहस्रस्त्रीभ्यो व्यभीभजत्। दैवाद्विस्मृतसत्यभामः श्रीकृष्णस्तस्यै नादादेकमपि पुष्पम्। अतः कोपातिभूमिमधिगतवती सत्यभामा कोपागारं समाविशत्। ज्ञातेदंवृत्तो हरिर्विविधाभिः कोपशामकवचनावलीभिस्तां समाश्वासयामास—

सत्ये ! त्वं मा कृथाः क्रोधं त्वत्कृते दैवतैः सह।
विरुध्य देवराजं च रोपयिष्ये तवाङ्गणे॥
कल्पद्रुमं महाभागेऽपराधं मे क्षमां कुरु।

इति कृत्वा प्रतिज्ञां तु कृष्णः ससत्यभामया, देवलोकमगात्॥[1]
तत्र देवराजं श्रीकृष्णः सत्यभामार्थं पारिजातवृक्षमयाचत्। ततः—"नायं देवद्रुमो भूम्यां नेतुं योग्यस्त्वया प्रभो[2]" इति वासवस्य वाक्येन संक्रुद्धः श्रीकृष्णो वृक्षमुत्पाट्य वाहनमारोपयामास। तदा कल्पवृक्षं त्यजेदिति बुद्ध्या वज्रमुद्यम्य ताडयामास गरुडं देवेन्द्रः। गरुडोऽपि देवेन्द्रस्याशनेर्गौरवं सम्मानयन्नेकं पत्रं विसृज्य त्वरया गत्या द्वारकामयासीत्।

तेन वज्रप्रहारेण त्रुटितात् पक्षात्—"मयूरो नकुलश्चाष[3]"—इति त्रयोऽभूवन् पतत्रिणः। कृष्णो द्वारकां संप्राप्य तं पारिजातद्रुमं सत्यभामाया गृहे आरोतिवान्।

तस्मिन्नेव काले समागतस्य नारदस्य पूजनं विधायापृच्छत्तं सात्राजितिः—

ईदृशः कल्पवृक्षोऽयं पतिरेतादृशः प्रभुः।
भवे भवे कथं प्राप्यस्तदाख्यातु भवान् मम॥[4]

एवं सत्यया संपृष्टो नारदस्तां पुण्यकव्रतं कर्तुं समादिशत्। तद्व्रतं कुर्वती सा पारिजातवृक्षसमन्वितं श्रीकृष्णं विहितैरुपस्कारैस्तोलयित्वा नारदाय प्रादात्।

---

१. पद्मपुराणे—८८, ७–१६
२. तत्रैव – ८८, १०
३. तत्रैव—८८, १३–१४
४. तत्रैव—८८–१५

सोऽपि सोर्वोपस्कारमाकृष्य त्रिदिवं जगामेत्यत्रैवास्मिन् पुराणे पारिजातहरण-कथा समाप्यते ।

स्पष्टमत्र हरिवंशपुराणान्तर्गताया द्वितीयकथायाः किञ्चिदन्यथाभूतं रूपम् । तत्र रुक्मिण्या सह रैवतकोपरि समासीनं यदुश्रेष्ठमुपगम्य नारदः पारिजातपुष्पं तस्मै ददाति । तच्च पुष्पं रुक्मिण्यै दीयते नतु कस्यैश्चिदन्यस्यै । इह तु नारदो बहूनि पुष्पाण्यानयति तानि च सर्वाभ्यः स्त्रीभ्यो विभज्यन्ते । केवलं सत्यभामया न प्राप्यते तत् पुष्पम् ।

मूलकथायां नारदस्य मुखेन पारिजातो याच्यते, अत्र तु स्वयमेव कृष्णेन तद् याच्यते । अत्र गरुडस्य त्रुटितात् पक्षात् त्रयाणां पतत्रिणामुद्भूतिस्तु विचित्रा कल्पना ।

प्रस्तुतपुराणनिर्माणसमये कथेयं लोकेषु जातबद्धमूलेति मन्यते । अत एव हि पुराणकर्त्रा संक्षेपेण कथासंकेतमात्रमेवाधिकममानि ।

## लिङ्गपुराणे

अस्मिन् पुराणे यद्यपि व्यक्तरीत्या पारिजातापहरणस्येतिवृत्तं नहि प्रदर्शितं तथापि "स हत्वा देवसंभूतं नरकं दैत्यपुङ्गवम्[1]" इति श्लोकार्धेन तद्वृत्तं प्रतीङ्गितं कृतम् । स्पष्टतयाऽत्र नरकासुरवध एवोल्लिखतः । एतद्मूलकं तद्वृत्तं तु पूर्वापरपर्यालोचनेन स्वयमेवोहनीयम् ।

## अग्निपुराणे

अस्मिन्नपि पुराणे संक्षिप्तमेव स्वरूपं कथायाः । अस्य पुराणस्य द्वादश-तमेऽध्याये त्रिंशत्संख्याकात् श्लोकाद् त्रयस्त्रिंशत्श्लोकं श्रीकृष्णचरित्रवर्ण-नावसरे भौमासुरवधवृत्तसहितं पारिजातहरणवृत्तं वर्ण्यते । यथा—

> पुरीं तु द्वारकां कृत्वा न्यवसद्यादवैर्वृतः ।
> भौमं तु नरकं हत्वा तेनानीताश्च कन्यकाः ।।

---

१. लिङ्गपुराणे ६६, ८१

 


देवगन्धर्वरक्षाणां ता उवाह जनार्दनः।
षोडशस्त्रीसहस्राणि रुक्मिण्याद्यास्तथाष्ट च ॥
सत्यभामासमायुक्तो गरुडे नरकार्दनः।
मणिशैलं सरत्नं च इन्द्रं जित्वा हरिर्दिवि
पारिजातं समानीय सत्यभामा गृहेऽकरोत्।[१]

एतावतैव नरकवधादारभ्य इन्द्रं विजित्य पारिजातापहरणं, तस्य सत्या-गृहे संस्थापनं चेत्यादि सम्पूर्णकथा संसूच्यते। अत्र हरिवंशपुराणगता प्रथमैव कथा विद्यते।

एतावता पर्यालोचनेनेदं ज्ञायते यत् पुराणेषु "पारिजातहरणकथायाः" द्वैरूप्यं वर्तते।

(१) केषुचिद्धरिवंशपुराणान्तःपातिनी प्रथमैव कथा पौराणिकानां कल्पना-वैचित्र्योद्भूतान्यथाभावसमन्विता दृश्यते, यथा—विष्णुब्रह्मपद्मादिपुराणेषु। इयमेव कथा पौराणिकसाहित्येषु नितरां प्रिया प्रसिद्धा च लक्ष्यते। नहि केनापि पौराणिकेन हरिवंशपुराणवर्तिनी द्वितीया कथाऽवमृष्टा। केवलं हि कलिकाता-प्रकाशितस्य पद्मपुराणस्य चतुर्थे भाग एवेयं कथाऽवलोक्यते।

(२) नारदेन कृष्णार्थं पुष्पं दीयते, सत्याभामामानोपनोदाय देवराज-काननात् परिजाततरुरपह्रियते, सत्यभामादिभिः पुण्यकव्रतं विधीयत इत्यादि "पारिजातहरणकथायाः" द्वितीयं स्वरूपं हरिवंशपुराण एव दृश्यते।

पौराणिकसाहित्यपरवर्तिसाहित्येषु प्रथमां कथामाश्रित्य लिखितानां नाटकमहाकाव्यादीनामल्पीयसी संख्या वर्तते। तत्र मन्ये कारणं हि नरका-सुरवधपारिजातहरणकथयोरापतनमेव। इमां कथामाश्रित्य निर्मितस्य नाटकादे-र्नामविधाने–किं नरकासुरवधमस्य नाम भवेदाहोस्वित्पारिजातहरणम् इति विडम्बनाभयमस्त्येव। प्रथमकथान्तर्गतनरकवधमुपेक्ष्य, अवशिष्टस्य वृत्तस्य-स्वल्पत्वान्महाकाव्यादेः साधु रचनाऽसंभवाच्च। अतएव कैश्चित् कविभि-

१. अग्निपुराणे १२, ३०–३३

र्नरकासुरवधवृत्तं पृथगादाय नाटकादिकं लिखितम्[1]। कैश्चित्तु द्वितीयां कथा-मादाय काव्यानि निर्मितानि।

तत्र अद्यावधि मयात्तेषु नाटकादिषु प्रथमां कथामाश्रित्य कुमारतातदेशिकैः रचितं "पारिजातनाटकम्" इत्येकमेव नाटकं वर्तते। किन्तु द्वितीयां कथा-माश्रित्य—उमापतिधर उपाध्यायस्य "पारिजातहरणम्" कविकर्णपूरस्य "पारि-जातहरणमहाकाव्यम्" शेषकृष्णस्य "पारिजातहरणचम्पूः" कविपतेरुमापति-द्विवेदिनः—पारिजातहरणं महाकाव्यम्" इति चत्वारि नाटकादीनि वर्तन्ते।

अमीषु ग्रन्थेषु यद्यपि पुराणगतैव कथा मुख्या तथापि कृतीनां चारुत्वो-त्कृष्टये कविभिःकृतानि परिवर्तनानीत्थं वर्तन्ते—

## उमापति उपाध्यायस्य पारिजातहरणे—

धरणीधरहिन्दूपतेः सभापण्डितस्य जयदेवपूर्ववर्तिनः समकालिकस्य वा उपापति उपाध्यायस्येदं नाटकं सर्वोत्कर्षेण वर्तते। संस्कृतप्राकृतमैथिलीनां त्रिवेण्याःसमलंकृतं लोकपरम्परानुकूलमिदं नाटकं "किरतनिया" इति नाटकानां कोटावापतति। अस्मिन्नाटके हरिवंशपुराणान्तःपातिनी प्रथमा कथा भावैरुद्भाव्य, अलङ्कारैरलंकृत्य रसैश्चाभिषिच्य वैचित्र्योत्पादकायिता। विस्तरभिया कवि-प्रतिभया सरसायिताऽपि कथाऽत्र न लिख्यत अपितु कविकल्पनाप्रसूतान्यथाभावा एव प्रतिपाद्यन्ते। तैरेव मन्ये न भविष्यति पाठकमहोदयानां परितोषाभावः।

(१) प्रथमं तावत् हरिवंशपुराणे कथायाः प्रारम्भो रुक्मिणीव्रतोद्यापन-मुद्दिश्य रैवतकं प्रति गमनेन जायते। अत्रापि रैवतकगमनघटना दृश्यते किन्तु न च तन्मूले रुक्मिणी व्रतोद्यापनमपि तु वसन्तशोभानुभावनम्।

(२) अर्जुनः, सुभद्रा, सुमुखी, धर्मदासादीनि पात्राण्यत्र कविकल्पनया नियोजितानि नहि तानि मूलकथायां दृश्यन्ते।

(३) मूलकथायां सत्यभामाया अनुपस्थितौ रुक्मिण्यै पुष्पप्रदानं तस्याः स्तवनं च जायेते। अत्र तु नाटकीयरीत्या लतान्तरितायाः सत्यभामायाः समक्ष-

---

१. धर्मसूरिविरचितो नरकासुरविजयव्यायोगः।

मेव सर्वं सपत्नीजनहृदयविदारणं सङ्कुच्यते। तथापि समधिकशीलवती विचारवती च सत्यभामा—"जुत्तं एदं जेठ्ठ कुमार मादाए" इति कथयित्वा स्वकीयं शीलं विभूषयति। या च सत्यभामा पुराणेषु महताऽहङ्कारेण मानेनाभिमानेन च युक्ता प्रज्वलनशिखेव वर्तते सैवात्रैतादृशी सरला सुशीला चेत्यहो वैचित्र्यं कविकल्पनायाः। अनया कल्पनयाऽधिकारिवृत्तं नायिकाभूतायाः सत्यभामायाश्चरित्रं संस्कृत्य सुकविना तस्या नायिकात्वं संस्थापितम्। पुराणवर्तिकथायां रुक्मिण्याश्चरित्रगाम्भीर्यस्य समक्षं सत्यभामायास्तीव्रमपि चरित्रं मन्दायते। "या, भोगेष्वनुत्सेकिनीव पौराणिकरुक्मिणी" पुष्पप्राप्त्यनन्तरं सलज्जेव नम्रानना दृश्यते सैवात्र नृत्यन्ती गायन्ती च लघुत्वं प्रख्यापयति स्वस्यशीलस्य यस्मात् कारणात् सत्यभामायाश्चरित्रं समुत्कृष्टतरं भवति।

(४) मूलकथायामिन्द्रस्य सहायकौ प्रवरजयन्तौ, उपेन्द्रस्य च सात्यकिप्रद्युम्नौ, अत्र त्वर्जुनसहायवान् स इन्द्रेण सह योद्धुं याति।

(५) मूलकथायां श्रीकृष्णस्यान्याभिरपि राशिभिः पुण्यकव्रतं विधीयते अत्र तु सत्यभामयैव सुभद्रया सह तद्व्रतं विधीयते।

**पारिजातनाटके**

कुमारताददेशिकैः विरचितेऽस्मिन्नाटके पुराणगतकथाद्वैरूप्यस्य समन्वयात्मकः प्रयासो दृश्यते। यत्र तत्र कृतानि तु परिवर्तनान्येवं विधानि सन्ति—

(१) रङ्गभूमिमागतेन कलहजीवातुना नारदेनेन्द्रकृष्णयोर्युद्धोत्पादकोपायश्चिन्त्यते। तत्क्षणमेवाशरीरिणी वाणी तस्य श्रुतियुगलं सुखाकरोति, "पारिजातहरणेन भवेदनयोर्महीयान् कलहः' इति। अयं भागः पुराणविरोधेन नारदस्वभावानुसारेण च कल्पितः कविना।

(२) यदा नारदः कृष्णस्य समीपमायाति तदा रुक्मिण्या सह द्यूतक्रीडायां पराजितः, पणे सर्वलोकातियातं किमपि देयमिति निर्बन्धेन बद्धः संकटे च पतितः श्रीकृष्णो नारदात्तादृशं सुमनमवाप्य पणत्वेन रुक्मिण्यै प्रयच्छतीति सर्वं कविकल्पनया प्रसूतमपि प्रख्यातवृत्ताविरोधि। एतावता श्रीकृष्णस्य दक्षिणनायकत्वमपि संरक्षितम्।

(३) नरकदानवपीडितैर्मुनिभिर्निजदुःखं निवेद्यते। ततस्तत्समकालमेव प्राग्ज्योतिषपुरं प्रति पूर्वतरं प्रेषितश्चरः प्रत्यागच्छति, श्रीकृष्णाय नरकैर्हृतानां षोडशसाहस्रीणां युवतीनां चित्राणि प्रेमपत्राणि च प्रयच्छति। सत्यभामायै पारिजाततरुदानप्रतिज्ञया नरकवधसंकल्पेन च प्रतिबद्धः कर्तव्यद्वये पतितः श्रीकृष्ण एकेन प्रयाणेन कार्यद्वयसिद्धिं विचार्य प्रस्थानं करोतीत्येतत्सर्वं कविकल्पितमेव वर्तते।

(४) इन्द्रं विजित्य पारिजाततरुं च नीत्वा द्वारकां प्रत्यावर्तनकाले गरुडमारुह्य ससत्यभाम आगच्छन् हरिः सत्यभामां प्रति भौगोलिकं वर्णनं करोति। अस्मिन् वर्णने पूर्वोत्तरपश्चिममध्यभारतं साधु मनोहारि च चित्रितम्। अयमंशः पुराणेषु क्वचिदपि न दृश्यते अपि तु कवेः प्रतिभाया विलासः।

## कविकर्णपूरस्य "पारिजातहरणम्"

अस्य महाकाव्यस्य रचयिता "कविकर्णपूर" इति प्रसिद्धम्। कर्णपूराणामनेकत्वात्केन कर्णपूरेण कदेदं निर्मितमिति निर्णेतुं दुष्करम्। अष्टादशसर्गात्मकमिदमस्ति महाकाव्यम्।

अत्र हरिवंशपुराणान्तर्गता द्वितीया कथा वर्ण्यते। आलंकारिकैः प्रतिपादितानि महाकाव्यलक्षणान्यनुसृत्य प्रख्यातस्य वृत्तस्यान्यथाभावः कृत इव लक्ष्यते। तथा च नारदेन सह पर्वतस्य स्वर्गगमनम्, लौकिकवीरवत् अर्जुनादिभिः सह सेनयोपेतस्य श्रीकृष्णस्य युद्धाय प्रस्थानम्, पथि शैलर्तुसूर्यचन्द्रोदयप्रातःसंध्याजलक्रीडादीनां वर्णनं च महाकाव्यलक्षणपूर्तिमपेक्ष्यैव द्रष्टव्यम्। शिशुपालवधस्य द्वितीयसर्गवदत्र पञ्चमे सर्गे मंत्रणासभावर्णनमुपलभ्यते—

> संतोषं गमयन् मनः खलु नृणामापात्रमापामरं
>
> स्मेरास्यो विससर्ज संसदमतिः प्राप्तोत्सवः केशवः॥

इति शिष्टश्लोकभागदर्शनादनुमीयते।

## पारिजातहरणं महाकाव्यमुमापतिद्विवेदिनः

सौभाग्यादस्य महाकाव्यस्य रचयिता अधुनापि विभूषयतीदं भारतम्। श्रीहर्षप्रणीत "नैषधीयचरित" महाकाव्यस्योद्भवानन्तरं महाकाव्यपरम्परा

सहस्राब्दादुच्छिन्नेवासीत् । इदं महाकाव्यं न केवलं तां समारोपितमपि तु "भारवेः" किरातार्जुनीयस्य, माघकृतस्य 'शिशुपालवध'स्य कविराजराजमुकुटायमानश्रीहर्षप्रणीतनैषधीयचरितस्य च श्रेणीमप्यलङ्करोति ।

अस्य महाकाव्यस्य सैव प्रख्याता पौराणिकी कथा विषयीभूता । पुराणेषु वर्णिता विविधाः पारिजातहरणकथाः अस्मिन्नेकस्वरूपतामाप्नुवन्ति । यथा हि कथयति च स्वयमेव महाकविः –

"एतद्विषयका बहवो ग्रन्थाः संस्कृतसाहित्ये सन्ति परञ्च महाकाव्यस्यास्य मूलकथा हरिवंशेतिहासात् गृहीतास्ति; किन्तु सन्दर्भशुद्ध्यै पुराणान्तरसम्वादोऽप्यत्र वर्तते" ।

पारिजातहरणवृत्तं वर्णयता महाकविना प्रसंगतोऽत्र नरकासुरवधवृत्तमपि संसूच्यते । महाकाव्यप्रकृत्यनुकूलं नगरार्णववनपर्वतनदीप्रातःसंध्यासूर्यचन्द्रोदयादीनां प्राकृतिकसम्पत्तीनां चारुतममत्र वर्णनं दृश्यते ।

रुक्मिण्या गाम्भीर्यं, सत्यभामाया औग्र्यं, कृष्णस्य च वीरशृंगारात्मकं स्वरूपमतीव सुमनोहरं प्रतिभाति । अमरनगरादापततो रम्यतमं भारतं विलोकयतः श्रीकृष्णस्य ते ते मनोभावास्तन्मुखेनैव सत्यभामां प्रति व्यज्यन्ते । उत्तरभारतस्य भौगोलिकस्थानानि तेषां च सौन्दर्यं चित्रयतो महाकवेरायासो दृश्यत एव न ।

पौराणिककथायां सत्यभामया अन्याभिश्च कृष्णनायिकाभिः पुण्यकं व्रतं विधीयते परञ्चात्राकारणमेव त्यक्तं तद्वृत्तम् । पौराणिककथायां पारिजातहरणे न केवलं रुक्मिण्यै पुष्पप्रदानजन्यः सत्यभामाया अमर्ष एव कारणमपि तु पुण्यव्रतकविधानमपि वर्तते । अनेन महाकविनैकस्यैव कारणस्योल्लेखनं कृतम् ।

एवं पारिजातहरणाख्यं वृत्तं विभिन्नेषु पुराणेषु दृश्यते । वृत्तं चेदमधिकृत्य बहूनि नाटकमहाकाव्यादीनि कविभिर्निर्मितानि । तेभ्योऽधिगतानां विषये किमपि चर्चितम्, अप्राप्तानां च नामादिकमेव विज्ञाप्यते—

(१) द्वादशशताब्दे केनापि कविराजनामभाजा महाकविना "पारिजातहरणम्" महाकाव्यम् निरमीयत। अस्य महाकाव्यस्य हस्तलिखितैका प्रतिः राजकीयप्राच्यहस्तलिखितग्रन्थागरे (मद्रास) नगरे वर्तते।

(२) त्रयोदशशताब्दे नारायणपण्डिताचार्येण पारिजातहरणवृत्तमधिकृत्य निर्मितमेकं यमककाव्यं विद्यते। अस्यापि हस्तलिखिता प्रतिः प्राच्यशोध-संस्थाने (मैसूर) नाम्नि नगरे अस्ति।

(३) रघुनाथनायकमहाराजेनापि निर्मितं "पारिजातहरणम्" वर्तते। अयं हि महाकविः सप्तदशशताब्दे विजयनगरमलंचकार।

(४) "पारिजातहरणं नाम नाटकम्" गोपालदास नामा कश्चित्कविः षोडशशताब्दे रचयामास।

(५) कविचन्द्रोपाधिधारिणा दिवाकरनाम्ना केनचित् कविना पारिजात-हरणं नाम नाटकं प्रणीतम्।

(६) मुककतिमन्ना नामकः कश्चित् कविः पारिजातहरणं नाम नाटक-मरचयत्।

एवमेव न जानीमहे कियन्तो हरिलीलारसभराः सहृदयहृदयाह्लादकाः कवीनां च प्रतिभासंभारवाहका ग्रन्थाः देशकालदूरत्वान्धकारनिलीना नास्माकं नयनगोचरतामायातानीति।

———

# महाभारते नारीशिक्षा

डा० वनमाला भवालकर:

महाभारतकालात् पूर्वमासीत् स्त्रीशिक्षायाः सुव्यवस्थेति वैदिकसन्दर्भेभ्यः स्पष्टमेव। ख्रिस्ताब्दोत्तरकालेऽपि नार्यो गुरुकुलेषु पुरुषछात्राणां सहपाठिन्यो बभूवुरित्यपि भवभूतेरुत्तररामचरिते वासन्त्या उदाहरणेन स्पष्टीकृतम्। महाभारते तु नोपलभ्यते कोऽपि निर्देशः कन्यापाठशालाया न वा निदर्शनमेकमपि विद्यार्जनाय गुरुकुलवासिन्याः कन्यायाः। सुभ्रूः, शाण्डिली, प्रभावती चैवमादयो[1] या आश्रमसंचालिका दृश्यन्ते तास्तु तपस्यायामतिथिसत्कारे वा तत्परा अपि छात्रछात्रीणामध्यापनव्यवस्थायां नासन् व्यवसिताः। न च निर्दिष्टा महाभारतेऽप्यध्ययनरताः आश्रमवासिन्यः।

एवं भूतेऽपि सुशिक्षिता आसन् महाभारते वर्णिता नार्य इति वक्ष्यते। कथं तर्हि तदानीं कन्याभिर्विद्योपार्जनं कृतम्। गुरुकुलवासाभावे स्वगृहमेवासीत् नारीणां शिक्षाकेन्द्रम्। गृहेऽपि कन्याशिक्षार्थमध्यापकस्य नियुक्तिः प्रायशो नैव दृश्यते। राजा विराट स्वपुत्र्या नृत्यगीतादिललितकलानां शिक्षायै बृहन्नलां शिक्षिकारूपेण नियुक्तवान्, इत्येकमेवोदाहरणं समग्रमहाभारते लभ्यते। नगरकन्यानां कृते नृत्यशालाप्यासीत्। उत्तरया सहान्या अन्तःपुरस्त्रियोऽपि बृहन्नलासकाशाल्ललितकलासु शिक्षामधिगतवत्यः।[2] तथापि बृहन्नलायाः क्लीबत्वस्य प्राक्परीक्षां कारयित्वैव तामन्तःपुरे स्थापितवानित्येतावता सूच्यते कन्याशिक्षार्थं पुरुषशिक्षकाणां नियुक्तिर्नासीजनेषु सम्मतेति। यद्यपि कालिदासस्य मालविकाग्निमित्रे पुरुषनृत्याचार्यान्प्रति नास्त्येतादृश आक्षेपः। पाणिनिना स्त्रीशिक्षिकाया उपाध्यायेति व्यपदेशं कृत्वा तस्या उपाध्यायानीतो

---

१. शल्य ५१.५-६, ५३-६, उद्योग १११-१

२. विराट १०-११-१२

विशेषं च प्रदर्श्य तत्समयेऽध्यापिकानामप्यासीद् व्यवस्थेति व्यञ्जितम्। किन्तु महाभारते यथा कन्याशिक्षार्थं पुरुषशिक्षका नाभिमतास्तथैव न निर्दिष्टा का अप्युपाध्याया कन्यकानां कृते। इत्थं नासन् कन्यानां गुरुकुलानि न वा पाठाशाला न शिक्षका न वा शिक्षिका:।

प्रायः कन्या अनवगुण्ठिता गृह एव भ्रातृभिः सह यथावसरं विद्वद्भ्यो विद्यार्जनमकुर्वन्। यदा द्रुपदपुत्राः केनापि ज्ञानवृद्धब्राह्मणेन बृहस्पतिनीतिशास्त्र उपदिष्टास्तदा पितुरङ्कोपविष्टया द्रौपद्यापि तदुपदेशग्रहणं कृतम्।[१] गान्धारी तद्भ्राता शकुनिश्चार्थशास्त्रविशारदावित्युभौ सममेव ख्यातौ अभवतः सममेव शिक्षितवन्तौ।[२] स्थूलकेशिन आश्रमे तस्य पुत्रीकृता प्रमद्वरा,[३] उद्दालकपुत्री सुजाता[४], शुक्रकन्या देवयानी[५] च स्वपितृशिष्यैः सहाभीष्टं वार्तालापं कर्तुं स्वतंत्रा आसन्। येन न केवलं तासां ज्ञानोपार्जना वसरोऽपि तु कदाचित् शिष्यसमवायादनुरूपतिवरणमप्यासीत् सुलभम्।

विशेषतः स्त्रीजीवनस्य सफलताया आवश्यकं ज्ञानार्जनं कन्या प्रधानतः स्वमातुः सकाशादेव कृतवती। स्वकर्त्तव्यानां गणनायां "कन्याश्च परिशिक्षये"[६] इति कथयन्त्या शाण्डिल्या प्रकटितेयं व्यवस्था। "गुरूणां चैव सर्वेषां जनयित्री परमो गुरुः"[७] "नास्ति मातृसमो गुरुः"[८] इत्यादिवचनैर्मातुः गुरुरूपेण श्रेष्ठत्वं पुनः पुनः प्रतिपादितम्।

---

१. आरण्यक ३३-५७, ५८
२. आदि ५७-६४
३. आदि ८-११
४. आश्वमेधिक ५५-२३
५. आदि ७१-२१-२४ ७२'१-५
६. अनुशासन १८५, १६
७. आदि १८८, १४
८. शांति १७६, १६

दशाचार्याननुपाध्याय उपाध्यायान् पिता दश ।
दश चैव पितृन् माता...................
..............नास्ति मातृसमो गुरुः ॥[१]

इत्यस्मिन् पुत्राणां शिक्षायामपि मातुर्महत्त्वमुक्तं यद्यपि कुमाराणां गुरुसकाशाद् विद्याभ्यासस्य वर्णनानि विविधपाठ्यक्रमाणां विवरणानि चोपलभ्यन्ते यथा भीष्म[२]-धृतराष्ट्र-पाण्डु विदुर[३]-पाण्डव[४]-अभिमन्यु-पाण्डवपुत्राः[५]-द्रोण[६] आस्तीक[७]-कृप-[८]-आदीनां कुमारकाणाम् । एवं सति यासां नासन्नन्य आचार्या निर्धारितपाठ्यक्रमा वा तासां कन्यकानां कृते मातैवासीत्परमो गुरुरिति नास्ति चित्रम् । मातेव पिता भ्राता ये केचनान्ये गुरुजनाः परिवारे तेभ्योऽपि कन्या ज्ञानार्जनस्यावकाशं लेभिरे । शुक्राचार्येण देवयानी धर्म्यवचनैस्तत्त्वमुपदिष्टा कृष्णेन च सुभद्रा । अश्वपतिः सावित्रीं धर्मशास्त्रोक्तिं श्रावितवान्[९] कुन्तिभोजश्च कुन्तीमातिथ्यधर्मस्य माहात्म्यम्[१०] । धनाढ्यकुटुम्बेषु नियुक्ताभ्यो व्यवहारकुशलाभ्यो धात्रीभ्योऽपि कार्याकार्यविवेकं प्रापुः कन्याः । कन्यात्वे वर्त्तमानायाः कुन्त्या विपत्काले तस्या धात्र्यैवासीद् विश्वस्ता मार्गदर्शिका ।[११] विवाहानन्तरं श्वश्रूस्तथान्याः स्त्रियो वध्वा मार्गदर्शिन्य आसन् ।

१. अनुशासन १६३, १५
२. आदि ६४, ३१-३६
३. आदि १०२, १६-१८; १२२, ३६-४०-४५
४. आदि ११७-२६; १२१, १०२
५. आदि २१३, ६५-६८, ८०, ८१
६. आदि ४४१८
७. आदि १२०, २०
८. आदि १२१, ५-७
९. आदि ७४, १-७ सभा २-५, आरण्यक २७७, ३४-३५
१०. आरण्यक २८७, १५-१६
११. आरण्यक २६२, ३-६

कुन्ती[१]-देवकी[२]-गान्धारी[३]-आदयः स्वस्वपुत्रवधूः कुटुम्बधर्मं कार्याकार्यविवेकं पुण्यकर्माणि चाशिक्षयन्। द्रौपद्या सत्यभामा[४] शाण्डिल्या च सुमना[५] स्त्रीधर्मविवेचनं श्राविते। उमयाऽपि पत्युः समक्षं तस्यैवानुनयेनर्षिगणसमवाये नारीहिताय पातिव्रत्यस्य रहस्यं सुस्पष्टीकृतम्।[६] अस्मिन् प्रसङ्गे स्त्रीकृते पुरुषोपदेशात् स्त्रीकृतोपदेशस्यातिशयं समर्थयता महादेवेनोमां प्रतीत्थं शंसितम्—

त्वया चोक्तं विशेषेण गुणीभूतं हि तिष्ठति।
स्त्रिय एव सदा लोके स्त्रीगणस्य गतिः प्रिये॥
प्रमदोक्तं तु यत्किञ्चित् तत् स्त्रीषु बहुमन्यते।
न तथा मन्यते स्त्रीषु पुरुषोक्तमनिन्दिते॥[७]

एवं सत्यपि पतिरेवासीद् विवाहितायाः परमो गुरुः। स्वभार्याया व्यक्तित्वविकासे तस्यैव सहयोगः प्रधानरूपेणापेक्षितः। उमेवान्याः कतिपयाः प्रमदाः स्वभर्त्रा सह विविधविषयानधिकृत्य गम्भीरविचारविनिमयैर्ज्ञानमर्जितवत्यः। भर्त्रा सह सुवर्चलाया अध्यात्मचर्चा,[८] ब्राह्मणदम्पत्योस्तत्त्वज्ञानविषयकः संवाद एवमन्येषां पतिपत्नीनां संभाषणानि पत्युः सकाशाद् भार्याया ज्ञानग्रहणस्य सन्ति निदर्शनानि। प्रायो यथावसरं पुरुषाः सुविचारयुक्तैर्वचनैः पत्नीनां मार्गदर्शनमकुर्वन्। युधिष्ठिरेण भीमेन[९] च धर्माचरणस्य तत्त्वमुपदिष्टा द्रौपदी युक्तिभिरुदाहरणैश्च।

१. आरण्यक २२२·३२
२. अनुशासन ६६·३६
३. आश्रमवासिक ४४·५०
४. आरण्यक अध्याय २२२·२२३
५. अनुशासन १८५; २५०
६. अनुशासन २०७·२४७
७. अनुशासन २४८, १०·११
८. शांति, Appendix.
९. आरण्यक ३०·३५; विराट २०·४

गृहागतानामतिथीनां मुखादुपदेशश्रवणं स्त्रीणामासीदपरो ज्ञानोपलब्धेरुपायः। पर्यटनपराः शास्त्रपारङ्गता ब्राह्मणा ऋषिमुनयश्चातिथिरूपेण सम्पूजिता गृहे गृहे। विशेषतो राज्ञां प्रासादेषु विभिन्नप्रदेशेभ्य अभ्यागतानामतिथीनां निवासो नित्यमेवासीत्। धृतराष्ट्रस्य प्रासाद इत्थं निवसत्सु ब्राह्मणेषु केनाप्येकेन बाह्लीकमद्रादिविदूरदेशानां वृत्तान्तो निवेदितः।[१] वर्षाकाले चतुरो मासान् यावत् विद्वदतिथीनां राजप्रासादेषु वास्तव्यं स्वाभाविकमेवाभूत्। एतादृश एवावसरे राज्ञा जनकेन पञ्चशिखात् सांख्यज्ञानस्य गूढतत्त्वं विज्ञातम्।[२] अतिथीनां समागमे प्रायः परिवारस्य स्त्रीजनस्याप्युपस्थितिरपेक्षितासीत्। यतो गृहस्था अतिथीनां पूजनं सपत्नीका कुर्वन्तिस्म। गृहिणीनां कर्तव्येषु प्रामुख्येन स्थानमासीदतिथिसत्कारस्य। तथैव कन्या अन्याश्च स्त्रियोऽतिथिदर्शनायानिर्बन्धमुपातिष्ठन्। कन्यात्वे द्रौपद्या पितुर्गृहे समुपागताद्विद्वद्ब्राह्मणाद् बृहस्पतिनीतिशास्त्रमधीतम्। युधिष्ठिरस्य प्रासादे गृहिणीकर्तव्यरता द्रौपदी नित्यमतिथिसहस्राणां यतिमुनिब्राह्मणस्नातकानां सेवायामहर्निशं तत्परासीत्[३]। वनवासेऽपि कतिपयविद्वांसो युधिष्ठिरस्य सहवासिनो बभूवुरन्ये च बहव ऋषिमुनयस्तस्य दर्शनाकांक्षया तत्रागच्छन्। तेषां मिथो वार्तालापेषु तत्रैव तिष्ठन्ती द्रौपदी विविधविषयचर्चाः श्रोतुमवसरं लब्धवती।[४] विधवाऽपि कुन्ती धृतराष्ट्रगान्धारीसहवासे वनेऽतिथिस्वागतपरा विद्वद्विचारविनिमयं श्रवणगोचरीकर्तुमशक्नोत्।[५] गृहस्थस्य गृहेऽतिथिसत्कारस्य विशेषाधिकारिण्य आसन् कन्याः। कुन्ती[६]-सृञ्जयकन्यादयो[७] राजकन्या अतिथितोषणे

१. कर्ण ३०.८६,

२. शान्ति ३०८.२६-२७

३. सभा ४८.३६-४१; आरण्यक ३३.५८

४. आरण्यक ३२.११-१२; १८०.१-२

५. आश्रमवासिक २६.३-४

६. आरण्यक २८७.१४

७. शान्ति ३०.१२-१४

नियुक्तास्तेभ्य आत्मोन्नतिमकुर्वन्। यथा दुर्वाससाथर्वमन्त्रप्रयोग उपदिष्टा कुन्ती। न केवलं राजप्रासादे, अपि तु साधारणकुटुम्बेष्वपि दृश्यत एतादृशी व्यवस्था। तत्रापि देशान्तरादतिथिरूपेणागतेभ्यो यात्रिकेभ्योऽन्यदेशवृत्ताना-मितिहासपुराणादिकथानां गृहजनैः श्रवणं सुलभमेवासीत्। एकचक्रायां पाण्डवानां निवासो ब्राह्मणगृह आसीत्। तत्र सम्प्राप्तस्यातिथेर्मुखात् कुन्त्यापि श्रुता देशान्तरवृत्तान्ताः।[१] कस्यापि शिल्पिनो गेह उपस्थितः कोऽपि यात्रिकः बाह्लीकानामाचारविचारान् श्रावितवान्।[२] आश्रमनिवासिन्यपि शकुन्तला कस्याप्यतिथेः कण्वस्य सहालापं निशम्य स्वजन्मवृत्तान्तं विदित-वती।[३] इत्थमतिथिगणानां सान्निध्यमपि बहुधा स्त्रीणां ज्ञानोपार्जनाय सुलभ-मभूत्। केवलमन्येषां वार्तालापस्य श्रवणमेव नासीत् नारीणां जिज्ञासाशम-नोपायः, अपितु परिप्रश्नैस्ताः स्वशङ्कासमाधानमपि कारयित्वा ज्ञानसंवर्धनाय प्रयत्नशीला आसन्। यथा देवकी नक्षत्रविषयकं प्रश्नं नारदं पृष्टवती।[४]

अपरं च कथादिकथनश्रवणयोः स्त्रीणां सहजा रुचिरासीत्। अतो यस्मात्कस्मादपि ज्ञानवृद्धात् कथाख्यायिकामुखेनापि नार्यः ज्ञानावचयं कुर्वन्त्यो दृश्यन्ते। नृत्यगीतिशिक्षाया अतिरिक्तं कथापठनमप्यासीत् बृहन्नलायाः करणीयं विराटनृपस्यान्तःपुरे। तथा हि—

पठन्नाख्यायिकां नाम स्त्रीभावेन पुनः पुनः।
रमयिष्ये महीपालमन्यांश्चान्तःपुरे जनान्॥
प्रजानां समुदाचारं बहु कर्म कृतं वदन्।[५]

अनेन कथाख्यादीनां श्रवणं न केवलं मनोरञ्जनाय, अपि तु ज्ञानायापीति

---

१. आदि १५३·५
२. कर्ण ३०·४६,५७
३. आदि ६५·१६
४. अनुशासन ६६·३
५. विराट २·२५

स्पष्टं भासते । स्त्रीणां कथाश्रवणरुचेः सन्ति यत्र तत्रोदाहरणानि यथा वसुम्यो गङ्गा गरुडाख्यानमश्रृणोत्[१] ।

सत्यं नगरग्रामवासिन्यः कन्या आचार्याणामाश्रमेषु विद्यार्जनाय नैव प्रेषिताः । तथापि नासन्नाश्रमाः कन्याविहीनाः । आश्रमनिवासिन आचार्या गार्हस्थ्ये स्थिता अपि दृश्यन्ते । तेषां परिवारे पत्नीकन्यादिः स्त्रीजनो विद्यतेस्म। इमा नार्य आश्रमेषु निरन्तरं वेदवेदाङ्गशास्त्रादीनां पठनपाठनमनायासमेव कर्णे कुर्वन्त्यस्तासु तासु विद्यासु परिचयमुपाचिन्वन् । अतः किमत्र चित्रं यदि वेदाध्ययनं विनाऽपि शकुन्तला निजमतानां समर्थने वेदमन्त्रानुवाच।[२] अरुन्धती-द्रौपदी-सावित्री-शाण्डिलीवदाश्रमवासिन्यो बहुश्रुता विदुष्यः संजाता इतीदं स्वाभाविकं दृश्यते ।

अपरोऽप्यासीत्प्रमदानां ज्ञानसंवर्धनोपायः । तीर्थयात्रासु पर्यटनेषु च यथाद्यतने तथैव तदानीमपि ज्ञानोपचयस्यासीदवसरः । फलश्रुत्यनुसारं स्त्रियोऽपि तीर्थयात्रापुण्यस्याधिकारिण्यो निर्दिष्टाः ।[३]

स्त्रीणां विद्यार्जने क आसन् पाठ्यविषया इति प्रश्नो व्यर्थ एव प्रतिभाति। यतः यत्र कन्याविद्यालयानामन्यशिक्षाप्रबन्धानामेवाभावो विद्यते तत्र कुतस्तासां निर्धारितपाठ्यक्रमः ! तथापि सम्यग् विचारिते यथा स्त्रीशिक्षाया उपाया अवगन्तुं शक्यास्तथैव तासां शिक्षाविषया अपि तासां चरित्रदर्शनेनानुमातुं शक्याः।

नारीशिक्षायां धार्मिकविषयाणां प्राधान्यं स्त्रीणां धर्मपरायणतया सूच्यते। तथापि महाभारते प्रमदानां वेदाध्ययनपरम्परा नष्टप्राया एव दृश्यते । स्त्रियः शास्त्रज्ञानरहिताः शूद्रपतितैरिव च ताभिः सह संभाषणं ब्रह्मचारिणां वर्जनीयमित्यप्यादिष्टम्[४] । किन्तु स्त्रीभिर्वेदोच्चारणे नासीत् प्रतिषेधः । दुष्यन्तसभायां शकुन्तलया "वेदेष्वपि वदन्तीमं मन्त्रजातं द्विजातयः" इति प्रस्तावं

१. अनुशासन ४४·६
२. आदि ६८, ६१–६३
३. आरण्यक ३, ८१
४. अनुशासन ७५, १३

कृत्वा, "अङ्गादङ्गात्सम्भवसि" "आत्मा वै पुत्रनामासि" एवमादिवेदमन्त्रा उद्धृताः।[१] अथर्वमन्त्रोपयोगे दुर्वाससोपदिष्टा कुन्ती माद्र्यापि तन्मन्त्र-ग्रहणं कारितवती।[२] अनेनैव प्रमाणेन, आलतेकरमहोदयैः स्वग्रन्थे प्रतिपादितं यत् कुन्ती "अथर्ववेदपण्डिता" आसीत्।[३] तदस्तु वा न वा स्त्रियो वेदज्ञानबाह्या नासन्नित्येतावत्तु सुनिश्चितमेव। यत ओघवतीनाम्ना कयाप्यन्यथापि वेदोक्तविधिना सम्पादितोऽतिथिसत्कारः।[४]

वैदिकयुगे वेदाध्ययने यजने चासीन्नारीणामधिकार इति सत्यमेव। वेद-मन्त्रद्रष्टृषु स्त्रीणामपि सन्ति नामानि। अथर्ववेदेऽपि ब्रह्मचर्यपालनं कुर्वन्त्यः कन्या निर्दिष्टाः। उपनिषत्सु ब्रह्मविद्यासु पुरुषेभ्योऽविशिष्टा ब्रह्म-वादिन्यः स्त्रियः। किन्तु शनैः शनैः कन्यानां वेदाध्ययनमेव मतमनावश्यकं, गुरूपसदनाभावे च कन्यानामुपनयनमप्यभूत् व्यर्थम्। तथापि प्राचीनपरम्परापि न सहसा परित्यज्यते। अतो धर्मसूत्रयुगे कन्या अपि यज्ञोपवीतधारिण्यो बभूवुः। किन्तु मनुस्मृतौ बालिकानामुपनयनं विवाहसमय एव मन्त्रहीनमेव कथमपि करणीयमिति कन्याया उपनयनस्य प्रथा केवलमुपचाररूपेणावशिष्टा। कालान्तरेणैवं उपचारोऽपि नष्टप्रायो जातः। यतो महाभारते न सकृदपि निर्दिष्टं कन्योपनयनम्। पुरातनकथामुखेन गोचरीकृतानां ब्रह्मवादिनीनामपि न दृश्यते गुरुकुलवासः, उपनयनं यज्ञोपवीतधारणं वा। सम्भवतस्ताः स्वपितुः पितृव्यात् भ्रातुर्वा सकाशात्सावित्रीमन्त्रं गृहीत्वा गृह एव ब्रह्मचर्यं वेदाध्ययनं च यथाशक्यं कृतवत्यः।

महाभारतकाले कन्यानां गुरुकुलवासस्य प्रतिषेध आसीदित्यपरोऽपि हेतुः। धर्मशास्त्रैः प्रभाविते समाजे पवित्रताया प्रतिष्ठितमर्यादा उन्नता आसन्।

---

१. आदि ६८·६१–६३

२. आरण्यक २८६·२०, आदि ११२·३४, ११५·१५

३. आलतेकर—प्राचीन भारतीय शिक्षण पद्धति पृ० १५६

४. अनुशासन २·६७

तथापि शरीरबल आधारितायां समाजरचनायां तासां परिपालने तु पदे पदे बाधा उपस्थिताः। लघूनि बहुसंख्यकानि राज्यानि, परचक्राभिधाने शत्रुभिः स्त्रीष्वत्याचारभयं, राज्ञो राजपुरुषतश्च स्त्रीशीलभङ्गभीतिः, दस्युचौरादिभिरपहरणत्रासः, इत्यादयस्तस्मिन् युगे नासम्भवा न वा न प्रचलिताः। तथैव तपःप्रभावाच्छापसमर्थैः ऋषिभिः कृते कन्यायाचने नासीत्कस्यचिद् राज्ञोऽपि सामर्थ्यं तन्निरोधे। अत एतेषां सम्भाव्यसंकटानामुपात्तानां प्रतिकारयोजनापेक्षया तेभ्यो नारीणां प्रागेव सुरक्षायै गोपनं सुलभं मतम्। अनया दृष्ट्येदमेवोचितमासीद्यन्नारीणां शिक्षा गृह एव भवेद् येन बाह्यबलप्रतिकारस्यावसर एव नापतेत्। पुरुषकृतेषु सत्स्वपि नैतिकनिर्बन्धेषु प्रमदानां स्वाभाविकमाकर्षणं नियन्तुमशक्तैः पुरुषैर्बलात्कारं सम्भाव्य तत्पूर्वप्रतिकार एव प्रशस्यो मतः। अत एतादृशे समाजे गृह एव पितुः संरक्षणे कन्यया, पत्युः पुत्रस्य वा रक्षणे विवाहितया स्थातव्यमित्यासीत्प्रायो धारणा। आश्रमवासिनां परिवारे स्थिताः स्त्रिय आश्रमेषु न्यवसन्, असाधारणस्त्रीभिः कृतं तपस्यार्थमरण्यगमनं स्वीकृतं नारीभिः। तथापि साधारणरूपेण स्त्रीणां गृहाद्बहिर्वासोऽसुरक्षितो मतो विद्याभ्यासार्थं च न गुरुकुलमाश्रमं प्रेषिताः कन्याः। आविवाहं स्वगृहे ताभिर्यथाशक्यं ज्ञानार्जनं करणीयमित्येतावदेवासीत् तासामपेक्षितम्।

मोक्षधर्मे रता मुण्डितशिरा नैष्ठिकब्रह्मचारिणी सुलभा[१], वृद्धाऽविवाहिता तपस्विनी सुभ्रूः[२], कुमारी ब्रह्मचारिणी स्रुचावती[३], योगसिद्धा ब्रह्मचारिणी बृहस्पतिभगिनी[४], ब्रह्मवादिन्यत्रिभार्या[५], संशितप्रज्ञारुन्धती[६], कौमारब्रह्मचा-

---

१. शांति ३०८–१८४

२. शल्य ५१, ८–९

३. शल्य ४७–२

४. आदि ६०–२६

५. अनुशासन ४५–७८

६. शल्य ४५–४७

रिणी शाण्डिली[1] चैवमादयः काश्चित् कुमार्यः काश्चिच्च विवाहिता ब्रह्मवादिन्यो महाभारते पुरावृत्तान्तकथनेषु वर्णिताः। महाभारतकथापात्रभूता द्रोणाचार्यपत्नी कृपी जटिला ब्रह्मचारिणी शमे दमे च रतेति वर्णिता[2]। अतो कन्यानामुपनयनस्याभावेऽपि नारीणां वेदमन्त्रोच्चारणक्षमत्वं स्पष्टमेव।

स्त्रीकृतसंध्यावन्दनमपि न निर्दिष्टं महाभारते। तथापि नार्यो मन्त्रपठने कुशला दृश्यन्ते। यथा कापि विप्रकन्याऽष्टाक्षरमन्त्रजपेन परमगतिं प्राप्तवती।[3] यथा वा ब्राह्मणी शाण्डिली "बलिमन्त्रोपबृंहितमन्नं" अतिथय अयच्छत्[4]। कुमारीभिः पतिवशीकरणायाभिचारमंत्राः प्रयुक्ता इत्यपि सूचितं महाभारते।[5] प्रार्थनामन्त्रा बहुशः कण्ठस्थीकृता नारीभिः। तथा च आशीर्वादेषु स्वस्तिवाचनेषु देवप्रार्थनासु वा ताभिरुच्चारितानां शब्दानां स्वरूपं मन्त्रवत्प्रतीयते। विनतया गरुडस्याशीर्वादात्मकं स्वस्तिवाचनं[6] कर्णमुत्सृजन्त्या कुन्त्या कृता विविधदैवतानां प्रार्थना[7], शास्त्रप्राप्तये प्रस्थितस्यार्जुनस्य कृते द्रौपद्या स्वस्तिवाचनं[8], पुत्रप्राप्त्यर्थं तपसे गन्तुकामस्य कृष्णस्य जाम्बवत्या स्वस्त्ययनं[9], युद्धे मृतस्याभिमन्योः सद्गतये सुभद्राया देवप्रार्थना[10], कद्रोरिन्द्रप्रार्थना[11], द्रौपद्या कृता कृष्णस्तुति[12] रेवमादीनि बहूनि सन्ति स्त्रीणां मन्त्रपठनस्य निदर्शनानि। सूर्यस्तुतेः फलश्रुतौ स्त्रियोऽपि तत्पठनेनाभीष्टं प्राप्नुवन्तीति निर्दिष्टम्[13]। अतः परम्परागतदेवस्तवनानि मुखाग्राणि कृत्वा तेषां प्रयोगः स्त्रिभिरपि स्वच्छन्दं कृतः। कुन्ती 'सदा स्वस्त्ययने रता' इति प्रशंसिता।[14] अशिष्टा इति निन्दितानां निवासभूमिषु मद्रेष्वपि स्त्रियो

---

१. शल्य ४३, ६–७
२. स्त्री २३–३६
३. अनुशासन २५३-१०
४. उद्योग १११-३
५. आरण्यक २२२-६
६. आदि २४. ८-६
७. आरण्यक २६२. १०-१४
८. आरण्यक ३८.२४-२५
६. अनुशासन ४५.२५
१०. द्रोण ५५.२०-२३
११. आदि २१.७-१७
१२. आरण्यक १३.४३-५२
१३. आरण्यक २. एपेन्डिक्स
१४. उद्योग ८१-३७

गाथा गायन्तिस्म[१]। अतो मन्त्रादीनां पठनपाठनं कण्ठस्थीकरणं च स्त्रीशिक्षायां प्रधानमङ्गमित्यवभासते।

वर्णाश्रमधर्मैरन्यैश्च धर्मशास्त्रवचनैः सुपरिचिता दृश्यन्ते द्रौपदी-कुन्ती-गान्धारी-सुभद्रा-सावित्री-दमयन्ती-विदुलादयः स्त्रियः। राजकुलक्षत्राण्यो यथावसरं धर्मज्ञवचनानामुद्धरणैः प्रमाणितैः प्रभावशालिभिरुपदेशैः पुरुषाणामपि मार्गदर्शनं कृतवत्यः। नागराजपत्नी चातुर्वर्ण्यधर्माणां विवेचनं कृत्वा स्वपतिं गृहस्थकर्तव्योन्मुखं कर्तुमलमासीत्[२]। सावित्र्याः "सकृदंशो निपतति" इत्यादि धर्मशास्त्रानुसारीणि वचनानि महर्षिनारदेनापि प्रशंसितानि[३]। एतादृश्यो राजकन्या इव साधारणकुटुम्बस्था ब्राह्मणी द्वारोपस्थितं क्रुद्धं ब्राह्मणातिथिं ब्राह्मणस्य लक्षणानि सम्यक् श्रावितवती[४]। अन्या च ब्राह्मणी पातिव्रत्यस्यादर्शानां विवेचनमकरोत्[५]। अल्पवयस्का ब्राह्मणबालिकापि धर्मशास्त्रस्यादेशान् वक्तुं पालयितुं च पारयन्ती दृश्यते[६] आश्रमे संवर्धिता शकुन्तला राजसभायां राजानमपि सत्यासत्यस्य मर्म प्रदर्शयितुमलमासीत्।[७] देवयान्या स्ववाग्विस्तरैस्तूष्णीकृतः शुक्राचार्यः।[८] एतानि बहून्यन्यानि च सन्त्युदाहरणानि महाभारते स्त्रीणां धर्मशास्त्रज्ञानं प्रमाणीकर्तुम्।

प्रायः क्षत्राण्योऽर्थशास्त्रे निपुणा दृश्यन्ते। अर्थशास्त्रविशारदेति विश्रुतासीद्गान्धारी राजसभायां च विदुलावत् तस्याः परामर्शो नित्यमतीवाहृतः।[९] राज्यशासने भीष्मः सत्यवत्या मतौ स्थित आसीत्।[१०] कथं स्त्रियो नीतिशास्त्रज्ञानं विना राज्यशासने सहयोगदानयोग्या भवेयुरित्यपि विचारणीयम्।

स्त्रीषु चिरप्रतिष्ठिता धर्मपरायणतैव तासां तत्त्वज्ञाने रुचिं प्रावर्धयत्। द्रौपदी-कुन्ती-गान्धारी-दमयन्त्यादयः क्षत्रियनार्य ईश्वरे दैवे कर्मफले च श्रद्-

१. कर्ण २७-७१
२. शांति ३४८.५ ११
३. आरण्यक २७८.२५-२८
४. आरण्यक १९७.३१-४०
५. आदि १४६.२-७, २७.
६. आदि १४७, ३–४
७. आदि ६८–२५–६३; ६९–५–२४
८. आदि ७४–८–१२
९. उद्योग १३१–३
१०. आदि ९६, १, ४; ८५, ५; ९६–४६

धानास्तत्त्वज्ञानं प्रत्याकृष्टाः। शमदमप्रधानेषु तपोवनेषु निवसन्त्यो मुनिकन्या ऋषिपत्न्यो ब्रह्मनिष्ठब्राह्मण्यश्चाध्यात्मज्ञानेऽधिकतरं तत्परा आसन्। तथापि मोक्षमार्गरता आत्मजिज्ञासया जीवनं यापयन्त्यः सुलभेव[1] नार्योऽपवादरूपेणैव दृश्यन्ते महाभारते। आध्यात्मिकोन्नतये प्रयत्नशीला ब्राह्मणी[2], योगसिद्धा सर्वतत्त्वज्ञा शाण्डिली[3], आत्मज्ञानोन्मुखी सुवर्चला[4], वृद्धा ब्राह्मणी गौतमी[5], ब्रह्मवादिन्यरुन्धती[6], उमा च परावरज्ञा[7], एवमादयः ब्रह्मवादिनीपदयोग्या ऋषिसभायां सम्मानपात्रं बभूवुः।

इतिवृत्तभूगोलादिज्ञानेऽपि स्त्रियो नासनज्ञाः। पौराणिक्यः कथाः पूर्वराजचरितानि, इतिवृत्तानि च प्रायस्ताभिः कण्ठाग्रीकृतानि। वार्तालापेषु कर्णगतानामादर्शचरित्राणां निदर्शनानि स्वभाषणे प्रयोक्तुमासीत्तासां स्वाभाविकी प्रवृत्तिः। कन्यात्व एव कुन्ती सुकन्याया वृत्तान्तेन सुपरिचितासीत्।[8] वृद्धावस्थायां पुत्रवधूं द्रौपदीमुद्दिस्य कुन्त्या आशीर्वादेषु पुरातनपतिव्रतानां नामनिर्देशः[9]; पुत्रान् प्रति प्रेषिते तस्याः संदेशे पूर्वराजानामुदाहरणानि[10] च तस्या इतिवृत्तस्य ज्ञानं आसीदिति समर्थयन्ति। द्रौपद्यपि परिचितासीद् देवलाम्बरीषमान्धातादीनां पूर्ववर्तिनां चरित्रैः,[11] यात्रिकाणां मुखात् वर्णनं श्रुत्वा स्वयं च यदा कदाचित् पर्यटनं कृत्वा नार्यो देशविदेशानां विषये ज्ञानं प्रापुः।

महाभारते लेखनस्य ग्रन्थ-पत्रादि पठनस्य अंकगणितस्य च शिक्षाविषयेषु नोपलब्धो निर्देशः। नीतिशास्त्रधर्मशास्त्रादिगहनविषयानां तत्त्वज्ञा लेखपठन-

---

१. शान्ति ३०८–७, १८४
२. आश्वमेधिक २०–२
३ शल्य ५३–६
४. शान्ति एपेन्डिक्स पृ०२०३८, पं०१४६
५. अनुशासन १–१८
६. अनुशासन १६३–२
७. अनुशासन २४८.२
८. आरण्यक २८८.६
९. आदि१६१.५-६
१०. उद्योग ८८-१६,२५,३०, १३०.८-१०, १३१,१
११. आरण्यक १३-४३-४६ शांति१४ ३७

गणितादिविषयैरपरिचिता इति नास्ति संभावना। गृहकार्यैष्वायव्ययपर्यवेक्षणे चतुरा गृहिण्यः,[१] धनस्य व्यवहारे निपुणा विधवाः[२], राज्यकोशज्ञा विदुरा दमयन्ती द्रौपद्यादयः[३] सम्राज्ञः, अर्थशास्त्रविशारदा[४] गान्धार्यङ्क गणितस्याज्ञा इत्यपि कथं संभाव्यते।

ललितकलाः कन्याशिक्षायाः प्रधानविषय इत्यत्र नास्ति संदेहः। उत्तरां विराटपुत्रीं, अन्याश्चान्तःपुरस्त्रीः कलाः शिक्षितुं नियुक्ता बृहन्नलेति प्रागुक्तमेव। गन्धर्वविद्येति व्यपदिष्टासु सर्वासु कलासु प्रायः प्रवीणा दृश्यन्ते राजकन्याः। ययातिपुत्री माधवी सर्वगन्धर्वदर्शनेति वर्णिता[५]। देवयानीशर्मिष्ठयोरपि गायनरुचिः स्पष्टमेव सूचिता। राजपरिवारमनोरंजनार्थं नियुक्तानां दासीनां वेशस्त्रीणां च ललितकलानैपुण्यमेवासीत्तासां जीविकाया उपायः।

चित्रकला, वस्त्रवयनं, सुवर्णतन्तुभिर्मणिभिश्च वस्त्राणां चित्रीकरणमित्यादिषु स्त्रीणां रुचिरनुमीयते। पाञ्चालिकां भूषयितुं महार्हवस्त्राणां संग्रहं कर्तुकामासीदुत्तरा[६]। मृत्तिकाश्वादीनां निर्माणं पशुपक्षिणां चित्रणं विविधपुष्पहाराणां ग्रथनं, अंगरागविलेपनादिसिद्धिः, विविधाः केशरचनाः, इत्यादिकार्यार्थं धनिकगृहेषु दास्यो नियुक्ताः। तथापि राजकुलस्त्रियोऽप्येतेषु कर्मसु कुशला आसन्। द्रौपदी सावित्री वा गुरुजनसेवायामिमानि कर्माणि स्वयमेव तत्परतया सादरमकरोत्।[७] एवं सति राजकन्यानामेतादृशेषु कार्येषु नैपुण्यं दृढमभूत् यतो द्रौपदी दमयन्ती च विपदि तादृशेनैव कर्मणोपजीविकाप्रापणेऽपि क्षमे बभूवतुः।[८] पत्युः प्रसाधनव्यवस्था धर्मपत्न्याः कर्तव्यं

---

१. अनुशासन २५०-१०-११, १७ २. उद्योग ३७-२८
३. आरण्यक २२२ ५४, ५७.४ उद्योग १३४.८
४. आदि ५७-६४ ५. उद्योग ११४.३
६. विराट ६४, ३४.३५; ३५.२२-२३
७. विराट १६.२२; आरण्यक २७६.२०
८. विराट ३.१७, आरण्यक ६२.२६

मतम्।[1] न केवलं प्रसाधनरहस्यमेव जानन्तिस्म स्त्रियः, अपि सौंदर्यशास्त्र-ज्ञाता: सौंदर्यस्य लक्षणानि सम्यक् प्रतीतवत्य इति सुदेष्णया कृतेन द्रौपद्याः सौंदर्यस्य विवेचनेन[2] प्रतिपन्नम्। स्वसौंदर्यसंवर्धनाय प्रसाधनवत् वस्त्राभूषणा-नामुचितसंयोजनेऽपि स्त्रियो दत्तचित्ता आसन्।

गृहविज्ञानस्यान्ये विषया अपि स्त्रीणामनिवार्या एवासन्। स्वादुपौष्टिका-हारेण परिवारस्य हितसाधनं सुगृहिण्याः कार्यं मतम्।[3] राजकन्याऽपि कुन्ती पाकशास्त्रे निपुणा दृश्यते याऽतिथितुष्टये प्रतिदिनं विविधव्यञ्जनानां सिद्धौ तत्परासीत्।[4] गृहे मङ्गलताया निर्मलतायाश्च विधानं, शोभापरिवर्धनं, शय्यासनाद्युपकरणानामवेक्षणं, धान्यादिसंचयः, उद्यानस्य गृहपशुपक्षिणां च पालनं, रुग्णपरिचर्या, शिष्टाचाराणां सम्यग्व्यवहारः, इत्येवमादि समस्त-करणीयेषु कन्याः स्वगृहगताभ्यः स्त्रीभ्यः सम्यक् शिक्षिताः।[5]

स्त्रीणां कृते व्यायामस्य नासीत् पृथक् व्यवस्था। किन्तु कन्दुकक्रीडायां उद्यानविहारे, वनपर्यटने, जलकेलौ, पुष्पावचये, वृक्षसेचने, विहारयात्रादिषु स्वाभाविकव्यायामेन नार्यः स्वशरीरस्य सौंदर्यमनामयत्वं च साधितवत्यः। महाभारते स्पष्टमेवोक्तम्—

"व्यायामो कर्कशत्वं च वीर्यं च पुरुषे गुणाः।[6] अतः पुत्रवत् कन्या शस्त्रास्त्रविद्यासु न शिक्षिता विशेषरूपेण। तथापि शस्त्राणां प्रयोगे, रथ-चर्यायां, अश्वारोहणे सुपरिचिता आसन् क्षत्राङ्गनाः। सुभद्राहरणप्रसंगे बाणक्षेपे व्यग्रस्यार्जुनस्य सारथ्यं सुभद्रयैव कृतम्।"[7] सायुधाऽहं निरायुधा

१. अनुशासन ८२·३३
२. विराट ८·६-१२
३. आरण्यक १६७·११; २२२·३५, ४३, ३८, ४६; अनुशासन २५०·१४-१६
४. आरण्यक २७६·३-४
५. अनुशासन २५०·८, १८५·१६, आरण्यक २२२·२५, २८६·४, २७६·२०, २२२·२५, १६७·४
६. अनुशासन ३४·१५
७. आदि एपेन्डिक्स १ पृ० ६६३

त्वमिति देवयानीं प्रति शर्मिष्ठाया गर्वोक्तिरपि क्षत्रस्त्रीणां शस्त्रग्रहणमनुमापयति ।[१] राक्षसस्त्रियः सशस्त्राः सीताया रक्षणार्थमशोकवने नियुक्ता[२] इति राक्षसेषु स्त्रीणां शस्त्रधारणं स्पष्टमेव ।

कुलस्त्रीणां नापेक्षितं धनार्जनम् । अतः कस्यापि विशिष्टव्यवसायस्य शिक्षापि नाधिगता ताभिः । किन्तु निम्नवर्गेषु परिवारस्त्रियो गृहस्वामिनो व्यवसाये सहाया आसन् । दाशराजस्य पुत्री मत्स्यगन्धा सत्यवती पितुर्नौकया यात्रिकान् यमुनानदीं पारयितुं स्वयं नौकाचालनं करोतिस्म ।[३] दासी, धात्री, गणिका, शैलूषी, नटी, रंगस्त्री, पांशु, वेश्या, गोपी, किराती, नर्तकी, तान्तुकी, तन्तुवायिकी, इत्यादीनां निर्देशैः स्त्रीणां धनार्जनव्यवसायानां परिचयः उपलभ्यते । एकस्यां रूपककथायां तन्तुभिः श्वेतकृष्णवस्त्रे वयन्त्यौ द्वे स्त्रियौ वर्णिते येन वस्त्रनिर्माणव्यवसाये स्त्रीणां वैशिष्ट्यमनुमीयते ।[४] तथापि सत्स्वपि बहुषु नारीकृतेषु धनार्जनव्यवसायेषु, अध्यापनं वैद्यकं वा न निर्दिष्टं स्त्रीणां कार्यक्षेत्रे ।

संक्षेपेणेदमुच्यते—महाभारते नोपलब्धा स्त्रीणां कृते पाठशालाः, नासीत् गुरुकुले विद्याग्रहणं न वा पुत्रस्येव कन्यायाः शिक्षाविषयाः शिक्षका वा निर्दिष्टाः । गृह एव परिवारसदस्येभ्यो कन्याशिक्षा परोक्षरूपेण पारिता । गृहस्य वातावरणमासीत् तासां ज्ञानार्जनानुकूलं, तथैव स्वाभाविकी जिज्ञासा, कुशाग्रा बुद्धिः, तीव्रा ग्रहणशक्तिः, गुरुजनवचनेषु श्रद्धा स्मरणशक्तिरित्याद्यात्मगुणैर्मण्डिता नारी विना पाठशालामपि केवलं परोक्षरूपेणैव बहुश्रुता विदुषी संजातुमलमासीत् ।

नारीणां बहुश्रुतत्वे महाभारतमेव प्रमाणम् । इतिहासधर्मशास्त्रादीनामुद्धरणैः स्वमतं समर्थयन्त्यो नार्यो बहुशः स्वश्रवणस्य निर्देशं कृतवत्यः ।

---

१. आदि ७३·११
२. आरण्यक २६४·४३
३. आदि ५७·५६
४. आदि ३·१५१, १७२

द्रौपद्या बहुश्रुतत्वं प्रकटयन्ति तस्या उक्तयः—

पातयित्वा च पात्यन्ते परैरिति च मे श्रुतम् ॥[1]
वदतां वर्णधर्मांश्च ब्राह्मणानां हि मे श्रुतम् ॥[2]
न निर्मन्युः क्षत्रियोऽस्तीति लोके निर्वचनं स्मृतम् ॥[3]
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ॥[4]

इत्यादि युधिष्ठिरभीमौ प्रति। अस्मिन्नेव प्रसङ्गे तथा निर्दिष्टः प्रह्लाद-वैरोचनसंवादः[5], कृष्णस्तुतौ तथा चोद्धृतानि देवलासितनारदादिमहर्षि-वचनानि[6], मान्धाताम्बरीषादिनामादर्शपृथ्वीपालनस्योल्लेखश्च[7] द्रौपद्या बहु-श्रुतत्वं तस्य प्रभावं प्रकाशयन्ति 'पण्डिता',[8] 'महामतिः'[9] इति च द्रौपद्या विशेषणे सार्थके कुर्वन्ति। कुन्तिभोजेन सह वार्तालापे[10],कर्णेन सह संवादे[11], पुत्राणां कुशलप्रश्ने सप्तचक्रवर्त्तिनामनिर्देशेन[12]तथा चोपमासु विशिष्टदेवानां प्रयोगेन[13], विदुरामुचुकुंदादीनामुदाहरणकथनेन, प्राचीनपतिव्रतानां चरित्रो-ल्लेखेन, पुत्राणां चोद्धर्षणे वर्णाश्रमधर्म-राजनीतिनियमानां विवेचनैः प्रमाणितः कुन्त्या "महाप्राज्ञा"[14] इति गौरवो, प्रकटितं च तस्या बहुश्रुतत्वं। यथा तयैवोक्तम्—

शृणु चात्रोपमामेकां या वृद्धेभ्यः श्रुता मया ॥[15]
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ॥[16]

---

१. विराट १६·५
२. विराट २०·२८
३. आरण्यक २८·३४
४. आरण्यक ३१·२०
५. आरण्यक २६.१
६. आरण्यक १३·४३
७. शांति १४·३७
८. आरण्यक २८·२
९. विराट २०·४
१०. आरण्यक २८८, ७·६
११. उद्योग १४३·८
१२. उद्योग ८८·१६
१३. उद्योग ८८, २६·३०
१४. उद्योग ८८·६२
१५. उद्योग १३०·८
१६. उद्योग १३१·१

कुन्त्या निर्दिष्टा विदुराप्यासीद् "विश्रुता राजसंसत्सु बहुवाक्या बहुश्रुता"[१]। पुत्रस्योद्धर्षणार्थं तयाऽभ्युद्धृतानि शम्बरस्य वचनानि उक्तं च—

अहं हि क्षत्रहृदयं वेद यदस्ति परिशाश्वतम्।
पूर्वैः पूर्वतरैः प्रोक्तं परैः परतरैरपि ॥[२] इति

दीर्घदर्शिनीति विख्याताया अस्या विदुरायाः प्रभावोत्पादकमनुशासनं महाभारत एव भीममुत्तमं तेजोवर्धनं पुंसवनं वीराजननमिति सा प्रशंसितवती।[३]

"देवानां यानि लिङ्गानि स्थविरेभ्यः श्रुतानि मे" इति स्वश्रवणज्ञानोत्पन्नात्मविश्वासबलेनैव दमयन्ती नलरूपेणागतान् दिव्यनाकपालान् प्रत्यभिज्ञातुं नलं च वरितुं समर्था बभूव।

"अनृशंस्यं परो धर्मस्त्वत्त एव हि मे श्रुतम्"[४] इति नलं प्रति तस्याः संदेशेऽपि श्रवणमेव दमयन्त्याः प्रधानं ज्ञानसाधनं दृश्यते।

महाप्राज्ञा, सर्वधर्मज्ञा, कालपर्यायवेदिनी, बुद्धिमती, आगमापायतत्त्वज्ञा दीर्घदर्शिनी, इत्यादि बहुविधैर्गौरववचनैः संबोधिता गान्धारी श्रवणगोचरस्य शास्त्रज्ञानस्य प्रभावेणैव पतिपुत्राणां मार्गदर्शनेऽधिकारिणी बभूव।[५] तत्त्वार्थदर्शिनां विदुषां विचारान् श्रुत्वा सावित्री "सन्तो धर्ममाहुः प्रधानं" "वैवस्वत उच्यते बुधैः"[६] एवमादि बुधवचनानामुद्धरणपूर्वकेन स्ववक्तव्येन यमराजं प्रसादितवती। न केवलं राजकुलस्त्रीणामेव, अपि तु साधरणकुटुम्बिनीब्राह्मणीनामपि जिह्वाग्र ईदृशा विद्वदुक्तयो न्यवसन्। धर्मविद्भिरादिष्टं धर्मं स्मारयित्वाऽत्रिभार्या स्वपतिमरण्यगमनात् परावर्तयत।[७] पतिव्रता ब्राह्मणी "तं देवा ब्राह्मणं विदुः", "सत्यार्जवं धर्ममाहुः परं धर्मविदो जनाः", "श्रुतिप्रमाणो धर्मः स्यादिति वृद्धानुशासनम्", इति विद्वद्वचनप्रचुरभाषणं श्रावितवती।[८]

---

१. उद्योग १३१·३
२. उद्योग १३२·३२
३. उद्योग १३४, १६·१८
४. आरण्यक ६७·१५
५. उद्योग १४६·२८, ३५; १२७·१०, ५३; ६७·६, १०
६. आरण्यक २८१·२२, २४, ४०
७. आरण्यक १८३·४, ५
८. आरण्यक १९७·३१·३६

शकुन्तलाया भाषणेऽपि वेदोक्तीनां मन्वादिधर्मशास्त्रकारादेशानां प्राचुर्येण प्रयोगः कृतः। किं बहुना। सामान्यनागरिकस्त्रियोऽपि द्रौपदीं प्रशंसितुकामास्तस्यास्तुलनामृषिपत्नीगौतम्या सह कुर्वन्त्यः स्वबहुश्रुतत्वं प्रकटयन्ति।[1]

नारीणां शालेयशिक्षाग्रहणाभावे क एष दुराग्रहस्तासां बहुश्रुतत्वस्य प्रतिपादनेन ताः सुशिक्षिता मेधाविन्य इति प्रमाणयितुमित्यप्याक्षेपः संभावनीयः। अस्य समाधानाय द्रष्टव्यं किंचित् प्रमाणं तासां शिक्षायाः सफलतायाः। नारीशिक्षाया लक्ष्यं नासीत्परीक्षाफलमुपाधिग्रहणं वा। शारीरिक-मानसिक-बौद्धिक-आत्मिकशक्तीनां सम्यग् विकासेन तासामाचारविचारेषु विवेको, धर्मबुद्धिः, नैतिकभावना, आत्मविश्वासः, कर्तव्यपरायणता, एवमादिगुणानां संवर्धनं, महत्त्वपूर्णमासीत्। एभिर्गुणैर्युक्तास्ताः शीलसदाचारसंपन्ना भूत्वा परिवारस्य समाजस्य राष्ट्रस्य चाभ्युन्नतये सहयोगप्रदानं कर्तुं क्षमाः स्युरित्यासीदपेक्षितम्। अतो नारीणां व्यक्तित्वविकासयोजनायां तासां सहजदुर्बलताया वैषम्याणां च परिष्कारो भवेत् गुणानां च विकसनमिति विचारः प्रधानतमो मतः। अस्या योजनायाः सफलता न प्रमाणपत्रैः प्रकटिता, अपितु महाभारते नारीवचनानां या प्रशंसा दृश्यते, नारीचरितस्य यो गौरवश्चान्यैः कृतः तैरेव सम्यक् प्रमाणिता।

बहुश्रुतनारीणां वचनानि प्रायः तर्कसंगतानि सर्वैश्च समादृतानि। ब्राह्मण्या वाक्येषु श्रद्दधानो ब्राह्मणातिथिस्तस्या उपदेशानुसारं तत्त्वज्ञानार्थं धर्मव्याधं प्रति जगाम।[2] युधिष्ठिरेण द्रौपद्या वक्तव्यं वल्गु चित्रपदं श्लक्ष्णमिति प्रशंसितम्।[3] सावित्र्या वचनानि "स्वराक्षरव्यञ्जनहेतुयुक्तानि मनोनुकूलानि, बुधबुद्धिविवर्धनानि, हिताश्रयाणि, धर्मसंहितानि, सुपदानि, महार्थवन्ति पिपासिताय यथा जलं तथा" इति साक्षात् यमेन वर्णितानि।[4] आत्मज्ञाने जनकमपि पराजयन्ती सुलभा वाक्यशास्त्रविचक्षणा आसीत् वाक्यस्य च

१. शान्ति ३६·४,६
२. आरण्यक १९८·१; ४,१३
३. आरण्यक ३२·१
४. आरण्यक २८१·२५,५०

पञ्चलक्षणानि, नवदूषणानि तथैव बुद्धेर्नवदूषणान्यष्टादशगुणानि च विवेक्तुमलमासीत्,[१] गान्धार्या हिताः समर्थाः, धर्मार्थसंहिता उक्तयः कुरुवृद्धानामपि विचारणीया आसन्। धर्म्यवचनैः परामर्शकथनाय सा मुहुराहूता सभासु।[२] कुन्त्या वचनानि धर्म्य-अर्थवत्-अव्यग्र-अनुत्तमानीति गौरवान्वितानि कुरुवृद्धैः।[३] विदुलायाः 'श्रेयसा' 'भूयसा' चोपदेशेन प्रभावितस्तस्याः पुत्रः शंसितवान्—

कस्य त्वीदृशकं वाक्यं श्रुत्वापि स्वल्पचेतसः।
तमो न व्यपहन्येत सुचित्रार्थपदाक्षरम्॥[४]

अरुन्धत्योदीरितं गुह्यं सरहस्यं शाश्वतं धर्मरहस्यं निशम्य साधुवादः कृत ऋषिभिः।[५] विदेहराजदुहित्र्याः पिङ्गलायाश्चोक्तयो गाथारूपेणोद्धृता दृश्यन्ते।[६] ईदृशादृतवचनाः स्त्रियः कथमशिक्षिता भवितुमर्हन्ति?

महाभारते निर्दशिताः स्त्रियो बौद्धिकस्तरेण स्वव्यक्तित्वेन गुणैश्च उदात्ता बभूवुः। "धर्मे स्थिताऽस्मि कुलशीलसमन्विताऽस्मि"[७] इत्यात्मविश्वासपूर्वं कथयन्ती "धर्मज्ञा धर्मदर्शिनी योषितां वरा"[८] द्रौपदी युधिष्ठिरेणेत्थं वर्णिता-

तथैव स्यादानृशंस्यात् तथा स्याद् रूपसंपदा।
तथा स्यात् शीलसम्पत्या यामिच्छेत् पुरुषः स्वयम्॥
न हि पापं कृतं किञ्चित् कर्म वा निन्दितं क्वचित्।
द्रौपद्या ब्राह्मणेष्वेव धर्मः सुचरितो महान्॥
अस्ति सीमन्तिनी काचिद् दृष्टपूर्वाऽथवा श्रुता।
पतिव्रता महाभागा यथेयं द्रुपदात्मजा॥[९]

---

१. शान्ति ३०८·७७···
२. उद्योग ६५·६; १२७·२;
३. उद्योग १३६·२,३
४. उद्योग १३४·११
५. अनुशासन १६३·२
६. अनुशासन ८१·१२; शांति १६८·४६,५२
७. विराट २०·२३
८. शांति १४·२,४
९. आरण्यक २७७·३

"धर्मज्ञा धर्मचारिणी[1]" "पण्डिता[2] द्रौपदी तेन संबोधिता—

"कल्याणं भाषसे कृष्णे कुले जाता यथा वदेत् ।
न पापमभिजानासि साधु साध्वीव्रते स्थिता ॥ इति ।[3]

"बुद्धिसत्त्वगुणान्विता योषितां श्रेष्ठा पतिव्रता"[4] द्रौपदी पाण्डवानां "बहिश्चरं हृदयं"[5] "प्राणेभ्योऽपि च गरीयसी" संभूता ।[6] तां विना स्वर्गगमनात् तया सह नरकवासं वरममन्यत युधिष्ठिरः ।[7]

"नाधर्मश्चरितः कश्चिद् राजपुत्र्या परन्तप" इति[8] द्रौपदीमधिकृत्य भीमस्यापि धारणा आसीत् ।

इत्थं पतीनां बहुमता द्रौपदी श्वश्र्वा अप्यभूत् प्रशंसापात्रम् ।

"स्त्रीधर्माणामभिज्ञासि शीलाचारवती तथा ।
साध्वीगुणसमापन्ना भूषितं ते कुलद्वयम् ।।[9]

इति पुत्रवधूं द्रौपदीं सम्बोधयन्ती कुन्ती तां "सर्वधर्मविशेषज्ञा"[10] "सत्यवादिनी, ईश्वरी, सर्वकल्याणी" इति[11] मन्यमाना पुत्रानपि आदिष्टवती—

"द्रौपद्याः पदवीं चर"[12]

"द्रौपद्याः प्रिये नित्यं स्थातव्यम्"[13] इति द्रौपद्याः परोक्षं वा तामेवं भावयन्त्याः कुन्त्यास्तस्यां स्नेहः पुत्रस्नेहादप्यधिको दृश्यते ।

"सर्वैः पुत्रैः प्रियतमा कुलीना शीलसम्पन्ना सर्वैः समुदिता गुणैः" "क्षत्रधर्मरता"[14] इत्यादि प्रशंसोद्गाराः पदे पदे कुन्तीमुखान्निःसृताः । कतमा अद्य-

---

१. आरण्यक २५७·५
२. विराट ३·१६
४. महाप्रस्थानिक ३·३६
५. आरण्यक २५३·१३
६. विराट ३·१२, उद्योग १२६·६
७. स्वर्गारोहण २·११
८. महाप्रस्थानिक २–५
९. सभा ७०–४, ५
१०. उद्योग १३५–११
११. उद्योग ८८, ४३–४६
१२. उद्योग ८८,७६;१३५–१६
१३. आश्रमवासिक २२–१४
१४. उद्योग ८८–४२, ८६

युगीनाः सुशिक्षिताः प्रमदाः श्वश्रूणामीदृशं गौरवं स्नेहमधिगन्तुं शक्नुवन्ति। धर्मार्थकुशला, धर्मचारिणी[१] इति विदुरेणोक्ता द्रौपदी धृतराष्ट्रेन "यशस्विनी सर्वधर्मज्ञा" इति[२] मता समक्षमेवोक्ता च सभायां—

वधूनां हि विशिष्टा मे त्वं धर्मपरमा सती।
त्वं हि सर्वस्नुषाणां मे श्रेयसी धर्मचारिणी" इति[३]।

भीष्मेण तस्या गौरवे कथितम्—

कुलेषु जाता कल्याणि व्यसनाभ्याहता भृशम्।
धर्म्यान्मार्गान्न च्यवन्ते यथा नस्त्वं वधूः स्थिता॥
उपपन्नं च पाञ्चालि तवेदं वृत्तमीदृशम्।
यत् कृच्छ्रमपि सम्प्राप्ता धर्ममेवान्ववेक्षसे॥ इति।[४]

'सत्यव्रता, मनस्विनी, वीरपत्नी' इति संजयेन[५] 'कल्याणी शीलसंमता' इति च मार्कण्डेयेन[६] वर्णिता द्रौपदी शत्रुपक्षस्थितेन कर्णेनाऽपि प्रशंसिता द्रौपदीवाद्भुतकर्मकारिणी काप्यन्या स्त्री न पूर्वं दृष्टा श्रुता वेति।[७] सत्यभामा द्रौपदीं "शीलसम्पन्ना, पूजितलक्षणेत्याद्दतवती,[८] सुदेष्णा च तां कामपि देवाङ्गनेति सम्मानितवती।[९] नागरिकनारीणामासीद् द्रौपदी वन्दनीया[१०], विराटसभायां सभासदैश्च साधुवादेन सभाजितेति[११] किमत्र चित्रम्। अपीत्थं सर्वतः प्रशंसागौरवः किमपि प्रमाणपत्रात् नास्त्यधिकं सुशिक्षायाः प्रमाणम्।

द्रौपदीगुणज्ञा कुन्ती स्वयमासीद् गुणान्विता। कन्यैव सा पित्रा "यशस्विनी, शीलवृत्तान्विता, साध्वी, नियता, मानिनी, एकाग्रचित्ता, निष्पापा

---

१. सभा ६६–६;
२. सभा ७२–१३
३. सभा ६३–२७, ३३
४. सभा ६२·१८–१९
५. उद्योग २३·५
६. आरण्यक २८३·१५
७. सभा ६४·१
८. आरण्यक २२४·५
९. विराट ८·१३–१५
१०. शान्ति ३९·४–६
११. विराट १५·२८

कल्याणी, सम्यग्वृत्तिः" इत्यादिविशेषणैर्गौरविता।[1] सा "रूपसत्त्वगुणोपेता धर्मारामा महाव्रता"[2] इति वरणीयगुणैरुपेता भीष्मेण पाण्डुकृते याचिता। "कारुण्येन साधुवादेन" च युक्ता एषा "सर्वज्ञा" "सर्वदर्शिनी," "सत्यवादिनी" सततधर्मचारिणी "व्यासेन कृष्णेन च "महाप्राज्ञेति संबोधिता।[3] "महाकुलीना, ईश्वरी, सर्वकल्याणी, भर्त्रा परमपूजिता, वीरसूः, वीरपत्नी, सर्वैः समुदिता गुणैः।"

"का नु सीमन्तिनी त्वादृग् लोकेष्वस्ति पितृष्वसुः"[4] इति वचनैस्तस्याः समादरः कृष्णेन कृतः। एषा "धर्मपरा" साधुव्रते स्थिता कुन्ती आहृता आश्रमवासिभि ऋषिमुनिभिरपि[5], तस्याश्च गुरुशुश्रूषा धृतिश्च महाभारतस्यानुक्रमणिपर्वेऽपि निर्दिष्टे।[6]

गान्धार्या धर्मशीलताया निर्देशोऽपि कृतोऽनुक्रमणि पर्वे।[7] "महाप्राज्ञा, बुद्धिमती, धर्मार्थदर्शिनी, आगमापायतत्त्वज्ञा" इत्यादि वचनैर्व्यासेन सा सम्मानिता।[8] युद्धावसरे प्रतिदिनं स्वपुत्राय "यतो धर्मस्ततो जयः"[9] इत्येवाशीर्वादान् शंसन्ती गान्धारी धर्मदर्शिनी, धर्मज्ञा, निपुणा, निश्चयज्ञा, सर्वधर्मज्ञा, कालपर्यायवेदिनी, महाप्राज्ञा, दीर्घदर्शिनी, महाभागा प्राज्ञा, बुद्धिमती, दिव्यज्ञानबलोपेता, सततं सत्यवादिनी, अर्थशास्त्रविशारदा, क्षात्रधर्माभिज्ञा, मनस्विनी, सत्यव्रता, हितकामा, हितैषिणी "एवमादि सकलात्मगुणमण्डिता मता सर्वत्र।

---

१. आरण्यक २८५·१०, १६, २६, २१

२. आदि १०५·१

३. आदि १४५·१० शान्ति १४·३०, आश्रमवासिक ३४·१७, ३७·१७, उद्योग १३०·४

४. उद्योग ८८·६०

५. आश्रमवासिक ३४·१७; ३७; १७

६. आदि १·५६

७. आदि १·५६

८. आश्रमवासिक ३·४–५

९. शल्य ६२·५८ स्त्री १७·६;

सत्यवतीं भीष्मो व्यासश्च धर्मज्ञां, धर्मे प्रणिहितबुद्धिं, परावरधर्मज्ञां, अमन्येताम्,[१] कार्याकार्यविचारणासु च भीष्म आसीत् नित्यं सत्यवत्या मते स्थितः।

देशकालज्ञाया दमयन्त्या मनोविशुद्धिं दृढभक्तिं परमतथ्यं च दृष्ट्वा देवा अपि प्रसन्ना बभूवुः।[२]

विनय-संयम-कार्यकुशलता-शम-दम-आदि सद्गुणैर्भूषितां सर्वगुणान्वितां तेजस्विनीं सावित्रीमधिकृत्य नारदस्तस्याः पितरं कथितवान्—

स्थिरा बुद्धिर्नरश्रेष्ठ सावित्र्या दुहितुस्तव।
नैषा चालयितुं शक्या धर्मादस्मात्कथंचन ॥[३]

तपोवनर्षिभिः सा "तपसा दमेनाचारेण संयुक्ता" सर्वैरेवावैधव्यकरैः सुलक्षणैः संयुक्तेति[४]" विश्वासेन पुत्रस्यानागमनेनाकुलितस्तस्याः श्वशुरः समाश्वासितः। सावित्र्या यमधर्माद्वरप्राप्तेर्वृत्तान्तं च श्रुत्वा तां वरस्त्रीं सम्पूज्य प्रशंसन्तस्ते चोचुः—

निमज्जमानं व्यसनैरभिद्रुतं
कुलं नरेन्द्रस्य तमोमये ह्रदि।
त्वया सुशीले धृतधर्मपुण्यया
समुद्धृतं साध्वि पुनः कुलीनया ॥[५] इति।

सर्वधर्मोपचायिनी माधवी[६], सर्वगुणान्विता धर्मवत्सला धर्मपरायणा, अनपायिनी, नागपत्नी[७], सत्यशीलाढ्या पतिव्रता ब्राह्मणी[८], आद्याः सर्ववर्णस्था मानवस्त्रियः, धर्मपरायणा स्त्रीधर्मज्ञा, सर्वधर्मविशारदा बहुबुद्ध्याढ्या गङ्गा[९],

१. आदि ६६·३६
२. आरण्यक ५७·११, ५४·२१, २२
३. आरण्यक २७८.२८
४. आरण्यक २८१.१०, १५.१६
५. आरण्यक २७७.२७
६. उद्योग ११३.११
७. शांति ३४५.४-५ ३४८.१६
८. आरण्यक २०५·४
९. अनुशासन १४६.३.८; २४८·२३

परावरज्ञा, धर्मज्ञा, धर्मवादिनी शमदमोपेता, निर्ममा, ऊहापोहविशारदा दिव्य-ज्ञानयुक्ता ज्ञानेन्धने धिनोति वर्णिता, उमा[1] एवमादयो देवस्त्रियः, सत्त्वज्ञा-सर्वज्ञा-सर्वधर्मज्ञा-पूजनीयसदृशा[2] तिर्यग्स्त्रियः इति विविधरूपेण महाभारते चित्रिता नार्यः स्वचरित्रेण कौटिम्बिके सामाजिके च क्षेत्रे महत्त्वपूर्णं कार्यं कृतवत्यः अपरैः कृतां तासां प्रशंसां, तासां बुद्धिबलं कार्यं च दृष्ट्वा, एकमेव निर्णयं धावति मनः। महाभारते शिक्षां विनापि नार्यः सम्यग् ज्ञानोपार्जनं कृत्वा स्वव्यक्तित्वस्य सर्वाङ्गीणं विकासं साधितवत्यः। मेधाविनीनां कृते कुत्रापि ज्ञानस्य द्वाराणि सन्त्यपिहितानि। यदि भवति जिज्ञासा, विद्यार्जनोपायाः स्वयमेवोपतिष्ठन्ति। इदमेव प्रेरणाजनकं सारं महाभारतनारीशिक्षाया विवेचनस्य।

—·—

१. अनुशासन २४८.२, ३१
२. शांति १३७·६

# शब्दादर्थसम्प्रत्ययः

शिवचन्द्र भट्टाचार्यः

शब्दार्थयोः परस्परं भेदः सुविदितो वर्त्तते । एकः शब्दः, अपरश्च तदर्थ इति सुप्रसिद्धोऽस्ति । यद्यपि कैश्चित् शब्दार्थयोर्भेदो नांगीक्रियते—शब्दो हि तन्मते अर्थात्मा नैजेनार्थेन सह शब्दस्य भेदो नास्ति इति । तथापि जनानां तत्र मते श्रद्धाऽल्पीयस्येव । महर्षिगौतमेन शब्दार्थयोरभेदवादो दूषितोऽपि यथा "मुखप्रदाह-पूरण-पाटनानुपलब्धेश्च" इति तदीयं सूत्रम् । तस्यायमर्थः यदि अग्निशब्दः, अन्नशब्दः, खड्ग' इत्यादयो वा शब्दा नैजेनार्थेनाभिन्ना भवेयुः, तदा अग्निप्रभृतीनां शब्दानां यत्र यत्रास्तित्वं, तत्र तत्र स्थाने तेषामर्था अपि सन्ति, इति स्वीकार्यम् । एवं च यदा मुखे उच्चरितः "अग्निशब्दो" वर्त्तते तदा तदर्थो दहनोऽपि मुखे वर्त्तत एव । तत् कथं मुखस्य प्रदाहो न भवति ? एवं अन्नशब्दे उच्चार्यमाणे मुखस्य पूरणं, खड्गशब्दे च उच्चार्यमाणे मुखस्य पाटनं कथं न भवति ? इत्येवमादयः प्रश्ना आपतन्ति, येषां समाधानं सुकठिनं भवति ।

अत एतद्दोषपरिहारकामैः शब्दार्थयोर्भेदपक्षः समाश्रितः । अत्रापि वैयाकरणैर्बहु प्रजल्पितं, नैयायिकैश्च तत्र तत्रोत्तरं दत्तम् । तेषां च विचारपरम्परा न सर्वसाधारणबुद्धिगम्येति कृत्वा तत् सर्वमपहाय अस्माभिः शब्दार्थयोर्भेदपक्षमवलम्ब्येदं विचार्यते-यत् परस्परभिन्नयोः शब्दार्थयोरेकस्मिन् शब्दे विज्ञाते कथं तद्भिन्नोऽर्थोऽपि विज्ञायते ? नहि परस्परभिन्नयोर्देवदत्त-यज्ञदत्तयोर्मध्ये एकस्मिन् देवदत्ते यज्ञदत्ते वा विज्ञाते तदन्यतरो यज्ञदत्तो देवदत्तो वा विज्ञायते । तत् कोऽयं शब्दस्य महिमा ? यत् स्वयं विज्ञातः सन् स्वभिन्नमप्यर्थं विज्ञानविषयी करोतीति । तदिदमेकविज्ञानेनान्यविज्ञानं किन्निमित्तकमित्यस्य प्रश्नस्य समाधानमावश्यकम् । शब्दार्थयोर्भेदपक्षे तु अस्य प्रश्नस्य समाधानं सुलभमेव, यतः शब्दो हि अर्थात्मा, विज्ञाते शब्दे तदर्थोऽपि सुतरां विज्ञातो

भवति। यथा दृष्टे घटे कम्बुग्रीवादिमत् स्वरूपमपि दृष्टं भवति। एवमेव शब्दार्थयोः परस्पराभिन्नयोरेकस्य शब्दस्य विज्ञानं अर्थविज्ञानरूपेण पर्यवस्यति। सर्वदा च शब्दज्ञानान्न सम्पद्यतेऽर्थज्ञानं, तत्र च शब्दार्थयोरभेदज्ञानाभाव एव कारणं भविष्यति। यथा दृष्टे कस्मिंश्चिज्जने तत् स्वरूपं "अमुकस्य पुत्रोऽयम्" इति न विज्ञायते सर्वदा, पूर्वं पुत्र-जनकयोर्मध्ये अभेदग्रहो नासीदिति हेतोः। एवं शब्दार्थसम्प्रत्ययस्थलेऽपि अर्थेन सह शब्दस्य अभेदग्रहः प्रागपेक्षितो भवति।

परं ये तावत् शब्दार्थयोरभेदं नांगीकुर्वन्ति, तन्मते कथं शब्दादर्थसम्प्रत्यय इति प्रश्नः। अत्र केचिदाहुः—स्वभावादेव शब्दार्थसम्प्रत्ययः, एष तावच्छब्दस्य स्वभावो यत् स्वयं विज्ञातः सन् स्वभिन्नमप्यर्थं ज्ञानविषयीकरोति। अथवा शब्दज्ञानस्यैव तादृशः स्वभावो यत् स्वयमुत्पन्नं सदनन्तरक्षणे अर्थविज्ञानमुत्पादयतीति। तद् यथा, क्रियाऽपरपर्याया गतिः गतिमतां देशान्तरसंयोगजननस्वभावा स्वयमुत्पन्ना सती गतिमन्तं देशान्तरमप्रापय्य न स्थातुमर्हति, एवं शब्दोऽपि तथाभूतस्वभावो यः स्वयं विज्ञातः सन् स्वभिन्नमर्थविशेषमविज्ञाप्य न स्थातुमर्हतीति, अथवा शब्दज्ञानं अर्थविशेषविज्ञानमजनयन्न स्थातुमर्हति। तस्मात् स्वभाव एव शब्दानामर्थविशेषप्रत्ययजनने हेतुरिति। एष तावत् स्वभाववादः पर्यालोच्यते, स्वभावो हि दुरतिक्रमः। यो हि यत्स्वभावः तस्य तावत् सर्वदा सर्वत्राविशेषेण स स्वभावः प्रवर्त्तते, नहि पुरुषविशेषं प्रति स्थलविशेषे वा स स्वभावो निवर्त्तते। शब्दस्य तु पुनरयं अर्थप्रत्ययजननस्वभावो न सर्वदा सर्वान् प्रत्यविशेषेण प्रवर्त्तते। तथाहि आलंकारिकाणां मते "गतोऽस्तमर्कः" इत्युक्ते एकस्यैव शब्दस्य न सर्वान् प्रत्यविशेषेण एकविधार्थप्रत्ययजननस्वभावः प्रवर्त्तते। किन्तु पुरुषविशेषं प्रति सन्ध्यावन्दनकर्त्तव्यताबोधजननस्वभावः, कमपि पुरुषं प्रति चौर्यादिकर्त्तव्यताबोधजननस्वभावः, पुरुषान्तरं प्रति च अभिसारगन्तव्यताबोधजननस्वभावः प्रागुक्त एक एव शब्दो भवति। अर्थविशेषप्रत्ययजननस्वभावः शब्द इति मते एकस्यैव शब्दस्य विभिन्नपुरुषं प्रति विभिन्नार्थबोधजननं कथं भवति इत्यस्य प्रश्नस्य नास्त्युत्तरमित्यतो हेतोः पूर्वोक्तः स्वभाववादोऽनुपादेयः।

अपि च, यदि स्वभाव एव शब्दस्यार्थप्रत्ययजनने हेतुः, न ततोऽन्यत् किंचिदपेक्षते शब्दोऽर्थप्रत्ययजनने, तर्हि बालकादिभिरनभिज्ञैः शब्दः श्रूयत एव, स्वभावश्च विद्यत एव, तथापि तैः कथमर्थो न बुध्यते ? इत्यपि स्वभाववादे दुरुत्तरः प्रश्नः। तस्मात् एकस्यैव शब्दस्य विभिन्नपुरुषं प्रति विभिन्नार्थबोधे यदुपयुज्यते, यदभावाच्च बालाद्यनभिज्ञानां श्रवणेऽपि शब्दस्यार्थबोधो न भवति, तादृशमेव किंचित् कारणं शब्दादर्थप्रत्यये वक्तव्यं भवति। तादृशं कारणं नैयायिकादिभिः सर्वैः प्रायः उक्तमेव, तत्र मूलभूतं किञ्चित्तत्त्वमिहास्माभिरालोच्यते—"अस्य शब्दस्य अयमर्थः" इति व्यवहारः, अनुभवश्च प्रायः सर्वेषां जनानां भवति। तेनैव व्यवहारेण अनुभवेन च शब्दार्थयोः परस्परं कश्चन सम्बन्धः सिध्यति, यतस्तत्रैव षष्ठीविभक्तेः प्रयोगो भवति, यत्र द्वयोर्मध्ये परस्परं सम्बन्धो विद्यते, शब्दार्थयोश्च परस्परं सम्बन्धमन्तरेण "अस्य शब्दस्यायमर्थः" इत्याद्याकारे। षष्ठीविभक्ति-व्यवहारोऽनुभवश्च न युज्येते, तस्मादस्ति शब्दार्थयोः परस्परं सम्बन्धः। स च सम्बन्धः कीदृश इत्यपेक्षायां विभिन्नमतानुसारेण भिन्नं भिन्नमुत्तरं देयं भवति। तद्यथा न्यायमते शक्तिर्लक्षणा चेति द्विविधः शब्दार्थयोः सम्बन्धः। वैयाकरणमते तादात्म्यं शब्दार्थयोः सम्बन्धः। आलंकारिकमते अभिधा लक्षणा, व्यञ्जना चेति त्रिविधः सम्बन्धः शब्दार्थयोः सम्भवति। एवं च शब्दार्थयोः परस्परं सम्बन्धसिद्धौ, स च सम्बन्धो यथा तथा वास्तु, इदानीं कथं शब्दादर्थसम्प्रत्ययः इत्यस्य सुलभमुत्तरं भवति।

तथाहि—न केवलं परस्परभिन्नयोः शदब्दार्थयोरेकस्मिन् शब्दे विज्ञाते अन्यस्यार्थस्य विज्ञानम्। अपितु एकविज्ञानेनान्यविज्ञानमन्यत्रापि दृश्यते यथा एकविज्ञानेनान्यविज्ञानं हस्तिहस्तिपकस्थले, तथाहि परस्परभिन्नयोर्हस्तिहस्तिपकयोर्मध्ये एकस्मिन् हस्तिनि हस्तिपके वा दृष्टे श्रुते अथवा येन केन प्रकारेण विज्ञाते तदन्यतरो हस्ती हस्तिपको वा स्मृतिपथमुदेति। यथा वा परस्परभिन्नयोः पितापुत्रयोर्मध्ये एकस्मिन् पुत्रे पितरि वा विज्ञाते तदन्यतरः पिता पुत्रो वा स्मृतिपथमारोहति। तदिदमेकविज्ञानेनान्यविज्ञानं स्मरणरूपं जगति नानास्थलेषु दृश्यते। इतश्च शब्दादर्थप्रत्ययस्थलेऽपिपूर्वोक्तस्थलेभ्यो

निर्विशेषमस्ति 'एकविज्ञानेनान्यविज्ञानम्'। एवं च स्थितौ शब्दार्थप्रत्ययस्थले अन्यस्थले च यत्रैकविज्ञानेनान्यविज्ञानं, तदुभयोः केनचित् समानजातीयेन प्रयोजकेन भवितव्यं, येन हि उभयोरेव स्थलयोः समानरूपमेकविज्ञानेनान्यविज्ञानं सम्पद्यते। तत्रायं मूलभूतो नियमः "एकसम्बन्धि ज्ञानमन्यसम्बन्धिनं स्मारयती"ति। सम्बन्धो हि द्वयोर्वस्तुनोर्मध्ये सूत्रमिव विद्यमानः सन्नेककोट्या वस्त्वेकमाबध्नाति, अन्यया च कोट्याऽपरं वस्तु आबध्नाति, इत्येवं रूपेणैकः सम्बन्धो द्वयोर्वस्तुनोर्मध्ये संयोजकसूत्रमिव विराजते। एवं च स्थितौ वयमिदमुत्पश्यामो यदेकस्मिन् वस्तुनि दृष्टे श्रुते येन केनापि वा प्रकारेण विज्ञाते तत्र तत्र वस्तुनि गतमिव मनस्तत्संलग्नैककोटिकं वस्त्वन्तरसंयोजकसम्बन्धतन्तुमवलम्ब्य वस्त्वन्तरमुपतिष्ठते। उपस्थिते च मनसि न तद्वस्तुनो विज्ञानं दुर्लभं भवति। इत्येवं क्रमेणैकसम्बन्धिनि गतस्य मनसः सम्बन्धसूत्रावलम्बनेन अपरसम्बन्धिप्राप्तिरिति वस्तुगतिनिबन्धनोऽयं नियमः प्रथितोऽभूत् यदेकसम्बन्धिज्ञानमपरसम्बन्धिनं स्मारयतीति।

तत्रायं क्रमः—प्रथमं तावन्मनसा एकसम्बन्धिनो वस्तुनो ग्रहणं ततस्तत्रत्यस्य संयोजकसूत्रस्य सम्बन्धस्यावलम्बनं, ततः तद्द्वारेणापरसम्बन्धिनो वस्त्वन्तरस्य स्मृतिरूपा प्राप्तिरिति एष एव सर्वत्र एकविज्ञानेनान्यविज्ञानस्थले क्रम इष्यते। यत्र च हस्तिदर्शनेन हस्तिपकस्मृतिरूपमेकविज्ञानेनान्यविज्ञानं, तत्रापि प्रथमं मनसा हस्तिग्रहणं, ततश्च हस्तिहस्तिपकयोर्मध्ये योऽस्ति संरक्ष्यसंरक्षकभावरूपः सम्बन्धस्तस्यावलम्बनं, ततस्तद्द्वारेण हस्तिपकस्य स्मरणमेकस्य हस्तिनो ज्ञानेनान्यस्य हस्तिपकस्य विज्ञानाख्यं जायते इति। ये तु अज्ञा हस्तिहस्तिपकयोर्मध्ये संयोजकसूत्रमिव वर्त्तमानं सम्बन्धं न जानन्ति तेषां हस्तिदर्शनेनापि न हस्ति-हस्तिपकयोर्मध्यवर्त्तिनः संयोजकसूत्रस्य सम्बन्धस्य मनसाऽवलम्बनं भवति। अतस्तद्द्वारेण हस्तिपकस्मरणरूपमेकविज्ञानेनान्यविज्ञानमपि न सम्पद्यते। शब्दस्य तु मतभेदेन ये प्रागुक्ताः सम्बन्धाः, शब्दग्रहणानन्तरं मनसा तेषामन्यतरावलम्बनेन अर्थोपरि स्थितिर्जायते। तत्रापि येन पुरुषेण प्रागुक्तसम्बन्धेषु यादृश सम्बन्धो मनसाऽवलम्बितुं

शक्यते, तद्द्वारेण तस्य पुरुषस्य तादृशसम्बन्धपरकोटिसंलग्नस्यान्यसम्बन्धिनो विज्ञानं भवति। अतएव "गतोऽस्तमर्क" इत्यादिस्थले तत् श्रवणानन्तरं मनसा येन येन पुरुषेण यो यो सम्बन्धोऽवलम्ब्यते तस्य तस्य तत्तत्सम्बन्धद्वारेण स स एवार्थो विज्ञायते, इति हेतोस्तत्रैकस्यैव शब्दस्य विभिन्नार्थबोधजनकत्वं पुरुषभेदेन भवति। यस्य तु शब्दग्रहणानन्तरमपि अज्ञतया मनसा शब्दार्थमध्यवर्त्तिनः सम्बन्धस्यावलम्बनं न भवति तस्यार्थज्ञानमपि न भवति। अत एव बालकाद्यज्ञानां शब्दश्रवणेऽपि शब्दार्थसम्बन्धस्याग्रहणात् नार्थबोधः इति।

इदमिदानीं विचार्यते—शब्दस्यार्थेन सह सम्भवन्ति बहुविधाः सम्बन्धाः न तु परिगणिता एव कतिचन शब्दार्थयोर्मध्ये सम्बन्धाः भवन्तीत्यभिधातुं शक्यम्। सम्बन्धस्तावद् वस्तुनो वैशिष्ट्यप्रतीतिनियामकः, "इदमनेन विशिष्ट" मित्याद्याकारप्रतीतौ यो विलक्षणप्रकारेण सहायको भवति, स एव सम्बन्धः। वस्तूनां च यानि विशेषणानि भवन्ति, तानि प्रायः सम्बन्धरूपेण परिणमयितुं शक्यन्ते, तद्यथा "कण्ठादुच्चार्यमाणो घटशब्द" इत्युक्तौ घटशब्दांशेऽस्ति कण्ठादुच्चार्यमाणत्वं विशेषणं, तच्च विशेषणं सम्बन्धरूपेण परिणमय्य वक्तुं शक्यते यत् 'कण्ठस्य घटशब्देन सह स्वोच्चार्यमाणत्वरूपः सम्बन्धोऽस्तीति। इममपि सम्बन्धं पुनर्विपरिणमय्य वक्तुं शक्यते यत् घटशब्दस्य कण्ठेन सह स्वोच्चारकत्वरूपः सम्बन्धोऽस्ति। एवं च स्थितौ घटशब्दश्रवणानन्तरं यस्य पुरुषस्य स्वोच्चारकत्वसम्बन्धेन कण्ठस्य ज्ञानं ततश्च कण्ठस्य पुनरन्यार्थसंश्लिष्टतया योऽवभासः सोऽपि शाब्दबोधपदवाच्यो भविष्यति न वेति ? भविष्यति, इति मीमांसकाः, तन्मते हि येन केनापि प्रकारेण शब्दसाहाय्येनोत्पन्नस्यैव ज्ञानस्य शाब्दबोधरूपता भवति। न भविष्यतीति नैयायिकादयः। तेषां मते हि शब्दज्ञानानन्तरं प्रागुक्तसम्बन्धानामन्यतमद्वारेणैवोपस्थितस्यार्थस्य तेनैव प्रकारेण प्राप्तेनार्थेन सह योगेन योऽत्रभासस्तस्यैव शाब्दबोधसंज्ञा भवति। वैशेषिकमते पुनः "एकविज्ञानेनान्यविज्ञानं" प्रायोऽनुमितिरूपं भवति। तन्मते शाब्दबोधस्य द्वे संज्ञे, अनुमितिः, शाब्दबोधश्चेति, तत्र व्याप्तिज्ञानसापेक्षतयाऽनुमितिसंज्ञा नैयायिक

सम्मता प्रागुक्तप्रकारेणोत्पन्नतया शाब्दबोधसंज्ञेति। अतस्तन्मतेऽपि घटशब्द-श्रवणानन्तरं यत्र स्वोच्चारकत्वरूपसम्बन्धेन कण्ठस्य विज्ञानं ततश्च विज्ञातस्य कण्ठस्य योऽन्यार्थसंश्लिष्टतया अवभासः, तस्य शाब्दबोधसंज्ञा नास्ति। किंतु तज्ज्ञानं नैयायिकादिनये "उपनीतभानं" प्रत्यक्षविशेषात्मकं आख्यायते।

तदयं फलितार्थः। सर्वत्रैकविज्ञानेनापरज्ञानस्थले यद्विज्ञानेन यस्य ज्ञानं, तयोर्द्वयोर्मध्ये सम्बन्धोऽवश्यं तिष्ठेत्। तेनैव मनसा गृहीतसम्बन्धेन अपरस्य सम्बन्धिनो ज्ञानं भवतीति नियमानुसारेण परस्परसम्बन्धिनोः शब्दार्थयोः शब्दे गृहीते सम्बन्धद्वारेणैवार्थसम्प्रत्ययो जायत इति शम्।

---

# संस्कृतवृत्तम्

विश्वनाथ भट्टाचार्यः

## सागरिकाया द्वितीयवर्षपूर्तिः

अंकेनानेन सागरिकाया द्वितीयवर्षं समाप्यते। महदिदं नः प्रमोदस्थानम्। संस्कृतानुरागिणां सागरिकामित्राणां सहयोग एवास्याः षाण्मासिकत्वं दूरीकृत्य त्रैमासिकस्वरूपप्राप्तौ बीजमिति कृतज्ञैरस्माभिस्ते समभिनन्द्यन्ते, यथापूर्वमानुकूल्यमाचरितुं प्रार्थ्यन्ते च।

विश्वविद्यालयान्नियतकालिकसंस्कृतपत्रिकाप्रकाशनोद्यमोऽयं नूनं सफल एव। धनेन लेखादिभिश्च भारतस्य सर्वप्रदेशगता विद्वांस एनामनुगृहीतवन्त इत्यतः संस्कृताभ्युदयाय साह्यमाचरितुं तत्परा भारतीया इति सुस्पष्टम्। एष एवानुग्रहः सागरिकायाः पुरोगमनमार्गं निर्बाधं करिष्यतीति दृढं वयं प्रतीमः। भारतराष्ट्रशासनेन च धनसाहाय्यप्रदानेन भारतीयताबीजभूतस्य संस्कृतस्याभ्युदयार्थं युक्तमनुष्ठितम्, शासनाधिकारिणामेतदर्थं कृतज्ञा वयम्। मध्यप्रदेशराज्यपालाः श्रीमन्तः पाटसकरमहाभागा अपि शुभाशंसनपुरःसरं धनं प्रदाय सागरिकां सम्वर्धितवन्तः। संस्कृतानुरागिभ्यस्तेभ्य एवमेव सविनयं प्रोत्साहनं कामयामहे कृतज्ञा वयम्। सागरनगरपालिकापि संस्कृतपरिषदे साहाय्यं वितरन्ती गुणग्राहितामात्मीयां प्रकटय्य नितरां धन्यवादार्हा।

जानीमो वयम्, शिष्यन्ते कर्तव्यान्तराणि। प्रथमकोटिगतां शोधपत्रिकामेनां कर्तुं नित्यमेवास्माभिः प्रयासः कार्यः। सर्वेषां विदुषां लेखप्रसादः काम्यः। संस्कृतभाषायां शोधनिबन्धपरम्परा यथा प्रचलिता भवेत् तथा प्रयतनीयम्। सागरिकाद्वारैव अर्वाचीनसंस्कृतसाहित्यस्य प्रवृत्तिनिरूपणं तेन च संस्कृतस्य चिरजीवित्वमस्माकं चिकीर्षितम्। संस्कृतकवि-नाट्यकार-निबन्धक-अध्यापक-दार्शनिक-पत्रकारादीनां लुप्तप्रायाण्यवदानानि प्रकाशनीयानि। नूतनसाहित्य-

निर्माणेन संसाध्यः संस्कृतस्य सर्वतोमुखः प्रसरः। संस्कृतजीवनानां संस्कृताध्यापकानां, शोधकर्मरतानां विद्यार्थिनां विदुषां च सर्वेषामत्रावधानमभ्यर्थयामहे।

लेखकग्राहकानुग्राहकेभ्यो धन्यवादानर्पयित्वा सर्वेषां सहयोगमस्मिन् कर्मणि कामयामहे। यथापूर्वं साहाय्यं विदधतस्तेऽवश्यं तथा करिष्यन्ति यथा संस्कृतस्य प्रवाहो निरन्तरं सञ्चरेद्, यथा चासौ अस्माकं जनजीवनं राष्ट्रक्षेत्रं च यथापूर्वमुर्वरमुदात्तादर्शशस्यसमृद्धं च कुर्यादित्यलं विद्वद्भ्यः। संस्कृतानुकुल्येनैवात्मलाभो भारतीयानां 'नान्यः पन्था विद्यतेऽयनाय'।

## संस्कृते एम० ए० आचार्यपरीक्षयोः उदारः कल्पः

चिरात् संस्कृतविद्वांसो द्विधा विभक्ताः—केचन एम० ए० उपाधिधारिणः अपरे आचार्योपाधिधारिणः। द्वावेव उपाधी राष्ट्रानुमोदितौ, अध्ययनविषयश्च उभयत्र संस्कृतविद्या, तथापि कश्चित् सम्प्रदायभेद एषु विराजते। बहुभेदभिन्नानां भारतीयानां नूतनोऽयमयौक्तिको भेदो नैव कल्याणाय। संस्कृतविद्यां स्वं मन्यमानौ उभौ परस्परं द्विष्टः। संस्कृतज्ञाः सर्वे एकसूत्रेण सम्बन्धनीया इत्यस्माकं मतिः। एम० ए० वा आचार्यो वा सर्व एव संस्कृतसेवकाः। यदि नामैते परस्परविरोधं परिहाय संस्कृताभ्युदयाय सममुद्युञ्जीरन् तर्हि संस्कृतविद्यायाः संस्कृतज्ञानां राष्ट्रस्य च महत् कल्याणं भवेत्।

विरोधमेनं दूरीकर्तुं केचन विश्वविद्यालयाः उपाध्योरनयोस्तुल्यताविनिश्चयं कृतवन्तः। आग्रा-गोरखपुर-काशी-उज्जयिनी-जबलपुरविश्वविद्यालयैः बि० ए० शास्त्र्युपाधी, एम० ए० आचार्योपाधी च तुल्यकक्षत्वेन स्वीकृताः। सम्प्रत्येव प्रयागविश्वविद्यालयेनापि मार्ग एष स्वीकृतः। अधुना एषु विश्वविद्यालयेषु आंग्लभाषया सह शास्त्रिपरीक्षोत्तीर्णा विद्यार्थिनः संस्कृते एम० ए० कक्षायां, आचार्योपाधिकाश्च डी० फिल० शोधकक्षायां प्रवेशमर्हन्ति। उदारमेनं कल्पं सर्वथा प्रशस्य सर्वष्वेव विश्वविद्यालयेषु एतदनुसरणं काम्यतेऽस्माभिः। अविद्याकृतान् सर्वान् भेदान् दूरीकृत्य विद्यासूत्रेण सम्बद्धाः संस्कृतज्ञा भारतस्य गौरवं संसाधयन्तु।

## श्रीलालबहादुरशास्त्रिणः शुभसन्देशः

विगते मार्चमासे कलिकातायां अखिलभारतीयसंस्कृतसाहित्यसम्मेलनमनुष्ठितम्। सभापतिपदात्तत्र केन्द्रमन्त्रिणा श्रीमता लालबहादुरशास्त्रिणा यद्भाषितं तत्सुचिन्तितमुद्बोधकं च। उक्तं तेन न कदापि संस्कृतस्योच्छेदः शंकनीयः। प्रश्नस्तु कथं तस्य जनप्रियता संसाध्या? प्रतिराज्यमेकैकं संस्कृतविश्वविद्यालयं संस्थाप्य प्राधान्येन शोधकर्मसम्पादनेन संस्कृतस्य महत्त्वं प्रमाणयितव्यं जनप्रियत्वं च संसाधनीयम्। जनमनसि संस्कृतभाषायै रुच्युत्पादनार्थं च संस्कृतज्ञानां विशेषमवधानमावश्यकमिति।

श्रीमता मन्त्रिणा युक्तियुक्तं यदुक्तं तत्सर्वेषां संस्कृतज्ञानां मननमर्हति। आशास्महे वयं यत्प्रतिराज्यगताः संस्कृतानुरागिणः तत्र तत्र संस्कृतविश्वविद्यालयस्थापनकर्मणि धृतोत्साहाः सन्नद्धाश्च भविष्यन्ति। अद्यत्वे केवलमुत्तरप्रदेशबिहारयोरेव संस्कृतविश्वविद्यालयौ संस्थापितौ, एवमेव भारतक्षेत्रस्य सर्वत्र संस्कृतविश्वविद्यालयाः संस्थाप्यन्ताम्।

## विष्णुदत्तशुक्लस्य स्वर्गवासः

सागरिकायाः संरक्षकः कविर्विष्णुदत्तशुक्लो विगते ५-२-६४ दिवसे परलोकं प्रस्थित इति सूचयतामस्माकं महान् शोको जायते। सागरिकापाठकाः कवेरस्य गङ्गावतरणकाव्येन परिचिताः। संस्कृतानुरागिणा शुक्लमहाशयेनान्येऽपि ग्रन्थाः संस्कृते रचिताः। सम्प्रत्येव 'गङ्गासागरीयम्' नाम काव्यं मुद्रितम्। सागरिकाया अकृत्रिममित्रस्य वियोगेन नितरां दुःखिता वयं तस्य शुभगतिं प्रार्थयामहे।

कविर्विष्णुदत्तः १८९५ ईशाब्दे जातः। आदौ संस्कृताध्ययनं कृत्वा तेन आंग्लभाषाऽधीता। १९२१ ईशाब्दे हिन्दुविश्वविद्यालयेऽधीयानोऽयमसहयोगान्दोलनेन स्वदेशं विमोचयितुं सन्नद्धोऽभवत्। हिन्दीभाषायां बहुपत्रपत्रिकायाः सम्पादनमनेन कृतम्, स्वयं च 'सहयोगी' नाम पत्रं प्रकाशितम्। हिन्दीभाषायामपि कवितारचनेन कविख्यातिं प्राप्तवान्। 'सुलोचनासती'

नाम हिन्दीकाव्यं तस्य सुप्रसिद्धम्। तस्यैव संस्कृतरूपं "सौलोचनीयम्" इति। संस्कृतकविरूपेण विष्णुदत्तः भाषासारल्येन, कल्पनापूर्वतया च विशिष्यते।

वर्तमानयुगस्य संस्कृतकविषु विष्णुदत्तकवेर्विशिष्टं स्थानमविसम्वादितम्। काव्यवपुषा कविश्चिरं जीयात्।

## संस्कृतपरिषदो वार्षिकाधिवेशनम्

विगते ३-३-६४ दिवसे सागरविश्वविद्यालये उपकुलपतिश्रीगणेशप्रसाद-भट्टमहाशयानां साभापत्ये संस्कृतपरिषदो वार्षिकमधिवेशनमनुष्ठितम्। वार्षिकं कार्यविवरणं मन्त्रिणा श्रावितम्। पूर्वमनुष्ठितायां संस्कृतभाषणस्पर्धायां प्रथम-द्वितीयस्थानमधिकुर्वद्भ्यो विद्यार्थिभ्यः पुरस्कारा उपकुलपतिमहाशयेन प्रदत्ताः। विदुषां प्राध्यापकानां भाषणानन्तरं उपकुलपतिमहाशयेन भाषितम्। संस्कृत-भाषाया महत्त्वं समर्थ्य चरित्रनिर्माणे तस्या उपयोगित्वं तेन प्रतिपादितम्। संस्कृतभाषणार्थं यत्प्रोत्साहनं दीयते तेन प्रभावित उपकुलपतिरेतदर्थं विभागं प्रशंसितवान्।

——

# ग्रन्थसमालोचनम्

[ समालोचनार्थं पुस्तकस्य प्रतिद्वयं प्रेषणीम् ]

| | |
|---|---|
| प्रेक्षणकत्रयी १९५९ | डा० वे० राघवः |
| लक्ष्मीस्वयंवरः १९५९, पृ० ८ | |
| पुनरुन्मेषः १९६१, पृ० १० | |
| आषाढस्य प्रथमदिवसे, महाश्वेता १९६१ | |
| कामशुद्धिः १९६३, पृ० ८ | |
| रासलीला १९६३, पृ० ८ | |
| महीपो मनुनीतिचोलः, पृ० ८ | |
| देववन्दी वरदराजः १९४८, पृ० १० | |

अतिसंक्षिप्ताकाराः सुमुद्रिता इमे ग्रन्थाः प्रथितयशसा डा० वे० राघव-शर्मणा विरच्य काले काले प्रकाशिताः। १९४८ खृष्टाब्दतः १९६३ खृष्टाब्दं यावत् कवेरस्य सृष्टिकर्म ग्रन्थेष्वेषु समुपलभ्यते। अन्तिमग्रन्थद्वयं विहाय सर्वेऽपीतरे दृश्यकाव्यरूपाः, अन्तिमौ श्रव्यरूपौ।

डा० राघवमहाशयः प्राच्यविद्यानुरागिणां परिचयं नापेक्षते। समीक्षक-रूपेण स्वदेश इव विदेशेऽपि प्रसिद्धोऽसावत्र दृश्यश्रव्योभयकाव्यमार्गे सञ्चार-कुशलत्वमात्मनः प्रमाणीकृतवान्। प्रायेण समीक्षका बुद्धिप्रधाना भवन्ति, न भावप्रधानाः। अत एव समीक्षकेभ्यो गुणदोषनिरूपणमेवापेक्ष्यते प्राधान्येन न पुनः सहृदयहृदयावर्जकं काव्यम्। यत्र पुनः कर्तृशक्तिविचारशक्त्योर्भवति संयोगो दुर्लभास्तादृशाः कविसमीक्षकाः। दुर्लभत्वेऽपि शक्तिद्वयं विना न भवत्यात्मलाभः कवीनाम्। समीक्षकेणापि सता राघवशर्मणा यन्नैपुण्यं काव्य-कर्मणि प्रदर्शितं तेनास्य महाकविबुभूषुत्वं तद्योग्यत्वं च प्रमाणीकृतम्।

समालोच्यानि सर्वाण्येवैकांकरूपकाणि। तेषु च लक्ष्मीस्वयंवररासलीले पौराणिककथामूले, आषाढस्य प्रथमदिवसे, महाश्वेता च कालिदासबाणभट्ट-

समाश्रिते, प्रेक्षणकत्रयीकामशुद्धिपुनरुन्मेषाः पुनः कविबुद्धिप्रकल्पिताः। एवं प्रख्यातोत्पाद्यमिश्रभेदात्त्रिविधान्येव वृत्तान्यत्र दृश्यन्ते।

लक्ष्मीस्वयंवररासलीलयोः पौराणिकी कथा नवीनसरण्या प्रतिपादिता। लेखकस्य प्रासादिकं गद्यं सुललितं च छन्दो वैशिष्ट्यं भजेते। नाट्ये भाषायाः प्रयोगशैली महत्त्वं धत्ते। श्रवणसमकालमेव यथा भवेदर्थबोधस्तथा प्रयतनीयं नाट्यकारैरिति निर्देशो नाट्यशास्त्रे दृश्यते। नाट्यं कवेर्न पाण्डित्यप्रदर्शनं न वा काव्यकण्डूतिनिवारणम्, रसोद्बोधौपयिकत्वेनैव सर्वं तत्र समावेशनीयम्। लेखकेनात्र रसं परमं मत्वा वृत्तप्रतिपादनं समीहितम्। एतयोः पौराणिकस्य समावेशो नूतनोऽपि मनोहारी। ग्रीकनाटकेषु कोरसाख्यपात्रैर्यत् क्रियते पौराणिकस्तादृशमेवात्र कर्म करोति। एकाङ्करूपकेषु अर्थोपक्षेपकयोजनानौचित्यादर्थसंक्षेपार्थमेषा रीतिः प्रशंसनीया। रासलीलायां प्रसिद्धान् रासपञ्चाध्यायीश्लोकाननुसरति काव्यार्थः, तत्र संगीतस्वरयोजनं न केवलं कवेस्तच्छास्त्रपाटवं प्रमाणयति, किन्तु कथावस्तुनि सरसत्वं चोद्भावयति।

आषाढस्य प्रथमदिवसे महाश्वेता च यथाक्रमं मेघदूतं कादम्बरीं च लक्ष्यीकृत्य कविना विरचिते। आषाढस्य प्रथमदिवसे रामगिरौ विरहियक्षेण कालिदासस्य सम्मेलनम्, आर्तस्य यक्षस्य प्रियायै सन्देशहरणार्थं मेघयाचनम्, प्रियोत्सुकस्य तस्य तत्कर्मणः 'कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु' इति युक्त्या कविना समर्थनं तदनु यक्षेण सन्देशनिवेदनम्—इत्येषोऽत्र नाट्ये क्रमः। मेघदूतस्य भूमिकारूपेऽस्मिन् लघुनाट्ये प्राधान्येन भाषासौष्ठवमेव लक्षणीयम्। पात्रद्वयस्य संलापो मेघदूतस्यैव श्लोकानां गद्यरूपं धत्ते। महाश्वेतायां बाणभट्टमनुसृत्य चन्द्रापीडमहाश्वेतयोः संलापः प्रकल्पितः। उभयत्र नाटकीयत्वं लेखकेनोद्भावितं तच्च चमत्करोति सहृदयान्।

तृतीयकोटिगतानि प्रेक्षणकत्रयी–कामशुद्धि-पुनरुन्मेषाख्यानि एकाङ्कानि राघवशर्मणः कल्पनाशक्तिं सविशेषमुद्भावयन्ति। प्रेक्षणकत्रय्यां विजयाङ्का विकटनितम्बा-अवन्तिसुन्दरी चेति त्रीणि प्रेक्षणकानि। अलङ्कारशास्त्रेषु सूक्तिसंग्रहेषु च प्रसिद्धानामेतासां कवयित्रीणां जीवनवृत्तादिकं किमपि नोपलभ्यते।

वस्तुत एवासां—'आस्त एव निरातङ्कं कान्तं काव्यमयं वपुः'। आम्य एव वास्तविकं वपुः राघवशर्मणा प्रकल्पितमिति नितरां स्तुत्योऽयं प्रयासः। ये केचन श्लोकाः तत्तत्कवयित्रीरचिताः, याश्चोक्तयः कथाश्च तत्सम्बद्धाः प्राप्यन्ते तानि सङ्कलय्य तद्भूमिकायामेतासां जीवनवृत्तं नाट्यरूपेण लेखकेन समुद्भावितम्। स्वदेशस्य कवीनां विषये निरुत्सुका इव प्रतीयन्ते भारतीयाः, अत एव बहूनां कवीनामद्यत्वे नाममात्रमेव दृश्यते। डा० राघवमहाशयेन प्रेक्षणकत्रय्या विरचनेन नूनं सोऽभावः कथञ्चिद् दूरीकृतः। सर्वेष्वेव नाट्येषु याथातथ्येन समं कल्पनाकौशलं दरीदृश्यते, भाषापि सरलसरला नाट्योपयोगिनी। लोकप्रियत्वमेषां निर्विवादं सिद्ध्यति, समर्थितं च स्वयमेव ग्रन्थकारेण भूमिकायाम्—विद्यालयेषु आकाशवाण्यां चासकृदभिनीतान्येतानि लेखक एतेषां प्रकाशनाय प्राणुद्यत।

कामशुद्धेरपि वृत्तं कविकल्पितम्। यद्यपि स्वयं कविः कथयति—'वस्तु चैतत् कवेः कालिदासस्य कुमारसम्भवात् महाकाव्यादुत्थितम्' इति, तथापि अत्रत्यं कथावस्तु नायकनायिके च कविबुद्धिनिबद्धानि, तत्र कालिदासकाव्यं केवलमुत्साहबीजम्। मध्ययुगवर्तमानयुगयोः कविसमीक्षकैर्निबद्धानां नैकसंस्कृतग्रन्थानामितिहासप्रणयनेनापि संस्कृतस्य महानयमुपकर्ता। भारतशासनानुगृहीतसाहित्य अकादमीसंस्थातः प्रचरन्त्याः संस्कृतप्रतिभायाः सम्पादकरूपेणापि संस्कृतसाहित्यस्य आ मनोरक्षुण्णां धारां संरक्षितुं युक्तचेष्टोऽयमित्यलं प्रसिद्धप्रसिद्धिदर्शनप्रयासेन।

प्रायेण समीक्षका बुद्धिप्रधाना भवन्ति न भावप्रधानाः। अत एव समीक्षकेभ्यो गुणदोषनिरूपणमेवापेक्ष्यते न पुनः सहृदयहृदयावर्जकं काव्यम्। यत्र पुनः कर्तृशक्तिविचारशक्त्योर्भवति संयोगः, दुर्लभास्तादृशाः कविसमीक्षकाः। दुर्लभत्वेऽपि शक्तिद्वयं विना न भवत्यात्मलाभः कवीनां समीक्षकाणां वा। 'अतिविचित्रकविपरम्परावाहिनि संसारे' ये द्वित्राः पञ्चषा वा कालिदासादयो गण्यन्ते महाकविरूपेण तेषु शक्तिद्वयस्य दृश्यतेऽपूर्वमालम्बनैक्यम्। समीक्षकेणापि सता राघवशर्मणा यन्नैपुण्यं काव्यकर्मणि प्रदर्शितं तेनास्य महाकवि-

नुभूयत्वं तद्योग्यत्वं च प्रमाणीकृतम्। य एष मार्गस्तेन गृहीतस्तस्यानुसरणं दार्ढ्येनासौ कविः करिष्यतीति वयमाशास्महे।

समालोच्यानि सर्वाण्येवैकांकरूपकाणि। तेषु च लक्ष्मीस्वयंवररासलीले पौराणिककथाम्, आषाढस्य प्रथमदिवसे, महाश्वेता, च कालिदासबाणभट्ट-समाश्रिते, प्रेक्षणकत्रयीकामशुद्धिपुनरुन्मेषाः पुनः कविबुद्धिप्रकल्पिताः। एवं प्रख्यातोत्पाद्यमिश्रभेदात्त्रिविधान्येव वृत्तान्यत्र दृश्यन्ते।

रतिरत्र नायिका, सा च सर्वत्र स्वविजयं घोषयतः कामस्य धर्माधर्मविवेक-शून्यतया उदास्ते। अतः काममुखात्—'अद्य संमोहनेन विश्वामित्रं रम्भायाः कुम्भदासं करिष्यामीति देवेन्द्राय प्रतिज्ञातवानस्मि' इति श्रुत्वा यथापूर्वं तत्सा-हाय्याय नोद्युंक्ते। यथार्थतो धर्मपत्नी सा कथयति—

'भर्तुरप्यवलिप्तस्य धर्माधर्ममजानतः।
उत्पथं प्रतिपन्नस्य भार्या भवति शासिका॥'

धर्मभावनाविमुखं काममुपालभते रतिः—'त्वमद्य कोऽप्युन्मादो व्याधिर्वा जनानाम्। म्रियन्ते च जनास्त्वया पराक्रान्ताः, यतो मन्ये त्वमपि मार इति प्रथसे लोकेषु' इति। सा कामशोधनाय तपसि प्रवर्तते। तदुग्रतपःसमाकृष्टः स्वयं परमेश्वरो रतिं सम्भावयितुं तत्रायाति, आश्वासयति च ताम्। परमेश्वरः प्राह—'तथाहं सन्दर्भं घटयिष्यामि, यथैष दुर्विदग्धो मय्येव निजास्त्रबलं प्रकट-यिष्यति।' ततश्च वैराग्यमयतेजसा भस्मीकृत्य दुर्विनीतं मदनं स संशोधयिष्यति इति आश्वास्य परमेश्वरो गच्छति। परमेश्वरस्यैषा वाणी—'अशुद्ध एव कामः पुमर्थान्तराणामङ्गम्। शुद्धः पुनरनङ्गः, अङ्गी, स्वयं परमः पुरुषार्थः'—सत्यं मदनभस्मनो दार्शनिकं गूढस्वरूपमुद्घाटयति। अङ्गभूतस्य अङ्गित्वसम्पा-दनमेव तस्य शोधनम्। परमेश्वरेणाङ्गीकृतः काम एव शुद्धः, इतरथा तु पतनबीजम्। क्षुद्रमिदं नाट्यं कथावस्तुवैशिष्ट्येन प्रतिपाद्यतत्त्वस्य समुत्कर्षेण सुप्रयोज्यतया च नितरां हृद्यम्।

पुनरुन्मेषोऽपि क्षुद्रमेकांकम्। भारतराजधान्यां १९६० वर्षे मद्रपुरीय-संस्कृतरङ्गेण प्रयुक्तम्। संस्कृतस्य पुनरुत्थानं कथं भावीति विषये डा० राघव-

शर्मा दत्तावधानश्चिन्तापरश्च। तस्यैवावधानस्य फलमिदं लघुनाट्यम्। भारतीयाः स्वयमेव यावत् स्वकीयं महार्घं रिक्थं न समादरिष्यन्ते तावन्नैव भारतीयसंस्कृतेः पूर्णाङ्गो विकासः सम्भविष्यतीति पक्षोऽत्र नाट्यरीत्या समर्थितः। नाट्येऽस्मिन् युगोपयोगिचिन्ताया दृश्यते प्रयोगः, अतश्च सर्वेष्वेषु नाट्येषु विद्यतेऽस्य कश्चिद्विशेषः। ग्रामविमुखा भारतीया नागरिकचाकचक्य-मोहिताः, प्राचीनशास्त्राभ्यासपराङ्मुखाश्च, कुलपरम्परागतां शास्त्रविद्यां च परित्यज्य आत्मघातमिवाचरितुमुद्यताः। अत एव प्रवृत्तिरद्यत्वे ग्रामविमुखा, शास्त्रपराङ्मुखा, नृत्यगीतादिकलोपेक्षिणी च। असंख्येयास्तालपत्रविनि-बद्धा ग्रन्थाः पाठकाभावादनादृताः विक्रयार्थं विदेशं प्रेष्यन्ते, नद्यां वा प्रक्षि-प्यन्ते। स्थितिरेषा दयनीयापि यथार्थप्राया। अस्मिन् नाट्ये राघवशर्मा आगन्तुकपात्रद्वारा लब्धस्वातन्त्र्ये भारते प्राचीनविद्यानां समुचितसमादरस्य शुभसन्देशं श्रावयति। सन्ति विद्वांसः, सन्ति संगीतशास्त्रनिपुणाः कलावन्तः, सन्ति च 'कुलक्रमागतायां भरतनाट्यविद्यायां' धृतोत्कण्ठा बालाः परं नास्ति सर्वेषामेषां सम्मेलकः। आगन्तुकेनास्मिन् नाट्ये तादृशं सम्मेलनं संसाधितम्। ग्रामविषयिणी लेखकस्य भावना स्मरणीया—"प्रायो ग्राममयोऽयं भारतदेशः, ग्राम एव सर्वा अस्माकं संस्कृतिः पूर्वमुत्पन्ना अभिवर्धिता च। ग्रामोद्धारादेव मन्ये देशस्यास्य पुनरपि कापि योगरेखा समुन्मीलिष्यतीति।" 'गीतं विना कीदृशी देशस्य पुरुषस्य वा संस्कृतिः' इत्युक्त्या राघवमहोदयः भारतीयसंस्कृतेः पूर्णाङ्गत्वं प्राणस्फूर्तिमत्त्वं च प्रदर्शितम्। येयं भावनात्र प्रकाशिता तां प्रशस्य वयमपि आगन्तुकेन साकमाशास्महे—'कवितया, गानेन नाट्येन च त्रिधा श्रियं पुष्णदेतत् साहित्यं भवतु स्वतन्त्रभारतमातुरुचितः उपहारः। एवमेव विद्या-कलापरिमिलित एकैको ग्रामो भारतमातुश्चरणयोः उपहारो भवतु" इति। सरलापि भाषा सर्वत्र चित्तप्रसादकरी। केदारशब्दस्य श्लेषेण प्रयोगः, चलं चित्तं चलचित्रमभिधावतीति प्रयोगश्च बहुषु मनोज्ञेषु प्रयोगेष्वन्यतरौ। युगोपयोगि, प्रभावशालि, भावगरिमच्चैतन्नाट्यं संस्कृतज्ञानां प्रियं भूयादि-त्याशास्यते।

ईदृशोऽपि सुनिपुणः संस्कृतलेखकः क्षुद्राकारानेव ग्रन्थान् विनिर्माति, विरच्य च प्रकाशयितुं सत्वरो न भवतीति दुःखप्रदा संस्कृतज्ञानां स्थितिः। संस्कृतविदुषां प्राचीनकालमात्रानुराग एवात्र मन्ये कारणम्। प्राचीनकालेन न किञ्चिदपराद्धम्। परं नवीनकालस्य समादरं विना प्राचीनविद्याया नैव सम्भाव्यते समुत्कर्षः। यदि संस्कृतज्ञा नवीनग्रन्थान्न विचरयेयुर्न वा तान् क्रीणीयुस्तर्हि कथं संस्कृतस्याग्रगतिः सम्भवेत्? डा० राघवशर्माणं समभिनन्द्य पूर्णाङ्गरूपकाणां विनिर्माणार्थं सप्रश्रयं सप्रत्याशं चानुयुञ्ज्महे।

महीपो मनुनीतिचोलः देववन्दीवरदराजश्च द्वे लघुकाव्ये। मनुनीतिचोलस्तमिलदेशस्य प्रसिद्धः शासको बभूव। न्यायपालने प्रथितस्यास्य नरपतेर्धर्मानुरागेण मनुमार्गानुसरणव्यग्रतया च तस्येदृशं नाम प्रथितम्। रिपौ सुतेऽपि वा धर्मविप्लवमसहमानोऽसौ तुल्यदण्डो राजा स्वरथेन गोवत्सं हतवन्तं स्वपुत्रं रथनिष्पेषणमृत्युना दण्डितवान्। सत्यधर्मपालकस्य राज्ञो माहात्म्यं प्रमाणयन् स्वयमेव देवस्त्यागराजः (महेश्वरः) आविर्भूय गोवत्सं राजपुत्रं च पुनरुज्जीवयामास इत्येवमत्रत्यकथासारः।

वरदराजस्य कथा विचित्रतरा। बभूवासौ श्रीरङ्गपत्तने 'श्रीरङ्गेश्वरमापघः'। कदाचिद् 'देवालयगजग्रासच्छेत्री' मन्त्यजां स्त्रियं दृष्ट्वा प्रेमविह्वलोऽसौ तस्याः पाणिं जग्राह। अन्त्यजस्पर्शपातकिनमेनं नगरवासिनस्तत्यजुः, अन्त्यजाश्च विपत्तिशङ्कया तस्य पक्कणवासं नानुमोदितवन्तः। एवं कुत्रचिदेकान्ते मातङ्गकन्यया सार्धं भक्तोऽयं गार्हस्थ्यमकरोत्। अथ गच्छति काले श्रीरङ्गेश्वराज्ञया मन्दिराधिकारिणस्तं कावेरीतटे देवस्तुत्यर्थमाहूतवन्तः। स च भीतभीतस्तत्र गतः, देवप्रसादमनुभूय स्तवगानं जगौ। देवमनुसृत्य यावन्नगरप्रवेशं चिन्तयति 'तावत्तस्य पपात भौतिकवपुः', कापि प्रभा च देवाङ्गे विलीना।

ईदृशानि लघुकाव्यानि पाठकानां पुरतो भारतवर्षस्य विचित्रतरं स्वरूपं महान्तमादर्शं च स्थापयन्ति। एतानि च विशेषतोऽर्वाचीनयुगस्य काव्यप्रवृत्तिपरिचायकानि। एकोनविंशविंशशतकयोः प्राक् महाकाव्यखण्डकाव्ययोरेव दृश्यते परम्परा। संक्षिप्तं कथानकं स्वीकृत्य रसनिष्पत्तिप्रयासो नूतन एव।

संस्कृतसाहित्ये वैचित्र्यसम्पादकानि ईदृशानि काव्यानि विशेषतः काम्यानि। विषयप्रतिपादने कविशैली पूर्णतः क्षमा, स्थाने स्थाने प्रसादगुणश्च विलसतीत्यलम्।

कल्पलता। पण्डित रामप्रतापशास्त्री। डा० रसिक विहारीजोशीकृतांग्ल-भाषानुवादसंस्कृतव्याख्यानयुता। देहली। १९६४, मूल्यं १० रूप्यकाणि। पृ० १७५.

भक्तप्रवरेण स्वर्गतरामप्रतापशास्त्रिणा विरचितेयं त्र्यशीतिश्लोकमयी कल्पलता भक्तिभावपरिप्लुता नितरां हृदयावर्जनकरी। स्तोत्ररीत्यास्मिन् काव्ये कविना स्वोपास्ययो राधाकृष्णयोर्गुणग्रामो वर्णितः। स्वान्तःसुखायैव श्लोका-नेतान् कविर्विरचयामास, भक्तानां ख्यातिकामाभावस्यौचित्यप्राप्तत्वाच्च स्वयं न प्रकाशितवान्। सुयोग्येन तत्पुत्रेण डा० रसिकविहारीजोशी महाभागेन काव्यमेतत् स्वरचितया रसिकबोधिनीटीकया आंग्लानुवादेन च समं संप्रकाश्य न केवला पितृभक्तिः किन्तूर्जितः संस्कृतानुरागश्च प्रदर्शितौ। अर्वाचीन-कालस्य बहवः संस्कृतकविनिबन्धका औदासीन्येनास्माकमज्ञातकीर्तयस्तिष्ठन्तीति स्थितिरेषा नितरां दुःखप्रदा। परःसहस्राः संस्कृतग्रन्था अद्यापि शिष्यन्तेऽ-प्रकाशिताः प्रतिराज्यम्। यदि नाम सर्व एवैते ग्रन्थाः प्रकाशमीयुस्तर्हि तेषां संख्यावैपुल्येन, गुणगरिम्णा, विषयवैचित्र्येण चैव संस्कृतस्य चिरजीवित्वं स्वतः सिध्येत्, मृतभाषेतिमृषावादश्च निरवकाशीभवेत्। डा० जोशीमहाशयो धन्यवादार्हः संस्कृतानुरागिणां यतो हि तेन लुप्तप्रायं काव्यरत्नमिदं प्रकाश्य महदुपकृतं संस्कृतसाहित्यस्य।

कविरयं वैष्णवः। श्रीकृष्णस्य ह्लादिनीशक्तिं श्रीराधिकां भक्तिभराप्लुत हृदयो वाङ्मालया भूषितवान्। श्रीकृष्णादपि श्रीराधामधिकां मन्यन्ते वैष्णवाः। अत आदौ षष्ठश्लोकं यावत् 'कनकेन्द्रनीलमणिभं धामद्वयं सुन्दरम्' वन्दित्वा सप्तमश्लोकात् त्रिसप्ततिश्लोकं यावत् श्रीराधामन्ते च श्रीकृष्णं स्तौति कवि-र्दशभिः श्लोकैः। श्रुताभ्याससहिता प्रतिभा सर्वेष्वेव श्लोकेषु विलसति, कल्पनाचातुर्येण युता सा वैदर्भमार्गमनुसरन्ती प्रसादगुणभूषिता बलादाकर्षति चेतः पाठकानाम्। क्वचित् क्वचिद् वृत्तिदैर्घ्यसद्भावे सत्यपि प्राधान्येन वैदर्भी

एवात्र रीतिः । गुणवर्णनमात्रादुदाहरणप्रदर्शनं समुचिततरमिति यथेच्छं केचन श्लोका उदाह्रियन्ते । सहृदया अवश्यमेव सम्पूर्णं काव्यमास्वादयितुं त्वरिष्यन्त इत्यस्माकं मतिः ।

श्रीराधिकागुणवर्णने असामर्थ्यमात्मनः प्रकटयति कविः—

'तव स्तुतिविधौ न ते हरिविरिञ्चिशर्वाः सुराः
कथञ्चिदपि राधिके गलदखर्वगर्वाः क्षमाः ।
तथापि सहजा सखी तव दृशोर्दया केवलं
प्रवर्तयति मां बलात्कलयितुं कलां ते स्तुतेः ।'

अहो माधुर्यं प्रसादश्चास्मिन् श्लोके—

'पदं परमसम्पदां निखिलमङ्गलानां गृहं
मुदामुदयभूः कलासमुदयस्य दिव्याश्रयः ।
दयाजलनिधेः स्थली निखिलसद्गुणानां सदो
हरेरुरसि मालिका जयति वल्लवीपालिका ॥'

श्री राधाया अक्षिच्छटावर्णनं सुमधुरम्—

'उन्मेषो जगतां लयश्च, सुषमा राधे मुखाम्भोरुह-
स्याकर्षोऽतिशयो मुरारिमनसः शश्वद्दयायाः सखी ।
लीलाविभ्रमशेवधेरुदयभूः शान्तेः प्रसूतिस्थलं
कान्तीनाञ्च निकेतनं विजयते रम्या तवाक्षिच्छटा ॥'

कविरयं यथा काव्यसिद्धान्तनिष्णातस्तथैव वैयाकरणधुरन्धरश्च । नामधातूनां प्रयोगे कवेः कौशलं विस्मयजनकम् ! यथा—

'राधे ते जयतीह कोऽपि महिमा यत्ते कटाक्षच्छटा-
पातोपक्रम एव पङ्गुरभितो जङ्घालतीहाद्रिषु ।
मूकेन्द्रो गुरवत्यथेन्द्रतितमां द्राक् किम्पचानाग्रणी-
रङ्कः प्राज्ञति मार्गणो धनदति व्यङ्गश्च कन्दर्पति ॥'

कवेरौचित्यबोधः प्रशंसनीयः । दुरूहपदानां प्रयोगो भक्तिभावं प्रायो व्यभिचरति । यद्यपि, यथा समर्थितं भूमिकायां टीकाकृता, हर्म्यन्तक्यादिपदैः

श्लोकेषु समर्प्यते काचिदपूर्वा सुषमा तथापि मन्ये, तादृशानां प्रयोगबाहुल्यं वैरस्याय। परमत्र कविर्विशिष्यते। कृतेष्वपीदृशप्रयोगेषु न कुत्रापि ते भाव-माधुर्यमपाकर्तुं प्रभवन्ति। सहृदयत्वेन सर्वत्र जितम्।

कल्पलतेयं विदुषामनुरागभाजनं भविष्यतीति निःसंशयम्। पाण्डित्यपूर्णया रसिकबोधिन्या टीकया ग्रन्थस्यास्योपादेयत्वं द्विगुणीकृतम्। डा० जोशीमहा-शयस्य व्याख्यानशैली समीक्षणरीतिश्च जिज्ञासूनां रसबोधे परमानुकूले।

Nataraja-An Interpretation—S. V. Chamu. विज्ञान-मन्दिरम्, महीशूर, मूल्यं—२) रूप्यकाणि, पृ० 17 + 1–III

नृत्यपरस्य नटराजस्य, तैजसमूर्तिः कलोत्कर्षेण विश्वविश्रुता। मूर्तिरियं चिदम्बरक्षेत्रे प्रतिष्ठितासीत्। अधुना पुनर्मद्रासस्य शासकीयप्रदर्शशालाया-मस्ति। खृष्टीयैकादशशतके मूर्तिरियं विरचितेति ऐतिहासिकाः। अवयव-संस्थानस्य पारिमित्येन, नृत्यमुद्राया अपूर्वमाधुर्येण, भगवतो मुखमण्डलस्य शिल्पसौन्दर्येण च सुदीर्घेयं मूर्तिः सर्वेषामेव दर्शकाणां हरति चित्तं, प्रमाणयति च भारतीयशिल्पिनां लोकोत्तरं कलापाटवम्। अस्या मूर्तेः कलोत्कर्षमधिकृत्य बहवः शिल्पसमीक्षाग्रन्थान् रचितवन्तः। निःसंशयं मूर्तिरियं भारतीयकलाया अद्वितीयमनुत्तमं च निदर्शनम्।

यदि नाम मूर्तिरियं केवलं कलाकौशलप्रदर्शनार्थं निर्मिताभविष्यत्तर्हि अस्याः कलापक्षप्रदर्शनेनैव सर्वं निष्पन्नमभविष्यत्। परं मूर्तिरियं ध्यानानु-सारिणी परमेश्वरस्य। येन मूर्तिरियं निर्मिता नासौ केवलं कलाविदपि तु योगिराजोऽपि। महादेवस्य स्वरूपं ध्यानयोगेन साक्षात्कृतवता हि शक्यते तादृशं मूर्तिनिर्माणम्। मूर्तावस्यां निगूढमभिव्यज्यते शिवजीवयोरद्वैतम्, पशूनां पत्युर्यथार्थं चिदानन्दस्वरूपं च।

श्रीमता चामुमहाभागेन पुस्तिकायामस्यां नटराजमूर्तेः स्वरूपं साधकदृष्ट्या प्रदर्शितम्। विज्ञानमन्दिरसम्प्रदायमनुसृत्य विद्वानयमादौ नटराजमूर्तिवर्णनं तदनु प्राचीनभारते ज्ञानस्वरूपनिर्णयं कृत्वा नटराजरहस्यं व्याख्यातवान्। सुनिपुणमनेन मूर्तेरस्या अर्धनारीश्वरत्वं प्रदर्शितम्। द्वितीये विभागे नटराज-

रहस्योद्घाटनस्य भूमिकां कर्तुकामो लेखको जीवन-सुषुम्ना-तत्त्व-नाद-वाक्-प्राण-बन्ध-मुद्रा-ज्ञानानां तात्त्विकं स्वरूपं विवेचितवान्। सर्वत्रैव विदुषा लेखकेन स्वमतप्रतिपादनार्थं प्रमाणत्वेनोपन्यस्ता उपनिषदादिभ्यः श्लोकाः सुषुम्नानादादीनां विचारे या सूक्ष्मता प्रदर्शिता तयास्य स्वानुभवगाम्भीर्यं सूच्यते।

पादादिकेशान्तं नटराजमूर्तिविचारं कृत्वा लेखकेन सम्यक् समर्थितः स्वसिद्धान्तः—नटराजो हि ऋषीणां विज्ञानस्य प्रतिमूर्तिरिति। तच्च विज्ञानं गुहाहितं सत्यं, परं साधकोत्तमा नटराजरूपेण तदेव विज्ञानं चिदाकाशे [ चिदम्बरे ] साक्षात्कुर्वन्ति। पदे पदे निबन्धेऽस्मिन् लेखकस्य निष्ठा ज्ञानानुरक्तिश्च परिस्फुरतः। सुमुद्रितोऽयं ग्रन्थो न केवलं शिल्पविचारकाणामपि तु भक्तानामपि जिज्ञासां जनयिष्यति। ग्रन्थस्यास्य समादरः सर्वत्र काम्यते।

— विश्वनाथभट्टाचार्यः

——

**मालविका**—एम० पी० ओरियण्टल रिसर्च इन्स्टिट्यूट-भोपाल-मुखपत्रिका। सम्पादकः डा० पी० एन्० कवठेकरः। वार्षिकमूल्यं ६) रूप्यकाणि; आक्टोबर १९६२

भोपालनगरीतः प्रचरन्त्याः शोधपत्रिकायाः प्रथमोऽङ्कोऽस्माकं हस्तगतो जातः। संस्कृतसाहित्यस्य संवर्धनमभिलक्ष्य मध्यप्रदेशीयप्राच्यसंशोधनसंस्थेयं राज्यपालस्य महामहिम श्री ह० वि० पाटसकरमहाभागस्य पृष्ठपोषकत्वे मुख्यमन्त्रिणो डा० द्वा० प्र० मिश्रमहाशयस्याध्यक्षे संस्थापिता। पत्रिकामिमां दृष्ट्वा नितरां प्रमुदिता वयम्।

प्रथमाङ्के षण्णिबन्धाः सन्ति। डा० राजबलीपाण्डेय-देशपाण्डेप्रमुखाः प्रसिद्धा विद्वांसो लेखकाः। इतिहासदर्शननाट्यादिविषयकैर्निबन्धैः पत्रिकेयं सर्वाङ्गपूर्णा। पत्रिकासम्पादकेन अहल्याकामधेनुनाम्नोऽप्रकाशितस्य धर्मग्रन्थस्य परिचयः प्रदत्तः। आंग्लभाषाऽत्र स्वीकृता। उत्तरोत्तरं मालविकायाः श्रीवृद्धिं कामयामहे वयम्।

——

# सागरिका

## त्रैमासिकी

द्वितीयवर्षसूचीपत्रम्

१—४ अंका:

२०२० वि० स०

प्रकाशिका

संस्कृतपरिषद्, सागरविश्वविद्यालयः

सागरम् ( म० प्र० )

# सूचीपत्रम्


| विषयाः | लेखकाः | पृष्ठसंख्याः |
|---|---|---|
| १—आधुनिकशिक्षानीतिः | डा० रामजी उपाध्यायः ... | १ |
| २—राजेन्द्रस्य युद्धोद्योगः | श्रीभोजराजः ... ... | ६ |
| ३—सांख्यानां साक्षी | श्रीशिवचन्द्रभट्टाचार्यः ... ... | ९ |
| ४—गीतम् | दिनेशः ... ... ... | १२ |
| ५—सरस्वती | कुमारी शशिबाला श्रीवास्तवः ... ... | १३ |
| ६—नवावतारिका | तेलकपल्ले विश्वनाथ शर्मा ... | २४ |
| ७—महाभारतीयतीर्थयात्राविश्लेषणम् | कु० अर्चनावसुः ... | २८ |
| ८—नाटकीयं वृत्तप्रपञ्चनम् | डा० विश्वनाथभट्टाचार्यः ... | ५० |
| ९—सद्गुरुस्तवनम् | डा० वनमालाभवालकरः ... | ६२ |
| १०—संस्कृतपत्रकारिता | श्रीरामगोपालमिश्रः ... ... | ६५ |
| ११—सम्पादकीयम् | ... ... ... | ८५ |
| १२—ग्रन्थसमालोचनम् | श्रीविश्वनाथभट्टाचार्यः ... | ८८ |
| १३—पद्मावती | डा० वासुदेव विष्णु मिराशी ... ... | ९३ |
| १४—भारतं तद्विराजताम् | डा० मङ्गलदेवशास्त्री ... | १०० |
| १५—अग्निसंहिता | श्री जगन्नाथवेदालङ्कारः ... ... | १०१ |
| १६—काव्ये रसपर्याप्तिविमर्शः | डा० राममूर्तित्रिपाठी ... | ११० |
| १७—सुरापः | श्रीमञ्जुलमयंकपन्तुलः ... ... | ११५ |
| १८—पाणिनीयस्य सुबोधता | श्री के० राजन्नशास्त्री ... | १२२ |
| १९—आर्यसमाजस्यसंस्कृतसाहित्यकाराः | श्री विश्वनाथशास्त्री | १२५ |
| २०—वसन्तवर्णनम् | स्व० म० म० रामावतारशर्मा ... | १२९ |
| २१—विज्ञानवादे प्रत्ययनिर्वाहः | डा० व्रतीन्द्रकुमार सेनगुप्तः ... | १३६ |
| २२—मल्लिनाथानुवीक्षा | श्री रेवाप्रसादद्विवेदी ... ... | १३८ |
| २३—उपनिषदां संस्कृति-समीक्षणम् | कु० साधना गुप्तः ... | १४५ |
| २४—संस्कृतवृत्तम् | डा० विश्वनाथभट्टाचार्यः ... | १५० |
| २५—म० म० स्व० रामावतारशर्मा | श्री अच्युतानन्दझाः ... | १५३ |
| २६—संस्कृत-प्रकाशन-विज्ञप्तिः | श्री भोजराजः ... ... | १७२ |

२७—समाचाराः ... ... ... १७७
२८—सम्पादकीयम् .. ... ... १७८
२९—बौद्धेषु प्रमात्वविमर्शः—श्रीजगन्नाथ उपाध्याय ... १८१
३०—कालिदासस्य संगीतकलाकृतित्वम् श० श्री० परांजपे १८६
३१—संस्कृतपत्रकारिता—श्रीरामगोपालमिश्रः ... ... १९३
३२—कतमः स्विदेव सः—जगन्नाथवेदालङ्कारः ... ... २१५
३३—महाभारतीया आत्मगुणाः कु० शशिबाला श्रीवास्तवः ... २१९
३४—संस्कृतसाहित्ये पारिजातहरणकथा—श्रीगौतमप्रसाद मिश्रः २३५
३५—रामावतारशर्मणां समाजोद्बोधनम् - श्रीअच्युतानन्द झाः २४५
३६—पाददण्डः—डा० वनमालाभवालकरः ... ... २५७
३७—संस्कृतवृत्तम्—डा० विश्वनाथभट्टाचार्यः ... ... २८४
३८—सम्पादकीयम् - ... ... ... २८६
३९—नायकविमर्शः—डा० विश्वनाथभट्टाचार्यः ... २९३
४०—परम सत्यम् - खरे लक्ष्मणशर्मा ... ... ३०८
४१—महाकवेर्हरिदासस्यैतिहासिकनाटकानि—श्रीगुलाबचन्द्रजैनः ३०९
४२—भवभूतिर्विशिष्यते—डा० रामजी उपाध्यायः ... ३१८
४३—संस्कृतपत्रकारिता—श्रीरामगोपालमिश्रः ... ३३७
४४—निबन्धको रामावतारशर्मा—श्रीअच्युतानन्द झाः ... ३५७
४५—संस्कृतसाहित्ये पारिजातहरणकथा—डा० गौतमप्रसाद मिश्रः ३८३
४६—महाभारते नारीशिक्षा—डा० वनमालाभवालकरः ... ४०४
४७—शब्दादर्थसम्प्रत्ययः—श्रीशिवचन्द्रभट्टाचार्यः ... ४२८
४८—संस्कृतवृत्तम्—डा० विश्वनाथभट्टाचार्यः ... ... ४३४
४९—ग्रन्थसमालोचनम्—डा० विश्वनाथ भट्टाचार्यः ... ४३८
५०—वार्षिकसूचीपत्रम् ... ... ... ४५१


——

# सागरिका

## त्रैमासिकी

तृतीयवर्षे द्वितीयाङ्कः

२०२१ वि० स०

पूर्णाङ्कः ८

प्रकाशिका

संस्कृतपरिषद्, सागरविश्वविद्यालयः

सागरम् ( म० प्र० )

# सागरिका

## त्रैमासिकी

तृतीयवर्षे द्वितीयाङ्कः
२०२१ वि० स०
पूर्णाङ्कः ८

प्रकाशिका
संस्कृतपरिषद्, सागरविश्वविद्यालयः
सागरम् ( म० प्र० )

सागरिकासम्पादनसमितिः

सम्पादकः—डा० रामजी उपाध्यायः
कोषाध्यक्षः—डा० वनमाला भवालकरः
मन्त्री—डा० विश्वनाथभट्टाचार्यः

# सूचीपत्रम्


| विषयः | लेखकः | पृष्ठसंख्या |
|---|---|---|
| १—संस्कृतपत्रकारिता | —रामगोपालमिश्रः .... .... | ९५ |
| २—शोकाञ्जलिः | —गुण्डेराव हर्कारे .... .... | १०७ |
| ३—कालिदासः | —स्व० म० म० रामावतारशर्मा .... | १०९ |
| ४—भवभूतेर्नाटकेषु कालप्रियनाथः | —म० म० डॉ० वा० वि० मिराशी | १२० |
| ५—रघुवंश-संजीविनी | —रेवाप्रसाद द्विवेदी .... .... | १२६ |
| ६—साहित्यरत्नकरस्थपद्यविमर्शः | —पं० के० राजन्न शास्त्री | १३३ |
| ७—निबन्धको रामावतारशर्मा | —झा अच्युतानन्द शर्मा .... | १३८ |
| ८—सप्तदशशतकस्य कतिपयरूपकाणि | —शंकरलालस्वर्णकारः | १५६ |
| ९—श्रीराम०, व० वेलणकरः | —आर० डी० लड्डू.... .... | १६६ |
| १०—खजुराहोमन्दिरेष्वप्सरोमूर्त्तयः | —विहारीलालः नागार्कः .... | १६९ |
| ११—सागरविश्वविद्यालये संस्कृतशोधकर्म | —भूपतिभट्ट. .... | १८३ |
| १२—संस्कृतवृत्तम् | —डा० विश्वनाथभट्टाचार्यः .... .... | १८८ |


———

# संस्कृतपत्रकारिता

( १६४०–१६४५ )

रामगोपालमिश्रः

[ गतांक से आगे ]

तृतीयवर्षं यावत्पत्रिका वार्षिकी तदनु त्रैमासिकी अभवत्। डा० मङ्गलदेव शास्त्रिमहोदयस्य सम्पादकत्वे पत्रिकायाः प्रकाशनमभवत्। म० म० नारायण-शास्त्रिखिस्ते-अनन्तशास्त्रिफडके इत्युभौ सहसम्पादकावास्ताम्। चतुर्थवर्षे सम्पादकपदे म० म० नारायणशास्त्रिखिस्ते, सहसम्पादकीये केदारनाथशर्मसार-स्वतोऽभवत्। चतुर्थवर्षस्य तृतीयाङ्कात् सहसम्पादकः जगन्नाथ उपाध्यायस्तदनु अलखनिरञ्जनपाण्डेयो-बटुकनाथशास्त्रिखिस्ते चेत्यभूताम्। पंचमवर्षस्य चतुर्थाङ्कात् प्रधानसम्पादकः को० अ० सुब्रह्मण्य अय्यरोऽभवत्। षष्ठवर्षस्य द्वितीयाङ्कादष्टमवर्षस्य प्रथमाङ्कपर्यन्तं त्रिभुवन प्रसादपाध्यायः सम्पादक आसीत्, तदनु कुबेरनाथशुक्लो द्वादशवर्षपर्यन्तं पत्रिकां सम्पादितवान्। त्रयोदश-वर्षस्य प्रमाङ्कात् श्रीक्षेत्रेशचन्द्रचट्टोपाध्यायः सम्पादकत्वमलंकरोति। व्रज-वल्लभद्विवेदि-रघुनाथपाण्डेयराजारामभट्ट-गोविन्दनरहरिवैजापुरादिमहाभागा अपि-सहसम्पादकाः किञ्चित्कालायासन्। सम्पादकानां परिवर्तनेन पत्रिकाया उन्नतिस्त्वधिकाधिका दृश्यते। प्रगति-पथमनुसरन्ती स्वकीयाऽऽदर्शानुस-रणतत्परा 'सारस्वती सुषमा' विदुषां प्रशंसां भजते। यथा डा० राघवनमहोदयोऽभिप्रैति—

The sarasvati Bhavana Banaras has been recently bringing out the Journal Called 'Sārasvatī Suṣamā', which maintains a high standard.[1]

1. Adyar Library Bulletin, XX. 1–2, P. 45 The sarasvatı Bhavan and Banaras Sanskrit College are now issuing a high-Class Periodical Called the 'Sārasvatī sushamā in modern Sanskrit Literature by Dr. Raghvan, P. 208.

मूल्येऽपि परिवर्तनमभूदेव । प्रथमवर्षस्य वार्षिकं मूल्यं द्वे, पश्चात्त्रीणि तदनु षट्रूप्यकाण्यभवत् । पत्रिकायां विदुषां जीवनवृत्तानि, समालोचनाः, सारसंग्रहाश्चापि सततं प्रकाशितानि । प्रथमवर्षस्याङ्के त्रयस्त्रिंशद्विश्रुतविदुषां ( म० म० प० बापूदेवशास्त्री, प० राजारामशास्त्री, पं० बालशास्त्री रानडे, म० म० पं० कैलाशचन्द्रशिरोमणि, म० म० राममिश्रशास्त्री, म० म० सुधाकरद्विवेदी, म० म० गङ्गाधरशास्त्री, म० म० शिवकुमारशास्त्री, म० म० दामोदरशास्त्री, म० म० तात्याशास्त्री, म० म० रामशास्त्री तैलंग, म० म० केशवशास्त्री मराठे, श्री मोहनलालोदासीन, म० म० नित्यानन्दपर्वतीय, अम्बिकादत्तव्यास, लक्ष्मण शास्त्री द्राविड, पञ्चाननतर्करत्नभट्टाचार्य, म० म० मुरलीधर झा, म० म० वामाचरणभट्टाचार्य, रामभवनोपाध्याय, देवनारायणत्रिपाठी, गङ्गाधरशास्त्री भारद्वाज, रा० ब० प्रमदादासमित्र ) चरित्राणि प्रकाशितानि तथैव अग्रिमाङ्केष्वपि ।

१९४७ ई० तमे वर्षे भारतः स्वतन्त्रो जातः । पत्रिकायां स्वतन्त्रताप्राप्त्यनन्तरं राष्ट्रगीततततीनां प्रकाशनम्, स्वतन्त्राकाशे उड्डीयमानानां राष्ट्रध्वजानां वन्दनं, तृणीकृतप्राणानां नेतॄणां वर्णनमभवत् । पत्रीयं कतिपयविभागेषु विभाजिता, विभागानुसारेण निबन्धानां प्रकाशनं कृतवती । यथा शास्त्रविभागे शास्त्रीयनिबन्धानां विज्ञानविभागे ज्योतिषगणितविज्ञाननिबन्धानां राजनीतिविभागे अर्थशास्त्रराजनीतिकूटनीतिनिबन्धानां, शब्दविज्ञानविभागे व्याकरणविषयकनिबन्धानां, संस्कृतिः कला चेति विभागे संस्कृतिसंगीतशील्पभूगोलेतिहासादिनिबन्धानां प्रकाशनं क्रियते । समालोचनासूचनयोरपि समावेशो भवति । धर्म-दर्शन-व्याकरणनिबन्धाः सारस्वतीसुषमामञ्जूषायां पुष्पवदुपलभ्यन्ते ।

अनन्तशास्त्रिफडके, अनूपमिश्रः, अलखनिरञ्जनपाण्डेयः, अवधबिहारी त्रिपाठी, आनन्दझा, करुणापतित्रिपाठी, कुबेरनाथशुक्लः; कृष्णमूर्तिशर्मा, केदारनाथशर्मा सारस्वतः, केशवद्विवेदी, रावोपाधिका क्षमादेवी, गणपतिशास्त्री मोकाटे, गिरिजाप्रकाशः, म० म० गिरिधरशर्मा, गोपालशास्त्री नेने दर्शनकेशरी

म० म० गोपीनाथकविराजः, चन्द्रभानुपाण्डेयः, चारुदेव शास्त्री, म० म० चिन्नस्वामी, उपाध्यायो जगन्नाथः, त्रिभुवनप्रसादोपाध्यायः, दामोदरशास्त्री, द्विजेन्द्रनाथ मिश्रः, आचार्यनरेन्द्रदेवः, नारायणशास्त्रि खिस्ते, नीलमेघाचार्यः, पट्टाभिरामशास्त्री, प्रभुदत्तशास्त्री, बटुकनाथशास्त्री खिस्ते, बलदेवमिश्रः, भगवत्प्रसादमिश्रः, डा० भगवानदासः, भूपनारायणझा, डा० मङ्गलदेवशास्त्री, मथुरानाथभट्टः, महादेवशास्त्री, मीठालाल ओझा, मुकुन्दशास्त्री खिस्ते, मुरलीधरमिश्रः, युधिष्ठिरमीमांसकः, रघुनाथपाण्डेयः, रघुनाथशर्मा, राजेश्वरशास्त्री द्राविडः, रामशङ्करभट्टाचार्यः, रामाज्ञापाण्डेयः, डा० वासुदेवशरणोऽग्रवालः, विभूतिभूषणभट्टाचार्यः, वैद्यनाथशास्त्री, व्रजवल्लभद्विवेदः, शान्तिभिक्षुशास्त्री, डा० सातकडि मुखर्जी, प्रो० सुब्रह्मण्य अय्यरः, डा० सुभद्रझा, सूर्यनारायण शुक्लः—इत्येतेषां महाभागानां विश्रुतविदुषां कृतयः प्रकाशिताः। अन्येऽपि विद्वांसः निबन्धान्निबध्य प्रकाशितवन्तः।

स्वर्गीयरावोपाधिकक्षमादेवीविदुषीप्रवरायाः द्वे आख्यायिके प्रकाशिते। 'हैमसमाधिः[1]'' 'मायाजालम्[2]' चेति क्षमादेव्या ( १८९०-१९५४ ई० ) बहूनि काव्यानि विरचितानि। 'सत्याग्रहगीता, उत्तरसत्याग्रहगीता, शङ्करजीवनाख्यानं मीरालहरी, तुकारामचरितं कथापञ्चकं, विचित्रपरिषद्यात्रा, रामदासचरितं, आख्यानचतुर्दशकमित्येतानि सुतरां प्रख्यातानि। भाषाऽस्या गद्ये पद्ये च समानैव। शैलीसरणिरतिरमणीया। प्रवाहमयी भावार्थबोधिका पदशय्या। सरलशब्दसन्निवेशनेन लेखनशैली किल सरलसरलापि भावमनोहरा, सालङ्कारापि सहजसुभगा, परिमार्जिताप्यभूषिता, सरसापि प्रतिपदपरिस्फुरन्मञ्जुलध्वनिसंयुता, कोकिलगीरिवाकर्षणकारिणी, शिञ्जीरवानुकारिणीव, मकरन्दपानलोलुपभ्रमन्मिलिन्दमधुध्वनिरिव काव्य-कादम्बिनी सहृदयहृदयेषु कौतूहलमुत्पादयत्येव। स्वकाव्यकौशलस्य तया पराकाष्ठा प्रदर्शिता। सर्वाण्यपि महाकाव्यानि महाकाव्यगुण-

---

१. सारस्वती सुषमा ६म वर्षे।

२. सारस्वती सुषमा ८म वर्षे।

विभूषितानि गद्ये तु भाषा मन्दमन्दाकिनीवाविरतगत्या तथा चान्तःसलिला सरस्वतीव भावाः प्रवहन्ति। अधिकं किं 'द्वेषेऽपि भ्राजते प्रेमा।'

महादेवशास्त्रिमहोदयस्य 'भारतशतकं' प्रकाशितम्। तस्य 'कल्पनाविलासे' भाषा कल्पनामयी विलासमयी चोपलभ्यते—'कमलानि कह्लाराणि कैरवाणि इन्दीवराणि शैवलानि च मध्ये हृदं राजितराजानि समरन्दसन्दोहानि ससौरभसंभाराणि भृङ्गसङ्गीतसङ्गतानि जलकुक्कुटकलरवकलितानि वरुणमिवार्चयन्ति, तदन्तर्मन्दिराजिरं पद्मशामिव पूजयन्ति निजाधिदैवतं भगवन्तं मरीचिमालिनमिवोपासते नित्यविकासनोपकारापरायणिकम्।'[1]

श्री ति० म० नारायणशास्त्रिकवेः 'श्रीरामकर्णामृतम्' खण्डकाव्यं प्रकाशितम्[2] प्रयत्नसाध्यभाषा कठिनाऽस्ति तथापि कतिपयश्लोकाः रमणीयाः। काव्यरसास्वादनमरुचिकरं नास्ति। कल्पनाशक्तिरसाधारणी साहित्यसौन्दर्यविभूषिता। यथा—

'कौशल्याङ्कविहारिकुन्दरदनं यन्मन्दहासोल्लस-
द्वक्त्रान्तर्विनिवेशिताङ्गुलिदलं तालीकुलश्यामलम्।
हारालम्बितपुण्डरीकनखरभ्राजद्गलालालकं,
भाग्यं तत्किल भावये दशरथस्यानेकजन्मोर्जितम्॥

कृष्णमूर्तिशर्मकवेः 'शुनकदूतम्' दूतपरम्परायां लिखितं खण्डकाव्यं प्रकाशितम्।[3] म० म० गोपीनाथकविराजेन पण्डितप्रवरेण 'कायसिद्धि' रितिस्वकीयोत्कृष्टनिबन्धे गम्भीरशैल्याममरत्वसाधनप्रसङ्गे नानामतमतान्तराणां तार्किकं विवेचनं कृतम्।[4] डा० मङ्गलदेवशास्त्रिमहाभागस्य सर्वे निबन्धाः प्रायः वैदिकसाहित्यानुसन्धायकास्तथैव वासुदेवशरणाग्रवालस्य भूगोलविषयकाः समुपलभ्यन्ते। दार्शनिकनिबन्धाः बाहुल्येन प्राप्यन्ते पत्रिकायाम्।

---

१. सारस्वती सुषमा. ६. ३-४ पृ० २७८
२. सारस्वती सुषमा. ११. १-२.
३. सारस्वती सुषमा ६म वर्षे
४. सारस्वती सुषमा. १४. १-२.

पत्रिकायाः पठनेन प्रतीयते यद्गतास्ते दिवसाः येषु संस्कृतं मृतभाषेत्याक्रोशः श्रूयते स्म । अयं तु संस्कृतस्य पुनरभ्युदयकालः समागतः । आधुनिकविषयाणामपि विवेचने समर्था गीर्वाणवाणी । कथं मृता सा भाषा यस्यां भाषायां दैनिक्यः साप्ताहिक्यः पाक्षिक्यः मासिक्यः द्वैमासिक्यः त्रैमासिक्यः षाण्मासिक्यः वार्षिक्यश्च बहवः पत्र-पत्रिकाः प्रतिदिनं प्रकाश्यन्ते । कारणमिदमुररीकृत्य पाश्चात्यविदुषा एम्० विण्टरनित्जमहाभागेन विलिखितं 'यन्नास्ति संस्कृत मृतभाषेदानीम्'

'Sanskrit is not a 'dead' language even today. There are still at present day a number of Sanskrit Periodicals in India, and topics of the day are discussed in Sanskrit pamphlets.'

'तमसो मा ज्योतिर्गमय' 'यो वै भूमा तत्सुखं नाल्पे सुखमस्ति, भूमैव सुखं' 'यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यम्[1] अमरा देवा अमरा भाषा' देवभाषेति विषयं प्रतिपादितवती। पत्रिकायामतीव तर्कयुताः गाम्भीर्यपूर्णाः निबन्धाः उपलभ्यन्ते । संस्कृतस्य मूर्धन्यविदुषां तूलिकयाऽद्यापि पवित्रितेयं 'सारस्वती सुषमा' पत्री प्रचलति । याऽऽशाऽऽसीत्प्रकाशनसमये सुषमायाः सा सफलीभूता—

'विबुधगणैरभिनन्द्या नन्दनशोभातिशायिनी शुभदा ।
लोकोत्तरप्रकाशा विभातु सारस्वती सुषमा ॥'

## अमरभारती

१९४४ ई० तमे वर्षे वाराणसीतः 'अमरभारती' नाम्नैका मासिकी संस्कृतपत्रिका प्रकाशिता । पं० कालीप्रसादशास्त्रिमहाभागः पत्रिकायाः सम्पादक आसीत् योऽधुना रामराजधान्ययोध्यातः संस्कृतसाप्ताहिकपत्रस्य सम्पादकः । सम्पादकमहाभागेन तस्मिन्काले काशीतः दैनिकसंस्कृतपत्रस्य प्रकाशनं संकल्पितम् ।

1. History oi Indian literature Part I. P. 45

भावनैषा न सफलीभूता प्रकाशकाभावेन। सम्पादकोऽयमुत्पत्तिस्थितिप्रलय-कारिण्याः दुर्गायाः परमभक्तः।

'अस्यामेव शताब्द्यां संस्कृतं राष्ट्रभाषा भवे' दित्युद्देश्येन प्रचालितायां पत्रिकायां न केवलमिदमुद्घोषितं यदमरा भारती अपितु सा 'राष्ट्रभाषा भवितुं' समर्थाऽधुनापि। यदा कश्मीरतः कन्याकुमारीपर्यन्तं भाषेयं भाष्यते बहुभिः। भारतस्य स्वतन्त्रताप्राप्तेः पूर्वमुद्घोषणेयं वस्तुतः सम्पादकमहाभागस्य गीर्वाण-वाणीप्रियत्वं द्योतयति। अमरभारतीपत्रिकायां 'संस्कृतं राष्ट्रभाषाभवितुमलमिति विषये निबन्धाः समुपलभ्यन्ते।

पत्रिकायाः प्रकाशनस्थलं प्राप्तिस्थानञ्चासीत् 'संस्कृतविद्यामन्दिरम् बाँस-फाटक, काशी।'[१] मूल्यमासीद् वार्षिकं त्रिरूप्यकाणि। षष्ठाङ्कात् पत्रिकेयं 'अमरभारतीकार्यालय ११।३ बाँसफाटक काशीतः प्रकाशिता। प्रथमवर्षे एवास्तंगता पत्रीयम्।

महामहोपाध्यायानन्तकृष्णशास्त्रि महामहोपाध्याय लक्ष्मणशास्त्रि–हरिशङ्कर-शास्त्रि–ईशदत्तशास्त्रिश्रीश–महामहोपाध्याय नारायणशास्त्रि–कृपाशङ्कर–राजेश्वर-शास्त्रिद्राविड – नलिनीमोहनसान्याल – हरिदत्तशास्त्रि –नारायणशर्म–महामहो-पाध्याय रामावतारशर्म–बटुकनाथशास्त्रि राखालदासन्यायरत्न – शिवकुमारशास्त्रि बलदेवप्रसादमिश्रादि महाभागानां लेखादिभिः परिपूर्णेयं पत्रिकाऽऽसीत्।

भास–कालिदास–बाण–भवभूत्यादिकविविषये समीचीना सामग्री समुप-लभ्यते। महावीरप्रसादद्विवेदिमहोदयप्रणीते 'कालिदास की निरंकुशता' नाम्नि ग्रन्थे याः याः युक्तयः प्रदर्शितास्तास्ताः राजेश्वरशास्त्रिमहाभागेन खण्डिताः 'निरंकुशतानिराकरण'मिति शीर्षके निबन्धे।[१] 'काव्येषु उपेक्षिता'[२] इति कवी रवीन्द्रः यं ग्रन्थं बंगभाषायां विरचितवान् तस्यानुवादोऽपि संस्कृतभाषायां प्रकाशितः। हरिदत्तशास्त्री, नन्दलालशर्मा, नारायणशर्मा, इत्यादयः

---

१. अमरभारती १.१.

२. अमरभारती १.६.

समस्यापूर्तिकारका आसन्। 'जयजयभारतभारतः'[1] इत्यादयो राष्ट्रगीतयः प्रकाशिताः।

त्रिशंत्पृष्ठयुतायां पत्रिकायामन्या अपि रचनाः प्रकाशिताः। समालोचना—तात्कालिकमहत्त्वपूर्णसूचना—स्फुटगीतयश्चापि प्रकाश्यन्ते स्म। भाषा सरला, शैली रमणीया, सुन्दरमुखपृष्ठयुताया अस्या मुद्रणकला च प्रशंसार्हाऽऽसीत्। पत्रिकायामयं श्लोकः सततं प्रकाशितः—

'यावद्वर्णाश्रमाचारा
यावद्वेदाश्च भारतम्।
यावदात्मस्मृतिस्ताव-
ज्जीयादमरभारती॥

## कौमुदी

१६४४ ई० तमे वर्षे कालूरामव्यासमहाभागस्य सम्पादकत्वे सिन्धप्रदेशस्थ-हैदराबादस्थानतः त्रैमासिकी संस्कृतपत्रिका 'कौमुदी' कौमुदीव प्रकाशिताऽऽसीत्। तत्रैका 'सरस्वती' नाम्नी संस्कृतपरिषदासीत्। तथैव प्रकाशितायाः कौमुदी-पत्रिकायाः प्राप्तिस्थानं 'यस्. बी. पाठशाला चन्दिरामणि लेन, हैदराबाद सिन्ध' आसीत्[2]। वार्षिकं मूल्यं सार्धरूप्यकं प्रत्यङ्कं षडाणकाः निर्धारितम्।

'एवं सर्वेष्वेषु सत्स्वपि विरोधिजनविरोधातपतापशमनाय कालराहुणा ग्रस्तायां प्राक्तन 'चन्द्रिकायां' बहोः कालात् 'कौमुदी' एव नासीत्संस्कृतसाम्राज्ये। तदेतन्न्यूनतामात्मनः प्रशंसनीयतमेन साहसेन यशोधवलोऽपि कालूरामव्यास-महाभागो महतीमेव सेवां विधत्ते सुधाशनसरस्वत्याः। कुमुदनाथप्रभावात् सिन्धोः 'कौमुदी'प्रादुर्भावो नात्याश्चर्यकरः। विरलसंस्कृतप्रचारेऽपि सिन्धप्रान्ते

---

१. अमरभारती १.१.

2. Editor 'Kaummudi or Saraswatī parishat.
S. B. Pāthasalā
Chandirāmani Lane
Hyderabad (Sind)

पण्डितप्रवरेण कालूरामव्यासशास्त्रिणा संपादिता 'कौमुदी' सुधामयैः सरसप्रबन्ध-किरणैर्बन्धुरा नितान्तमानन्दयन्त्यपि मासत्रयेणोदीयमानेयं गायति गुणानगण्यान-मुष्या मधुरया गिरा गीर्वाणभारत्याः । विपुलरसिकवाचकचकोरनिचयसमास्वाद्य-मानरुचिरैषा रुचिरवेषा अचिरादेव प्रतिमासमुदीयमाना 'कौमुदी' प्रमोदयतु संस्कृतप्रणयिनं जन'मितीयं सूचना मधुरवाणीयपत्रिकायामुपलभ्यते ।[१]

सिन्धुदेशे संस्कृतभाषाप्रचारपरायणेयं पत्रिका 'कौमुदी' कदा विलीनाभूदिति न जाने । पत्रिकायाः सञ्चिकाः किं कलियुगराहुणा ग्रसिताः इत्यपि विषये सन्देहः । महता प्रयासेनापि नोपलभ्या पत्रिकेयम् । त्रैमासिकी पत्रिकेयं सुशोभनाऽ-सीदिति नास्ति सन्देहः । विविधविघ्नबाधाभिः संघर्षमनुतिष्ठन्तीयं 'कौमुदी' न जाने कदा विलुप्ता । मुद्रणं सुन्दरमाकर्षकञ्चासीत् ।

श्रीबदरीनाथझा, दीनानाथशर्मा, सारस्वतः, प्रो० नारायण बठ्ठेजा, नित्यानन्दशास्त्री, श्रीकलहंसः, सत्यनारायणमिश्रः, मूलचन्द्रशर्मा, विश्वेश्वर-दयालुः, क्षमादेवी, पी. यन्. पट्टाभिरामशास्त्री, डा० जयन्तीलालभट्टः, मदन-कुमार व्यासः, नत्थूरामशर्मा, व्यासः, रामद्विवेदी, के. सी. चटर्जी-इत्येतेषा-मन्येषां च महोदयानां स्फुटरचना यथासमयं प्रकाश्यन्ते स्म ।

रामद्विवेदिमहाभागस्य 'विशाखा' 'प्रमोदगृहम्' चेति द्वे कथे प्रकाश-मानीते ।[२] विश्वेश्वरदयालेन विरचिता 'यौतकं' कथा प्रकाशिता । के. सी. चटर्जीमहाशयेन एका सरसा कथा विरचिता 'मार्जारचरितम्' । कथेयं हास्य-प्रधाना पत्रिकायां प्रकाशिता ।[३] ।

महाकवि जयशंकरप्रसादस्य हिन्दीकथानामनुवादाः संस्कृतभाषायां प्रकाशिताः । तथैव विश्वविख्यातमहापुरुषाणां वचनसुधाबिन्दवः सततं प्रकाश्यन्ते स्म ।

---

१. मधुरवाणी ६·११-१२

२. कौमुदी १९४४-४५ ई.

३. कौमुदी १९५३ ई.

डा० जयन्तीलालभट्टमहाकविना रचितं 'श्रीसिन्धुकाव्यं' प्रकाशितम्। कवै रवीन्द्रस्य कवितानां प्रकाशनं भवति स्म। कतिपयशोधनिबन्धा अपि प्रकाशिताः। दीनानाथशर्मसारस्वतस्य 'शङ्खध्वनिविज्ञानम्' स्मरणीयम्[2]। धर्म-दर्शनसाहित्यविषयेषु यदाकदा समुचिता सामग्री समुपलभ्यते। नित्यानन्दस्य 'वर्षाविलासः (२·४) गीतिः रमणीया। प्रो० नारायणदासस्य 'चायम्' (२·१) रचना अतीव हास्यकरी। अधुना 'चायम्' प्रति कीदृशं प्रेमास्ति, कथं तं प्रत्याकुलता, विना धूम्रपानेन सोऽप्यास्वादविरहितः इत्यादिविषया हास्योद्बोधानुकूलरीत्या रचनायां प्रकाशिताः। सूक्तीनां कृते एकः स्तम्भ आसीत्। पत्रीयं सरसरसमाधुर्यगुणपरिपूर्णरचनाप्रकाशनेन सहृदयजनहृदयहारिणी। 'कौमुदी' विद्वत्मानसकुमुदानि विकासितवती।

१९४५ ई० खिस्ते न काऽपि संस्कृतपत्रिका प्रकाशिता प्रकाशिता वा नाधुना दृष्टिगोचरीभूता। प्रार्थनेयं सततं समुपस्थापिता संस्कृतसेवातत्पराणां गीर्वाणवाणीरसास्वादनमुकुलितलोचनानां विदुषां समीपे यत् ज्ञातसंस्कृतपत्रपत्रिकाणां सूचनया मां सफलीकुर्वन्तु इति। किं नेदमतीवाश्चर्यकरं यत्संस्कृतभाषायां सततं प्रतिवर्षं बहवः संस्कृतपत्र-पत्रिकाः प्रकाशिताः तथापि तासामङ्काः कृच्छ्रेण खण्डितावस्थायां प्राप्यन्ते। बहूनां पत्र-पत्रिकाणां सूचना एव समुपलभ्यन्ते पत्र-पत्रिकासु, न तासामङ्काः। अर्वाचीनसाहित्यप्रकाशनाय ताः प्रचलिता अत एवार्वाचीनसाहित्यसमुद्धाराय तेषामाकलनमत्यावश्यकमिति प्रतिभाति।

मिश्रितभाषाः संस्कृत-पत्र-पत्रिकाः

१९४२ ई० तमे खिस्ते **'नृसिंहप्रिया'** संस्कृत-तमिलभाषयोः पत्रिका तिरुवल्लूरतः प्रकाशिता। टी० राम स्वामी अय्यंगरमहोदयः पत्रिकायाः सम्पादकः आसीत्। पत्रीयं "श्री अहोविलमठ, तिरुवाल्लूर, चिंगलेपट्ट-

---

१. कौमुदी २।४.
२. कौमुदी २।१

मद्रासतः" समुपलभ्या[1] मासिकी पत्रिकाऽऽसीत् । जं रंगाचारियर स्वामी प्रकाश-कपदमलमकरोत् । वार्षिकमूल्यमासीत् चत्वारि रूप्यकाणि । पत्रिकायां धार्मिक-विषयाणां, दार्शनिकानां वा चर्चा समुपलभ्यते ।

१९४४ ई० तमे वर्षे संस्कृतहिन्दीभाषयोः जयपुरतः **'राजस्थानप्रदेश-सम्मेलनपत्रिकेति'** नाम्नैका मासिकी पत्री प्रकाशिता । प्राप्तिस्थानं 'दादू महाविद्यालय मोतीनगर जयपुरम्' आसीत् । रामप्रकाशस्वामी सम्पादकः प्रकाशकश्चासीत् । आयुर्वेदात्मिकायां पत्रिकायां स्वास्थ्यसंबंधनौषधीनां विवेचनं सुयुक्तिपूर्णं प्रकटीकृतम् ।

**'विज्ञानज्योतिः'** इत्यपरा संस्कृतहिन्दीभाषामिश्रितपत्रिका १९४५ ई० खिस्ते 'खुरजा' स्थानतः प्रकाशिता । पत्रीयं मासिकी आसीत् । पं० विशुद्धानन्त गौड़ ज्योतिषाचार्य सम्पादकेन प्रकाशिता । वार्षिकं मूल्यमष्ट रूप्यकाण्यासन् । ज्योतिषविद्याविषये निबन्धाः प्रकाशिता अस्यां पत्रिकायाम् । अन्या अपि विषयाः यथास्थानं यथासमयं स्थानं लेभिरे ।

१९४५ ई० तमे वर्षे त्रिवेन्द्रम् स्थानतः एका त्रैमासिकी पत्रिकाऽऽङ्गल-भाषापरिशिष्टसमेता **'जर्नल आफ दि ट्रावनकोर यूनिवर्सिटी'** तथा दि **केरल यूनिवर्सिटी ओरियन्टल मैन्युस्क्रिप्ट लाइब्रे** रीत्यपरा पत्रिका प्रकाशिता । वार्षिकमस्या मूल्यमासीच्चत्वारि रूप्यकाणि । पत्रिकायाः एम्० गोपाल पिल्लई एम्-ए. मीमांसारत्नं बी० ए० रामास्वामीशास्त्री चोभौ सम्पादकौ आस्ताम् । के० राघवन् पिल्लईमहोदयः प्रबन्धक आसीत् ।

पत्रिकायां काव्य-नाटक-चम्पू-गीतादयः बाहुल्येन प्रकाश्यन्ते स्म विशेषतः अर्वाचीनकविकृतीनां प्रकाशनं भवति । रामवर्ममहाराज—मेल्फट्टूर नारायण—भाट्टतिरि—अरुणगिरिकवि—पूर्णसरस्वतीसदाशिवब्रह्मेन्द्र— नारायणपद्म—सर्व-

---

1. Edition T. Ramaswani gyengar Shri Ahabitla mutt. Tiruvallur (madras)

2. Journal ot the Travancore University, or the Keral Univer sity Oriental manuscripts Library.

श्वराचार्य—रामपाणिपाद—भास्कराचार्य—सीतारामसूरि-सतानन्दकवीन्द्रसूनु—नारायणभट्ट—वासुदेव—दामोदर—श्रीमातृदत्त—नारायणादि विरचिताः लेखादयः प्रकाशिताः ।

रामपाणिपादविरचितं—'विष्णुविलासः' दामोदरशास्त्रिरचितं 'शिवविलासः' द्वौ काव्यग्रन्थौ प्रकाशितौ। 'विष्णुविलास' काव्यस्य भाषा सरलातिसरला मनोहारिणी च । यथा—

'प्रलम्बबाहुर्मुसली सलीलं
प्रलम्बमालम्बितगोपवेषम् ।
विना विलम्बं विममर्द वीरो
विभोर्विहारोऽपि हि विश्वरक्षा ॥ ८·३२

काव्येऽस्मिन् नारायणस्य सर्वेऽवताराः संक्षेपरूपेण नूतनशैल्यां वर्णितास्तथैव 'शिवविलासे'तिकाव्ये शिवविलसितं प्रकटीकृतम् ।

रामवर्मयुवराजस्य 'शृंगारसुधाकर भाणः', पूर्णसरस्वत्याः 'कमलिनीराजहंसं नाटकं', रामपाणिपादस्य 'लीलावती वीथी' मदनकेतुचरितम् ( नाटकं ) सीताराघवम् (नाटकं) इति 'ग्रन्थत्रयं नारायणकवेः 'अदभुतपञ्जरम्' नामनाटकं—सतानन्दकवीन्द्रसूनोः 'भीमपराक्रमम्' ( नाटकं ) इत्येतानि रूपकाणि प्रकाशमानीतानि । 'कमलिनीराजहंस' नाम नाटके पञ्चाङ्काः सन्ति । भाषा चित्रमयी सरलाऽस्ति तथा ध्वनिपरिपूर्णा । यथा—

'उदण्डतुण्डनखकुन्तशकुन्तवीर-
खण्डाकृतद्विषदुरस्तटरक्तपूरैः ।
वाष्पाम्बुनिष्पतनवाधितपत्रलेखं
प्रक्षालयिष्यसि मुखाम्बुरुहं प्रियायाः ॥ ५·५

'लीलावतीवीथ्यां' शिवस्य प्रचण्डताण्डवी लीला सरसरससंयुतया भाषया वर्णिता—

'गम्भीरनीरदमृदङ्गरवाभिरामं
भृङ्गाङ्गनामधुरगीतकलासनाथम् ।

विद्युत्प्रदीपकलिते विपिनान्तरङ्गे
नृत्तोत्सवं वितनुते ननु नीलकण्ठः ॥

मत्स्यावतारचम्पू ( नारायणभट्टतिरि )—कार्तवीर्यविजयचम्पूः ( रामवर्म-युवराज )—कविमनोरञ्जकचम्पूः (सीतारामसूरि)—नृगमोक्ष प्रबन्धचम्पूः (नारा-यणभट्ट)—भागवतचम्पूः (रामपाणिपादि)—श्रीबालरामविजयचम्पूः (सीताराम-कवि)—इत्येते चम्पूग्रन्थाः, पद्मनाभशतकं (रामवर्मयुवराज)—मुकुन्दशतकं (गोदवर्मा)—आश्लेषाशतकं (रामपाणिपाद)—शिवशतकं (रामपाणिपाद)—श्रीरामपञ्चशती (रामपाणिपाद)—इत्येतानि शतकानि, अद्वैतरसमञ्जरी—मेघ-संदेशयोः ग्रन्थयोः सरसा टीका, लघुभास्करीयम् , साहित्यसारः छन्दोविचितः, गुरुसम्मतपदार्थाः, भियुरदहनम् ( यमककाव्य-वासुदेव सटीका ) कामाक्षीस्तव-उषापरिणय, इत्यादयः स्फुटरचनाः पत्रिकायामस्यां प्रकाशिताः। पत्रिकाऽ-र्वाचीनसाहित्यप्रकाशनेन बहूपकृतवती। आधुनिककाले संस्कृतप्रवृत्तीनां विषयेऽपि स्वतन्त्रनिबन्धाः प्रकाशिताः। मेघसन्देशपद्धतिमङ्गीकृत्य श्रीमातृदत्तकविता 'कामसन्देशः' खण्डकाव्यं विरचितम्। 'पूर्वार्धे उत्तरार्धे च विभाजितोऽयं ग्रंथः कालिदासशैलीं स्मारयति।

---

# शोकाञ्जलिः

गुण्डेराव हर्कारे

परित्यज्य स्वार्थान् सुखनिरभिलाषः प्रतिदिनं
न लब्ध्वा विश्रान्तिं क्षणमपि च यो भारतममुम्।
प्रयत्नैर्दिव्यैः स्वैस्त्वरितमकरोद् भारतमहो
जवाहर्लालोऽगादहह ! दिवमुत्सृज्य वसुधाम् ॥१॥

सुपुत्राः सन्त्यन्ये विमलधिषणा भारतभुव-
स्तथाप्यस्य श्लाघ्या मतिरभिनवा सर्वमहती।
स्वदेशे सर्वाङ्गोद्धरणपरता त्वस्य विदिता
प्रतीपान् देशांस्तान् त्वरितमनुकूलान् प्रकुरुते ॥२॥

पुरा मान्धात्राद्या इह समभवन्नप्रतिहत-
प्रभावा राजानः सदयहृदया भूरियशसः।
स्थितास्तत्कीर्तीन्दोस्तुहिनगिरिमप्राप्य किरणा
जवाहर् त्वन्नाम्ना सकलमपि हा ! रोदिति जगत् ॥३॥

अनर्घं माणिक्यं त्वमिह विजिताहस्करमहः
पिता ते सद्वंशोद्भवविमलमुक्तामणिरहो।
स्वसा साहाय्यार्थं तव विजयलक्ष्मीः प्रयतते
त्वदन्यः को धन्यः समनुकुरुते त्वां तव सुता ॥४॥

न जानीमो मूल्यं तव वयममी मूढमतयो
यथा जानन्त्यन्ये गहननृपनीत्यादिनिपुणाः।
सुदूरद्वीपेभ्यः प्रबलसचिवा राष्ट्रपतयः
समायाता द्रष्टुं स्वयमिह विसृष्टां तव तनुम् ॥५॥

क्व चीनाः प्राचीनाः परमसुहृदः क्वाद्य रिपुता-
मुपेता युध्यन्ते प्रतिदिनमतिक्रूरहृदयाः।

तथा पाकिस्तानाः किमपि न लभेरन् फलमितः
क्षमाशस्त्रं हस्ते तव खलु बिभेत्यन्तक इतः ।।६।।
सिन्धुः सिन्धुनिमग्न एव सकलो वङ्गस्य चार्धं गतं
बाह्लीकस्य कथा तथाऽतिभयकृत् काश्मीरदेशोऽन्वहम् ।
स्वातन्त्र्यं समवाप्तमीदृशमपि प्राप्यातिमोदं स्वयं
यत्नानारभताशु भारतभुवस्सर्वाङ्गसंवर्धनान् ।।७।।
नानाशासनपद्धतीरपि परामृश्यावृतेमां शुभां
वर्षाः सप्तदशाधुनैव हि गताः स्वातन्त्र्यसम्प्राप्तितः ।
अत्यल्पीयसि यैरनेहसि समारब्धैः प्रयत्नैरयं
सर्वाङ्गैरभवन्नवः सुखमयः शोभारतो भारतः ।।८।।
सम्बन्धाः परिकल्पिता अभिनवाः सौहार्दपूर्णाः शुभाः
सौम्या उज्झितकैतवाः सुसचिवैर्द्वीपान्तरस्थैः सह ।
युद्धं पूर्णतया निषिध्य सततं विश्वस्य शान्त्यै महान्
आरब्धो व्यवसाय इत्यतितरां श्लाघ्यस्त्वमेको भुवि ।।९।।
न त्वं भारतदेशमात्रहितकृद्राज्ञां सदा पूजित-
स्तद्व्याजेन समस्तदेशहितकृद् भूमण्डलोद्धारकः ।
नाज्ञासिष्म महत्त्वदीयमतुलं कृष्णस्य गोपा यथा
शोचामोऽद्य हता इति त्वयि गते रत्नं जवाहर्गतम् ।।१०।।
पाकिस्तानादहरहरिहाऽयान्त्यहो कान्दिशीका-
स्त्यक्त्वा सर्वस्वमपि हि चतुर्लक्षमत्रागतास्ते ।
क्षीणश्चीनोऽप्यनलसहितैर्भाययत्यायुधैर्नः
काले त्वस्मिन् तमहरदितो निर्दयो धर्मराजः ।।११।।
द्वित्रैर्वर्षैः परिगणनया सोऽस्ति मत्तः कनीयान्
भारो भूमेः स्वतनयपरित्यक्त एवास्मि वृद्धः ।
तस्मै देवो मदननुमतश्चेददास्यन्मदायु-
र्निष्प्रत्यूहं लघु सफलतां देशकार्याण्ययास्यन् ।।१२।।

# कालिदासः

स्व० म० म० रामावतारशर्मा

स्वर्गतानां म० म० रामावतारशर्मपादानां कालिदासकालनिरूपकोऽयमप्रकाशितपूर्वो निबन्धोऽस्माभिः सादरं प्रकाश्यते। शर्मपादैर्निबन्धोऽयमितः पञ्चपञ्चाशद्वर्षात्पूर्वमाङ्गलानुवादेन सह ग्रथितः परं दौर्भाग्यात्संस्कृतज्ञानां नायमद्यावधि प्रकाशतां गतः। गुप्तराजकालिकत्वं कालिदासस्यात्र सिषाधयिषितं शर्मपादानाम्। व्यतीतेऽपि दीर्घकाले, आचार्यपादानामुपपत्तिप्रदर्शनरीतिः, प्रतिपक्षमतखण्डननैपुण्यम्, स्वमतप्रतिष्ठापनं च गवेषणकर्मणः स्वरूपप्रतिपादकानीति निबन्धोऽयं संस्कृतगवेषकाणां महते कल्याणायेति निश्चयोऽस्माकम्। खृष्टीयोनविंशशतकभवानां विदुषामग्रगण्या रामावतारशर्माणः संस्कृतगवेषणपद्धतेरासन्नन्यतमाः प्रवर्तका इत्ययं निबन्धः संस्कृतज्ञानां मननविशेषमर्हति। निबन्धस्यास्य २।१।१९०६ तिथ्यङ्किताया भूमिकायां पटनाकालेजस्थिताः शर्ममहाभागा निबन्धलेखनस्याभिप्रायमेवं प्रतिपादितवन्तः—

'मया निर्मीयमाणे कालिदासविषयके महाप्रबन्धे कविरसौ प्रथमं द्वितीयचन्द्रगुप्तस्य, तदनन्तरं तत्पुत्रस्य कुमारगुप्तस्य राज्ये बभूवेति महता प्रपञ्चेनावस्थापितम् इयमेव कल्पनात्रापि प्रबन्धेऽवलम्बिता। चन्द्रगुप्तेन कालिदासस्य सम्बन्धः स्मिथमहाशयेन मुग्धानलाचार्येण ( Macdonell ) च सूचितो न तु ताभ्यामीदृश्याः कल्पनायाः प्रमाणानि प्रपञ्चितानि। विस्तरेणात्र वर्णितानि प्रमाणानि प्रायः सर्वाण्यप्यन्यैरनुत्प्रेक्षितपूर्वाणि। गुप्तवंश्यानां नृपाणामितिवृत्तम्, तेषां प्रशस्तीः, फाहियाननाम्नश्चीनस्य यात्रावृत्तम्, कालिदासस्य च काव्यानि सम्यक् परीक्ष्य प्रबन्धोऽयं व्यलेखि।' इति।

भूमिकायामुल्लिखितः कालिदासविषयको महाप्रबन्धः शर्मपादानां सम्पिपादयिषितेष्वसम्पूर्णेषु बहुषु ग्रन्थेष्वन्यतरः। स च ग्रन्थः 'Kalidasa, His Mind aud Art' इति नाम्ना शर्मपादैर्लिखितुमारब्धः परमपूर्ण एवास्ते।

तथैव महाग्रन्थस्य संक्षेपोऽयमित्यपि निबन्धस्यास्य महत्त्वमवसेयम्।

( विश्वनाथभट्टाचार्यः )

अनेके कवयः संस्कृतसाहित्ये कालिदासाख्यया प्रसिद्धाः। इतः प्रायो वत्सरसहस्रात्पूर्वं कालिदासाभिधानं महाकविपर्यायतां प्रपेदे। केचित्कवयः स्वनामसु कालिदासोपाधिं न्यवेशयन्नपरे स्वीयं नाम विहाय कालिदासाख्ययात्मानं प्रथयाम्बभूवुरितरे त्वभिनवकालिदासत्वेन विश्रुताः। त्रयः कालिदासा जैनराजशेखरस्य[1] विदिता यस्य कविवर्गस्मारकाणि पद्यानि सूक्तिसंग्रहीतृभिरुद्धृतानि। त्रयाणामेषामेको नूनं रघुवंशप्रणेता। द्वावपरौ तु काविति न सर्वथा निश्चेतुं सुशकम्।

रघुवंशप्रणेतुरनन्तरं नवसाहसाङ्कचरितप्रणेता पद्मगुप्तः प्रथमः कविर्यः कालिदासोपाधिमङ्गीकृतवान्। अयमात्मानं परिमलकालिदासाख्यया व्यपदिशति सुतरामर्हति चेमां महाकवेराख्याम्।[2] धाराधिपस्य मुञ्जापरनाम्नो वाक्पतिराजस्यायं सदस्यस्तदेव चास्य पदं तद्भ्रातुर्भोजजनकस्य सिन्धुराजस्यापि सभायामासीत्।

रघुवंशादिमहाप्रबन्धानां प्रणेता महाकविः स्वगुणैः कालिदासाख्यां महाकविपर्यायतां प्रापितवान्। स्वयं च 'दीपशिखा'—कालिदास इति सविशेषेण नाम्नासूक्तिकृद्भिः प्रख्यापितः। संचारिणी दीपशिखेवेत्यादि रघुवंशीयपद्यस्य सौष्ठवमस्य दीपशिखोपाधेर्निमित्तम्। एवमेव भारवि-माघ-रत्नाकराद्या आतपत्रघण्टातालादिशब्दघटितानि पद्यानि निर्माय्यातपत्रभारवि-घण्टामाघ-तालरत्नाकरादिनामभिः प्रथिताः। शङ्करपण्डितेन रघुवंशभूमिकायामुद्धृतैः समच्छायवाक्यैः सुस्पष्टं प्रतीयते रघुवंश-कुमारसंभव-मेघदूत-शाकुन्तल विक्रमोर्वशीय-मालविकाग्निमित्राणां महाकविकालिदासकर्तृकत्वम्। एतन्महाप्रबन्धातिरिक्तानि ऋतुसंहारादीनि ग्रन्थान्तराण्यपि

---

१. 'एकोऽपि जीयते हन्त कालिदासो न केनचित्।
शृंगारे ललितोद्गारे कालिदासत्रयी किमु'

अयं राजशेखरो कश्चिज्जैनकविः, न बालरामायणादिकर्त्रा प्रसिद्धेन राजशेखरेणास्यैक्यं कल्पनीयम्।

२. प्रतिसर्गमन्तिमः श्लोको द्रष्टव्यः।

कालिदासेन नातिप्रौढे वयसि प्रणीतानीति प्रतिभाति। एषु प्रबन्धेष्वन्यत्र[1] चास्य महाकवेः समयादिनिर्णयोपयुक्ता बहवो विषयाः समुपलभ्यन्ते। ते च नाद्यापि संगृहीता न चास्य सुसंगतं वृत्तमुपनिबद्धं केनापीति महच्चित्रम्।

कस्मिन्काले कालिदासो बभूवेति निसर्गादेव प्रथमः प्रश्नोऽस्य विषये समुत्तिष्ठति। कवेर्विक्रमेण सम्बन्धस्तत्कृता वाल्मीकेः प्रशंसा तद्ग्रन्थेषु हूण-यवनादिजातीनां वर्णनं[2] तन्नाम्नः प्रशस्त्यादिषूपलम्भो रघुवंशस्याकस्मिकी समाप्तिः कवेः समकालिकानां तदुक्तानामन्योक्तानां च समय इतीदृशा विषयाः प्रायोऽस्य समयनिर्णयायावलम्ब्यन्ते। नैते केवलं कालिदासीयसमयनिर्णयो-पयुक्ताः किन्तु बह्वन्यदपि तन्निर्णयोपयुक्तमद्यावधि समुपेक्षितं विषयजातमस्तीति सद्यः स्फुटीभविष्यति। सर्वमीदृशं विषयजातमसमीक्ष्य नास्य कालनिर्णयः सुकरः कालिदासीयसमयविषये प्रधानकल्पना अद्यावध्युत्प्रेक्षिता एताः—

(१) अग्निवर्णपुत्रस्य समयः।

(२) विक्रमाब्दारम्भसमयः।

(३) स्कन्दगुप्तसमयः।

(४) कोरूरयुद्धसमयः।

एतदतिरिक्ता अपि काश्चित्कल्पनाः सन्ति, तद्यथा कालिदासमातृगुप्त-योरैक्यं तस्य भोजसदस्यत्वेन खिस्तीयैकादशशतकेऽवस्थानं चेत्यादि। तत्र कश्मीरेश्वरेण मातृगुप्तेन सह कालिदासैक्यकथा भाऊदाजीवैद्यस्योत्प्रेक्षामात्रं सर्वथा निष्प्रमाणं तस्य भोजसमकालिकत्वं तु तन्नामकानां कवीनामनेकत्वमविज्ञाय भोजप्रबन्धे विश्वासभाजामज्ञानविजृम्भितम्। ईदृश्यः कल्पनाः स्फुटमसंगताः परीक्षानर्हाश्चेति परिभाव्य संप्रति कल्पनाचतुष्टयमुक्तपूर्वं परीक्ष्यते यदधुना विदुषां चित्ते स्थितिं भजत्युदेति चानेकै रूपैर्यदा कदाचित्।

---

१. शृङ्गारतिलक-श्यामलदण्डक-पुष्पबाणविलासादयो ग्रन्था अपि कालि-दासकर्तृकत्वेन व्यपदिश्यन्ते।

२. रघुवंशे रघुदिग्विजयवर्णनं द्रष्टव्यम्।

अग्निवर्णतनयस्य समये कालिदासो बभूवेति केषांचित्परीक्षकाणां मतम्। न चेदसावस्मिन्समयेऽभविष्यत्को हेतुरस्याग्निवर्णकथया सहैव रघुवंशसमापनस्य। कविना रघुवंशस्येतिवृत्तं स्वसमयं यावदुपनिबध्य विरामः कृत इत्येव समीचीनं प्रतिभाति। ततश्च खिस्तवर्षारम्भात्पूर्वमष्टमशताब्द्यां कविरसौ बभूवेति केचिदुत्प्रेक्षन्ते।[1] किन्तु कामपरवशादग्निवर्णात्परं रघुवंशकीर्तिमुपरतप्रायां विलोक्यागामिन उपप्लवान्परिजिहीर्षता कविना तत्रैव विश्रान्तमित्यपि संभाव्यते। किं च शङ्करपण्डितेन यथोत्प्रेक्षितं तथा चेत्कविरसौ रघुवशमग्निवर्णादर्वाचीनानां नृपाणां वर्णनेन व्यवर्धयिष्यन्नूनमकालिदासीयोऽयमनुचितोऽनपेक्षणीय ईदृशो विस्तारोऽभविष्यत्। तत्सर्वथा ग्रन्थसौष्ठवशत्रुमतिविस्तरं परिजिहीर्षुरितिहासपारवश्यं विधूय कालिदासोऽग्निवर्णकथयैव रघुवंशमुपसंजहारेत्येव समञ्जसं स्वारसिकं च, किं चाग्निवर्णपुत्रस्य समकालिकश्चेत्कालिदासोऽभविष्यत्तस्यैव वृत्तेनासौ रघुवंशं व्यरमयिष्यन्न तु तत्पितुर्वृत्तेन। वस्तुतस्तु कालिदासो नाग्निवर्णेन न वा तत्पुत्रेण सम्बद्धोऽभवितुमर्हति, न हीदृशे सम्बन्धे सति कविरग्निवर्णं व्यसनपरवशमवर्णयिष्यत्।[2]

इदमेव कवेरग्निवर्णस्य तत्पुत्रस्य वा समकालिकत्वकल्पनां प्रत्याख्यातुं क्षमतेतरामिति विरम्यतेऽस्मिन्विषये निरर्थकाद्विस्तरात्।

विक्रमादित्यस्य सदसि विक्रमाब्दारम्भकाले कालिदास आसीदिति कल्पना तु समयविषये किंवदन्तीमात्रावलम्बा प्रमाणान्तरविरुद्धा च। किन्तु कवेर्विक्रमेण संबन्धः सर्वथा संगत इत्यनुपदमेव वक्ष्यामः।

स्कन्दगुप्तस्य समये खिस्तीयपञ्चमशताब्द्या ये कालिदासमवस्थापयन्ति तेषां मूलं तु रघुवंशे हूणानां वर्णनमात्रम्। किन्तु भारतीयैर्ग्रन्थकृद्भिः प्रायो हूणयवनशकादिशब्दाव्यतिकीर्णेष्वर्थेषु प्रयुक्ताः, कालिदासस्य चैतिहासिका हूणा अभिप्रेता इति न वक्तुं शक्यते। किंचाष्टपञ्चाशदधिकचतुःशततमेऽब्दे हूणैः

१. एस० पी० पण्डित सम्पादितस्य रघुवंशस्य भूमिका द्रष्टव्या।
२. किं च रघुवंशीयोनविंशसर्गे रघुवंशयशोऽवसानमासन्नप्रायं सूचितं कविना।

संभूय प्रथमं भारतमाक्रान्तं ततः पूर्वमपि भारतमास्कन्दितुं ये केचिद्धूणा यदा कदाचिदागताः सीमान्तेष्विति संभाव्यत एवेति संभूय हूणैः कृताद्भारतप्रथमाक्रमणात्पूर्वं चेत्कालिदासोऽभविष्यन्नासौ हूणनाम्ना परिचितोऽभविष्यदिति कल्पनाप्यसंगतैव ।

कोरूरसंग्रामसमयसमकालिकः कालिदास इति कल्पना नातिचिराद्गतेषु दिवसेषु विदुषां बहुमतासीत् । उज्जयिनीशः कश्चिद्विक्रमः[१] षष्ठशतके कोरूरसंग्रामे म्लेच्छान्पराभूतवानिति केषांचिदैतिहासिकम्मन्यानां मतम् । विदितं चैतद्यथा मध्यभारतेश्वरो यशोधर्मा मागधस्य बालादित्यस्य साहाय्येन मिहिरकुलं पराजिग्ये । वस्तुतो यशोधर्मणो विजय उत्प्रेक्षितात्कोरूरयुद्धसमयात्प्राचीनतरस्तथापि यशोधर्मणो विक्रमापराख्यत्वं परिकल्प्य तेनैव मिहिरकुलपराभवावसरे मालवगणस्थित्यब्दो विक्रमाब्दाभिधां नीत इति चोत्प्रेक्ष्यास्य नृपस्य तद्विजयानां च विषये प्रचुरं कल्पनान्तरं च विधायास्यैव समये संस्कृतवाङ्मयस्य पुनरुज्जीवनं बभूवा[२]स्यैव च कालिदासो नवानां सदस्यरत्नानामेकतम आसीदिति केचिन्मन्यन्ते । वराहमिहिरस्य समयः षष्ठशतकस्योत्तरार्धे संपतंस्तत्समकालिकस्य कालिदासस्य षष्ठशतकेऽवस्थितिं द्रढयत्येवेत्यपि ते संभावयन्ति । किन्तु बाणभवभूतिमाघकालिदासादीन्समकालिकान्कल्पयतो भोजप्रबन्धस्येव नवरत्नपद्यस्यापि प्राचीनानर्वाचीनांश्च वररुच्यमरादीनेककालिकानुत्प्रेक्षमाणस्याप्रामाणिकत्वं स्फुटमेवेति तन्मूलकं कालिदासवराहमिहिरयोः समकालिकत्वं न विश्वासयोग्यम् । न चान्यत्किमपि दृढं प्रमाणान्तरं कालिदासस्य यशोधर्मसमकालिकत्वमवस्थापयतीत्युपेक्षणीय एवायं प्रवादः ।

तदित्थं कालिदासीयसमयविषये प्रसिद्धान्वादानुपेक्ष्य संप्रति सिद्धान्तमन्वेष्टुकामैरस्माभिर्विचार आरभ्यते । कालिदासः कस्यचिद्विक्रमनृपतेः सदस्य आसीदित्यत्र न संशयः । विक्रमोर्वशीयमिति तदीयरूपकाणामन्यतमस्य विलक्षणं

---

१. असौ हर्षो विक्रम इति मैक्समूलर–फर्ग्यूसनपण्डितयोः सिद्धान्तः । द्रष्टव्यः India, what it can teach us, इति ग्रन्थे ।

२. तत्रैव ।

नाम तत्प्रस्तावनायामनुत्सेकः खलु विक्रमालंकार इत्युक्तिश्च तस्य विक्रमनृपतिसम्बन्धं व्यञ्जयतः। जनश्रुतेरपीदं समतं दृढीकृतं चाभियुक्तानामभिनन्दादीनामुक्तिभिः। नवरत्नपद्यमप्येतत्सूचयति। तदीदृशानि बहूनि मानानि पृथक् पृथङ्नातिप्रबलान्यपि संभूयैकार्थबोधकतया बह्वादरणीयानि।

किन्तु कोऽसौ विक्रमनृपो यत्समये कालिदास आसीदिति न सुकरं निर्णेतुम्। विक्रमाब्दारम्भे न कश्चिद्वास्तवो विक्रम उपलभ्यते। विक्रमाब्दोऽपि चिराय प्राचां मालवगणस्थित्यब्दनाम्ना न तु विक्रमाब्दनाम्ना विदितः। यशोधर्मणोऽपि बहुकालानन्तरमयं विक्रमाब्दव्यपदेशं भेजे। ततोऽत्यन्तमर्वाचीनः कल्हणोपि विक्रमाब्दमालवगणस्थित्यब्दत्वेन व्यपदिशति राजतरङ्गिण्याम्। कदा केन मालवगणस्थित्यब्दस्य नामपरिवर्त्तः कृत इति तु नाद्यापि विदितम्। प्रायो नामपरिवर्तोऽयं भ्रममूलक एवेति प्रतिभाति। कैश्चिदतिदैर्ध्यपरुषाद्यरत्वदोषदूषितं मालवगणस्थित्यब्दनाम नातिरोचयमानैः कथासहस्रनायकेन मालवेश्वरत्वेनोत्प्रेक्षितेन विक्रमादित्येन स्थापितमिममब्दं संभावयद्भिः संक्षिप्तमधुरेण विक्रमाब्दनाम्नायमब्दः प्रख्यापितः प्राचीनं चास्य नाम सर्वथा विस्मृतिपथं नीतम्। इत्थं प्रथमशतके विक्रमादित्यात्यन्ताभाववति प्राचीनतरशतकेषु चासंभावितविक्रमेषु विक्रममर्वाचीनशतकेष्वन्वेष्टुं प्रवर्त्तामहे। किन्तु बहूनां विक्रमादित्योपाधिभाजामर्वाचीनशतकवर्तिना नृपाणां कोऽसौ नृपविशेषो यस्य समये कालिदास आसीदिति न तावन्निश्चेतुं शक्यते यावत्प्रमाणान्तरेभ्यः संभावितोऽस्य समयो न स्थिरीक्रियते।

कालिदासस्य शुङ्गनृपाणां ज्ञानं तस्य ज्योतिषविद्याया गणितफलितोभयरूपेण ज्ञानं तस्य बृहत्कथायां वर्णितानां कथानां परिज्ञानं तस्य हूणादिप्रत्यन्तजातीनां परिज्ञानं तस्य ग्रन्थेषु पातञ्जलानामनतिप्रचुरप्रयोगाणां शब्दानामुपयोग एवमन्यान्यपि बहूनि मानानि कालिदासस्य विक्रमाब्दारम्भादर्वाचीनत्वं बोधयन्ति। विक्रमाब्दारम्भात्पूर्वं द्वितीयशतके समुद्भूतस्य पतञ्जलेरनन्तरं संस्कृतस्य प्रयोगो विरलोऽभूद्बहुविधानि च प्रकृतानि तत्स्थाने प्रायुज्यन्तेति' विदितं प्रेक्षावतामत एव च गुणाढ्यस्य महाप्रबन्धः पैशाचे प्राकृतविशेषे न्यबध्यत् न तु संस्कृते।

अयं प्राकृतप्राबल्यसमयः सर्वथा कालिदाससदृशस्य संस्कृतमहाकवेः प्रादुर्भावायोग्यो बृहत्कथाकथानां परिज्ञानमपि कालिदासस्य गुणाढ्यपरभावित्वं सूचयति। किं चोपरागस्य वास्तवो हेतुः कालिदासस्य विदितो न वेति संशयेऽपि यावज्ज्योतिषविज्ञानं तेन स्वप्रबन्धेषु प्रदर्शितं तेन स्फुटं परिज्ञायते यदसावार्यभट-वराहमिहिरयोः संनिकृष्टस्ताभ्यां तदनन्तरपूर्वजेभ्यो वा ज्योतिषविज्ञानमासादित-वान्। तथा च कालिदासस्तृतीयशतकात्पूर्वतरो नेति स्पष्टमेव। किन्तु पञ्चम-शतकात्परतोऽप्यस्यानयनं न सुकरं सप्तमशतके हि बाणेनासौ हर्षचरिते रविकीर्ते-र्द्वितीयपुलकेशिप्रशस्तौ च नामग्राहं वर्णितः। द्वितीयपुलकेशिप्रशस्तौ चास्य नाम भारविणा सहैवोक्तमिति पुलकेशिनः समयाच्छताधिका वत्सरा भारवेर्ध्रुवं व्यतीता येनासौ तथा विश्रुतोऽभूद्यथास्य कीर्तिः प्रशस्तिषूपन्यासोचिता बभूवेति वक्तुं शक्यत एव।

बाणेन कालिदाससमभिव्याहारे वर्णितः सुबन्धुरपि बाणाद्वत्सरशतं पूर्वमेवा-सीदन्यथा बाणसमये तस्य तथा ख्यातिर्नाभविष्यत्। अतः भारविः सुबन्धुश्च षष्ठशतके ततोऽपि पूर्वमेवास्तामित्यत्र न कोपि संशयः। सभङ्गश्लेषशब्द-काठिन्यादिबहुलाभ्यां भारविसुबन्धुभ्यां सरलतरकाव्यस्य कालिदासस्य चिरपूर्व-भावित्वं च स्पष्टमेवेति कालिदासश्चतुर्थशतकान्ते पञ्चमशतकारम्भे वासीदिति केषांचिदर्वाचीनानां तत्समयविषयकसंभावनान्तरेभ्यः समीचीनतरं प्रतिभाति। तदित्थं निसर्गतो विक्रमादित्यापराख्यस्य चन्द्रगुप्तस्य राज्ये ( चतुर्थशतकान्ते पञ्चमशतकारम्भे च ) कालिदासोऽभूदिति संभावयामस्तथा सति हि तस्य विक्रम-सम्बन्धोऽपि सुघटः। वस्तुतः सविस्रम्भमिदं वक्तुं शक्यते यत्कालिदासस्य समयोंऽ-शतश्चन्द्रगुप्तस्य समयेंऽशतश्च तत्पुत्रस्य कुमारगुप्तस्य समयेऽन्तर्भवतीति। तथा चास्य कवेः कालः खिस्तचतुर्थशतकस्यान्ते पञ्चमशतकस्य चारम्भे पततीति सुस्पष्टम्। अस्मिंश्च काले कालिदासीयत्वेन निर्णीते तस्य भारविसुबन्धुभ्यां प्राचीनत्वमप्यायातं तौ हि षष्ठशतकस्यारम्भे समुद्भूतौ। किंच कालिदासो-ऽपाणिनीयांस्तं पातयां प्रथममासेत्यादि कतिचित् प्रयोगान्स्वकाव्येषु विन्यास्थ-दीदृशाश्च प्रयोगा बुद्धचरितं विहाय नान्यत्र लौकिककाव्येषूपलभ्यन्त इति नूनं

बुद्धचरितप्रणेतुरश्वघोषस्य कालिदासस्य च तदाविर्भावः संभावितो यदा पाणिनेः प्रामाण्यं न विश्वजनीनमासीत्। भारविसुबन्धुसमये तु पाणिनेः प्रामाण्यमनतिक्रमणीयमासीदिति सर्वथा ताभ्यां प्राचीनतरः कालिदासः। कालिदासस्य गणितज्योतिषविज्ञानं तु न तथा गहनं येनार्यभटानन्तरमेवास्य विनिवेशः क्रियेत। तस्य वराहमिहिरसमकालिकत्वं तु ज्योतिर्विदाभरणीयनवरत्नपद्यमात्रमूलकं केनचिदत्यर्वाचीनेन जैनेनात्यन्तमशुद्धे संस्कृते विलिखतस्य ज्योतिर्विदाभरणस्य च सर्वथा प्रामाणिकेतरतया नैतद्विश्वासार्हम्।

अयं महाकविरुज्जयिनीशस्य सदस्योऽपि नोज्जयिनीं जन्मनालंचकार। तस्य सार्वकालिकी ग्रीष्मर्तुप्रियता बाल्ये प्रणीतेषु कुमारसंभवादिषु हिमालयदृश्यानां सविशेषः परिचयश्च कश्मीराभिजनतां सूचयतः। किं च कालिदासश्चेदकाश्मीरकोऽभविष्यद्बाणश्च शोणतटसम्भवोऽकाश्मीरकत्वेन निश्चित एव कथं तर्हि गद्यकवीनां पद्यकवीनां च मूर्धन्ययोरकाश्मीरकत्वं जानन्नपि बिल्हणः—

'सहोदराः कुङ्कुमकेसराणां भवन्ति नूनं कविता विलासाः।
न शारदादेशमपास्य दृष्टस्तेषां यदन्यत्र मया प्ररोहः॥'[१]

इति साभिमानमवक्ष्यत्।

प्रौढे वयसि कालिदास उज्जयिनीमुपेत्य राजसदस्योऽभूदित्यनुमीयते। कुमारसंभवमालविकाग्निमित्रादिषु कवेर्बाल्यग्रन्थेषूज्जयिनीसम्बन्धो न दृश्यते किन्त्वस्य प्रौढप्रबन्धेषु मेघदूतादिषूज्जयिन्याः प्रासादोद्यानहर्म्यादेः सोत्कण्ठं स्मरणमुपलभ्यते।

कः पुनरुज्जयिनीश आसीत्कालिदासस्य समये? रघुवंशस्य षष्ठसर्ग इन्दुमतीस्वयंवरार्थमुपागतानां राज्ञां वर्णनावसरे कविना मगधेश्वरो नृपवर्गस्य मूर्ध्नि स्थापितः। कोऽभिप्रायस्तस्य? उज्जयिनीश्वरेण सम्बद्धः कालिदासोऽवन्तिपतिं नृपाणां मूर्ध्नि स्थापयितुमर्हति न पुनर्मगधेश्वरम्। तत्समये मगधेश्वरश्चेदवन्तिपतेरभिन्नस्तदैवेदं समञ्जसम्। मगधैरसंबद्धस्य यशोधर्मणोऽन्यस्य सदस्यश्चेदसावभविष्यन्न मगधेशमीदृग्बहुमानभाजनं व्यधास्यत्। कालिदासेन स्वयंवरावसरे वर्णितानां सर्वेषां राज्ञां मगधेशावन्तीश्वरौ महाप्रभावतमौ। क्षुद्रेष्वन्य-

नृपेषु सत्स्वपि मगधेश्वरेणैव धरा राजन्वती । अवन्तीश्वरस्य च प्रयाणेषु वाजिखुरोत्थापितै रजोभिः सामन्तशिखामणयो धूसरीभवन्ति । आभिरसाधारणप्रशंसावाग्भिः स्फुटमनुमीयतेऽस्य कवेः समये अवन्तीशमगधेशयोरैक्यं प्रशस्तेश्च द्विधा विभक्ता याः परमार्थत एकविषयत्वम् । तदित्थं कवेः सम्भाविते समये (चतुर्थशतकान्ते ) अवन्तिमगधोभयेश्वरः कोऽपि नृपोऽमुं सदस्यरत्नं व्यधत्तेति निश्चितप्रायम् । द्वितीयश्चन्द्रगुप्तश्च स मगधेश्वर इतिहासप्रसिद्धो येन प्रायोऽस्मिन्नेव समयेऽवन्तयो विजिता[१] इति पुनरन्यथापि गुप्तान्वयतिलक एव विक्रमः कविनानेन सम्बद्धो नृपतिः प्रतिभाति । किं च स्वयंवरार्थागतेषु नृपेषु मगधावन्तीश्वरावेव राजकुमार्या सबहुमानमतिक्रान्तावन्ये तु भूपतयः सघृणमेवोल्लङ्घिताः ।

रूद्रदामान्वयधूमकेतुः प्रवया विक्रमः स्वप्रतिनिधौ परन्तपेऽनुरागरहितामिन्दुमतीं चन्तुं शक्तो न त्वसाविमामन्यनृपेष्विव तस्मिन्ननादरवतीं क्षमेत । नैतावदेव प्रकरणेऽस्मिंश्चन्द्रगुप्तस्य कालिदासेन सम्बन्धं व्यनक्ति, मगधावन्तीशयोर्वर्णनोपक्रमे तत्सम्बद्धश्चन्द्रेन्दुशब्दप्रयोगोऽपि मुद्राराक्षसप्रस्तावनायां चन्द्रशब्दप्रयोग इव चन्द्रगुप्तसंबन्धं ध्वनयति । उक्तपूर्वातिरिक्तमपरमपि बहुविषयजातं कालिदासस्य द्वितीयचन्द्रगुप्तेन संबन्धं सूचयति । दिलीपस्य रघोश्च कथयो रघुवंशे वर्णितयोः किमपि वैलक्षण्यं दृश्यते यस्य रहस्यं कवेर्विक्रमसम्बन्धमकल्पयित्वा नावगन्तुं सुशकम् । प्राचीनासु पुराणकथासु न दिलीपोऽश्वमेधेन यजन्न वा रघुर्दिग्विजयाय प्रतिष्ठमान उपलभ्यते । रघुश्चन्द्रगुप्त इव वर्णित इति कल्पनायां तु सहेतुकं दिलीपस्याश्वमेधयाजित्वकल्पनं रघोश्च दिग्विजेतृत्वोत्प्रेक्षणम् । रघूरामश्च कालिदासीयनायकानां श्रेष्ठौ । तत्र सुप्रथितं रामस्य चरितं कविना नान्यथा कर्त्तुं पारितमिति रघुरेव तेन स्वरक्षकस्य चन्द्रगुप्तनृपतेः प्रतिनिधिरकारि । चन्द्रगुप्तस्य पिता समुद्रगुप्तोऽश्वमेधयाजित्वेनेतिहासेषु विदित इति । रघोः पिता दिलीपोऽपि कविनाश्वमेधया जित्वेन वर्णितः । चन्द्रगुप्तः प्रायः कस्याश्चिन्मगधराजकुमार्याः पुत्र इति रघुरपि मागधीपुत्रत्वेन व्यपदिष्टः । चन्द्रगुप्तस्य

---

१. स्मिथमहाशयस्य भारतेतिहासे चन्द्रगुप्तप्रकरणं द्रष्टव्यम् ।

मातुर्नाम दत्तेति। दत्ताशब्दश्च दक्षिणापर्याय इति रघोरपि मातुर्नाम सुदक्षिणे-त्युत्प्रेक्षितं कविना। चन्द्रगुप्तो महाप्रभावो विजेतेति रघुरपि तादृश एव वर्णितः। फाहियाननाम्ना चीनदेशीयेन गुप्तसाम्राज्यस्य प्रथमभागे भारतं भ्रान्तवता तदानीं दस्यूनां सम्राड्रक्षितेषु प्रदेशेषु सर्वथानुपलम्भ एव तत्साम्राज्य-स्यासाधारणलक्षणत्वेन वर्णितः, कालिदासश्च स्वसम्राड्रक्षितस्य भारतस्य तमेव विशेषं स्मरञ्श्रुतौ तस्करता स्थिता दिलीपस्य राज्य इति वर्णितवान्। कालिदासः स्वनायकान्गोप्तृशब्देन प्रायो व्यपदिशति। अन्यैः संस्कृतकविभिर्विरलं प्रयुक्तोऽयं शब्दः। गोप्तृगुप्तयोश्चैकप्रकृतिजत्वान्नूनं गुप्तानां स्मारकोऽयं गोप्तृशब्दः प्रतिभाति। किंच 'स्ववीर्यगुप्ता हि मनोः प्रसूतिः' इत्यत्र गुप्तशब्दोऽपि यथाकथं-चिद्दिलीपविषये कविना प्रयुक्त एव।

तथा च विक्रमादित्य-विक्रमाङ्काद्यनेकविरुदविराजितस्य द्वितीयचन्द्रगुप्त-नृपतेरापश्चिमसागरं गुप्तसाम्राज्यं विस्तारितवतो गुर्जरीयशकसत्रपत्रासैकहेतोः कथासहस्रनायकत्वेनार्वाचीनैरुत्प्रेक्षितस्य शकारेः समये कालिदासो बभूवेति सिद्धम्। सुह्मादीनतिदूरस्थान्पौरस्त्यांश्चोलादीन्दाक्षिणात्यांश्च कांश्चिद्विषयैक-देशान्विहाय प्रायः समस्तं भारतमस्याधिकारस्थमासीदिति न तिरोहितमिवेतिहास-विदाम्। अधिकचत्वारिंशतो वत्सरान्दिग्विजयात्पूर्वं रघुनृपतेरधिकारगतत्वेन कविनोत्प्रेक्षितस्य भारतांशस्यायं शासक आसीत्। रघुणा दिग्विजयाय प्रस्थितेन विषयान्तराणि सुह्मकलिङ्गकेरलादीनि विजितानि। मगधावन्त्यादीनां विजेतृ-त्वेन कथं नासौ कविना वर्णितः? चन्द्रगुप्तं स्मरता कविना तद्राज्यस्थितिरिव रघुराज्यस्थितिरुत्प्रेक्षिता मगधावन्त्यादीनां च प्रथमत एव रघुराज्येऽन्तर्भावं व्यञ्जयता तद्विजयो नोक्त इतीदृशमेवास्य प्रश्नस्योत्तरं संभवति।

कालिदासो दीर्घायुर्बभूवेति प्रायः संभाव्यते। विक्रमे दिवं गतेऽप्यसौ तत्पुत्र-सभारत्नमासीत्। विक्रमपुत्रस्य कुमारगुप्तस्यैव समये प्रवयसा कविना शाकुन्तलं रघुवंशस्यान्तिमाश्च कतिचित्सर्गाः प्राणायिषत। विक्रममिव तत्पुत्रं कविर्नारोच-यतेति प्रतिभाति। स हि मेघदूतप्रणयनसमये तथोज्जयिनीप्रियोऽपि, पश्चिमे वयसि शाकुन्तलं विलिखन्नगरवासादतिविरक्त इव लक्ष्यते वनवासं च बहुमन्यते।

यौवने करुणवर्णनविमुखो मृतस्य कामस्य पुनर्जीवनाशां कुमारे वर्णितां वयोऽन्ते विरागबहुलः कविरप्रतिविधेयानि मरणमहाशोकादीनि रघुवंशे वर्णयामास, करुणमेव चास्य निर्वहणं विदधौ ।

तथा च चतुर्थशतकस्यान्ते पञ्चमशतकस्य चारम्भे कालिदास आसीदिति स्थिरम् । अशोकसमयानन्तरमस्मिन्नेव समये पुनर्भारतस्य गौरवमाविरभूदजायन्त चास्मिन्नेव काले मेण्ठसुबन्धुभासादयो महाकवयो दिङ्नागोद्योतकराद्याश्चानेके दार्शनिका आर्यभटवराहमिहिरादयश्च वैज्ञानिकाः । अस्मिन्समये विद्योन्नतिर्या भारते प्रादुरभूत्तस्या अवसानं प्रायो वर्षसहस्रानन्तरं लक्ष्मणसेनराज्येऽतीते बभूवेति शिवम् ।

---

# भवभूतेर्नाटकेषु कालप्रियनाथः

महामहोपाध्याय डॉ० वा० वि० मिराशी

महाकवेर्भवभूतेर्महावीरचरितं, मालतीमाधवमुत्तररामचरितञ्चेति नाटकत्रयमुपलभ्यते। तेषां त्रयाणामपि प्रथमः प्रयोगः कालप्रियनाथस्य यात्रायामभूदिति तेषां प्रस्तावनातो ज्ञायते। तथाहि महावीरचरितस्य प्रस्तावनायां सूत्रधारो वदति—'भगवतः कालप्रियनाथस्य यात्रायामार्यमिश्राः समादिशन्ति' इति। एवमेव मालतीमाधवनाम्नो द्वितीयनाटकस्य प्रस्तावनायां सूत्रधारः स्वपारिपार्श्वकमभिदधाति 'मारिष, सुविहितानि रङ्गमङ्गलानि, संनिपतितश्च भगवतः कालप्रियनाथस्य यात्राप्रसङ्गेन नानादिगन्तवास्तव्यो महाजनसमाजः। आदिष्टश्चास्मि विद्वज्जनपरिषदा यथा केनचिदपूर्वप्रकरणेन वयं विनोदयितव्या इति।' तथा चोत्तररामचरितनाम्नस्तृतीयनाटकस्य प्रस्तावनायामपि 'अद्य खलु कालप्रियनाथस्य यात्रायामार्यमिश्रान् विज्ञापयामि' इत्येवंप्रकारकः कालप्रियनाथस्योल्लेखो दृश्यते।

सामान्यतः संस्कृतकवीनां नाटकप्रयोगास्तदाश्रयदस्य राज्ञः सभायां भवन्ति। किन्तु भवभूतेर्नाटकानि न राजाश्रयेण किन्तु जनाश्रयेण प्रसिद्धिं प्राप्नुवन्। तेषां प्रथमप्रयोगाः कालप्रियनाथस्य यात्रायामभूवन्निति तेषां प्रस्तावनातो दर्शितपूर्वम्। मालतीमाधवस्य प्रस्तावनातो ज्ञायते यदिदं कालप्रियनाथस्य देवायतनं भारते सुविख्यातमासीत्तस्य यात्रार्थं भारतस्य तत्तेभ्यः सुदूरप्रदेशेभ्यो जना आगच्छन्ति स्मेति। तद्देवायतनं कुत्रासीदित्यस्य प्रश्नस्य चर्चात्र प्रस्तूयते।

भवभूतेर्नाटकानां टीकाकृद्भिः प्रायोऽस्मिन्विषये मौनमवलम्बितम्। महावीरचरितनाटकस्य टीकाकारो वीरराघवः 'कालप्रियनाथस्य' इति पाठं स्वीकृत्य 'कालप्रियानामिकाम्बिकापतेः' इति तदर्थं स्पष्टीकरोति। 'कालप्रियनाथस्य' इति ह्रस्वान्तप्रियशब्दयुक्तं पाठं च 'ङ्यापोः संज्ञाछन्दसोर्बहुलम्' इति पाणिनि-

सूत्रेण समर्थयति। किन्त्वस्मिन् स्पष्टीकरणे 'भवानीपतेः' इत्यत्र मम्मटोक्तदिशा विरुद्धमतिकृन्नामको दोषः सम्भवति। तद्यथा तथा भवतु किन्त्वयं कालप्रियनाथः कुत्रासीदित्यस्मिन् विषये प्राचीनटीकाकृद्भिर्न किमप्युक्तम्। 'कालप्रियनाथो नाम तद्देशदेवभेदः' 'क्षेत्रविशेषस्येश्वरमूर्तिविशेषः' इत्याद्युक्तिभिस्तैरस्य प्रश्नस्य चर्चा परिवर्जिता। रामचन्द्रबुधेन्द्राभिधष्टीकाकर्तुमुत्तररामचरितटीकायां वदति यत् कालप्रियनाथो नाम विदर्भेषु पद्मनगरे प्रतिष्ठितो देवमूर्तिविशेषः। तस्य यात्राया-मुत्सवे नाटकमिदं कालप्रियनाथस्य पुरतः प्रथममभिनीतमासीदिति। किन्त्वे-तन्मतं न विचारसहम्। भवभूतेः पूर्वजा दक्षिणापथे विदर्भेषु पद्मपुरनाम्नि नगरे चिरकालं न्यवसन्। स आत्मनः शैशवमपि तत्रैवात्यवाहयत्। तत्रैव यदि तदीयनाटकानां प्रयोगाः प्रथमं सञ्जाताः तर्हि तत्प्रस्तावनासु तत्कृतं स्वपूर्वजानां वर्णनं स्वीयविद्वत्तादीनामुल्लेखाश्चानावश्यका अभविष्यन्। अपि च कालप्रिय-नाथस्य देवायतनं विदर्भेष्वासीदित्यत्र न प्रमाणलेशोऽपि। तस्मात् कालप्रिय-नाथस्य देवायतनं विदर्भेभ्यः सुदूरवर्तिस्थानेऽभूत् यत्र भवभूतिर्न परिचित आसीत्। अतस्तेन स्वनाटकप्रस्तावनासु विशेषतः महावीरचरितनामकस्य प्रथम-नाटकस्य प्रस्तावनायां—स्वकुलवृत्तान्तः मालतीमाधवे च स्ववैदुष्यप्रदर्शनमाव-श्यकं सञ्जातम्।

भवभूतिनाटकानामाधुनिका व्याख्यातारः कालप्रियनाथसंज्ञयोज्जयिन्या महाकालमभिजानन्ति। महाकालस्य भारतीयद्वादशज्योतिर्लिङ्गेषु गणना भवतीति सुविज्ञातमेव। भवभूतेः प्राग्वर्तिकालिदासकालेऽपि तद्देवायतनं सुप्रसिद्धमासीदिति मेघदूतादितत्काव्येभ्यो ज्ञायते। कालिदासवद् भवभूतिरपि शिवोपासक आसीदिति मन्यते बहुभिः। तस्माद्यदि तदीयनाटकानि महाकालस्य यात्रायामभिनीतानि स्युस्तर्हि तन्नाश्चर्यावहम्। इदमेव च मतं बहुशो विद्वद्भिः स्वीकृतम्।

किन्तु नैतन्मतं समीचीनं प्रतिभाति। न कुत्रापि उज्जयिनीस्थमहाकालस्य कालप्रियनाथसंज्ञया निर्देशो दृश्यते। भवभूतिरपि न कालिदासवच्छिवोपासकः। नोचेत् कालिदासस्य नाटकवत् तस्य सर्वेष्वपि नाटकेषु शिवस्तुतिपरा नान्द्य-

भविष्यत् । परं केवलं मालतीमाधवस्य नान्दीश्लोकयोर्भगवतः शङ्करस्य ताण्डव-नृत्यस्य जटाजूटानां वर्णनं च दृग्गोचरीभवति । महावीरचरिते तु चैतन्य-ज्योतिषे उत्तररामचरिते च पूर्वसूरिभ्यस्तेन स्वप्रणामाञ्जलिरर्पिता । भवभूति-रुपनिषदां तथा च सांख्ययोगादिदर्शनानामभिज्ञ आसीत् । ततश्च सर्वत्र जगति एकमेव चैतन्यज्योतिर्व्याप्तं वर्तते शिवादयश्च तस्याविर्भावा इत्यौपनिषदं मतं तस्याभिमतमासीदित्यत्र न कोऽपि सन्देहः । तस्मात् भवभूतेः शिवोपासक-त्वात् तदीयनाटकेषूल्लिखितः कालप्रियनाथ महाकाल एव भवितुमर्हतीति मतं निर्मूलमेव ।

अतः कालप्रियनाथस्य गवेषणान्यत्र कर्तव्या । एवं विचार्यमाणे काल-प्रियस्य कतिचिन्निर्देशाः पुराणेष्वधिगताः । तेऽत्र संक्षेपतः प्रदर्श्यन्ते ।

भविष्य–वराह–स्कन्दादिपुराणेषु कृष्णपुत्रसाम्बस्य कथा दृश्यते । साम्बस्य मनोज्ञरूपत्वात् कतिचन कृष्णपत्न्यस्तस्मिन्ननुरक्ता बभूवुः । तद्वृत्तान्तं नार-दान्निशम्य कृष्णेन तत्परीक्षणानन्तरं साम्बः "त्वं कुष्टरोगपीडितो भविष्यसी"ति शप्तः । ततः साम्बो मूलस्थानं गत्वा भगवतः सहस्ररश्मिमाराधितवान् तत्कृपया च सोऽगदनिर्मुक्तो बभूव । तदनन्तरं भगवतः सूर्यस्यादेशेन तेन चन्द्रभागा-नद्यां स्नातुं गतेन भगवतोऽत्युज्ज्वला मूर्तिः तन्नदीप्रवाहादुद्धृता तत्रत्यमित्रवने च प्रतिष्ठापिता । ततो भगवान् मरीचिमाली तत्राविर्भूय साम्बमुक्तवान्—

सांनिध्यं मम पूर्वाह्णे सुतीरे द्रक्ष्यते जनः ।
कालप्रिये च मध्याह्नेऽपराह्णे चात्र नित्यशः ॥

अस्मिन् श्लोके दिवसस्य त्रिषु भागेषु भगवतः सूर्यस्य विशेषतः सांनिध्यं त्रिषु स्थानेषु भवतीति वर्णितम्—प्रातः सुतीरे, मध्याह्ने कालप्रिये, सायं च चन्द्रभागातीरे मूलस्थाने । क्वचित् 'सुतीरे' इत्यस्य स्थाने 'मुण्डीरे' इति पाठो दृश्यते । एतानि स्थानानि कुत्रासन्निति प्रश्नस्योत्तरं वराहपुराणस्य ( अध्याय १७८, श्लो. ५५–५७) अधस्तनश्लोकेषूपलभ्येत—

साम्बः सूर्यप्रतिष्ठां च कारयामास तत्त्ववित् ।
उदयाचले च संश्रित्य यमुनायाश्च दक्षिणे ॥

मध्ये कालप्रियं देवं मध्याह्ने स्थाप्य चोत्तमम् ।
मूलस्थानं ततः पश्चाद् अस्तमानाचले रविम् ।
स्थाप्य त्रिमूर्तिं साम्बस्तु प्रातर्मध्यापराह्णिकम् ॥

एषु श्लोकेषु साम्बेन भगवतोऽर्कस्य मूर्तेः प्रतिष्ठापना त्रिषु स्थानेषु कृतेति वर्णितम्—पूर्वस्यां दिश्युदयाचले, यमुनानद्या दक्षिणतीरे कालप्रिये तथा च मूलस्थाने ( चन्द्रभागातीरे ) । एतानि स्थानानि क्रमशः भारतदेशस्य पूर्वभागे, मध्यभागे, पश्चिमभागे आसन्निति सुस्पष्टमेव यतस्तत्र सूर्यस्य सांनिध्यं यथाक्रमं पूर्वाह्णे, मध्याह्ने, सायाह्ने च भवतीति वर्णितम् । पूर्वदिक्स्थानं गङ्गासागर-सङ्गम इत्यप्यन्यत्रोल्लिखितं दृश्यते । ब्रह्मपुराणे चोक्तं यदुत्कलदेशे 'कोणादित्यम्' 'कोणार्कम्' इतिनामकं रविक्षेत्रं वर्तते । तदद्यापि पुरातननाम्ना सुविख्यातम् । एतत्स्थानं जगन्नाथपूर्याः पञ्चदशक्रोशवर्ति । तत्र खैस्तत्रयोदशशताब्द्यामुत्कला-धिपतिना गङ्गवंशोद्भवेन प्रथमनरसिंहनृपतिना निर्मितं विशालमुत्तुङ्गं च सूर्य-देवतामन्दिरं 'कोणार्का' भिधया अद्यापि जीर्णावस्थायां वर्तते यदीयगणना भारतीयपुरातनस्थापत्याश्चर्येषु क्रियते । एतद्देवायतनं निर्जनप्राये बालुकामय-प्रदेशे निर्मितं वर्तते यतस्तत्र भगवतः सूर्यस्य विशेषतः सांनिध्यमस्तीत्यतिपुरातन-कालादागता श्रद्धा ।

पश्चिमस्यां दिशि वर्तमानं मूलस्थानमधुना 'मुलतान' नाम्ना प्रथितम् । तत्र विद्यमानं सूर्यस्थानं सर्वत्र भारते सुप्रसिद्धमासीत् तत्र च नानादिग्भ्यः परस्सहस्रा यात्रिका आगच्छन्ति स्मेति मोहम्मदीय–'चचनामा' ग्रन्थाज् ज्ञायते । मोहम्मदीया मूर्तिभञ्जकाः, किन्तु मूलस्थानस्य सूर्यायतनस्य यात्राप्रसङ्गेन नानादिग्भ्य आगतेभ्यो भारतीयेभ्यः प्राप्यमाणार्थलोभेन न तैस्तत्रस्था सूर्यमूर्तिर्भग्ना । कान्य-कुब्जस्था प्रतीहारवंशीया राजानः प्रबला आसन् मोहम्मदीयैस्तेषां बहुवारं च संग्रामा बभूवुः । मूलस्थानस्य पवित्रत्वात्तन्म्लेच्छहस्तान्मोक्तव्यमिति प्रबला-सीत्तेषां मनीषा । परं यदा यदा ते तन्नगरमभ्यक्रामन् तदा तदा तत्रत्ययवना-धिकारिभिः 'यदीदं स्थानमवस्कन्द्येत तर्हि वयं सूर्यमूर्तिं भङ्क्ष्यामः' इति बिभीषि-कया ते प्रतीहारनृपा निरवर्त्यन्त ।

कोणार्कं मूलस्थानं यथाक्रमं भारतस्य पूर्वस्यां पश्चिमस्यां च दिश्यवर्तेतामुभयमपि च तत्रत्यसूर्यमन्दिरेण सुविख्यातमासीदित्युपरिदर्शितम्। तृतीयं कालप्रियनामकं सूर्यस्थानमपि तथैव पवित्रं प्रसिद्धं चासीदित्यनुमातुं सुशकम्। तत्र भगवतः सूर्यस्यावस्थानं मध्याह्ने आसीदतस्तद् भारतदेशस्य मध्यभागेऽवस्थितमित्यायाति। तत् कान्यकुब्जस्य दक्षिणस्यां दिश्यवर्ततेति राजशेखरस्याधोलिखिताद्वचनात्सुस्पष्टं भवति—

'अनियतत्वाद्दिशामनिश्चितो दिग्विभागः। तथाहि यो गाधिपुरस्य दक्षिणः स कालप्रियस्योत्तरः।' (काव्यमीमांसा—गायकवाड ओरिएंटल सीरीज, पृ० ९४)

कालप्रियस्थानं यमुनाया दक्षिणतीरे आसीदिति वराहपुराणोक्तिरुद्धृतपूर्वा। अतस्तत् इदानींतनकाल्पीनगरादभिन्नम्। 'कालप्रियम्', 'काल्पी' इत्येतयोरभिधानयोः सादृश्यं सुविस्पष्टम्। काल्पीनगरमपि पुरातनकालप्रियवत् यमुनादक्षिणतीरवर्ति। तत्र च बहूनि पुरातनान्युत्खननार्हाणि स्थानानि विद्यन्त इति ज्ञातचरमेव पुरातत्त्वविदाम्।

कालप्रियनगरं यमुनाया दक्षिणतीरे आसीत् तत्र च विशालप्राङ्गणयुतं देवायतनमासीदित्येकस्मादुत्कीर्णलेखादपि विदितं भवति। दक्षिणभारतीये सुविख्याते राष्ट्रकूटवंशे खैस्तदशमशताब्द्याः प्रथमपादे (तृतीय) इन्द्रनामाऽतिवलाढ्यो नृपो बभूव। स पञ्चदशाधिकनवशततमे खिस्ताब्दे (915 A. D.) राज्यं प्राप। तदनन्तरं तेनोत्तरभारतीयप्रतीहारराज्यमाक्रान्तं, तद्राजधानीकान्यकुब्जनगरं चोद्ध्वस्तम्। अस्मिन् आक्रमणे तेन मार्गे कालप्रियदेवालयस्य प्राङ्गणे स्वस्कन्धावारो निवेशितस्तदनन्तरं च यमुनानदीमुत्तीर्य कान्यकुब्जनगरमवस्कन्धोद्ध्वस्तमिति निम्नलिखिते श्लोके वर्णितम्।

यन्माद्यद्द्विपदन्तघातविषमं कालप्रियप्राङ्गणं
तीर्णा यत्तुरगैरगाधयमुना सिन्धुप्रतिस्पर्धिनी।
येनेदं हि महोदयारिनगरं निर्मूलमुन्मूलितं
नाम्नाद्यापि जनैः कुशस्थलमिति ख्यातिं परां नीयते॥

अस्मिन् श्लोके कान्यकुब्जाक्रमणे मार्गे इन्द्रनृपस्य चतुरङ्गसेना कालप्रियनाथस्य विशालप्राङ्गणे निविष्टासीत् तदनन्तरं च अगाधां विस्तीर्णां च यमुनानदीमुत्तीर्य तेन महोदयं ( कान्यकुब्जं ) नगरमाक्रम्योद्ध्वस्तमिति अतीव मनोज्ञया रीत्या वर्णितम् । कालप्रियदेवालये कस्य देवस्य मूर्तिः प्रतिष्ठितासीदित्यत्र न निर्दिष्टं, किन्तु तन्नगरस्यान्यद्वर्णनं वराहादिपुराणैः काव्यमीमांसादिग्रन्थैश्च संवदति इति निर्दिष्टपूर्वमेव ।

कालप्रियस्य देवायतनं भगवतः सहस्रकिरणस्यासीदिति पुराणादिवचनैः प्रदर्शितमेव अत एव भवभूतिनात्मनो मालतीमाधवनाटके प्रारंभ एव सूर्यस्तुतिः कृता । सूत्रधारो वदति—'अये उदित भूयिष्ठ एष भगवानशेषभुवनद्वीपदीपस्तपनः । तमुपतिष्ठे ।

कल्याणानां त्वमसि महसां भाजनं विश्वमूर्ते<br>
धुर्यां लक्ष्मीमथ मयि भृशं धेहि देव प्रसीद ।<br>
यद्यत्पापं प्रतिजहि जगन्नाथ नम्रस्य तन्मे<br>
भद्रं भद्रं वितर भगवन्भूयसे मङ्गलाय ॥

कालप्रिये विहितैर्भवभूतेर्नाटकानां प्रयोगैस्तस्य कीर्तिः कान्यकुब्जाधिपयशोवर्मणः श्रुतिं प्राप्ता तदनन्तरं च तेन तद्राजाश्रयः प्राप्त इति विदितचरमेव गीर्वाणवाङ्मयेतिहासकोविदानाम् ।

उपरितनाद्विवेचनाद् भवभूतेर्नाटकेषूल्लिखिते कालप्रियनाथस्य देवायतने भगवतः सूर्यस्य, नतु भगवतः पार्वतीपतेः, प्रतिष्ठापनासीत्तद्देवतायतनं च यमुनादक्षिणतीरेऽवस्थिताधुनिककाल्पीनगरेणाभिन्नमिति 'सागरिका' पाठकानां संमतं स्यादित्याशंसे ।

—·—

# रघुवंश-संजीविनी

रेवाप्रसाद द्विवेदी

रघुवंशसंजीविन्यास्त्रीणि संस्करणान्यस्मत्पार्श्वे सन्ति—१—एकं नन्दर्गीकरमहोदयस्य १८९७—खीष्टाब्दे बम्बईतः प्रकाशितम्, २—द्वितीयं १६८४ विक्रमाब्दे बम्बईत एव गुजरातीप्रेसतः प्रकाशितं गजाननसाधलेमहोदयसंपादितम्, तृतीयं च प्रसिद्धं निर्णयसागरीयम्—१६४८—, खीष्टाब्दे प्रकाशितमेकादशं संस्करणम्। एषु त्रिष्वपि संजीविन्या ऐकरूप्यं न लभामहे। तथा हि—

७।५१—पद्यस्य संजीविन्यां गुजरातीसंस्करणे—-

'अग्निपुराणे—

वराप्सरः सहस्राणि भूपमायोधने हतम्।

त्वरितान्युपधावन्ति मम भर्तायमेति च ॥—इति प्रमाणं

'तयोक्तः सन्'—इत्यतः परम् 'समरे नृत्यत्'—इत्यतश्च पूर्वं योजितं लभ्यते। नन्दर्गीकर–निर्णयसागर—-संस्करणयोस्तु तन्नास्ति।

६।५–पद्यस्य गुजरातीसंस्करणे—-

'चतस्रः कीर्तयेद् वाष्टौ दश वा ककुभः क्वचित–इति वाग्भट्टः—'

इति वाग्भटस्य काव्यालंकारवचनं 'दशदिगन्तजित्'—इति पदानन्तरं दत्तमस्ति। न चैतत् तदितरयोर्द्वयोरपि संस्करणयोरुपलभ्यते।

६।३७—पद्ये तस्मिन्नेव संस्करणे—

'ईषद्विकसितैर्गण्डैः कटाक्षैः सौष्ठवोचितैः।

अलक्षितं द्विजद्वारे सूत्तमानां स्मितं भवेत् ॥

इति नाट्यालोचने'—

इति प्रमाणमुपलभ्यते 'चारुतराण्याननानि यासां ताः'—इत्यतः परम्। नास्ति चेदं तदितरयोरुपर्युक्तयोर्द्वयोरपि संस्करणयोः।

६।६४–पद्ये च तस्मिन्नेव गुजरातीसंस्करणे—

'तदुक्तं नारदीयसंहितायाम्–

वायुनाभिहतो वायुर्गगनात् पतितः क्षितौ ।
यदाऽदीप्तः खगरुतः स निर्घातोऽतिदोषकृत् ।।'

इति वचनं 'निर्घातो व्योमोत्थित औत्पातिकः शब्दविशेषः'—इति संजीविनीभागात् परं योजितं लभ्यते । तदितरयोः नन्दर्गीकरनिर्णयसागरीययोस्तु संस्करणयोर्नास्ति ।

गुजराती—निर्णयसागर–संस्करणयोः केचनांशा नन्दर्गीकरसंस्करणे न लभ्यन्ते ।

यथा—

५।४३–पद्ये प्राप्यम् गणरत्नमहोदधिवचनम्,

५।६७–पद्ये प्राप्यम् अलङ्कारनाम्ना दत्तं वचनम्,

७।२२–पद्ये प्राप्यं 'व्युत्क्रमवचनं न दोषाय'—इत्यतः परं लभ्यं 'वृत्तिस्तयोः००००'—इत्यादि पंक्तित्रयम्,

८।२५–पद्ये प्राप्यं शौनकवचनम्,

१०।७–पद्ये प्राप्यं च 'दिवशब्दोपपादने दत्तं बुद्धचरितस्य वचनम् ।

तत्र यद्यपि ५।६७–पद्यस्य ७।२२–पद्यस्य च टिप्पन्यां मल्लिनाथदर्शितत्वेनैव पूर्वमस्माभिर्दर्शिता अंशा लभ्यन्ते, किन्तु तेषां मूलत्वं तेन नान्यमानि, अत एव तेन स्वपितामहीया प्रतिरेवोपाजीवि । एवमेव नन्दर्गीकरसंस्करणे । ५।६७–पद्यस्य "निद्रावशेने"–त्याद्यनुपूर्वीकस्य "ह्यनवेद्यमाणा इति पाठे"–इत्यत आरभ्य "कर्मणि शानच्"–इति यावत् यो भागो निर्णयसागरगुजरातीसंस्करणयोर्मूल एव लक्ष्यते स नन्दर्गीकरेण मल्लिनाथ–विदितया टिप्पन्यामेव योजितोऽस्ति । ७।२२–पद्यस्य तु योंऽशष्टिप्यन्यां योजितः तत्रापि "समीकृतेत्यर्थः"–इति भागो नास्ति ।

एवंविधान्यन्यान्यप्युदाहरणानि कात्स्न्येंनान्वेषणे क्रियमाणे दृष्टिमुपेतुं शक्यानि । गुजरातीप्रेससंस्कर्त्रापि स्वसंस्करणे संजीविन्या अनेके अंशा दर्शिता येष्वव्यवस्था तेनान्वभावि शोधिताश्च ते स्वमत्या । अस्माभिरपि संस्करण-

योरनयोर्महती अव्यवस्थानुभूयते। तथा हि गुजरातीसंस्करणे य इमे अतिरिक्ता भागा दर्शिताः सन्ति तेषु नास्त्यालोचनवचनमात्रं विहाय अन्ये सर्वेऽपि हेमाद्रिकृते रघुवंशस्य दर्पणे लभ्यन्ते। दर्पणस्य कलकत्ता[1]दिप्रतिषु यथा लेखकैः संजीविनी-मिश्रितास्ति तथैव मन्ये कैश्चन पाठकैः संजीविन्यां दर्पणांशाः स्वप्रतिसमृद्धये योजिताः स्युः। टीकान्तरतोऽपि वा ते तैर्गृहीताः स्युः। न हि प्रकृतोपयोगित्वेन प्रकृतोपोद्बलकत्वेन वा गृह्यमाणममूलं किंचित् मूले योजनामात्रेण मूलतया स्वीकर्तुं शक्यते। तदित्थं संजीविनीपाठस्य मूलभूता स्थितिः गुजरातीसंस्करणतो विज्ञातुं न शक्यते।

गुजरातीसंस्करणे संस्कर्तुः टीकाभिप्रायविज्ञानेऽपि शैथिल्यमनुभवामः। स हि—

"तेषां महार्हासनसंस्थितानामुदारनेपथ्यभृतां स मध्ये।
रराज धाम्ना रघुसूनुरेव कल्पद्रुमाणामिव पारिजातः॥"

—इति ६।६–पद्ये

"अत्र कल्पद्रुमशब्दः पंचान्यतमविशेषवचनः उपकल्पयन्ति मनोरथानिति व्युत्पत्या सुरद्रुममात्रोपलक्षकतया प्रयुक्त इत्यनुसंधेयम्"—इति टीकाया रूपं दृश्यते। वस्तुतस्तत्र "पंचान्यतमविशेषवचनोऽपि कल्पयन्ति"—इत्येवं योजनास्ति। नन्दर्गीकर-निर्णयसागर-संस्करणयोरपि सोऽयं लेखः तथाविध एव स्थितो यथाविधो गुजरातीसंस्करणे। दर्पणे तु तथैव विद्यते यथास्माभिरस्य शोधनं प्रस्तूयते।

१७—सर्गस्य "अम्बुगर्भो हि जीमूतश्चातकैरभिनन्द्यते"—इत्युत्तरार्धीयस्य ६०—तमस्य पद्यस्य जीमूतशब्दे संजीविन्या "पृषोदरादित्वात् साधुः न तु कर्तरि-क्तः"—इत्येवं व्याकरणव्युत्पत्तिः प्रस्तूयते। सेयं व्युत्पत्तिर्गुजरातीसंस्करणे नास्त्येव, निर्णयसागरसंस्करणे विद्यमानापि विषयान्तरव्यवहिता काव्यार्थानु-

---

१. दर्पणे टीकान्तरमिश्रणमस्माभिः स्वशोधग्रन्थात्मना लिखिते दर्पण-भूमिकाग्रन्थे कार्त्स्न्येन दत्तमस्ति। ग्रन्थोऽयं न चिरात् प्रकाशयिष्यते।

शीलनप्रवाहं खण्डयन्ती—"पृषोदरादित्वात् साधुः चातकैरभिनन्द्यते सेव्यते न तु कर्तरि क्तः"—इत्येवं स्थितास्ति। नन्दर्गीकरसंस्करणे तु यथायथमेवास्याः स्थितिः।

व्याकरणव्युत्पत्तेः सेयं दुरवस्था ८।३२–पद्येऽपि दृश्यते। तत्र "सुप्रजाः"–इति पदस्य शाब्दी व्युत्पत्तिः गुजरातीसंस्करणे—

"अवेक्षितप्रजः अकुतोभयत्वेन अनुसंहितप्रजाः, न केवलं स्त्रैण इति भावः, शोभना प्रजा यस्यासौ सुप्रजाः सुपुत्रवान् नित्यमसिच्प्रजामेधयोः इत्यसिच्प्रत्ययः पुत्रन्यस्तभार इति"—

—इत्येवं यथास्थानं स्थितास्ति। निर्णयसागरसंस्करणे पुनः सैव—

"अवेक्षितप्रजोऽकुतोभयत्वेनानुसंहितप्रजः नित्यमसिच्प्रजामेधयोरित्यसिच्प्रत्ययः न केवलं स्त्रैण इति भावः, शोभना प्रजा यस्यासा (?) सुप्रजाः सुपुत्रवान् पुत्रविन्यस्तभार इति भावः"—

—इत्येवं स्थितास्ति ? स्पष्टमस्याः पदार्थव्यवस्था पादार्थान्तरान्तरिता अस्थानस्थिता चास्ति। नन्दर्गीकरसंस्करणे सेयं शाब्दी व्युत्पत्तिरित्येव न हि।

अत्रेदमन्यदवधेयं यत् रघुवंशे अजस्य केवला इन्दुमत्येवैका पत्नी दर्शितास्ति, तस्याश्चैक एव—

"क्षितिरिन्दुमती च भामिनी पतिमासाद्य तमग्र्यपौरुषम्।
प्रथमा बहुरत्नसूरभूदपरा वीरमजीजनत् सुतम्॥"

—इत्येवं ८।२८–पद्ये

सामान्यतः—

"दशरश्मिशतोपमद्युतिं यशसा दिक्षु दशस्वपि श्रुतम्।
दशपूर्वरथं यमाख्यया दशकण्ठारिगुरुं विदुर्बुधाः॥"

इत्येवं ८।२९ पद्ये च विशेषतः दशरथनामा सुतोऽत्र प्रतिपादितोऽस्ति। प्रतिपादयिष्यते च तस्यैव नवमादिषु सर्गेषु रघुवंशराजत्वम्। तदिदानीं महाराजस्यास्योद्यानविहारकाले पुत्रन्यस्तभारत्वं कथमिवोपपद्येत। अजो हि यदि कुत्रचिद् पुत्रान्तरे न्यस्तभारो भवेत् तर्हि तस्य स्वप्रियायाः नन्दनोपवनेषु पुनर्मिलनस्य त्वरायां—

"तेनाष्टौ परिगमिताः समाः कथंचिद्बालत्वादवितथसूनृतेन सूनोः ।
सादृश्यप्रतिकृतिदर्शनैः प्रियायाः स्वप्नेषु क्षणिकसमागमोत्सवैश्च ॥"

—८।६२—

पद्ये इत्येवमष्टानां वर्षाणां विलम्बः कविना कथमिवोपनिबध्येत, उपनिबध्येत च ६४—पद्ये तस्य पुत्रन्यस्तभारत्वम्—

"सम्यग्विनीतमथ वर्महरं कुमारमादिश्य रक्षणविधौ विधिवत् प्रजानाम् ।
रोगोपसृष्टतनुदुर्वसतिं मुमुक्षुः प्रायोपवेशनपरो नृपतिर्बभूव ॥

इत्येवम् । एतेन स्पष्टं यत् पूर्वोक्ते ८।३२–पद्ये पुत्रन्यस्तभारत्वमजवृत्तितया प्रतिपाद्यमानमनुपपन्नमेव । अत्रायं विषयो यदसौ हि टीकितुर्दोषो न तु संस्कर्तुः । आदर्शान्तरेष्वस्यालाभात् पुनरस्य प्रक्षिप्तत्वमप्युत्प्रेक्षितुं शक्यते ।

निर्णयसागरसंस्करणे प्रमादस्यापि परा काष्ठा लक्ष्यते । तत्र हि तृतीयस्य सर्गस्य 'दिवं मरुत्वान्'—इत्यादेः चतुर्थस्य पद्यस्य 'दोहदलक्षणे मृद्भक्षणे हेत्वन्तरमुत्प्रेक्षते'—'इत्येवंरूपेयमवतरणिका तृतीयस्य' तदाननं मृत्सुरभि—'इत्यादेः पद्यस्य शीर्षे मुद्रितास्ति । चतुर्थे च पद्ये' 'रस्यन्ते स्वाद्यन्त इति रसः' —इत्यस्य स्थाने 'रस्यन्ते स्वाद्यन्तविधे भूविकारे इति रसाः'–इत्येवं पूर्वापरपंक्तिभागमिश्रणेन दुरवस्था मुद्रा दृश्यते ।

इयं हि मुद्रितायाः संजीविन्याः कथा । पाण्डुप्रतिषु स्थिताया अपि तस्या ईदृश्येव स्थितिः । अस्माभिः दर्पणसंपादनकाले कतिचन प्रतयो लब्धाः । तासु बड़ौदानगरस्य प्राच्यविद्याप्रतिष्ठानतो दर्पणनाम्ना विख्यापितस्य पाण्डुग्रन्थस्य तृतीयः सर्गः संजीविन्या आस्ते । तत्र प्रकाशितायाः संजीविन्याः सकाशात् अनेकान् भेदानुपलभामहे । तथा हि—

१—'कुमारभृत्याकुशलः'—'इत्यादेः १२—पद्यस्य टीकाया अन्ते 'गर्भकर्मणीति पाठे गर्भाधानप्रतीतावौचित्यभंगः'—इति पंक्तिर्लभ्यते । सेयं प्रकाशितासु प्रतिषु तत्रैव 'भृञो मनिच्प्रत्ययः'—इत्यनन्तरं लभ्यते ।

२—'सुखश्रवा मंगलतूर्यनिःस्वनाः'—इति १६–पद्ये 'सुखः सुखकरः श्रवः

श्रवणं येषां ते'—इति प्रकाशितस्य पाठस्य स्थाने बड़ौदाप्रतौ 'सुखं श्रवणं येषां ते सुखश्रवाः सुखश्रवणाः' — इति लेखोऽस्ति ।

३—'धियः समग्रैः'— इति ३०-पद्यस्य 'अत्र कामन्दकः'—इति भागस्य स्थाने प्रतावस्यां 'शास्त्रकामन्दकः'—इति लिखितं लभ्यते ।

४—'अथास्य'—इति ३३-पद्यस्य 'गुरूर्गीष्पतिपित्राद्यौ—इत्यमरः'—'इत्यनन्तरं प्रतावस्यां' गुरुः पिता गुरुर्ज्येष्ठो गुरुर्देवपुरोहितः दुर्वहोऽपि गुरुर्ज्ञेयो गुरुः शिष्याभिवेदकः इति हलायुधः' — इति हलायुधवचनमपि लभ्यते ।

५—'स एवमुक्त्वा मघवन्तमुन्मुखः'— इति ५२-पद्ये 'प्रत्यालीढविपर्ययः—इत्यनन्तरं प्रतावस्याम् 'मानिता-आनता-पूर्वजंघा च पश्चिमा प्रगुणा भवेत् असमो मध्यकायः स्यात् आलीढस्य तु लक्षणम् कश्चित्'-इत्यपि लिखितमस्ति ।

६—'रघुभृंशं वक्षसि'—इति ६१-पद्ये 'हर्षात् सिंहनादांश्चक्रुरित्यर्थः'—इत्यतः परं 'क्ष्वेडा तु सिंहनादः स्यात्-इत्यमरः'— इत्यमरवचनमपि दत्तमस्ति ।

७—'श्रुतस्य यायादयमन्तमर्भकः' —इति २१—पद्यस्य अर्थवित् शब्दार्थज्ञः पार्थिवः पृथिवीश्वरो दिलीपः— इति भागो बड़ौदाप्रतौ न लभ्यते ।

एवमादयो भेदाः संजीविनीविषये आपातत एवोपलभ्यन्ते । का नामास्याः प्रतिपदमनुसंहितौ गाथा । नूनमस्या अपि समीक्षितं संपादनमावश्यकमस्ति ।

संजीविन्याः सम्पादनेऽपि काव्यान्तर-संजीविन्याः पर्यालोचनमावश्यकमनुभवामः, यतो हि मल्लिनाथोऽपि स्वयमेकमेव वाक्यमेकत्रान्यादृशमन्यत्र चान्यादृशं प्रस्तवीति । रघुवंशस्य—

'या सौराज्य-प्रकाशाभिर्बभौ पौरविभूतिभिः ।
स्वर्गाभिष्यन्दवमनं कृत्वेवोपनिवेशिता ॥' इति १५।२६—पद्यस्य

संजीविन्यां कौटिलीयस्यार्थशास्त्रस्य यद् वचनम्—

'अत्र कौटिल्यः—

भूतपूर्वम् अभूतपूर्वं वा जनपदं परदेश-प्रवाहणेन
स्वदेशाभिष्यन्द-वमनेन वा निवेशयेत्'—

इत्येवं लभ्यते तदेव कौटिलीयार्थशास्त्रवचनं कुमारसम्भवसंजीविन्याम्—

'अलकामतिवाह्येव वसतिं वसुसम्पदाम् ।
स्वर्गाभिष्यन्दवमनं कृत्वेवोपनिवेशितम् ॥'— इति ६।३७-पद्ये

'अतिवाह्य परिच्छिद्य, स्वर्गस्याभिष्यन्दोऽतिरेकः अतिरिक्तजन इत्यर्थः तस्य वमनं निस्सारणं कृत्वा-उभयत्रापि कौटिल्यः-भूतपूर्वमभूतपूर्वं वा जनपदं परदेशापवाहनेन स्वदेशाभिष्यन्दवमनेन वा निवेशयेत्' इति—

इत्येवंरूपमुपलभ्यते । अनयोः 'परदेश-प्रवाहणेन परदेशापवाहनेने-त्येवमुपसर्गद्वयमध्ये कतरस्य मूलत्वमिति जिज्ञासितव्ये द्वितीयस्यैव तत्त्वमभिमन्यन्ते विद्वांसः । अर्थशास्त्रस्य द्वितीयेऽधिकरणे प्रथममेवेदं सूत्रं शामशास्त्रिणा, उदयवीरशास्त्रिणा, रामतेजशास्त्रिणा, वाचस्पतिशास्त्रिणा च समानतया अप-उपसर्गसहितमेव प्रस्तुतमक्रियत । गणपतिशास्त्रिणापि कदाचिदस्यैवंविधमेव रूपमभ्यमयत । हेमाद्रिणापि स्वकीये दर्पणे 'अतिवामनम्'—इति 'अपवाहनम्'—इत्यस्य स्थाने पाठ आद्रियत । शामशास्त्रिणा पुनः संजीविन्याः कौटिलीयमिदमुद्धरणं तदीयस्य संस्करणस्य भूमिकायामुल्लिखितमपि । तत्र तेनापि कुमारसम्भवस्थित एव अपवाहनेति पाठो दत्तः । इदं हि एकमेव स्थलं यदृच्छयैव दृष्टिमुपेतम्, एवंविधान्यन्यान्यपि बहूनि स्थलानि संभवन्ति । अमरकोषादिवचनानामुद्धरणेष्वपि मन्ये स्वबुद्धिसंस्कारं मित्र-साहाय्यं वोपजीव्य प्रवर्तमानस्य मल्लिनाथसूरेः विसंवादः संभवति । तानि सर्वाणि स्थलानि सम्यक् संशोध्य मूलभूतस्य पाठस्य निर्धारणं हि संस्थानैकानुष्ठेयं कार्यमस्ति । तदर्थं संबद्धानामपि ग्रन्थानां पाण्डुप्रतीरवलोक्य मूलपाठनिर्धारणमावश्यकमस्ति । तेष्वपि बहवो ग्रन्था उपलभ्यन्त एव नहि । येऽपि चोपलभ्यन्ते तेषां विश्वमात्रव्यासत्वात् सर्वतः प्राप्तुमशक्यत्वाच्च कार्यमिदं नितान्तं दुष्करमेव । स्वयं मल्लिनाथस्यैव संजीविन्याः परः शताः पाण्डुग्रन्थाः स्वदेश एव तत्तत्संस्थासु संगृहीताः सन्ति । तेषां संख्या तावती वर्तते यतः तान् आश्रित्य केनचनैकेन व्यक्तिविशेषेण तत्राध्यवसितुं न शक्यते, ऋते संस्थामात्रम्, तत्रापि च विद्वत्समुदायम् । भगवन्तं प्रार्थये कार्यमिदं कथंचित् कुतश्चिच्च निर्विलम्बं जायेत ॥

———

# साहित्यरत्नाकरस्थपद्यविमर्शः

के० राजन्न शास्त्री

दृश्यते चेदं पद्यं साहित्यरत्नाकरस्य प्रथमे तरङ्गे —

तस्मात् पर्वतनाथसूरिजलधेः श्रीयल्लमाम्बावियद्-
द्गङ्गासङ्गजुषो लसद्गुणमणेर्लब्धोदयश्चन्द्रवत् ।
सोऽहं धर्मसुधीर्गवां विलसितैः कर्तुं रसालङ्क्रिया-
संस्फूर्तिं समुदञ्चयेयमधुना साहित्यरत्नाकरम् ॥

( सा० र० १।२८ )

विवृतं च ग्रन्थकृता स्वयमेव,—

"अत्र चन्द्रवदहमपि रसालङ्क्रियासंस्फुरणाय रत्नाकरं समुदञ्चयेयमित्युपमा । सा च चन्द्रवदिति तद्वाचकवतेरुपादानाच्छ्रौती ।" 'पर्वतनाथसूरिजलधेः' 'यल्लमाम्बावियद्गङ्गा'—'लसद्गुणमणे' रित्यत्र त्रयो रूपकालङ्काराः । गवां विलसितै रसालङ्क्रियासंस्फूर्तिमित्यत्र त्रयः श्लेषाः। किरणभूमिभूषणानां वचनमश्शृङ्गाराद्युपमादिभ्यो भेदेऽपि शब्दश्लेषबलेन अभेदाध्यवसायात् भेदेऽभेदरूपातिशयोक्तिश्च । सर्वैरेतैरूपमानुप्राणितेति तस्यास्तेषां चाङ्गाङ्गिभावेन सङ्करः," इति ।

अत्रेदं विचार्यते—

न तावत् पर्वतनाथसूरिजलधेरित्यादावभेदविवक्षया विशेषणसमासः । तथात्वे चन्द्रवदिति चन्द्रसादृश्योक्तिरसङ्गता स्यात् । यतो हि जलध्यादितादात्म्यसाधकमस्मच्छब्दाभिधेयस्य चन्द्रतादात्म्यं, न तु चन्द्रसादृश्यम् । पर्वतनाथसूरिजलध्योर्धर्मिणोरौपम्ये तु—अस्मच्छब्दाभिधेयचन्द्रयोरपि तद्धर्मयोः सादृश्योक्तिः सुसङ्गता स्यादिति उपमितसमास एवात्रोचितः ।

तथा चोक्तं रसगङ्गाधरे समासगतवाचकधर्मलुप्तोपमोदाहरणप्रसङ्गे—

"शोणाधरांशुसम्भिन्ने तन्वि ! ते वदनाम्बुजे ।
केसरा इव काशन्ते कान्तदन्तालिकान्तयः ॥

अत्र वदनाम्बुजयोरभेदविवक्षया विशेषणसमासे दन्तालिकान्तीनां केसरदृश्योक्तिरसङ्गता स्यात्। यतो ह्यम्बुजतादात्म्यसाधकं दन्तालिकान्तीनां केसरतादात्म्यं न तु केसरसादृश्यम्। उपमितसमासे तु वदनाम्बुजयोर्धर्मिणोरौपम्ये केसरदन्तालिकान्तीनामपि तद्धर्माणामौपम्योक्तिरुचितैव," इति।

अथापि युज्येत विशेषणसमासाश्रयणं, यदि तत्र किमपि लिङ्गं स्यात्। यथात्र—

"पतिते पतङ्गमृगराजि निज-प्रतिबिम्बरोषित इवाम्बुनिधौ।
अथ नागयूथमलिनानि जगत् परितस्तमांसि परितस्तरिरे॥"

—(शिशु० ६।१८)

व्याख्यातं च मल्लिनाथसूरिभिः—

"अत्र यद्यपि "नागयूथमलिनानि" इत्युक्त्याऽनुशासनसिद्धोपमानुसारात् "पतङ्गमृगराजि" इत्यत्राप्युपमितसमासाश्रयणेनोपमैवोचिता। तथापि तदुत्प्रेक्षायाः पतङ्गेऽसम्भवात् सिंहे सम्भवाच्च रूपकमेव युक्तम्" इति।

न तथात्र किमपि तत्साधकम्।

अतः उपमितसमासमाश्रित्योपमैवात्रोदाहर्तव्या। सा च सावयवेति।

न च परम्परितैव किमिति न स्यादिति वक्तुं युक्तम्। अस्मत्पदार्थचन्द्रयोरुपमायां न केवलं पर्वतनाथसूरिजलध्योरुपमैवोपायः। कविसमयसिद्धाह्लादकत्वादिसमानधर्मान्तरस्यापि विद्यमानत्वात्। "कवीन्दुं नौमि वाल्मीकिं" "कविकुलशशाङ्क"—इत्यादिप्रयोगदर्शनाच्च। उपमाया उपमान्तरोपायत्वे परम्परिता। कविसमयसिद्धसादृश्येनापि तत्सिद्धौ (उपमान्तरसिद्धौ) सावयवेति।

उक्तं हि पण्डितराजै रूपकप्रकरणे—

'यद्यपि सावयवेऽप्यारोपे आरोपान्तस्योपायः, तथापि तत्र आरोपातिरिक्तेन कविसमयसिद्धसादृश्येनाप्यारोपान्तरसिद्धिः सम्भवति" इति।

(रस० मालारूपक०)

ननु रूपकप्रकरणोक्तस्य कात्र सङ्गतिरिति चेन्न। यथेवादिशब्दप्रयोगारोपाभ्यामन्यत्र तयोरूपमारूपकयोः सर्वत्र तौल्यमिति।

तथा चोक्तं रसगङ्गाधरे—

"ययोरिवादिशब्दप्रयोगे उपमा, तयोरेकत्रान्यारोपे रूपकमिति नियमात्" इति। (रस० रूपक०)

अपि च नागेशेनाप्युक्तमुपमाप्रकरणे—

सावयवायां परस्परसमर्थकत्वेऽपि नोपायता। ज्योत्स्नायां[1] हसितत्वारोपं (हसितसाम्यं) विनापि-औज्ज्वल्यादिना सीतायां राकासाम्यसिद्धेः" इति।

'तथा 'यल्लमाम्बावियद्गङ्गासङ्गजुषः' 'लसद्गुणमणे'—रित्यत्रापि, समासभेदमाश्रित्य पर्वतनाथसूरिजलध्योरुपमा निर्वाह्येति न रूपकशङ्कावकाशः।

अपि च गवामित्यादिश्लेषस्थलेऽपि नाभेदाध्यवसायः। तस्य प्रकृतेऽननुकूलत्वात्। किं तर्हि? सादृश्याध्यवसाय एवेति। लोचनगोचरीक्रियतामत्र साहित्यमार्मिकस्य जगन्नाथस्येयमुक्तिः—

"श्लेषे ह्येकशब्दोपात्तत्वेन रूपेणाभेदाध्यवसानस्येव तेनैव साधर्म्येण सादृश्याध्यवसानस्यापि सुवचत्वात्। तस्यैव च प्रकृते प्रयोज्योपमानुकूलत्वात्" इति।

तथा च सावयवेयमुपमेति युक्तं वक्तुम्। सा च—आर्थीत्येव युक्तम्। न तु श्रौती। कुत इति चेत्? उच्यते। वतिस्तु द्विविधः। "तेन तुल्य"-मिति विहितः। "तत्र तस्येवे"ति विहितश्चेति। तत्राद्यः सादृश्यवदर्थकः। द्वितीयस्तु साक्षात्सादृश्यवाचकः। वतेः सादृश्यवदर्थकत्वे सादृश्यस्यार्थत्वा—(आक्षेपलभ्यत्वा)-दार्थी। साक्षात्सादृश्यवाचकत्वे तु श्रौतीत्यालङ्कारिकसमयः। प्रकृते चन्द्रवदित्यत्र वतिः सादृश्यवदर्थकः। "अह"मित्युपमेयस्य प्रथमान्तत्वेन "तत्र तस्येवे"ति विहितवतेरनुपपद्यमानत्वात्। अत एवार्थीयमुपमा।

तथा चोक्तं नौकाख्यानेऽस्य[2] व्याख्यानेः—

---

१. "ज्योत्स्नाभमञ्जुहसिता सकलकलाकान्तकान्तवदनश्रीः।
राकेव रम्यरूपा राघवरमणी विराजते नितराम्।" इत्यत्रेत्यर्थः।
(रस० साव० उ०)

२. वेङ्कटसूरिविरचिता सेयं नौकाख्या साहित्यरत्नाकरव्याख्या दुर्लभा यतः प्रायोऽद्य यावन्न मुद्रिता।

"यद्यपि चन्द्रवदित्यत्र तुल्यार्थे "तेन तुल्यं क्रिया चेद्वति"रिति विहितस्य वतेः धर्मिव्यवधानेनैव सादृश्यप्रतिपादकतया उपमाया आर्थीत्वमेव। न तु श्रौतीत्वम्। "तत्र तस्येवे"ति वतिस्त्वनुपपन्नः। "अह"मित्युपमेयस्य प्रथमान्तत्वात्। तथाप्यस्या उपमाया श्रौतीत्वं विचारणीयम्। "आर्थी" इति चेत् पाठः साधीयान्" इति।

यच्चात्र नौकामाक्षिपद्भिर्मन्दरा[1]ख्यव्याख्याकृद्भिरभ्यधीयत—

चन्द्रवत् चन्द्र इव। वत्तुल्ये (सा० १६।१६)। तुल्ये सादृश्येऽर्थे वत्प्रत्ययो भवतीति सारस्वतप्रतिपादितप्रक्रियया अस्यापि वत्प्रत्ययस्य साक्षात्सादृश्यवाचकत्वात् श्रौतीत्वम्। एतेन श्रौतीति चिन्त्यम्। आर्थीति युक्तमिति कविहृदयापरिज्ञाननिदानं कस्यचिद् व्याख्यानमपास्तम्"। इति।

तत्तु सारस्वतप्रक्रियाकविहृदययोः सम्यगनवबोधनिबन्धनम्। तथा हि—

'तुल्ये सादृश्येऽर्थे वत्प्रत्ययो भवती' ति-अनुभूतिस्वरूपाचार्यवृत्तावपि न तुल्यपदस्य साक्षात्सादृश्यवाचकत्वमभिप्रेतम्। सादृश्यं च सदृशत्वं, तदेव तुल्यपदार्थ इति धर्मिव्यवधानेनैव सादृश्यवाचकत्वम्। जात्यादिशक्तिवादिनो हि वैय्याकरणाः।

व्याख्यातं च तथा चन्द्रकीर्तिसूरिभिरपि—

"तुल्ये सदृशत्वस्यार्थे उपमार्थे वाच्ये वत्-प्रत्ययो भवति। चन्द्रेण तुल्यं सदृशं चन्द्रवत्" इति ॥

( सा० प्र० १६।१६ )

उक्तं च लघुभाष्येऽपि—

वत्तुल्ये ( सा० सू० १६।१६ )

यत्तुल्या सा क्रिया चेत्। ब्राह्मणवदधीते। अश्ववद् धावति। क्रियाग्रहणमनुवर्तते। तच्च तुल्येन सम्बद्धयते। क्रियायां तुल्यायामित्यर्थः।

---

१. मल्लादिलक्ष्मणसूरिविरचिता साहित्यरत्नाकरव्याख्या तु आन्ध्रलिप्यां मद्रपुरीसरस्वतीनलये मुद्रितापि नेदानीं लभ्यते।

तुल्यते सादृश्येन उन्मीयते ज्ञायते । तुल उन्माने । यद्वा तोलनं तुला । ञेरभावे भिदाद्यङ् । तुलया सम्मितं तुल्यम् । कारकादिति यः । यद्वा-आदौ प्रत्ययोच्चारणं योगविभागार्थम् । तेन-अक्रियातुल्येऽपि 'सिद्धान्तवत्' 'महानसवत्' इत्यत्र 'भवितुमर्हती' ति क्रियाऽध्याहर्तव्या । क्रियां विना बोधे सत्यपि साधुत्वं न भवति । 'तेन तुल्यं क्रिया चेदिति पाणिनोक्तेः' इति ।

अथापि प्रथमान्ताद् वतिमादाय वतेः साक्षात्सादृश्यवाचकत्वं यद्यभ्युपगम्येत । तर्हि वतेरार्थीविषयत्वापहार एव स्यात् । उक्तं तु वतेरार्थीविषयत्वमप्यालङ्कारिकैः । यथा—

'तेन तुल्यं मुखम्' इत्यादावुपमेय एव, 'तत्तुल्यमस्य' इत्यादौ चोपमान एव, 'इदं च तच्च तुल्यम्' इत्युभयत्रापि तुल्यादिशब्दानां विश्रान्तिरिति साम्यपर्यालोचनया तुल्यताप्राप्तिरिति साधर्म्यस्यार्थत्वात् तुल्यादिशब्दोपादाने आर्थी । तद्वत् 'तेन तुल्यं क्रिया चेद्वतिः' ( पा० ५।१।११५ ) इत्यनेन विहितस्य वतेः स्थितौ' ( का० प्र० १०।८७ ) इत्याहुस्तत्रभवन्तो मम्मटाचार्याः ।

रसगङ्गाधरकृतोऽपि—

'निखिलजगन्महनीया यस्या भा नवपयोधरवत् ।<br>
अम्बुजवद् विपुलतरे नयने तद् ब्रह्म संश्रये सगुणम् ॥१॥'

( रस० उपमा० )

अत्र पूर्वार्धे वतेः तत्र तस्येवेति सादृश्ये विधानात् श्रौती । उत्तरार्धे 'तेन तुल्य' मिति विधानात् सादृश्यवदर्थकतया आर्थी' इति ।

एवमेव साहित्यदर्पणादावपि सम्यक्तया प्रपञ्चितम् ।

तथा च 'चन्द्रवत् चन्द्र इव' इति विवरणमभ्युपगम्य श्रौतीति समर्थनमसाम्प्रतमेव ।

नापि ग्रन्थकृदभिप्रेतोऽयमर्थः । तत्रैव वतेरार्थीविषयत्वस्यापि वक्ष्यमाणत्वात् । यथा—

'वतौ तु विशेषः । तत्र तस्यैवेति सूत्रोक्तवतिः साक्षात्सादृश्यप्रतिपादकः ।

इवार्थत्वात् । तेन तत्रैव श्रौती ।' तेन तुल्य 'मिति वतिस्तु तुल्यं प्रतिपाद्य तन्निर्वाहाय सादृश्यमाक्षिपतीति तत्रार्थ्येव' इति ।

( सा० र० अर्था० )

तथा च 'तेन तुल्य' मिति विहितवतेः सादृश्यवदर्थकत्वस्यैव सर्वसम्मतत्वादार्थीत्येव युक्तम् । श्रौतीति मूलपाठस्तु–अग्रिमग्रन्थानन्वयीति ग्रन्थकृदनभिप्रेत एव ।

स्वयमबुद्ध्वा तदनवबोधं परेषु प्रक्षिपन्तो मन्दरक्तस्तु न श्रद्धेया एव ।

तथा च—आर्थी सावयवेयमुपमा ।

सति चैवं—'पर्वतनाथसूरिजलधेः' 'यल्लमाम्बावियद्गङ्गा' लसद्गुणमणेः इत्यत्र त्रयो रूपकालङ्काराः इत्यादिग्रन्थकृद्विवरणं सहृदयतल्लजानां विचारसरणिमवगाहत इति शम् ।

—

# निबन्धको रामावतारशर्मा

झा अच्युतानन्द शर्मा

"प्रकीर्णप्रबन्धे" "साहित्यरत्नावली" त्युपक्रमे म० म० रामावतारशर्ममहाशयस्य केवलं प्रकाशिताः साहित्यसमीक्षात्मका निबन्धाः पूर्वमस्माभिरालोचिताः। प्रस्तुतेऽस्मिन्नबन्धे तस्य 'मित्रगोष्ठी' पत्रिकायां 'साहित्यरत्नावली' नाम्ना प्रकाशंगतास्तदतिरिक्ताश्च पाण्डुलेखरूपेणावस्थिताः केवलं साहित्यसमीक्षात्मका निबन्धा अत्र पर्यालोचयिष्यन्ते।

## १३ त्रिविक्रमः

कदा कं देशमयं कविरलञ्चकारेति निर्णेतुं रामावतारशर्मा स्वमसमर्थं मन्यते। कवेरस्य काव्यपरिशीलनेनाथ चेतिहासगवेषणेन कविमेनं शाण्डिल्यवंशजं श्रीधरात्मजदेवादित्यस्य पुत्रं स्वीकरोति। बाणादयमर्वाचीन इति स्वप्रणीतस्य दमयन्तीकथापराख्यस्य 'नलचम्पू'काव्यस्योपक्रमेऽनेनैव वर्णितः।

"पवर्तभेदि पवित्रं जैत्रं नरकस्य बहुमतङ्गहनम्।
हरिमिव हरिमिव हरिमिव सुरसरिदम्भः पतन्नमत॥"

इति श्लोकस्य कण्ठाभरणे दर्पणे च बहूनामन्येषां चास्य श्लोकानामुपलम्भात् कवेरस्यातिप्राचीनत्वमभिप्रैति समीक्षकः। कवेस्त्रिविक्रमस्य कविप्रतिभां समीक्षमाणो विवृणोति—

"अस्य काव्यं सभङ्गश्लेषप्रचुरम् न चेदृशी सभङ्गश्लेषे वाग्मिता कस्याप्यन्यस्य कवेर्दृष्टा। सभङ्गश्लेषप्रियतया च यथासम्भवं सरलतायाः कृतप्रयत्नस्याप्यस्य काव्यं प्रयोऽतीव गहनम्।"

स्वभावोक्तिभ्रान्तिमदाद्यलङ्कारेष्वपि कवेरस्याद्भुतं कौशलं प्रतिपादयन् प्रमाणस्वरूपेण पद्यमेकमुद्धरति—

सिन्दूरस्पृहया स्पृशन्ति करिणां कुम्भस्थमाधोरणा
भिल्लीं पल्लवशंकया विचिनुते सान्द्रद्रुमद्रोणिषु ।
कान्ताः कुङ्कमकान्क्षया करतले मृद्नन्ति लग्नं च य-
त्तत्तेजः प्रथमोद्भवं भ्रमकरं सौरं चिरं पातु वः ॥

पद्यमिदं 'कपाले मार्जारः............' इति भासपद्यस्य दर्पणे चोद्धृतस्य—
"मुग्धा दुग्धधिया गवां विदधते कुम्भानधोपल्लवाः ।
कर्णे कैरवशंकया कुवलयं कुर्वन्ति कान्ता अपि ॥"
इत्येतस्य साम्यं बिभर्तीति दृढमसौ प्रमाणीकरोति ।

गद्य-पद्यरचनायां कस्य शैलीं कुत्रायनुकरोतीति विचारे शर्ममहोदयस्य मतम्–
"प्रायो गद्ये सुबन्धुबाणयोः शैलीमनुकृत्यायं प्रावर्तत । पद्ये तूपक्रमे बाणस्य हर्षचरितोपक्रममनुसरन्नपि पश्चात् स्वतन्त्रामेव प्रणालीं प्रावर्तयत् ।"

यथा सुधीसमाजस्य दुर्दैववशाद् बाणग्रन्थः 'कादम्बरी' अपूर्णस्तथैवास्य कृतेः समाप्तिश्लोकादस्या अपूर्णत्वं विभावयति । तदनन्तरमन्यकविभिरक्षुण्णामस्य पद्धतिं प्रदर्शयितुकामेन शर्मपादेन नलचम्पूत उद्धृत्यार्यावर्तवर्णनम्, नर्मदातीर भुवो वर्णनमिति प्रबन्धद्वयमुपन्यस्य निबन्धोऽयं समाप्तिमनीयत ।

## १४ माधवः

प्रबन्धोऽयं वर्ण्यकवेः कालस्थित्याश्रयदातृणां परिचयेन प्रारभ्यते । तद्यथा—
"चतुर्दशशतके विजयनगरेश्वरस्य वीरबुक्कनृपतेस्तदनन्तरं हरिहरस्य च सभायां समस्तवेदवेदाङ्गपारगो माधवाचार्य आसीत् । तस्य भ्राता सायणाचार्य आसीदिति प्रसिद्धः ।"

सर्वदर्शनसंग्रहे प्राप्तप्रमाणेन शर्ममहाशयेनायं कविः सर्वज्ञविष्णोः शिष्य-स्थानीयः समर्थ्यते । चतुर्थाश्रमेऽयं कविः विद्यारण्यनाम्ना प्रसिद्धिं गतः । केरलेष्वष्टमशतके संजातस्य वेदान्तगुरोर्भगवतः शङ्करस्य चरितं शङ्करविजयाभिधं केन प्राणायीत्यत्र मतद्वयं प्राप्यते । केषाञ्चित्समीक्षकाणां मते ग्रन्थशैलीसमा-लोचनेन शङ्करविजयस्य प्रणेता माधवादन्यः कश्चिदस्ति, किन्तु शर्ममिश्रो

निश्चयेन माधवमेव तन्निर्मातृत्वेन व्यपदिशति। अधुनाप्यैतिहासिकास्तमेव तद्ग्रन्थप्रणेतारं मन्यन्ते। विषयेऽस्मिन्नित्थं प्रमाणोपन्यासः कृतो लेखकेन—

'अस्य ग्रन्थस्य प्रणयने माधवेन 'अभिनवकालिदास' नाम्ना स्वस्य व्यपदेशः कृतः। प्राधान्येन दार्शनिकत्वादस्य कवितायां बहवो दोषा दृश्यन्ते तथापि विषयस्यापूर्वत्वाद्बहूनां गुणानाञ्च सद्भावादस्य काव्यं प्रायोऽतीव मनोरमम्। अस्य ग्रन्थशैली च प्रायो नवीना। न कस्याप्यनुकरणमस्य बहुमतम्। एकाक्षराणां खादिशब्दानां प्रयोगैः शङ्करमण्डनयोः शास्त्रार्थेऽश्लीलादिदोषेण ईदृशैरन्यैश्च दोषैः क्वचित्क्वचिन्नतिरम्येऽपि शङ्करविजये प्रसादादिगुणैः प्रायो हृदयमाकृष्यते। बलाच्च पठितुं प्रवृत्तिर्भवति।'

पूर्वमानन्दज्ञानेनानन्दगिरिणा वान्यः शङ्करविजयाख्यः प्रबन्ध प्राणीयत। स हि गद्यपद्योभयात्मक आसीत्। अनेन कविना तस्यैव प्रबन्धस्य विषयः केवलपद्यैर्ग्रथितः। एतावता कारणेन समस्तमपि माधवीयं काव्यमानन्दगिरिप्रबन्धानुसारि प्रतिभाति।

स्वकीयसमीक्षाशैलीमनुसरता शर्ममहोदयेनास्यापि काव्यस्य केचन मनोहरांशास्तत्काव्यादुद्धृत्य निबन्धेऽस्मिन् संयोजिताः। तेषु केचन—

यदा मण्डनपण्डितस्यौकः गच्छन् शङ्कराचार्यो मार्गे तदीया दासीः संददर्श तदा—

'कुत्रालयो मण्डनपण्डितस्येत्येताः स पप्रच्छ जलाय गन्त्रीः।
ताश्चापि दृष्ट्वाद्भुतशङ्करं तं सन्तोषवत्यो ददुरुत्तरं स्वम्॥
स्वतः प्रमाणं परतः प्रमाणं कीराङ्गना यत्र गिरः किरन्ति।
द्वारस्थनीडान्तरसंनिरुद्धा अवेहि तन्मण्डनपण्डितौकः॥
फलप्रदं कर्मफलप्रदोऽजः कीराङ्गना यत्र गिरः किरन्ति।
द्वारस्थनीडान्तरसंनिरुद्धा अवेहि तन्मण्डनपण्डितौकः॥
जगद्ध्रुवं स्याज्जगदध्रुवं स्यात् कीराङ्गना यत्र गिरः किरन्ति।
द्वारस्थनीडान्तरसंनिरुद्धा अवेहि तन्मण्डनपण्डितौकः॥

यदा शङ्करो योगशक्त्या व्योमाध्वना मण्डनपण्डितस्याङ्गणान्तरेऽवातरत् तदा—

'तदा स लेखेन्द्रनिकेतनाभं स्फुरन्मरुच्चञ्चलकेतनाभम् ।
समग्रमालोकत मण्डनस्य निवेशनं भूतलमन्डनस्य ॥'

यदा मण्डनमिश्रः—

''अथोपसंस्पृश्य जलं स शान्तः ससंभ्रमं मण्डनपण्डितोऽपि ।
व्यासाज्ञया शास्त्रविदर्चयित्वा न्यमन्त्रयद् भैक्षकृते महर्षिम् ॥''

तदा शङ्कराचार्यः—

'स चाब्रवीत् सौम्य विवादभिक्षामिच्छन्भवत्संनिधिमागतोऽस्मि ।
सान्योत्यशिष्यत्वपणा प्रदेया नास्त्यादरः प्राकृतभक्तभैक्षे ॥

जगति सम्प्रति तं प्रथयाम्यहं
समभिभूय समस्तविवादिनः ।
त्वमपि संश्रय मे मतमुत्तमं
विवद वा वद वास्मि जितस्त्विति ॥

श्रुत्वैतन्महायशा मण्डनमिश्रो निजगौरवमित्थमाजगौ—

अपि कदाचिदुदेष्यति कोविदः
सरसवादकथापि भविष्यति ।
इति कुतूहलिनो मम सर्वदा
जयमहोऽयमहो स्वयमागतः ॥

अथ च—

ततः समादिश्य सदस्यतायां
सधर्मिणीं मण्डनपण्डितोऽपि ।
स शारदां नाम समस्तविद्या-
विशारदां वादसमुत्सुकोऽभूत् ॥

# १५ कालिदासः

किमभिलक्ष्य कालिदासविषयकं प्रबन्धं लेखितुं प्रवृत्त इति स्वयमेव प्रबन्ध-भूमिकायां शर्मपादेनोक्तम्। तद्यथा—

"चन्द्रगुप्तेन कालिदासस्य सम्बन्धः स्मिथमहाशयेन मुग्धानलाचार्येण च सूचितो न तु ताभ्यामीदृश्याः कल्पनायाः प्रमाणानि प्रपञ्चितानि। विस्तरेणात्र वर्णितानि प्रमाणानि प्रायः सर्वाण्यप्यन्यैरनुत्प्रेक्षितपूर्वाणि। गुप्तवंश्यानां नृपाणामितिवृत्तं तेषां प्रशस्तीः फाहियाननाम्नश्चीनस्य यात्रावृत्तं कालिदासस्य च काव्यानि सम्यक् परीक्ष्य प्रबन्धोऽयं व्यलेखि।

इतः प्रायो वर्षसहस्रात्पूर्वं कालिदासाभिधानं महाकविपर्यायतां प्रपेदे। केचित्कवयः स्वनामसु कालिदासोपाधिं न्यवेशयन्नपरे स्वीयं नाम विहाय कालि-दासाख्ययात्मानं प्रथयाम्बभूवुरितरे त्वभिनवकालिदासत्वेन विश्रुताः।"

जैनपण्डितराजशेखरेण विदिते कालिदासत्रये नूनमेको रघुवंशादिमहाप्रबन्ध-प्रणेता विद्यत इति शर्ममहोदयस्य निश्चयः। अपरयोर्द्वयोर्विषये प्रमाणाभावान्न किञ्चिन्निश्चिनोति।

रघुवंशप्रणेतुरनन्तरं प्राथमिकैतिहासिकमहाकाव्यस्य नवसाहसांकचरितस्य रचयिता पद्मगुप्तः कालिदासोपाधिमङ्गीकृतवान्। अस्यैव द्वितीयं नाम परिमल आसीदिति संस्कृतज्ञानां विदितचरम्।

रघुवंशादिमहाप्रबन्धानां प्रणेता महाकविः स्वगुणैः कालिदासाख्यां महा-कविपर्यायतां प्रापितवान्। स्वयं च 'दीपशिखा' कालिदास इति सविशेषेण नाम्ना सूक्तिकृद्भिः प्रख्यापितः। यथा भारवि-माघ-रत्नाकराद्या आतपत्रभारवि-घण्टामाघ-तालरत्नाकरादिनामभिर्विख्याता बभूवुस्तथैव 'संचारिणी दीपशिखेव रात्रौ....इत्यादि-रघुवंशीयपद्यरचनानन्तरं कालिदासोऽपि दीपशिखोपाधिना विभू-षित इति। शङ्करपण्डितेन रघुवंशभूमिकायामुद्धृतैः समच्छायवाक्यैः श्रव्य-काव्यत्रयस्य नाटकत्रयस्य च प्रणेतारं महाकविं कालिदासं प्रमाणयति। तदनु नातिप्रौढे वयसि कालिदासेन 'ऋतुसंहारादीनि ग्रन्थान्तराण्यपि प्रणीतानीत्यनु-

मिनोति। कालिदासनिर्मितेषु प्रबन्धेषु समयादिनिर्णयोपयुक्ता बहवो विषयाः समुपलभ्यन्ते। ते नाद्यापि संगृहीता न चास्य सुसंगतं वृत्तमुपनिबद्धं केनापीति प्रतिपादयन् सद्यो जिज्ञासूनां मनः समाकर्षति तत्प्रणीतकाव्यपरिशीलनाय।

पूर्वं कालिदाससमयविषयेऽवलम्ब्यमानवस्तूनां संक्षिप्तं परिचयो दीयते।

कवेर्विक्रमेण सम्बन्धस्तत्कृता वाल्मीकेः[1] प्रशंसा, तद्ग्रन्थेषु हूणयवनादिजातीनां वर्णनं, तन्नाम्नः प्रशस्त्यादिषूपलम्भो रघुवंशस्याकस्मिकी समाप्तिः कवेः समकालिकानां तदुक्तानामन्योक्तानाञ्च समय इतीदृशा विषयाः प्रायोऽस्य समयनिर्णयायावलम्बिताः। नैते केवलं कालिदासीयसमयनिर्णयोपयुक्ताः किन्तु बह्वन्यदपि तन्निर्णयोपयुक्तमद्यावधि समुपेक्षितं विषयजातमस्तीत्यभिप्रेत्य तन्निर्णयाय प्रवृत्तो लेखकः। सर्वमीदृशं विषयजातमसमीक्ष्य नास्य कथमपि कालनिर्णयः सुकरः।

कालिदासीयसमयविषयेऽद्यावध्युत्प्रेक्षितानां प्रधानकल्पनानां गणना शर्ममहाशयेनैवं कृता—

१—अग्निवर्णपुत्रस्य समयः।

२—विक्रमाब्दारम्भसमयः।

३—स्कन्दगुप्तसमयः।

४—कोरूरयुद्धसमयः।

एतदतिरिक्ता अपि कालिदाससमयविषये याः कल्पनाः सन्ति तास्तु स्फुटमसङ्गताः परीक्षानर्हाश्चेति परिभाव्य तास्तथा शर्मपादो नाद्रियते। यथा—कालिदासमातृगुप्तयोरैक्यम्, तस्य च भोजसदस्यत्वेन खिस्तीयैकादशशतकेऽवस्थानम्, कश्मीरेश्वरेण मातृगुप्तेन सह कालिदासस्यैक्यकथेत्यादि।

तदनु कालिदासकालनिरूपणे सहायकानां राज्ञां कालनिर्णये शर्ममहाशयः प्रवर्तते।

---

१—तामन्वगच्छद्रुदितानुसारी कविः कुशेध्माहरणाय जातः।
निषादविद्धाण्डजदर्शनोत्थः श्लोकत्वमापद्यत यस्य शोकः॥
(रघौ)

१—अग्निवर्णपुत्रस्य समयः—

अग्निवर्णपुत्रस्य काले कालिदासो बभूवेति केषाञ्चिदयौक्तिकं मतं नास्य रुचिकरम् ।

"न चेदसावस्मिन् समयेऽभविष्यत्को हेतुरस्याग्निवर्णकथया सहैव रघुवंश-समापनस्य ? कविना रघुवंशस्येतिवृत्तं स्वसमयं यावदुपनिबद्धय विरामः कृत इत्येव समीचीनं प्रतिभाति ।"

ये केचन खिस्तवर्षारम्भात्पूर्वमष्टमशताब्द्यां कविरसौ बभूवेति मन्यमानाः सन्ति, तानपि सम्बोधयँल्लेखकः कथयति—

"किन्तु कामपरवशादग्निवर्णात्परं रघुवंशकीर्तिमुपरतप्रायां विलोक्यागामिन उपप्लवान्परिजिहीर्षता कविना तत्रैव विश्रान्तमित्यपि संभाव्यते । किञ्च शङ्कर-पण्डितेन यथोत्प्रेक्षितं तथा चेत्कविरसौ रघुवंशमग्निवर्णादर्वाचीनानां नृपाणां वर्णनेन व्यवर्धयिष्यन्नूनमकालिदासीयोऽयमनुचितोऽनपेक्षणीय ईदृशो विषयोऽभविष्यत् । तत्सर्वथा ग्रन्थसौष्ठवशत्रुमतिविस्तरं परिजिहीर्षुरितिहासपारवश्यं विधूय कालिदासोऽग्निवर्णकथयैव रघुवंशमुपसंजहारेत्येव समञ्जसं स्वारसिकं च किञ्चाग्निवर्णपुत्रस्य समकालिकश्चेत्कालिदासोऽभविष्यत्तस्यैव वृत्तेनासौ रघुवंशं व्यरमयिष्यन्न तु तत्पितुर्वृत्तेन ।" इत्थं पूर्वपक्षयुक्तीरुल्लिख्य स्वकीयं मतमुपस्थापयति—

"वस्तुतस्तु कालिदासो नाग्निवर्णेन न वा तत्पुत्रेण सम्बद्धो भवितुमर्हति नहीदृशे सम्बन्धे सति कविरग्निवर्णं व्यसनपरवशमवर्णयिष्यत् ।

इदमेव कवेरग्निवर्णस्य तत्पुत्रस्य वा समकालिकत्वकल्पनां प्रत्याख्यातुं क्षमते-तरामिति विरम्यतेऽस्मिन् विषये निरर्थकाद्विस्तरात् ।"

२—विक्रमाब्दारम्भकालः—

विक्रमादित्यनामा कश्चिन्मालवगणनायक आसीत् । स शकान्पराभूय मालवगणस्थित्यब्दं प्रतिष्ठापयामास ई० पू० प्रथमशतके । बौद्धकविरश्वघोषः काव्यकलाक्षेत्रे कालिदासेन प्रभावितः । अथ चास्य कालः कुषाणाधिपकनिष्क-समकालत्वात्प्रथमशताब्द्या उत्तरार्धो निश्चितः । अभिज्ञानशाकुन्तले कतीनाञ्चिद्

बौद्धविचाराणां खण्डनेन यज्ञानुष्ठानस्य माहात्म्यप्रतिपादनेन ब्राह्मणधर्मस्याभ्युदयो निर्णीयते। एवं बहुभिरैतिहासिकैः स्वस्वतर्कयुक्त्या कालिदासो विक्रमाब्दस्य प्रथमशतकोद्भवो निश्चीयत इति पूर्वपक्षः। उत्तरस्तु प्रसङ्गतोऽग्रे विवेचयिष्यते।

**३—स्कन्दगुप्तसमयः—**

स्कन्दगुप्तसमकालिकं कालिदासम्मन्यमानानां विदुषां कृते शर्ममहाशयस्य तर्कपूर्णा युक्तिः—

"स्कन्दगुप्तसमये खिस्तीयपञ्चमशताब्द्यां ये कालिदासमवस्थापयन्ति तेषां मूलं तु रघुवंशे हूणानां वर्णनमात्रम्। किन्तु भारतीयैर्ग्रन्थकृद्भिः प्रायो हूणशकादिशब्दा व्यतिकीर्णेष्वर्थेषु प्रयुक्ताः कालिदासस्य चैतिहासिका हूणा अभिप्रेता इति न वक्तुं शक्यते किञ्चाष्टपञ्चाशदधिकचतुःशततमेऽब्दे हूणैः संभूय प्रथमं भारतमाक्रान्तं ततः पूर्वमपि भारतमास्कन्दितुं ये केचिद्धूणा यदा कदाचिदागताः सीमान्तेष्विति संभाव्यत एवेति सम्भूय हूणैः कृताद्भारतप्रथमाक्रमणात् पूर्वं चेत्कालिदासोऽभविष्यन्नासौ हूणनाम्ना परिचितोऽभविष्यदिति कल्पनाप्यसङ्गतैव।"

**४—कोरूरयुद्धसमयः—**

षष्ठशतके कोरूरसङ्ग्राम उज्जयिनीशः कश्चिद्विक्रमो म्लेच्छान्पराभूतवानित्यैतिहासिकम्मन्याः। मगधेश्वरस्य बालादित्यस्य साहाय्येन मिहिरकुलस्य यशोधर्मणा विजयो मतैक्यमावहति। यद्यप्ययं विजयः कोरूरयुद्धात्प्राचीनतरस्तथापि यशोधर्मणो विक्रमपराख्यत्वं परिकल्प्य तेनैव मिहिरकुलपरिभवावसरे मालवगणस्थित्यब्दो विक्रमाब्दाभिधां नीत इति चोत्प्रेक्ष्यास्यैव समये संस्कृतवाङ्मयस्य पुनरुज्जीवनं बभूवास्यैव च नवानां सदस्यरत्नानामेकतमः कालिदास आसीदिति केषाञ्चित्प्रवादः। अथ च वराहमिहिरस्य समयः षष्ठशतकोत्तरार्धे सम्पतन् तत्समकालिकस्य कालिदासस्य तदैवावस्थितिं द्रढयतीत्यपि ते सम्भावयन्ति। पूर्वोक्ता एताः सर्वा उक्तीः सतर्कं खण्डयन् स्वमतमित्थं प्रकटयति शर्मपादः—

"किन्तु बाणभवभूतिमाघकालिदासादीन्समकालिकान्कल्पयतो भोजप्रबन्धस्येव नवरत्नपद्यस्यापि प्राचीनार्वाचीनाँश्च वररुच्यमरादीनेककालिकानुत्प्रेक्षमाणस्याप्रामाणिकत्वं स्फुटमेवेति तन्मूलकं कालिदासवराहमिहिरयोः समकालिकत्वं न विश्वासयोग्यम्। न चान्यत्किमपि दृढं प्रमाणान्तरं कालिदासस्य यशोधर्मसमकालिकत्वमवस्थापयतीत्युत्प्रेक्षणीय एवायं प्रवादः।"

पुनः कालिदासकालनिर्णये सिद्धान्तमन्वेष्टुकामेन रामावतारेणैवं विचार्यते।

"कालिदासः कस्यचिद्विक्रमनृपतेः सदस्य आसीदित्यत्र न संशयः। विक्रमोर्वशीयमिति तदीयरूपकाणामन्यतमस्य विलक्षणं नाम तत्प्रस्तावनायामनुत्सेकः खलु विक्रमालङ्कार इत्युक्तिश्च तस्य विक्रमनृपतिसम्बन्धं व्यञ्जयतः। जनश्रुतेरपीदं संमतं दृढीकृतं चाभियुक्तानामभिनन्दादीनामुक्तिभिः। नवरत्नपद्यमप्येतत् सूचयति। तदीदृशानि बहूनि मानानि पृथक्-पृथङ्नातिप्रबलानि, अपि सम्भूयैकार्थबोधकतया बह्वादरणीयानि।"

कस्य विक्रमस्य काले कालिदासो बभूवेति तु निर्णयातीतमभिज्ञायासौ पुनर्भणति—

"विक्रमाब्दारम्भे न कश्चिद्वास्तवो विक्रम उपलभ्यते। विक्रमाब्दोऽपि चिराय प्राचां मालवगणस्थित्यब्दनाम्ना न तु विक्रमाब्दनाम्ना विदितः। यशोधर्मणोऽपि बहुकालानन्तरमयं विक्रमाब्दव्यपदेशं भेजे। ततोऽत्यन्तमर्वाचीनः कल्हणोऽपि विक्रमाब्दं मालवगणस्थित्यब्दत्वेन व्यपदिशति राजतरङ्गिण्याम्। कदा केन मालवगणस्थित्यब्दस्य नामपरिवर्तः कृत इति तु नाद्यापि विदितम्। प्रायो नामपरिवर्तोऽयं भ्रममूलक एवेति प्रतिभाति। कैश्चिदतिदैर्घ्यपरुषाक्षरत्वदोषदूषितं मालवगणस्थित्यब्दनाम नातिरोचयमाणैः कथासहस्रनायकेन मालवेश्वरत्वेनोत्प्रेक्षितेन विक्रमादित्येन स्थापितमिममब्दं सम्भावयद्भिः संक्षिप्तमधुरेण विक्रमाब्दनाम्नाऽयमब्दः प्रख्यापितः प्राचीनं चास्य नाम सर्वथा विस्मृतिपथं नीतम्। इत्थं प्रथमशतके विक्रमादित्यात्यन्ताभाववति प्राचीनतरशतकेषु चासम्भावितविक्रमेषु विक्रममर्वाचीनशतकेष्वन्वेष्टुं प्रवर्तामहे।"

अर्वाचीनशतकेष्वपि विक्रमादित्योपाधिभाजः सन्ति बहवो नृपाः किन्तु कालिदाससमयनिर्णयं विना तस्य विक्रमसम्बन्धः न कथमपि निश्चेतव्य इति मनस्याधाय कालिदासप्रबन्धानां विविधानाञ्चान्येषां बृहत्कथादीनां ग्रन्थानामनुशीलनेन यथासौ निर्णयं जगामेति वयमितः प्रदर्शयामहे—

"कालिदासस्य शुङ्गनृपाणां ज्ञानं तस्य ज्योतिषविद्याया गणितफलितोभयरूपेण ज्ञानं तस्य बृहत्कथायां वर्णितानां कथानां परिज्ञानं तस्य हूणादिप्रत्यन्तजातीनां परिज्ञानं तस्य ग्रन्थेषु पातञ्जलानामनतिप्रचुरप्रयोगानां शब्दानामुपयोग एवमन्यान्यपि बहूनि मानानि कालिदासस्य विक्रमाब्दारम्भादर्वाचीनत्वं बोधयन्ति। विक्रमाब्दारम्भात्पूर्वं द्वितीयशतके समुद्भूतस्य पतञ्जलेरनन्तरं संस्कृतस्य प्रयोगो विरलोऽभूद्बहुविधानि च प्राकृतानि तत्स्थाने प्रायुज्यन्तेति विदितं प्रेक्षावतामत एव च गुणाढ्यस्य महाप्रबन्धः पैशाचे प्राकृतविशेषे न्यबध्यत न तु संस्कृते।

अयं प्राकृतप्राबल्यसमयः सर्वथा कालिदाससदृशस्य संस्कृतमहाकवेः प्रादुर्भावायोग्यः, बृहत्कथायाः परिज्ञानमपि कालिदासस्य गुणाढ्यपरभावित्वं सूचयति। किञ्चोपरागस्य वास्तवो हेतुः कालिदासस्य विदितो न वेति संशयेऽपि यावज्ज्योतिषविज्ञानं तेन स्वप्रबन्धेषु प्रदर्शितम्, तेन स्फुटं परिज्ञायते यदसावार्यभटवराहमिहिरयोः संनिकृष्टस्ताभ्यां तदनन्तरपूर्वजेभ्यो वा ज्योतिषविज्ञानमासादितवान्। तथा च कालिदासस्तृतीयशतकात्पूर्वतरो नेति स्पष्टमेव। किन्तु पञ्चमशतकात्परतोऽप्यस्यानयनं न सुकरम्। सप्तमशतके हि बाणेनासौ हर्षचरिते,[1] रविकीर्त्तेर्द्वितीयपुलकेशि[2] प्रशस्तौ च नामग्राहं वर्णितः। द्वितीयपुलकेशिप्रशस्तौ चास्य नाम

१. निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु।
प्रीतिर्मधुरसान्द्रासु मञ्जरीष्विव जायते॥
(हर्षचरितोपक्रमे)

२. येनायोजि नवेश्मस्थिरमर्थविधौ विवेकिना जिनवेश्म।
स विजयतां रविकीर्त्तिः कविताश्रितकालिदासभारविकीर्त्तिः॥
(द्वितीयपुलकेशिप्रशस्तौ)

भारविणा सहैवोक्तमिति पुलकेशिनः समयाच्छताधिका वत्सरा भारवेर्ध्रुवं व्यतीता येनासौ तथा विश्रुतोऽभूद् यथास्य कीर्तिः प्रशस्तिषूपन्यासोचिता बभूवेति वक्तुं शक्यत एव। बाणेन कालिदाससमभिव्याहारे वर्णितः सुबन्धुरपि बाणात् वत्सरशतं पूर्वमेवासीदन्यथा बाणसमये तस्य तथा ख्यातिर्नाभविष्यत्। अतो भारविः सुबन्धुश्च षष्ठशतके ततोऽपि पूर्वमेवास्तामित्यत्र न कोऽपि संशयः। संभङ्गश्लेषशब्दकाठिन्यादिबहुलाभ्यां भारविसुबन्धुभ्यां सरलतरकाव्यस्य कालिदासस्य चिरपूर्वभावित्वं च स्पष्टमेवेति कालिदासश्चतुर्थशतकान्ते पञ्चमशतकारम्भे वासीदिति केषाञ्चिदर्वाचीनानां तत्समयविषयकसम्भावनान्तरेभ्यः समीचीनतरं प्रतिभाति।

तदित्थं निसर्गतो विक्रमादित्यापराख्यस्य चन्द्रगुप्तस्य राज्ये ( चतुर्थशतकान्ते पञ्चमशतकारम्भे ) कालिदासोऽभूदिति सम्भावयामस्तथा सति हि तस्य विक्रमसम्बन्धोऽपि सुघटः। वस्तुतः सविस्रम्भमिदं वक्तुं शक्यते यत्कालिदासस्य समयोंऽशतश्चन्द्रगुप्तस्य समयेंऽशतश्च तत्पुत्रस्य कुमारगुप्तस्य समयेऽन्तर्भवतीति। तथा चास्य कवेः कालः खिस्तचतुर्थशतकस्यान्ते पञ्चमशतकस्य चारम्भे पततीति सुस्पष्टम्। अस्मिंश्च काले कालिदासीयत्वेन निर्णीते तस्य भारविसुबन्धुभ्यां प्राचीनत्वमप्यायातम्। तौ हि षष्ठशतकस्यारम्भे समुद्भूतौ। किञ्च कालिदासोऽपाणिनीयां "तं पातयां प्रथममासे"त्यादि कतिचित् प्रयोगान् स्वकाव्येषु विन्यास्थदीदृशाश्च प्रयोगा बुद्धचरितं विहाय नान्यत्र लौकिककाव्येषूपलभ्यन्त इति नूनं बुद्धचरितप्रणेतुरश्वघोषस्य कालिदासस्य च तदाविर्भावः सम्भावितो यदा पाणिनेः प्रयोगं न विश्वजनीनमासीत्। भारविसुबन्धुसमये तु पाणिनेः प्रामाण्यमनतिक्रमणीयमासीदिति सर्वथा ताभ्यां प्राचीनतरः कालिदासः। कालिदासस्य गणितज्योतिषविज्ञानं तु न तथा गहनं येनार्यभटानन्तरमेवास्य विनिवेशः क्रियते। तस्य वराहमिहिरसमकालिकत्वन्तु ज्योर्विदाभरणीयनवरत्नपद्यमात्रमूलकम्। केनचिदत्यन्तमर्वाचीनेन जैनेनात्यन्तमशुद्धे संस्कृते विलिखितस्य ज्योतिर्विदाभरणस्य च सर्वथा प्रामाणिकेतरतया नैतद्विश्वासार्हम्।"

बहवो हि समीक्षकाः कालिदासमुज्जयिनीप्रभवं मन्यन्ते किन्तु शर्मपादस्तस्य

कुमारसंभवादिषु हिमालयदृश्यानां सविशेषं वर्णनेन ग्रीष्मर्तुप्रियतया च काश्मीरकत्वं समर्थयति। तथा चाह—

"किञ्च कालिदासश्चेदकाश्मीरकोऽभविष्यद्बाणश्च शोणतटसम्भवोऽकाश्मीरकत्वेन निश्चित एव, कथं तर्हि गद्यकवीनां पद्यकवीनाञ्च मूर्धन्ययोरकाश्मीरकत्वं जानन्नपि विल्हणः—

"सहोदराः कुङ्कुमकेसराणां भवन्ति नूनं कविताविलासाः।
न शारदादेशमपास्य दृष्टस्तेषां यदन्यत्र मया प्ररोहः॥"

इति साभिमानमवदद्यत्।"

तथापि कवेरस्योज्जयिनीसम्बन्धस्तु स्वीकार्य एव। बाल्ये निर्मितेषु कुमारसम्भव-मालविकाग्निमित्रादिषु ग्रन्थेषूज्जयिनीवर्णनाभावात्, प्रौढे वयसि च मेघदूतादिप्रबन्धेषु सबहुमानं तस्या महात्म्यवर्णनात् कविरयमुज्जयिन्यामजातोऽपि प्रौढे वयसि तन्नगरीवास्तव्यतां जगामेति शर्माभिप्रायः।

कालिदासेनेन्दुमतीस्वयम्वरावसरे सत्स्वपि बहुषु नृपेषु मगधेशः शीर्षण्यः कल्पितः। अनेनैव धरा राजन्वती बभूव। अवन्तीश्वरस्यासाधारणाभिः प्रशंसावाग्भिरुभयोर्मगधावन्तीश्वरयोर्महत्त्वातिशयं प्रतिपादितम्। स्वयम्वरे राजकुमार्येन्दुमत्यावन्तीमगधेश्वरावेव सबहुमानमतिक्रान्तावन्ये तु भूपतयः सघृणमुल्लंघिता इति दर्शनेनापि मगधावन्तीश्वरयोः श्रेष्ठत्वं स्पष्टीभवति। इत्थं रामावतारशर्मा मगधेशावन्तीशयोरैक्यं समर्थ्य तयोः सदसि कालिदासं स्थापयति।

रघुवंशे दिलीपरघ्वोश्चित्रितं चरित्रं चन्द्रगुप्तसमुद्रगुप्तयोरितिहासप्रसिद्धं चरित्रमनुसरतीति नात्र चित्रम्। इत्थं रघुश्चन्द्रगुप्तप्रतिनिधिरूपो रघुवंशे वर्णितः। यथा चन्द्रगुप्तो मागधीपुत्रस्तथैव रघुरपि व्यपदिष्टः। यथा चन्द्रगुप्तस्य मातुर्नाम दत्ता तथैव रघोरपि मातुर्नाम दक्षिणापर्यायत्वेन सुदक्षिणेत्युत्प्रेक्षितम्। चन्द्रगुप्त इव रघुरपि विजेतृत्वेन वर्णितः। गोप्तृगुप्तयोश्चैकप्रकृतिजत्वान्नूनं गोप्तृशब्दः गुप्तानां स्मारकः। सोऽयं कविना दिलीपविषये प्रयुक्तः।[१]

एवमसौ कालिदासश्चन्द्रगुप्तद्वितीयतत्पुत्रकुमारगुप्तयोः सभारत्नं बभूवेति सर्वथा प्रतिपादयन्नाह—

---

१—स्ववीर्यगुप्ता हि मनोः प्रसूतिः। (रघुवंशे द्वितीये सर्गे)

"तथा च विक्रमादित्यविक्रमाङ्काद्यनेकविरुदविराजितस्य द्वितीयचन्द्रगुप्तनृपते-रापश्चिमसागरं गुप्तसाम्राज्यं विस्तारितवतो गुर्जरीयशकसत्रपत्रासैकहेतोः कथा-सहस्रनायकत्वेनार्वाचीनैरुत्प्रेक्षितस्य शकारेः समये कालिदासो बभूवेति सिद्धम् ।"

एवमेव कुमारगुप्तसम्बन्धमपि विवृण्वन् कालिदासस्य दीर्घायुस्त्वमनेन कल्पि-तम् । तथा हि—

"कालिदासो दीर्घायुर्बभूवेति प्रायः सम्भाव्यते । विक्रमे दिवंगतेऽप्यसौ तत्पुत्रसभारत्नमासीत् ॥"

राज्ञोरुभयोः सभारत्नेन कालिदासेन कस्य काले के ग्रन्था विरचिता इति विचारे शर्ममहाशयश्चन्द्रगुप्तकाले कालिदासेन मेघदूतम्, ऋतुसंहारम्, कुमार-सम्भवम्, मालविकाग्निमित्रम्, विक्रमोर्वशीयमितीमे ग्रन्था निर्मिताः, कुमारगुप्त-काले पुनः अभिज्ञानशाकुन्तलम्, रघुवंशस्य समाप्तिश्च कृतेति मन्यते ।

गुप्तराजानां शासनकालो भारतवर्षस्य पुष्कलामुन्नतिमावहन्नासीदिति शर्म-महाशयस्य सिद्धान्तः पौरस्त्यपाश्चात्त्येतिहासविदां मतैक्यमावहति । कालेऽस्मिन् सर्वासु दिक्षु भारतमनीषायाः कीदृग्विकासो बभूवेति प्रतिपादयता निबन्धस्योप-संहारः कृतः—

"तथा च चतुर्थशतकस्यान्ते पञ्चमशतकस्य चारम्भे कालिदास आसीदिति स्थिरम् । अशोकसमयानन्तरमस्मिन्नेव समये पुनर्भारतस्य गौरवमाविरभूदजायन्त चास्मिन्नेव काले मेण्ठसुबन्धुभासादयो महाकवयो दिङ्नागोद्योतकराद्याश्चानेके दार्शनिका आर्यभटवराहमिहिरादयश्च वैज्ञानिकाः ।"

## १६—अप्पयदीक्षितः

सर्वतः पूर्वमप्पयदीक्षितस्य कालनिर्णयाय प्रमाणोपन्यासपूर्वकं प्रबन्धोऽय-मित्थमारभ्यते—

"अप्पयदीक्षितसहोदरस्य, अप्पयदीक्षितस्यैव वा पौत्रेण नारायणदीक्षित-पुत्रेण नीलकंठदीक्षितेन नीलकण्ठचम्पूप्रारम्भेऽष्टत्रिंशदुपस्कृतसप्तशताधिक-चतुःसहस्रेषु (४७३८) कलिवर्षेषु गतेषु ग्रथितः किल नीलकण्ठविजयोऽयमिति

स्वग्रन्थनिर्माणसमयो लिखितः, अर्थात् १६३७ मिते खिस्तसंवत्सरे नीलकण्ठ-चम्पू रचिता। तस्मात् खिस्तसंवत्सरीयषोडशशतकसमाप्त्यासन्नसमये श्रीमदप्पयदीक्षित आसीदिति ज्ञायते।"

ततो नीलकण्ठचम्पूप्रारम्भेऽप्पयदीक्षितमधिकृत्य प्रशंसापरं पद्यमपि तत्पुष्यतीति धिया तत्पद्यमप्यसावुदाहरति—

"लीलालीढपुराणसूक्तिशकलावष्टम्भसंभावना—
पर्यस्तश्रुतिसेतुभिः कतिपयैर्नीते कलौ सान्द्रताम्।
श्रीकण्ठोऽवततार यस्य वपुषा कल्क्यात्मना वाच्युतः
श्रीमानप्पयदीक्षितः स जयति श्रीकण्ठविद्यागुरुः॥"

अप्पयदीक्षितकृता बहवो ग्रन्थाः सन्ति किन्तु शर्मकाले ये हि ज्ञाता आसन् ते त्रयस्त्रिंशद्यावन्नामग्राहं तत्रैव परिगणिताः शर्ममहोदयेन।

इतोऽनन्तरमप्यैतिहासिकानां भ्रान्त्यपनोदाय पुनः कथयति—

"आचारनवनीतकर्त्ता—अप्पयः, गौरीमायूरमाहात्म्यकर्त्ता—अप्पादीक्षितः, शब्दरत्नावलीकर्त्ता—अप्पासूरिरित्येते त्रयोऽप्पयदीक्षिताद्भिन्नाः"

निबन्धेऽस्मिन्नप्पयदीक्षितस्य कृतिसमीक्षा तु न कृता किन्तु कुतश्चित् संगृह्य कानिचित् पद्यान्यवश्यमुदाहृतानि। तेषु द्वयमेवास्वादनीयम्।

पततु नभः स्फुटतु मही चलन्तु गिरयो मिलन्तु वारिधयः।
अधरोत्तरमस्तु जगत्का हानिर्वीतरागस्य॥ १॥
के चौराः के पिशुनाः के रिपवः के दायादाः।
जगदखिलं तस्य वशे यस्य वशे स्यादिदं चेतः॥२॥

## १७—अभिनन्दः

प्रबन्धेऽस्मिन्नादौ सूक्तिसंग्रहकाराणामुद्धृतैः श्लोकैरभिनन्दमभिनन्द्य लेखकस्तस्य कुलकालपरिचयं ददाति—

"अभिनन्दो धर्मपालकुलजस्य विक्रमशिलात्मजस्य युवराजहारवर्षस्य सदस्यो जयन्तभट्टस्य न्यायमञ्जरीप्रणेतुः पुत्रो भट्टनारायणरत्नाकरयोः राजशेखरस्य च समकालिकः।"

केचिदैतिहासिका अभिनन्दमित्थं स्मरन्ति—

'जयन्तभट्टतनयः कल्याणस्वामिनः पौत्रः शक्तिस्वामिनः प्रपौत्रः कादम्बरीकथासारप्रणेता वंगान्तर्गतगौडदेशीयः कश्मीरेषु दार्वाभिसारग्रामे कृताभिवासोऽभिनन्दः' इति। किन्तु प्रमाणाभावान्नैतन्मतमनुमोदते शर्मपादः।

तथा हि दशमशतकसमाप्तिसम्भवेनाचार्याभिनवगुप्तेन ध्वन्यालोकलोचने तृतीयोद्योते, क्षेमेन्द्रेण सुवृत्ततिलके तृतीयविन्यासे, भोजदेवेन सरस्वतीकण्ठाभरणे पञ्चमपरिच्छेदे चोदाहृतेभ्यः कादम्बरीकथासारपद्येभ्योऽष्टमशतकोत्तरार्धसम्भवोऽयमभिनन्दो निर्णीयते। कवेरस्य काव्यविचारप्रस्तावनायां केवलं कादम्बरीकथासार एव पुरस्तादुपस्थाप्यते। रामचरितस्य प्रणेता शतानन्दसूनुरभिनन्दस्तु कश्चिदन्य इत्यपि तत्रैव समर्थ्यते।

कवेरभिनन्दस्यानुष्टुप्छन्दसः प्रीतिमभिलक्ष्य क्षेमेन्द्रादीनां मतमुपन्यस्य कथयति—

कादम्बरीकथासारमभिनन्दः प्रणीतवान्।<br>
अनुष्टुभोऽतिरुचिरा यस्य विद्वत्सु विश्रुताः॥<br>
अनुष्टुप्सतता सक्ता साभिनन्दस्य नन्दिनी।<br>
विद्याधरस्य वदने गुलिकेव प्रभावभूः॥

(सुवृत्ततिलके)

संस्कृतकविषु कियती चास्य प्रतिष्ठा बभूवेति तत्तत्कविवर्णितैः श्लोकैरेवानुमीयते।

यथा—

वागीश्वरं हन्त भजेऽभिनन्द-<br>
मर्थेश्वरं वाक्पतिराजमीडे।<br>
रसेश्वरं नौमि च कालिदासं<br>
बाणं तु सर्वेश्वरमानतोऽस्मि॥

कविरमरः कविरचलः कविरभिनन्दश्च कालिदासश्च।<br>
अन्ये कवयः कपयश्चापलमात्रं परं दधते॥

किं शीधुभिर्भवतु काणितशर्कराद्यैः
किं वा सिता सहचरैः क्वथितैश्च दुग्धैः ।
दुग्धाब्धिलब्धसुधया च किमन्यदेव
यत्राभिनन्दसुकवेर्विचरन्ति वाचः ॥

बहवो हि कवयः काले-काले स्वकीयोत्कृष्टगुणैस्तत्तद्राजभिः समादृताः। तदधिकृत्य ग्रथिताः सूक्तिसङ्ग्रहकाराणां सूक्तयस्तेषां समयादिज्ञानाय सहायिन्य एवेति नात्र विस्मयलेशः । कविरभिनन्दः कस्य सदो भूषयति स्मेति विचारणायां शर्ममिश्रेणाप्येकः श्लोकः समुद्धृतः । स च—

हालेनोत्तमपूजया कविवृषा श्रीपालितो लालितः
ख्यातिं कामपि कालिदासकवयो नीताः शकारातिना ।
श्रीहर्षो विततार गद्यकवये बाणाय वाणीफलं
सद्यः सत्क्रिययाभिनन्दमपि च श्रीहारवर्षोऽग्रहीत् ॥

अन्ते लेखकः कादम्बरीकथासाराच्छुकनाशोपदेशात्मकं, महाश्वेतागीति-श्रवणानन्तरं चन्द्रापीडद्वारा तदधिगमात्मकञ्च प्रबन्धद्वयमुपन्यस्य निबन्ध-मुपसंहृतवान् ।

## १८ सुबन्धुः

अस्मिन्निबन्धे 'गद्यकारस्य सुबन्धोर्वंशजन्मस्थानादिपरिचयं विहाय केवल-मस्य कवेः कालनिर्णयो विविधैर्युक्तियुक्तैः प्रमाणैः कृतः । अवधीयताम्, कथमयं समीक्षकः सुबन्धोः कालनिर्णये स्वकीयां तर्कनिष्ठां समीक्षाशैलीं प्रदर्शयति ।

"अयं किल कविः श्रीविक्रमादित्यं स्मरति स्मरति च कालिदासोपज्ञं शकु-न्तलाशापवृत्तान्तम् । श्रीविक्रमादित्यस्तत्सभालङ्कारभूतः कालिदासश्च खिस्तीय-षष्ठशतकादिमभागे समुत्पन्नाविति ज्ञायते । यतः कलिवर्षेषु द्वाचत्वारिंशशतक-समुत्पन्नेन आलवेरुणी नाम्ना पारसीकैतिहासिकेन कोरूरसमरे श्रीविक्रमादित्येन विजिग्ये इति लिखितं वर्तते । करूरयुद्धं च खिस्तीयषष्ठशतकारम्भे समुद्भूत-मिति चरित्रग्रन्थतो ज्ञायते । शत्रुञ्जयमाहात्म्यञ्चीनयात्रिकलेखादिविमर्शेऽपि

विक्रमादित्यः खिस्तीयषष्ठशतकारम्भे पञ्चमशतकावसाने वा स्थित इति निर्णीयते।"

वासवदत्तायां षष्ठशतकोद्भवो न्यायवार्तिककारो नैयायिकशिरोमणिरुद्योतकरः, तस्य खण्डनकर्त्ता धर्मकीर्त्तिरपि स्मृतौ। वासवदत्ताया विमर्शनेन तस्यां मीमांसकमतप्रभावो बहुलं परिलक्ष्यते। तन्मीमांसकमतं कुमारिलभट्टेन पुनरुज्जीवितं सत् षष्ठशतकमध्यभाग एव समीचीनां प्रतिष्ठां लेभ इति तु निःसंशयम्। अतश्च पूर्वोक्तैर्हेतुभिरयं सुबन्धुः खिस्तीयषष्ठशतकादनन्तरमुत्पन्न इति शर्ममहोदयेन निश्चीयते।

अपरतः "खिस्तीयसप्तमशतकसमुत्पन्नो बाणभट्टश्च हर्षचरिते वासवदत्ताग्रन्थं स्मरति बालरामायणादिकर्त्तू राजशेखरस्य पूर्वपुरुषः कविराजश्च राघवपाण्डवीयकाव्ये सुबन्धुं बाणभट्टात्प्राचीनं निर्दिशति। ततश्च सुबन्धुरयं खिस्तीयषष्ठशतकमध्यभागे तदन्तिमभागे वा जीवति स्मेति सिद्धं भवति।"

गुणानुवादपुरःसरं बाणभट्टस्य श्लोकमिममुल्लिख्य निबन्धं संक्षिपति—

कवीनामगलद्दर्पो नूनं वासवदत्तया।<br>
शक्त्येव पाण्डुपुत्राणां गतया कर्णगोचरम्॥

अवसाने वासवदत्तायाः कश्चन शोभनांशोऽपि उदाहृत एव येनोक्तेरस्याः सार्थक्यं जायेतेति।

———

# सप्तदशशतकस्य कतिपयरूपकाणि

शङ्करलालः स्वर्णकारः

सप्तदशशताब्द्यां संस्कृतसाहित्यस्याभिवृद्धिः पूर्ववत् संजातेति सुविदितमेव। अस्याः शताब्द्याः 'काव्येषु नाटकं रम्यम्' इति नाट्यसाहित्यस्य कतिपयग्रन्थरत्नानां विवरणं प्रस्तौमि।

## पारिजातनाटकम्

नाटकमिदं श्रीकुमारताताचार्येण स्वकीयाश्रयदातुः रघुनायकभूपालस्य (A.D. १६१४–१६३३) प्रेरणया प्रणीतम्। पुराणेषु वर्णितां पारिजातपादपकथामाश्रित्य तां च स्वकल्पनया किंचित्परिवर्त्य काव्यरसवर्धनाय नाटकमिदं विरचितम्। संक्षेपतोऽस्य कथा प्रस्तूयते।

'निसर्गादेव कलहप्रियो नारदो भूमण्डलं युद्धसंकुलं कर्तुमना एकमेव पारिजातपुष्पमानीय बहुवल्लभाय माधवाय समर्पयति। स च तत् रुक्मिण्यै ददाति। वृत्तान्तमिममुपलभ्य सत्यभामा कुपिता भवति। तां समाश्वासयितुं माधवो विदूषकेण सह प्रमदवनलतामण्डपं गच्छति। द्वितीयाङ्के प्रमदवने कोपगतां सत्यभामां माधवः कोपकारणं पृच्छति। सत्यभामा सखीमेव संबोध्य भाषते। वार्तालापे पारिजातचर्चा जायते। कृष्णस्तु पारिजातपादपस्य सत्यभामाक्रीडाङ्गणे स्थापनं प्रतिज्ञाय तस्याः कोपं परिमार्ष्टि। तृतीयाङ्के बलदेवोद्धवप्रभृतिभिः परिवृतं सभायामुपविष्टं माधवं तापसाः नरकासुरेण क्रियमाणानत्याचारान् वर्णयन्ति। माधवस्तु नरकवधं प्रतिजानीते। अत्रान्तरे नरकासुरबन्दीकृतयौवतोदन्तजिज्ञासया प्रेषितो राजहंसनामा चारः समुपतिष्ठते। स च तासां युवतीनां सन्देशपत्रिकां माधवाय समर्पयति। ततोऽवगच्छति माधवस्तासां स्वस्मिन्निरतिशयप्रेमबन्धम्। एतस्मिन्नन्तरे सत्यभामागत्य नरकपुरगमनं, नरकासुरवधं, पारिजातानयनञ्च स्मारयति। माधवः सैनिकान् संसूच्य नौकाभिः नरकनगरीं प्रति प्रयाति तत्र

युद्धाय सन्नद्धो भवति च। चतुर्थाङ्के माधवनरकयोः भीषणयुद्धं प्रवर्तते। अन्ते वासुदेवः सुदर्शनचक्रेण नरकदानवस्य शीर्षं कृन्तति। नरकेण बंदीकृताः सर्वाः कन्यका विमुच्यन्ते। पञ्चमाङ्के माधवं कामयमाना नरकासुरेण बंदीकृतास्सर्वा राजकन्या द्वारकापुरीं प्रति प्रेषिताः। गरुडाधिरूढो सत्यभामासनाथः कृष्णो देवलोकं गत्वा इन्द्रं च जित्वा पारिजातपादपमपहृत्य द्वारकां प्रतिनिवर्तते। तदा बलदेवः कारागृहान्मोचिताभिः राजकन्याभिः सह माधवस्य परिणयाय त्वरयति। तदा नारदः समागत्य राजकन्यकाभिः माधवस्य विवाहमभिनन्दति।

अनेन प्रकारेण कविनानेन पञ्चाङ्कपरिमितेऽस्मिन्नाटके पारिजातकथा नाटकीयवस्तुविन्यासरीत्या निबद्धा। प्राचीनेऽपि कथावस्तुनि सरसं नाट्यतत्त्वं समुद्भावितमत्र नाट्यकारेण।

अस्मिन् नाटके पद्यबाहुल्यं दृश्यते। नाटकस्यास्य चतुर्थांशमात्रं प्रायो गद्ये एव विनिर्मितम्। शेषभागस्तु पद्यमयो वर्तते। पद्यभागेऽपि श्लोकानां भाषा दीर्घसमासवती। यथा—

"पादाग्राङ्गुलिसामिपीडनकृतप्राग्भागभारश्रम-
प्रौढश्वासभुजङ्गपुङ्गवनमन्नाभीसरोजच्छदैः।
तिर्यङ् मौलितिरोहिते त्रिजगतीनिर्माणकर्मान्तिके
निश्शङ्के विहितेन्दिराधरसुधास्वादो हरिर्मोदते॥"

गद्यभागस्य सरल एव वाक्यविन्यासः। कथोपकथनानि संक्षिप्तानि सरलानि च भवन्ति। यथा द्वितीयाङ्के माधवविदूषकयोः वार्तालापे—

"माधवः—किमिदं वातस्य विक्रिया?

विदूषकः—न खलु न खलु।

माधवः—कस्य पुनरन्यस्य?

विदूषकः—तवैव।

नाटकेनानेन तत्कालीना संस्कृतिरपि सूच्यते। तस्मिन्काले कतीनां विशेषोत्सवानामवसरेषु नाटकान्यभिनीयन्ते स्म। यथा नाटकमिदं महानवमी-महोत्सवावसरेऽभिनीतम्। भूपालाः राजसभायां नाटकानामभिनयं कारयन्ति

स्म स्वान्तःसुखाय प्रजानां मनोरंजनाय च। यथा सूच्यते सूत्रधारस्य कथनेन—

"अद्य खलु..................रघुनाथजननाथेन्दोः प्राकृतजनप्रलोभनीयमाने पुनरस्मत्प्रयोगेऽप्यनुकम्पा।"

तात्कालिकवाद्यान्यपि सूच्यन्ते सूत्रधारस्य कथनेन। यथा—

"कुर्वन्ति क्वणितं वीणा मुरजा मञ्जुमौखरीम्।
तालाश्च तालं श्रूयन्ते तथा नर्दन्ति मर्दलाः॥" १।१६

कुमारताताचार्येण तत्कालीनसाधूनां निदर्शनं सम्यग्रूपेण कृतम्। यथा—

जटाजूटं शीर्षे स्फटिकजपमालां करतले
तनौ चाप्यैणेयीं त्वचमितरहस्ते च कलशम्।
मुनित्वञ्चान्वीक्ष्य क्षुभितमनसो हन्त सुधियो
भवन्त्यन्ये लोकाः कथमिव न मुह्येयुरधियः॥" २।२

## नलचरित्रनाटकम्

श्रीमन्नीलकण्ठदीक्षितविरचितस्य नाटकस्यास्य वर्ण्यविषयः नलदमयन्ती-परिणय एव। अस्य कथानकमधः प्रस्तूयते—

"निषधेश्वरो नलः स्वप्ने युवतीमेकां पश्यति। लोकोत्तरसौन्दर्येण च तया आकृष्टो भूत्वा तस्यै सकामो भवति। विदूषको राज्ञ इमामवस्थां विज्ञाय राजान-माकृतिं निर्मातुं निर्दिशति। चित्रं दृष्ट्वा राज्ञो दैवज्ञो दमयन्त्याः परिचयं ददाति। अत्रान्तरे हंसः प्रविशति नलाय च दमयन्त्याः पत्रं समर्पयति राजानं प्रति तस्या अनुरागं च कथयति। द्वितीयाङ्के विश्वावसुवाचस्पत्योः संलापेन सूच्यते यदिन्द्रोऽपि दमयन्तीं वाञ्छति। इन्द्रो मातलिविश्वावसुभ्यां सह विदर्भं गच्छति तत्र च नलागमनं ज्ञात्वा तमेव स्वदूतकार्ये नियोक्तुं तस्यागमनं प्रतीक्षते। तृतीयाङ्के दमयन्ती चेटीमुखादिन्द्राभिप्रायं ज्ञात्वा खिन्नमनस्का जायते। नलागमनं प्रतीक्षमाणोद्याने सा तिष्ठति। अत्रान्तरे नलो विदूषकेण सहागच्छति नलदम-यन्त्योः समागमश्च भवति। दमयन्ती नलमिन्द्राभिप्रेतं कथयति। चतुर्थाङ्के नल-विदूषकौ इन्द्राभिप्रेतं विमृशन्तौ तिष्ठतः। अत्रान्तरे इन्द्रस्य दूतः प्रविश्य नलाय

इन्द्रस्य पत्रं ददाति। 'नलोऽन्तःपुरं गन्तुमिच्छति किन्तु विदूषकस्तं निवारयति कथयति च यत् विदर्भराजोऽपि दमयन्तीं नलायैव दातुमिच्छति। पञ्चमाङ्के दुर्मनायमानां दमयन्तीं विनोदयितुं राजा नलः आराममण्डपमवतरति। तत्र तयोः संलापो भवति। नलः श्रान्तां दमयन्तीं स्वोत्सङ्गे शाययति। स्वप्ने सा नलेनात्मानं परित्यक्तां तं चारण्ये भ्रमन्तं पश्यति। सहसोत्थाय सा स्वप्नं कथयति। राजा तामन्तःपुरं गन्तुं कथयति स्वयं च तामनुसरति। षष्ठाङ्केऽमात्यः कामान्तको दुर्निमित्तं सूचयन् सखेदं तिष्ठति। चरमुखात् जनपदेषु क्षोभं ज्ञात्वा स सारङ्कं सर्वं वृत्तान्तं ज्ञातुं प्रेषयति।''

एतावदेव नाटकं समुपलभ्यते। अस्योत्तरभागो नाधुनापि प्राप्तः। जनाः कथयन्ति यत् नीलकण्ठदीक्षितेनेयत्पर्यन्तमेव नाटकं लिखितम्। अपूर्णमपि नाटकमिदं रसिकानां मनो हरति।

यद्यपि नाटकस्यास्य रचनाकालो निश्चितरूपेण न ज्ञायते तथापि नीलकण्ठ-दीक्षितस्य समयस्य निश्चितत्वादस्य निर्माणकालः ख्रिस्ताब्दस्य सप्तदशशतक इति वक्तुं युज्यते। यतो नीलकण्ठदीक्षितेन नीलकण्ठविजयचम्पू १६१७ मिते ख्रिस्त-संवत्सरे निरमायीति तद्ग्रन्थादेव ज्ञातम्। अतो नीलकण्ठदीक्षितस्य सप्तदश-शतकं समयोऽवसीयते।

तात्कालिककवीनां मध्ये दीक्षितोऽयमग्रगण्यः। अनेन विरचिताः काव्य-विषयका निम्नांकितश्लोका अस्य काव्योत्कर्षं प्रकटयन्ति।

''भारतीषु कवीन्द्राणां यावती सुकुमारता।
तावती काव्यमर्मज्ञसंमर्दैकसहिष्णुता॥
अचमत्कृतसंदर्भमर्थं नैवाद्रियामहे।
अत्यन्तभोगौपयिकमैश्वर्यमिव देहिनाम्॥
सव्यङ्गापि कवेर्वाणी सापभ्रंशा न शोभते।
लम्बस्तनीं को वीक्षेत रम्भामप्युर्वशीमपि॥''

गङ्गावतरणप्रथमसर्गे १३, १४, २२

किं बहुना। अस्य मतानुसारम्—

अन्धास्ते कवयो येषां पन्थाः क्षुण्णः परैर्भवेत्।
परेषां तु यदाक्रान्तः पन्थास्ते कविकुञ्जराः॥

—गङ्गावतरणप्रथमसर्गे १७

निश्चितमेव महोदयोऽयं कविकुञ्जर एवासीत्। श्रीमन्नीलकण्ठदीक्षितमहोदयस्य विचारसरणिः क्वचित् महाकविं भवभूतिमनुसरति। उदाहरणार्थं निम्नांकितश्लोको द्रष्टव्यः।

"अप्राप्य बहिरुपायानन्तःसम्भ्रान्तपिण्डितश्चेतः।
पय इव निबिडोत्पीडं प्रार्थयते कियदपि द्वारम्॥

१।२२ (नलचरित्रे)

श्लोकस्यास्य भावो भवभूतेरुत्तररामचरितस्य निम्नांकितश्लोकानुसारीति प्रतिभाति।

"पूरोत्पीडे तटाकस्य परीवाहः प्रतिक्रिया।
शोकक्षोभे च हृदयं प्रलापैरेव धार्यते॥" ३।२९

वैदर्भीरीतिरेव कवेरस्य प्रियेति प्रतिभाति नलचरित्रनाटकस्य निम्नांकितश्लोकात्—

"सावित्री—प्रागेव खलु ते विदर्भा इत्येव प्रकृष्टमुत्कण्ठते हृदयम्। किं पुनरनुमताया इव भगवतापि। यत्र सा वैदर्भी रीतिः—

"आदिः स्वादुषु या परा कवयतां काष्ठा यदारोहणे
या ते निःश्वसितं नवापि च रसा यत्र स्वदन्तेतराम्।
पाञ्चालीति परम्परापरिचितो वादः कवीनां परं
वैदर्भी यदि सैव वाचि किमितः स्वर्गेऽपवर्गेऽपि वा॥" ३।१८

नाटकेऽस्मिन् तात्कालिकसंस्कृतेः सूचनापि यत्र तत्र प्राप्यते। नाटकमिदं भगवतः काञ्चीपुरनाथस्य कामाक्षीपरिणयोत्सवयात्रागतानां सामाजिकानामाज्ञयाभिनीतम्। अतस्तस्मिन् काले उत्सवावसरेषु नाटकादीनां प्रदर्शनं क्रियते स्मेति

सूच्यते। तात्कालिका नटा निपुणाः, दर्शका रसिकाश्चासन्निति स्पष्टं भवति सूत्रधारस्य कथनेन। यथा—

"सूत्रधारः—सर्वं सुघटितम्। तथा हि कविर्विदितः, काव्यं च। अन्यदेव कौशलमस्माकं भरततन्त्रेषु, परिषदपि रसोन्मुखी।" (नलचरित्रनाटकस्य प्रथमाङ्के)

## रघुनाथविलासनाटकम्

प्रेक्षणकमिदं विरचितं प्रथितयशसा श्रीयज्ञनारायणाख्येन मखिवर्येण प्रख्यातरघुनाथनायकभूपालमधिकृत्य तन्नाटकनेतुश्च रघुनाथभूपालस्य सप्तदशशतकीयत्वात्तत्समकालता चास्य कवेरनुमीयते। नाटकेऽस्मिन् तञ्जौराधिपतेः श्रीरघुनाथनायकस्य बहुविधरम्यक्रियाकलापानां नायकराजभवनानां च वर्णनं विद्यते। ऐतिहासिकमिदं नाटकम्। नाटकस्यास्य कथानकमीदृशम्—

'प्रथमाङ्के विदूषकद्वितीयो राजा रघुनाथनायको जलधितीरात् प्राप्तमेकमद्वितीयं रत्नसमुद्गकं हस्ते निधाय 'कस्य सकाशात् कुतो वागतमिद' मिति चिन्तयन् तिष्ठति। सहसैव सोऽशरीरिण्या वाण्या 'सिंहलद्वीपस्य राजकुमार्या रत्नसमुद्गकमिदमि'ति ज्ञात्वा नौकाभिः सिंहलद्वीपं प्रविशति। तत्र स राजकुमार्याः कलावत्याः पदचिह्नान्यनुसृत्योपवनं गच्छति कुमारीं पश्यति च। स तस्याः सम्मुखं प्रयाति किन्तु सा परिजनाह्वानेनान्तःपुरं प्रविशति। द्वितीयाङ्के स्वराज्यं प्रत्यावृत्तः प्राप्तविरहव्यथो राजा विनोदाय नायिकायाश्चित्रं रचयति। अत्रान्तरे नायिकाया उपमाता योगिनी प्रतिभावती आकाशयानेनागच्छति रत्नसमुदगकस्य सर्वं वृत्तान्तं कथयति च। राजा तु 'कलावती मम राज्ञी भविष्यती'ति परिज्ञाय कलावत्या दर्शनौत्सुक्येन पुनः सिंहलद्वीपं गच्छति। उद्याने नायकनायिकयोः समागमो भवति। अत्रान्तरे भ्रातुराह्वानेन नायिकान्तःपुरं प्रविशति। चतुर्थाङ्के प्रतिभावत्याः कथनेन नायिकाया रघुनाथभूपाय प्रदानं निश्चितं भवति। पञ्चमाङ्के नायिका स्वबन्धुभिः परिवृता नायकराज्ये उपयाति। तत्र तयोः परिणयश्च भवति।'

नाटकमिदं साहित्येतिहासदृष्ट्यातीव महत्त्वपूर्णम्। अनेन नाट्यकारस्य

बहुज्ञता काव्यवैदग्धी च स्पष्टीभवतः। नाटककारो महान्दर्शनाचार्य आसीदिति स्पष्टमेव। तद्यथा—

"अहो वयस्यस्येदमपूर्वमनुमानकौशलम्। यदयमव्याप्येनाप्येतेन सौरभविशेषेणाव्यापकमपि मुक्तामणित्वमनुमिमीते।"

अपि च—

"परममहदाहुरेके परमाणु परे च मन्वते चेतः।
तत्सर्वथापि कथमिव तनुमध्या सा तदेतदाहरतु॥" २·४

सङ्गीतशास्त्रप्रावीण्यमपि स्फुटं भवति नाटककर्तुः। तद्यथा—

"राजा (सङ्गीतस्वरं श्रुत्वा)"—किमयमौडवो वा षाडवो वा सम्पूर्णो वा रागः (पुनरपि सविशेषमाकर्णयन्) असौ सम्पूर्ण इति मे निश्चयः।......एतेषु—

आरूढषट्छ्रुती तावुभावृषभधैवतौ।
निषादः काकलीसंज्ञो गान्धारश्चान्तराभिधः॥" १·६८

कविकल्पनाप्यत्र प्रतिभामयी। यथा राजा नायिकां दृष्ट्वा कथयति—

"स्पर्धावशेनेव परस्परस्य दृशौ भजन्त्यावतिदीर्घभावम्।
उदीक्षितुं प्रापि समुन्नतत्वं मध्यस्थया नासिकया मृगाक्ष्याः॥"

नाटकस्य भाषा बाणभट्टस्येव समासबहुला वर्तते। न खलु नाट्योचिता सा। यथा प्रथमाङ्के—

'राजा—इह केचन सखे! जलधितीरान्तिके जयन्ति; .....स्वच्छन्दकन्दलितमुकुन्दकुन्दमुचुकुन्दमुचुलिन्दपिचुमन्दनागपुन्नागनागकेसरहिन्तालतालतमाल—सालरसालकपित्थाश्वत्थबिल्वचिरिबिल्वमधुद्रुमाक्षरुद्राक्षभद्राक्षादिमानेकानोकहनिवहप्रच्छायस्वेच्छाविहरणनिर्वृत्तकेवलविविधमृगालंकृता वनान्ताः।"

तात्कालिकसंस्कृतेः सूचनापि यत्र तत्र प्राप्यते। रघुनाथनायकस्य सदसि "सरसकलासु शिक्षिताः परीक्षितारो विबुधा" आसन्। रघुनाथनायको वाजपेयाभिधं क्रतुवरं सम्पादितवान्। यथा—

नाट्याचार्यः—

"रथ्यावास्त्रिकधेनुकाश्वगजतामुख्याजहद्दक्षिणं
पार्श्वादात्तपदोत्तरं क्रतुवरं तं वाजपेयाभिधम्।
येनार्हं किमप्यहार्यं विभवं साम्राज्यलक्ष्मीपदं
संप्राप्तो रघुनाथभूशतमखो जेजीयते साम्प्रतम्॥" १.२२

तत्कालीनवाद्यानां वादकानां नामान्यपि सूचितानि। यथा

"नटकेसरी—पाणविकवैणिकवैणविकमौरजिकप्रमुखाश्च; यथायोग्यमेतानि पणवाद्यानि वादयन्तु।"

नाटकादेषा सूचना प्राप्यते यत् कलावती रघुनाथभूभृतो राजधानीं स्वबन्धुभिरानीता। तत्रैव तयोः परिणयोऽभवत्। अतस्तस्मिन्काले वरगृहे कन्याया आनयनं तत्र च तस्याः पाणिग्रहणमपि हीनदृष्ट्या न दृश्यते स्मेति प्रतीयते।

## कंसवधम्

नाटकस्यास्य प्रणेता शेषोपनामको नृसिंहसूनुः श्रीकृष्णकविरासीत्। एतन्नाटकं चानेनाकबरमन्त्रिणो राजाटोडरमल्लनाम्नः पुत्रस्य गोवर्धनधारीत्युपनाम्नो गिरिधारिणः प्रेरणया प्रणीतम्। सम्राट् अकबरः खिस्ताब्दीय १५५६ वर्षात् प्रारभ्य १६०५ वर्षपर्यन्तं शासनमकरोत्। अतो राजाटोडरमल्लस्य पुत्रस्य समयः खिस्ताब्दीयसप्तदशशतकस्य प्रारम्भिकभागे निश्चीयते। अतो नाटकस्यास्य रचनाकालोऽपि खिस्ताब्दीयसप्तदशशतकस्य प्रारंभिकभाग इति निश्चप्रचम्। अस्य कथानकमीदृशम्—

'यस्ते मदं दमयिता दनुजेन्द्रकालो बालः स कोऽपि भगवान् क्वचिदप्रमेयः संवर्धते' इत्याकाशवाणीमुपश्रुत्य चिन्ताकुलः कंसः स्वामात्येन सह कृष्णस्य वधं परामृशति। द्वितीयाङ्के कंसदूततालजङ्घस्य गर्गस्य च वार्तालापेन 'कृष्णेन पूतनाशकटादयो हता' इति सूच्यते। तृतीयाङ्के कृष्णमानेतुमक्रूरो गोकुलं गच्छति। चतुर्थाङ्के यशोदानन्दावक्रूरकथनेन रामकृष्णौ प्रेषयितुं कथं कथमपि

सज्जीभवतः। गमनकाले कृष्णो विलपतीः गोपीः समाश्वासयति। पञ्चमाङ्के कृष्णो मथुरां प्राप्नोति। तत्र कंसस्य रजकेन सह विवदमानः कृष्णानुचरः कुब्जकः कृष्णस्याज्ञया पादौ गृहीत्वा भूरि भ्रामयित्वा तं पृथुलशिलातले पातयति। स च मृत्युमुपैति। तदा कृष्णस्य सखायो मनोहराणि वस्त्राणि परिदधति। अत्रान्तरे कुब्जानाम्नी दासी तत्रागत्य कृष्णायाङ्गरागकुसुमताम्बुलादीनि समर्पयति तस्य कृपया मनहररूपं च लभते। तदा रामकृष्णौ स्वसखीभिः सह मथुरावीथीषु परिभ्रमतः। षष्ठाङ्के रामकृष्णौ राजकुलं प्राप्य कुवलयापीडहस्तिनं चाणूरमुष्टिकौ च घातयतः। तदा कृष्णः सिंहासनोपविष्टं कंसमपि हन्ति। सप्तमाङ्के रामकृष्णौ देवकीवसुदेवाभ्यां सह मिलित्वा कंसपितुरुग्रसेनस्य राज्याभिषेकं कुरुतः।'

अनेन प्रकारेण नाटकमिदं कृष्णस्य बाललीलावर्णनेन सह कंसवधकथां प्रस्तौति। यद्यप्यस्य कथावस्तु प्राचीनं तथापीदं नाटकं नवरसपरिपूर्णमेव प्रतिभाति। दीर्घसमाससंवलिताप्यस्य भाषा सरला व्याकरणसम्मता च। कविरयं व्याकरणाचार्योऽप्यासीत्। अस्य मतानुसारम्—

"रसालंकारसारापि वाणी व्याकरणोज्झिता।
श्वित्रोपहतगात्रेव न रञ्जयति सज्जनान्॥" १·२३

नीतिशास्त्रसम्मतानि वाक्यान्यपि यत्र तत्र दृश्यन्तेऽस्मिन्नाटके। यथा—

"नावज्ञेयो रिपुरिति लघुः क्षीणसत्त्वोऽपि विज्ञैः।"
"न खलु विकसद्वैरा धीराः कथंचिदुदासते।"
"क्षत्रस्य संगरमुपेयुष एष धर्मः।"

मालिनीवृत्तस्य माधुर्यमत्र द्रष्टव्यम्—

"मुखरितकलभृङ्गीमाधुरीसाधुरीति-
क्षरदधरमधूलीमोहिताशेषविश्वः।
अमलतमतमालश्यामलः कोमलाङ्गः
समुपसरति नेत्रानन्दनो नन्दसूनुः॥" ४.३०

नाटकेनानेन तत्कालीना संस्कृतिरपि सूच्यते। प्रथमाङ्के सूत्रधारः कथयति—"आर्ये त्वरयन्त्येते नानादिगन्तागताः सकलकलाजलधिसांयात्रिका यात्रिकाः सङ्गीतरङ्गप्रसङ्गाय माम्।" अतस्तस्मिन्काले यात्रिकाणां मनोरञ्जनाय सङ्गीतनाटकादीनि साधनान्यासन्निति सूच्यते। यात्रिका अपि कलाविद आसन्। भूपालाश्च साहित्यसङ्गीतकलाभ्युन्नतिं प्रोत्साहितवन्त इत्यपि ज्ञायते।

——

# श्रीरामः भि० वेलणकरः

आर० डी० लडू

श्रीरामवेलणकरमहानुभावेन स्नातकोपाधिलब्ध्यनन्तरमकारि कार्यं विलसनाख्यमहाविद्यालये मुंबईप्रान्तस्य। विविधपुरस्कारं गृहीतवता, नानाच्छात्रवृत्तीः स्वीकुर्वता, भालावेदान्तपुरस्कारं जयतानेन मुंबईविश्वविद्यालयात् एम० ए० परीक्षा प्रथमश्रेण्यामतीर्यत १९३७ तमेशाब्दे। १९३९ तमेशाब्दे प्रतियोगितात्मकपरीक्षया सुपरीक्षितमेनं 'स्वतंत्रलोकसेवा-आयोगः' पत्रालयाधीक्षपदायाचिनोत्। तदारभ्य भारतवर्षीयविविधप्रदेशेषु विभिन्नविभागेषु सेवाकार्यमकार्षीत्।

संस्कृतेऽधस्तनानि पुस्तकानि तावदनेन विरचितानि—

(१) 'विष्णुवर्धापनम्'

अस्मिन् पुस्तके श्रीमतः व० र० वेलणकरस्य जीवनं तस्यैकषष्ठितमजन्मदिवसोत्सवावसरे वसन्ततिलकेतिवृत्तबद्धैकषष्ठिश्लोकैरुपवर्णितम्।

(२) 'गुरुवर्धापनम्'

उपजातिवृत्तबद्धैरेकषष्ठिश्लोकैरत्र कविः स्वगुरोः प्रोफेसर डा० ह० ड० वेलणकरस्य जीवनचरितमचित्रयत्। तस्यैकषष्ठितमे जनिदिने..............

(३) 'जयमङ्गला'—

इदं पुस्तकं मराठीभाषानिबद्धसंगीतात्मकश्लोकस्य जयमङ्गलाख्यग्रन्थस्यानुवादरूपम्। मौलिकग्रन्थवृत्तमस्मिन्ननुसृतम्। अस्य ग्रन्थस्य मूलरचयिता महाराष्ट्रस्य राज्यकविर्यशवन्तः। "मराठीग्रन्थसंग्रहालयमुंबई" इति संस्थानेन मुंबय्यां संपादितं मूललेखकस्यैकषष्ठिजन्मदिवसोत्सवमुपलक्ष्य प्रकाशतामानीतोऽयं ग्रन्थः।

(४) 'जीवनसागरः'

भारतरत्न डा० म० म० प० व० काणे महोदयस्य एकाशीतितमजन्मदिन-

महोत्सवमुपलक्ष्य रचिते पंचविंशतिपद्यात्मकेऽस्मिन्ग्रन्थे नायकस्य जीवनमुपवर्णितम् ।

(५) संगीतसौभद्रम् (गीवार्णसुधाप्रकाशनम् रु० २)

इदं पुस्तकं स्वर्गीय श्रीकिरोलास्कररचितमराठीनाटकस्यानुवादभूतम् । प्रारब्धो ह्यस्याभिनयेनाधुनिकमराठीरङ्गमञ्चस्य विकासः १८८३ तमेशाब्दे । अद्यत्वेऽपीदमभिनीयते मराठीरङ्गमञ्चे । अनुवादेऽस्मिन् सर्वं संगीतादिकं मूलानुगमेव । मुंबईपूनादिल्ल्यादिस्थानेषु अभिनीतोऽयमनुवाद आत्मनः प्रियत्वं प्रथयति ।

(६) कालिदासचरितम्—( गीर्वाणसुधाप्रकाशनम् )

गीतात्मकमिदं रूपकं कालिदासस्य जीवनं वक्ति । मौलिकं नाम रचयितुरिदं नाटकम् । सन्ति ह्यस्मिन् पञ्चाङ्काः । अभिनयार्थञ्चास्यापेक्षितो भवति पञ्च होरात्मकः कालः । मुंबय्यां देहल्यादिषु च नगरेषु अभिनीतमिदं लब्धवत् साफल्यातिशयं यशः । उज्जयिन्याः कालिदासस्य जीवनमत्र भिन्नप्रकारेणोच्यते ।

(७) रणश्रीरङ्गः—

अस्मिन् पुस्तके निम्नलिखितानि त्रीणि नाटकानि विद्यन्ते—

**(१) कालिन्दी—**

इदं हि एकं नाटकं, यस्य त्रयोऽङ्काः यस्मिंश्च परमोद्देश्यतया गृहीतयोः हिंसाहिंसयोः कलहे उत्तरभारतस्य रूपकात्मकं व्याख्यानं वर्त्तते । कालिन्दीयं यमुनायाः प्रतीकतयाऽत्र वरीवर्त्ति । घण्टाद्वयात्मककालेनाभिनेयमिदं नाटकमाधुनिकरङ्गमञ्चोपयोगि । चरित्रदृष्ट्या सम्पन्नं खल्वेतत् ।

**(२) कैलाशकम्पः—**

अंकत्रयात्मकं संगीतनाटकमेतद् विद्यते । अस्मिन्नुत्तरदिशायां भारतोपरि कृतं चीनाक्रमणं वर्ण्यते । १९६३ तमेशाब्दे मरीचिमासे देहलीनगरात् आकाशवाण्या प्रचारितमिदम् ।

**(४) स्वातन्त्र्यलक्ष्मीः**

झाँसीराज्ञीजीवनादेको झाँसीयुद्धस्योदन्तोऽयं वर्त्तते । प्रचारितमिदं देहलीनगरात् १९६३ तमेशाब्दस्य जूनमासे आकाशवाणीद्वारेण ।

अन्यदेकं 'हुतात्मा' शीर्षकमाकाशवाणीसंगीतनाटकम्, यस्मिन् महर्षिदधीचेर्वलिदानगाथा गीयते, प्रचारितमिदं ए० आई० र० द्वारेण दिल्लीनगरात् १९६३ तमेशाब्दस्य दिसम्बरमासे। अधुना नैतत्प्रकाशितं पुस्तकाकृतौ। किन्तु पण्डितसातवलेकरेण अप्रैलमासे अमृतलताख्यायां त्रैमासिकपत्रिकायामिदं प्रकाशितम्।

लेखकस्यास्य प्रकाशितानि वर्त्तन्ते इतराण्यपि काव्यादीनि येभ्यः कतिचिदत्रोपस्थाप्यन्ते —

(१) विरहलहरी (पंचविंशतिगेयपद्यानां संग्रहः)

(२) यां चिन्तयामि (हर्षप्रधाननाटकम्)

(३) गीर्वाणसुधा (मुक्तककवितानां मिश्रितसंग्रहः)

(४) मराठीकाव्यदर्शनम् (मराठीकवितानामनुवादः)

संगीतसौभद्रम् १९६१ तमेशाब्दे नवम्बरमासे मुंबय्यां ए० आई० र० साधनेन प्रचारितम्।

कालिदासचरितम् कालिदासजयन्तिमहोत्सवावसरे १९६२ तमेशाब्दस्य नवम्बरमासे दिल्लीनगरात् ए० आई० र० द्वारेण प्राचारि।

कालिन्दी प्रचारिता देहली ए० ट० र० द्वारेण १९६४ तमेशाब्दस्य सितम्बरमासे। एवमस्य षण्णाटकानि ए० ट० र० द्वारेण प्रचारितानि। एषु पञ्चानेनैव निर्देशितानि प्रचारितानि च। संगीतसौभद्रस्य प्रचारणेऽसौ साहाय्यकमकार्षीत्।

सद्यः स निर्देशितवानस्ति अभिज्ञानशाकुन्तलस्य प्रचारणं षोडशतमेऽन्तरराष्ट्रियप्राच्यसम्मेलने यद्देहल्यां १९६४ तमेऽब्दे जनवरीमासे संयोजितं भारतशासनेन।

चिरञ्जीवतु वेलणकरमहोदयः संस्कृतभारतीसागरं काव्यरसनिर्झरिणीभिः विभर्त्तुमेवेति कामयामहे सागरिका-मण्डलसदस्याः। आश्चर्यकरं वृत्तमेतदेव यत् प्रत्यक्षमेव संस्कृतविद्यासंस्थानेभ्यो बहिश्चरन्नप्ययं जनः संस्कृतसाहित्यसंवर्धने दत्तचित्तो नित्यमेव नूतनमङ्गलं कर्त्तुं समुत्सहते।

---

# खजुराहोमन्दिरेष्वप्सरोमूर्त्तयः[1]

बिहारीलालः नागार्चः

'खजुराहो' इति स्थानं मध्यप्रदेशस्य छतरपुरमण्डले वर्तते। इदं छतर-पुरनगरादेकोनत्रिंशत् 'मील' दूरं वर्तते। इदानीमयमेको साधारणो ग्रामः परन्तु दशम्यामेकादश्यां च शताब्द्यामिदमेकं भव्यनगरमासीत्। इदं चन्देल-राजवंशस्य प्रमुखं धार्मिकं स्थानमासीत्। अस्य भव्यताया अनुमानं तत्र स्थापितैर्मन्दिरैः कर्त्तुं शक्यते। प्राचीनकालेऽस्य प्रदेशस्य नाम जेजाकभुक्ति-रित्यासीत्।

एवमनुश्रूयते यदस्मिन् स्थाने पञ्चाशीतिमन्दिराण्यासन्। एतेषु केवलं पञ्चदश मन्दिराणि सुरक्षितानि सन्त्यन्येषां तु केवलमवशेषा एव प्राप्ताः। इमानि मन्दिराणि चन्देलराज्ञां शासनकाले विनिर्मितानीत्यत्र प्राप्तैः शिला-लेखैः प्रमाणीक्रियते। अत्रत्यराजसु अनेके प्रतापशालिनः समभवन्। प्रारम्भे हीमे राजानः प्रतीहारवंशस्य राज्ञां सामन्ता अभूवन्। तस्मिन् काले प्रतीहारवंश-स्य राज्ञां राष्ट्रकूटवंशीयै राजभिः सहैकं युद्धमभवत्। तस्मिन् युद्धे हर्षाभिधेनैकेन चन्देलनृपेण प्रतीहाराणां साहाय्यं कृतम् राष्ट्रकूटाश्च पराजिताः। एवम-नुमीयते यदस्या घटनायाः स्मृतिहेतोस्तेन मातङ्गेश्वरमन्दिरं प्रतिष्ठापितम् खजु-राहोनगरे।[2] अस्य पुत्रेण यशोवर्मणा ( लक्ष्मवर्मेत्यपरनामधेयेन ) लक्ष्मणाख्यं मन्दिरं विनिर्मितम्। यशोवर्मणः पुत्रो धङ्गः प्रबलपराक्रमी समभवत्। तेन प्रतीहारवंशीया नृपा अपि पराजिताः। पूर्णरूपेण स्वतन्त्रीभूय तेन शासनं कृतम्। एतेन महाभागेन प्रसिद्धं विश्वनाथमन्दिरं विनिर्मितं. तच्च तत्रैव

---

१. यानि चित्राण्यस्मिन्निबन्धे प्रकाशितानि तानि भारतीयपुरातत्त्वसर्वेक्षण-विभागस्य सौजन्येन।

२. Krishna Deva, 'Ancient India No. 15' P. 44

प्राप्तेनैकेन शिलालेखेन सूच्यते । धङ्गस्य पुत्रो गण्डाभिधानः समभवत् । गण्डस्य काले देवीजगदम्बीचित्रगुप्ताख्यं मन्दिरद्वयं विनिर्मितम् । तस्य पुत्रेण विद्याधरेण सुप्रसिद्धं कन्दारियामन्दिरं प्रतिष्ठापितम्'। मन्दिरेऽस्मिन्नेकस्य स्तम्भस्योपरि 'राजा विरिन्दसमये नवसरसमागमे सुरसुन्दरीणामि'त्येका पङ्क्तिरुत्कीर्णा वर्तते । 'विरिन्द' इति विद्याधरस्यैवैकं प्राकृतं विरुदं वर्तते । कन्दारियामन्दिरं भारतस्य मध्यभागे प्राप्तेषु मन्दिरेषु श्रेष्ठतमं गण्यते । एवमनुश्रूयते यदस्मिन् मन्दिरे 'कन्धार' इति ख्यातः कश्चित् साधुर्न्यवसत् । अस्माद्धेतोरस्य नाम कन्धारिया कन्दारिया वा समभवत् । पर्याप्तप्रमाणाभावादिदं निश्चितरूपेण न कथयितुं शक्यते दन्तकथेयं सत्यमूलिका वा न वेति । एवं 'खाजुराहो' इति स्थानेऽनेकानि मन्दिराणि चन्देलनृपैरथवा तेषां मन्त्रीत्यादिभिः प्रतिष्ठापितानि । तथा हि पार्श्वनाथमन्दिरस्यैकस्यां द्वारशाखायामुत्कीर्णेन शिलालेखेन प्रमाणी-क्रियते यत्केनचित् 'पाहिल' नामधेयेन तस्मै मन्दिरायानेका वाटिकाः प्रदत्ताः । पाहिलस्तु 'धङ्गराजेन मान्य.' समुल्लिखितः । कतिपयैर्विद्वद्भिरनुमीयते यत्त-न्मन्दिरमपि पाहिलेन स्थापितं भवेत् । खजुराहोमन्दिराणि प्रधानरूपेण शैव-वैष्णवसौरजैनसम्प्रदायैः सम्बद्धानि सन्ति । परन्तु सम्प्रदायवैभिन्येन मन्दिराणां कलाशिल्पयोः न किमप्यन्तरं दृश्यते । एतानि मन्दिराणि तलछन्दोर्ध्वछन्दयो-रधिकं साम्यं दर्शयन्ति । चतुष्षष्टियोगिनीति ख्यातं मन्दिरं शाक्तसम्प्रदायानुगं वर्तते । एतस्य तलछन्दोर्ध्वछन्दौ खजुराहो स्थितैरन्यैः सर्वमन्दिरैः भिन्नावेव । 'दूलादेव' इति ख्यातं मन्दिरं 'खजुराहो' इत्यस्यान्तिमं मन्दिरं वर्तते ।

अस्माकं प्राचीनशिल्पशास्त्रीयग्रन्थेषु मन्दिरं देवानां निवासस्थानं निगद्यते । अत एव मन्दिरं सम्पूर्णसृष्टेः प्रतीकं मन्यते । एतस्मिन् पातालमर्त्यस्वर्गादयो लोकाः प्रदर्श्यन्ते । विभिन्नक्रियासु संलग्ना नागाः, मानवा देवाश्च प्रदर्श्यन्ते । गर्भगृहद्वारि उदुम्बरे प्रदर्शिताः मकरवाहा जलदेवता ( उदधिकुमाराः ) नाग-लोकस्य पाताललोकस्य वा प्रतीकानि सन्ति । द्वारशाखासु प्रदर्शितानि मिथुनानि मर्त्यलोकस्य प्रतीकानि सन्ति । तथैवोत्तरङ्गे प्रदर्शिता देवाः, नवग्रहाः, अष्टवसवः, सप्तमातृकाश्च स्वर्लोकस्य प्रतीकानि मन्यन्ते ।

'खजुराहो' इत्यस्य मन्दिरेषु मूर्त्तिकलायाः सफलं प्रदर्शनं समभवत् । वास्तु-कलया मूर्त्तिकलायाः समन्वयोऽयमेतेभ्यो मन्दिरेभ्यः समधिकां भव्यतां सजीवताञ्च प्रददाति । शिवब्रह्मविष्णुनवग्रहगन्धर्वविद्याधरयक्षाप्सरसां प्रदर्शनमतीव मनोहारि वर्तते ।

अप्सरसः खलु स्वर्गीयाः सुन्दर्यः सन्ति । अतस्ताः सुरसुन्दर्य इत्यप्यभिधीयन्ते । एतास्तु देवराजस्येन्द्रस्य सभायाः प्रधानान्यङ्गानि सन्ति । इन्द्रसभायामेता नृत्यं गानञ्च कुर्वन्ति । यदेन्द्रः कस्यापि ऋषेः सुमहतीं तपस्यां पश्यति येन तपसा स ऋषिरिन्द्रपदं प्राप्तुं शक्नुयात् तदासौ तस्य ऋषेः तपोभङ्गार्थं कामदेवेन सह सुरसुन्दरीः प्रेषयतीति पुराणेषु कथा प्रसिद्धा । एता अप्सरसस्तु स्वसौन्दर्येण तस्य ऋषेर्मनः समाकृष्य तं भोगविलासे प्रसक्तं कुर्वन्ति । अनेन विधिना एतास्तस्य मुनेस्तपोभङ्गे समर्था भवन्ति । रम्भाविपुलोर्वशीतिलोत्तमाः प्रधाना अप्सरसः । एतासां कटयः क्षीणाः जघनस्तनानि च पीनानि भवन्ति । उक्तञ्च—

रम्भा च विपुला चैव उर्वशी च तिलोत्तमा ।
मध्यक्षामसमायुक्ताः पीनोरुजघनस्तनाः ॥

— सुप्रभेदागमे ४८ पटले

शिल्परत्नानुसारेण—

दुकूलवसनास्सर्वाः पीनोरुजघनस्तनाः ।
मध्ये क्षौवादिवर्णावतिसौम्याश्च किञ्चित्प्रहसिताननाः ॥
नानालङ्कारसंयुक्ता भद्रपीठोपरि स्थिताः ।
समभङ्गसमायुक्तास्सप्तसंख्याप्सरो स्मृताः ॥

२५ पटले ।

एवंविधमप्सरसां स्वरूपप्रदर्शनं भवितव्यम् ।

एतेषु लक्षणेष्वनेकानि लक्षणानि 'खजुराहो' अप्सरोमूर्तिषु वर्तन्ते । तासां कटयः क्षीणाः स्तनोरूजघनानि च पीनानि दृश्यन्ते । एता नानालङ्कारभूषिताः किञ्चित्प्रहसिताननाश्च सन्ति । एतासां नासिकातीव मनोरमा ।

अद्भ्यः उत्पन्नत्वादेता अप्सरस इत्यभिधीयन्ते। क्षीरसागरमन्थनकाले इमास्तस्मात्समुद्भूताः। इमास्तु स्वर्गीयाः सुन्दर्यो न कोऽपि तासां पतिविशेषो दृश्यते।

खजुराहोकलायामप्सरसः कुत्रचिद्वंशीः वादयन्त्योऽपरत्र तु वीणां वादयन्त्यः प्रदर्शिताः। कुत्रचिदेता जृम्भमाणा ऊर्ध्वबाहवो विद्यन्तेऽन्यत्र तु शिशून् स्तनं पाययन्त्यः। कुत्रचिदेकाप्सराः स्वमुखं करधृतमुकुरे पश्यन्ती अन्यत्र तु नृत्यार्थं नूपुराराणि धारयन्ती विद्यते। कुत्रिचिदेकाप्सराश्चन्दनपात्राच्चन्दनमादाय तिलकं कुर्वन्ती दृश्यतेऽन्यत्र त्वन्याप्सरा अन्यानि प्रसाधनानि कुर्वन्ती विलोक्यते। कुत्रचिदेकाप्सराः कन्दुकेन क्रीडन्त्यालोक्यते। प्राचीनकाले महिलानां कन्दुकक्रीडा प्रसिद्धैव, यथा भासकृते स्वप्नवासवदत्तनाटके दृश्यते। तत्र वासवदत्ता कन्दुकेन क्रीडन्ती प्रदर्शिता। कुत्रचिदप्सरा वृक्षच्छायायां स्थिता वर्तते। एकाप्सरा वृक्षं परिष्वजति। ईदृश्यामवस्थायां सा शालभञ्जिकेति कथ्यते। कुत्रचिदप्सराः स्वकेशेभ्यो जलं पातयन्ती स्नानगृहाद्बहिर्निस्सरति। सा कर्पूरमञ्जरीत्यभिधीयते। कुत्रचिदेतासां जङ्घानामुपरि वृश्चिकः समारोहन् दृश्यते। कुत्रचिदप्सरसो मृदङ्गान् वादयन्त्यो दृश्यन्तेऽन्यत्र तु झल्लकान्। पार्श्वनाथमन्दिरार्धमण्डपस्य पटलेऽप्सरा एका दक्षिणरथिकायां विद्यते या स्वकेशानां प्रसाधनं करोति। तस्याः केशेभ्यो मुक्ताफलवज्जलविन्दवः पतन्ति यान् पार्श्वस्थः कश्चिद् हंसः पिबन्नास्ते। 'खजुराहो' इत्यस्याप्सरस्सु एषानुपमैव वर्तते। कुत्रचिदप्सरसो वस्त्राणि धारयन्त्यः प्रदर्शिता अन्यत्र तु तान्यनावृतानि कुर्वन्त्यो विद्यन्ते। कुत्रचिदेताश्चरणेभ्यः कण्टकानि निष्कासयन्त्यो दृष्टिपथमायान्ति, अन्यत्र जलपूर्णं घटमादाय चलन्त्यः। प्राचार्य जे० एन० बनर्जी महोदयानुसारेणाप्सरोमूर्त्तीनां निश्चितानि लक्षणानि न वर्तन्ते। तास्तु प्रारम्भादेव परमसुन्दरस्त्रीरूपेण प्रदर्शिताः[1]। तस्य मते परस्तादप्सरोमूर्त्तीरिवालम्ब्य गङ्गायमुनयोर्मूर्त्तयः कल्पिताः।

---

1. J. N. Banerji, Development of Hindu Iconography, P. 353.

'खजुराहो' इत्यत्रत्यान्यमूर्त्तिसदृशा एता अप्सरसस्त्रिभङ्गे स्थिता वर्तन्ते। एतासां सम्पूर्णमेव शरीरमतीव रमणीयम्। एतासां भ्रूनेत्रोदरकटिजघनचरणान्यतीव मनोहारीणि। एतास्तु धम्मिल्लं प्रायशो धारयन्ति। कुण्डलवैकक्षकहारकेयूरवलयनूपुराण्यप्येता धारयन्ति। उत्तरीयाधोवस्त्राभ्यामप्येता अलङ्कृताः। एतासामधोवस्त्रमाधुनिकशाटिकावत्प्रतीयते। कुत्रचिदप्सरसां पार्श्वे तासां परिचारिका अपि प्रदर्शिताः।

अस्माभिरेतत् सदैव स्मर्तव्यं यदप्सरोमूर्त्तीनां प्रदर्शनं खजुराहोमन्दिरेषु कुत्रचिज्जङ्घायास्तिसृसु पंक्तिष्वथवा गर्भगृहप्रमुखस्य जङ्घोपरि ( केवलं सान्धारप्रासादेषु ) अथवा महामण्डपपार्श्वकक्षस्य भित्तिस्तम्भयोर्मध्ये प्राधान्येन समभवत्। मण्डपस्य महामण्डपस्य वा स्तम्भोपरि स्थितेषु नागदन्तेष्वप्येता अप्सरोमूर्त्तयः प्रदर्शिताः।

अथाधस्तात् प्रतिमन्दिरमप्सरोमूर्त्तीनां विवरणं प्रस्तुमः।

**१—लक्ष्मणमन्दिरम्—**

(क) जृम्भमाणैकाप्सराः। एषातिभङ्गे स्थितास्ति। तस्याः पार्श्वे परिचारिकैका वर्तते। तस्या वामभागे एकस्य प्रक्षेपणस्योपरि विष्णुमूर्त्तिः प्रदर्शिता। एषा मूर्त्तिः मन्दिरस्य बाह्यदक्षिणपूर्वकोणे सर्वोच्चपङ्क्तौ विद्यते।

(ख) प्रसाधनं कुर्वन्त्येकाप्सराः। वामकरधृतमुकुरा सा स्वमुखं तस्मिन् पश्यति। दक्षिणकरेण सा स्वसीमन्तं विभूषयति। परिचारिका वर्तते तस्याः पार्श्वे। मूर्त्तिरियमुपरिनिर्दिष्टायामेव पङ्क्तौ वर्तते।

(ग) वंशीं वादयन्त्येकाप्सराः। केशपाशोऽस्या अतीव मनोहरः। अस्या मुखं भित्तिं प्रति वर्तते। अस्याः कुचबन्धोत्तरीये तु सुस्पष्टमेव दृश्येते। एषा मन्दिरस्य बाह्यजङ्घायामुत्तरपूर्वकोणे निम्नायां पङ्क्तौ प्रदर्शितास्ति।

(घ) महामण्डपस्योत्तरपूर्वस्तम्भोपरि प्रदर्शितैकाप्सरोमूर्त्तिरस्ति यस्या मुखं प्रतीचीं प्रति वर्तते। इयं लक्ष्मणमन्दिरस्य भव्यतमाप्सरा विद्यते। इयं त्वेकस्य वृक्षस्याधस्तिष्ठति। अस्या दक्षिणहस्ते कन्दुकमेकं वर्तते वामहस्तेन स वृक्षं गृह्णाति। अस्या उभयोः पार्श्वयोरेकैकः परिचारकस्तिष्ठति। अस्याः

शाटीसदृशेऽधोवस्त्रे विकसितानि पद्मपुष्पाणि प्रदर्शितानि। अस्या दक्षिणश्चरणोऽग्रतो वर्तते वामचरणस्तु पृष्ठत एवास्ति। अनेनास्या गमनं सूच्यते। अस्यैव स्तम्भस्योपरि अन्यस्मिन्नागदन्तेऽपरा काचिदप्सराः कन्दुकेन क्रीडन्ती विद्यते। तस्या मुखं तु दक्षिणां दिशं प्रति वर्तते।

(पश्यन्तु भवन्तः १ संख्यकं चित्रम्)

(ङ) अन्तरालस्योत्तरे स्तम्भे दक्षिणमुखी एकाप्सरा वर्तते। सा ऊर्ध्वसंयुतहस्ता जृम्भमाणा प्रदर्शिता। सा त्वेकस्य वृक्षस्याधस्तिष्ठति। अस्या दक्षिणभागे एकः परिचारको वामभागे चैका परिचारिका वर्तते।

(च) अन्तरालस्य दक्षिणस्तम्भोपर्युत्तरमुख्येकाप्सराः। सा तु वृक्षस्याधस्तिष्ठति। सा स्वहस्ताभ्यां केशेभ्यो जलं पातयति। एको हंसस्तस्याः केशेभ्यः पतितान् जलबिन्दून् पिबन्नास्ते। एषा शाटीवदधोवस्त्रमेकं धारयति। अस्या वामभागे एकः परिचारकः स्थितोऽस्ति दक्षिणभागे त्वेकः कूर्चधरः परिचारक आसीनोऽस्ति।

(छ) एकान्याप्सरा अत्र प्राप्ता। एषा त्रिभङ्गे स्थितास्ति। केशपाशोऽस्या अतीव मनोहारी। सा स्ववामहस्ते एकमुत्कीर्णं पुस्तकं गृह्णाति। अस्याः शिरसि मुकुटं न वर्तते। एषा तु वैकक्षकहारकेयूरकङ्कणनूपुरसमायुक्तास्ति। आभूषणान्यस्याः सुष्ठु विधिना प्रदर्शितानि। मेखलया सुबद्धमेकमधोवस्त्रमेषा धारयति। मेखलैषा प्रलम्बनैः समायुक्तास्ति। अस्या दक्षिणहस्तः कटकमुद्रायां वर्तते तथास्या वामहस्तो मेखलासमीपे दृश्यते।

**२—विश्वनाथमन्दिरम्—**

(क) प्रमुखस्य गर्भगृहस्य दक्षिणमुखे कन्दुकेन क्रीडन्त्येकाप्सराः। अस्याः पृष्ठभागस्तु दर्शकस्य सम्मुखीनो वर्तते। एषा वाममुखी वर्तते। दक्षिणहस्ते एषा कन्दुकमेकं गृह्णाति। एषा कुचबन्धं धारयति। केशपाशस्त्वस्या अतीव मनोहरः, अस्या अधोवस्त्रमेकेन रत्नयुतेन कटिबन्धेन सुबद्धमस्ति। कण्ठेऽस्या मालैका वर्तते। न कोऽपि परिचारको दृश्यतेऽस्याः पार्श्वे।

(ख) गर्भगृहस्य दक्षिणपार्श्वकक्षस्य द्वयोः प्रतीचीभित्तिस्तम्भयोर्मध्ये

प्रदर्शितैका जृम्भमाणाप्सराः। अस्या दक्षिणश्चरणो जानुमधः भग्नोऽस्ति। अस्याः पार्श्वे एकः परिचारकस्तिष्ठति। अप्सरसः कुचबन्ध उत्तरीयं च स्पष्टमेव प्रतिभातः। एषा स्वहस्तयोः सामान्ये केयूरे धारयति। अस्या अधोवस्त्रं तु कटिबन्धेन सुबद्धमस्ति। एषा स्थितास्ति।

(ग) गर्भगृहस्य पश्चिमकक्षस्योत्तरीययोर्भित्तिस्तम्भयोर्मध्ये प्रदर्शिता त्रिभङ्गे स्थिता वंशीं वादयन्त्येकाप्सराः। अस्याः पृष्ठभागस्तु दर्शकसम्मुखीनो वर्तते। मुखं त्वस्या भित्तिं प्रतिवर्तते। केशपाशोऽस्या अतीव मनोहरः। अस्मिन् पुष्पाणि सुग्रथितानि सन्ति। अस्याः कुचबन्ध उत्तरीयञ्च सुचारुरूपेण प्रदर्शिते। उत्तरीयं तु वामस्कन्धात्प्रलम्बमानं दृश्यते। दक्षिणहस्ते धृतोऽस्याः केयूरस्तु रमणीयः। अस्या दक्षिणचरणस्य समीपमेका परिचारिका विराजते। अप्सरसश्चरणयोर्नूपुरे विराजेते। इयमप्सरा 'खजुराहो' इत्यस्य सर्वाधिकसुन्दरी-स्वप्सरस्सु गणयितुं शक्यते।

( पश्यन्तु भवन्तः २ संख्यकं चित्रम् )।

(ख) त्रिभङ्गे स्थिता जृम्भमाणैकाप्सरोमूर्त्तिः। एषा मन्दिरस्य बाह्यजङ्घायां दक्षिणपश्चिमकोणे सर्वोच्चपङ्क्तौ स्थितास्ति। अस्या धम्मिल्लं रमणीयमस्ति। एषा कुण्डलवैकक्षकहारकेयूरकङ्कणानि धारयति। अधोवस्त्रं त्वस्या रत्नजटिते-नैकेन कटिबन्धेन सुबद्धमस्ति।

(ङ) मन्दिरस्यास्य बाह्यजङ्घायां दक्षिणपश्चिमकोणे त्रिभङ्गे स्थितैकाप्सरो-मूर्त्तिः। एषा करण्डमुकुटं धारयति। अस्या वामहस्ते पात्रमेकं वर्तते। दक्षिणेन हस्तेन सा स्ववामस्तनं गृहीत्वा तद् दोग्धि वामहस्तगृहीते पात्रे। दैवदुर्विपाकाद्दक्षिणहस्ताग्रभागोऽस्या भग्नः। अस्या मुखाकृतिस्त्वत्यन्तसौम्या वर्तते। अस्या वामहस्तस्य केयूरं कङ्कणञ्च स्पष्टं स्तः। दक्षिणहस्तस्य पृष्ठभागस्तु प्रच्छन्नो वर्तते। अस्या अधोवस्त्रमेकेन कटिबन्धेन सुबद्धमस्ति। अस्याः कर्णयोः कुण्डले स्तः। अस्याः केशपाशोऽपि सुस्पष्टं दृश्यते। अस्याः पार्श्वे एकस्मिन्नन्यप्रक्षेपणे एकाप्सराः स्वहस्ते मृणालमादधाना तिष्ठति। तस्याः शिरोभूषणं धम्मिल्लमस्ति। साप्सरसां सामान्यान्यन्यान्याभूषणानि धारयति।

६

तस्या वामहस्तः कस्याः समीपे प्रलम्बमानोऽस्ति। अस्या मुखाकृतिर्न तादृशी सौम्या यादृशी अस्याः पार्श्ववर्तिन्या अप्सरसः।

(च) मन्दिरस्य बाह्यजङ्घायां दक्षिणपश्चिमकोणे निम्नपङ्क्तौ त्रिभङ्गे स्थितैकाप्सरोमूर्त्तिः। एषा धम्मिल्लकुण्डलवैकक्षकहारकेयूरवलयनूपुराणि धारयति। तया तु हस्ताभ्यां स्वकटिसमीपमेका वंशी गृहीता वर्तते। तस्याः पार्श्वे वामभाग एका परिचारिका तिष्ठति। वंश्याः उपरिप्रान्तः भग्नोऽस्ति।

(६) विश्वनाथमन्दिरं पञ्चायतनमस्ति। एतस्य सहायकस्य दक्षिणपश्चिम-मन्दिरस्य जङ्घायामेकाप्सराः प्रदर्शिता। एको नापितो दासो वास्याः पाद-तलात्कण्टकं निष्कासयन्प्रदर्शितः। नापितस्य स्कन्धात्प्रलम्बमानमेकं पुटं दृश्यते। अप्सरास्तु मुकुटमेकमन्यानि च सामान्याभूषणानि धारयति। नापितस्तु दक्षिण-चरणमस्या ऊर्ध्वीकृत्य पादतलात्कण्टकं निष्कासयति। अप्सरसो वामहस्तो नापितस्य शिरसि वर्तते, दक्षिणहस्तस्तु वामपादतलोपरि।

एषाप्सराः 'खजुराहो' इति स्थानेऽद्भुता विराजते। यद्यपि स्वयमेव स्वपादतलात्कण्टकं निष्कासयन्तीनामप्सरसां प्रदर्शनं 'खजुराहो' इति स्थाने विद्यमानेष्वनेकेषु मन्दिरेषु समभवत्तथापि नापितस्य प्रदर्शनं न कुत्रापि विद्यते। तथा हि विश्वनाथमन्दिरस्यैव बाह्यजङ्घायां दक्षिणमुखेऽप्येकाप्सराः कण्टकं निष्कासयन्ती दृश्यते परन्तु नापितस्य प्रदर्शनं न तत्र विद्यते। अनया धृतान्य-लङ्करणान्यपि सुशोभनानि वर्तन्ते।

(पश्यन्तु भवन्तः ३ संख्यकं चित्रम्।)

**३—कन्दारियामहादेवमन्दिरम्—**

(क) मन्दिरस्यास्य बाह्यजङ्घायां दक्षिणपूर्वकोणे मध्यमपङ्क्तौ तिलकं कुर्वन्त्येकाप्सराः प्रदर्शिता। सा तु करण्डमुकुटं धारयति। तस्या वामस्कन्धा-देकमुत्तरीयं प्रलम्बमानमस्ति। कुचबन्धमपि सा धारयति।

(ख) दृश्यतेऽस्मिन् मन्दिरे एकाप्सरा या दक्षिणहस्ते एकं शिलापट्टं वामहस्ते तु लेखनीं धारयन्ती तया च शिलापट्टोपरि किञ्चिल्लिखति।



विश्वनाथमन्दिरम्

खजुराहो

३ संख्यकं चित्रम्

सन्ति केचिद्विद्वान्सो येषां मते ईदृशी स्थितिः प्रेमपत्रलेखनमेव प्रकटयति। अप्सरसां सामान्यान्याभूषणानि धारयन्ती एषा मन्दिरस्यास्य बाह्यजङ्घायां दक्षिणपश्चिमकोणे त्रिभङ्गे स्थितास्ति।

(ग) तत्रैवैकस्मिन् प्रक्षेपणे स्वहस्ताभ्यां घटमुद्वहन्त्येकान्याप्सराः प्रदर्शिता। घटोऽयमस्या वामहस्तोपरि स्थितो दक्षिणहस्तेन च पिहितमुखो वर्तते।

(घ) अस्यैव मन्दिरस्य बाह्यजङ्घायां दक्षिणपूर्वकोणे मध्यमपङ्क्तौ त्रिभङ्गे स्थिता जृम्भमाणा काचिदप्सरा विद्यते। अस्या अधोवस्त्रेऽनेकानि पुटानि शिल्पिना सुचारुरूपेण प्रदर्शितानि। शाटिकासदृशमस्या अधोवस्त्रं कटिबन्धेन सुबद्धं वर्तते।

अत्रापि प्रक्षेपणान्तरेऽन्याप्सराः प्रदर्शिता।

(ङ) तत्रैव तस्यामेव मुद्रायां कन्दुकेन क्रीडन्त्येकाप्सरा वर्तते। तस्या दक्षिणपार्श्वे परिचारिकैकासीना वर्तते। तस्या द्वयोर्हस्तयोरेकं कन्दुकं वर्तते यत्तया सुदृढं गृहीतमस्ति। इयमप्सरसां सामान्यभूषणातिरिक्तं करण्डमुकुटमपि धारयति।

(च) मन्दिरस्यास्य बाह्यजङ्घायां दक्षिणपूर्वकोणे स्ववामपादमूर्ध्वीकृत्य कण्टकं निष्कासयन्त्येकाप्सराः प्रदर्शिता। सा करण्डमुकुटमप्सरसां सामान्यवेशभूषाञ्च धारयति। तस्याः पार्श्वे न कापि परिचारिका प्रदर्शिता।

**४—पार्श्वनाथमन्दिरम्—**

(क) मन्दिरस्यास्य बाह्यदक्षिणजङ्घायां स्वदक्षिणचरणेऽलक्तकं प्रयुञ्जानैकाप्सरोमूर्त्तिः प्रदर्शिता। त्रिभङ्गे स्थितायाः अस्या वामचरणो भूमौ वर्तते। दक्षिणचरणस्तु सा पृथ्व्या उद्धृत्य कटिपर्यन्तमानीय तस्मिन्नलक्तकं प्रयुङ्क्ते। सा उपरि नीतस्य दक्षिणचरणस्याङ्गुली वामहस्तेन गृह्णन्ती दक्षिणेन हस्तेन तुलिकां गृहीत्वा दक्षिणं चरणमलक्तकेन रञ्जयति। तस्या दक्षिणपार्श्वे परिचारिकैका स्वमुखमूर्ध्वीकृत्य करगृहीतालक्तकपात्रा पश्यति।

(ख) तत्रैव निम्नपङ्क्तौ स्वनेत्रयोरञ्जनं प्रयुञ्जानैकाप्सरोमूर्त्तिर्विद्यते। सा स्वहस्तयोश्चूर्णिका धारयति न तु वलयानि। स्वदक्षिणहस्तेनाञ्जनशलाकां

गृहीत्वा नेत्रयोरञ्जनं प्रयुङ्क्ते। वामहस्ते तस्या मुकुरमेकं शोभते। तस्या धम्मिल्लमपि सुन्दरं वर्तते। तस्या उभयपार्श्वयोर्द्वौ परिचारकौ स्तः। एक आसीनोऽन्यश्च स्थितोऽस्ति। वामपार्श्वस्थितस्य परिचारकस्य स्कन्धादेकः पुटः प्रलम्बितोऽस्ति। अनुमीयते यदस्मिन्पुटे प्रसाधनसामग्री भवेत्। इतर-भूषणानि तु सामान्यान्येव।

(ग) बाह्यप्रतीचीजङ्घायां निम्नपङ्क्तौ भित्त्यां चित्रं कुर्वन्त्या एकस्या अप्सरसोऽतीव सुन्दरं प्रदर्शनं समभवत्। तस्या वामहस्तोपरि वर्णभाजनं वर्तते, दक्षिणहस्तेन सा तूलिकामादाय चित्रयति। त्रिभङ्गे स्थितताया एतस्या स्कन्धा-दुत्तरीयमेकं प्रलम्बमानं वर्तते। सा त्वप्सरसां सामान्यवेशभूषां धारयति। खजुराहोक्षेत्रे केवलमियमेवाप्सराश्चित्रणरता प्रदर्शिता।

(घ) मन्दिरस्यास्य बाह्योदीच्यजङ्घायां निम्नपङ्क्तौ नृत्यन्त्येकाप्सरा दृश्यते। नृत्यरतायास्तस्या दक्षिणहस्तः शिरस उपरि वामहस्तश्चोदरस्य पुरतः स्तः। तस्या वामचरण ऊर्ध्वमुन्नीतः। पादयोः सा नूपुरे धारयति। कश्चित्परिचारकस्तस्याः समक्षं स्थितो वर्तते। स तु स्वमुखं किञ्चिदुन्नमय्याप्सरसं पश्यति।

(ङ) तत्रैव नृत्यार्थं पादयोर्नूपुरे बध्नन्त्येकाप्सरोमूर्त्तिरतीव रमणीया वर्तते। एषा स्वदक्षिणं चरणमुपरि कृत्वा हस्ताभ्यां नूपुरं गृहीत्वा चरणे धारयति। तस्या दक्षिणपार्श्वे परिचारिकैका हस्ताभ्यामन्यन्नूपुरं गृहीत्वा स्थितास्ति।

पार्श्वनाथमन्दिरस्याप्सरोमूर्त्तयो दीर्घतराः सन्ति।

### ५—आदिनाथमन्दिरम्—

(क) मन्दिरस्यास्य बाह्यप्रतीच्यजङ्घायां त्रिभङ्गे स्थितताया वंशीं वादयन्त्या अप्सरसो मूर्त्तिर्दृश्यते। सा तु स्वहस्ताभ्यां वंशीं गृह्णाति। दैवदुर्विपाकाद्वंश्या एकः प्रान्तो भग्नोऽपरं प्रान्तं सा स्वयमेव गृह्णाति। सा तु करण्डमुकुटं धारयति। न कापि परिचारिका दृश्यते तस्याः समीपम्।

मन्दिरस्याप्सरसः प्रायशः करण्डमुकुटं धारयन्त्यः प्रदर्शिताः ।

( ख ) एकाप्सरोमूर्त्तिः मन्दिरस्यास्य बाह्यदक्षिणजङ्घायां नृत्यमुद्रायां प्रदर्शिता । सा करण्डमुकुटकुण्डलवैकक्षकहारकेयूरवलयनूपुराणि धारयति । तस्या एको हस्त ऊरुपर्यन्तं प्रलम्बमानोऽस्ति । अपरहस्तस्तु शिरसि वर्तते । तस्याः स्कन्धे उत्तरीयमपि शोभते । तस्याः पादयोः समीपमेकः परिचारको जानुभ्यामासीनो वर्तते । ज्ञायते यदेष परिचारकस्तामप्सरसं नूपुरं पर्यधापयत् । परन्त्वेष भग्नावस्थायां वर्तते । अत एवेदं कथयितुं न शक्यते यत् स किं कुर्वन्नास्ते ।

**६—देवीजगदम्बीमन्दिरम्—**

मन्दिरेऽस्मिन् 'खजुराहो' इत्यस्य कतिचन सर्वश्रेष्ठा मूर्त्तयो दृश्यन्ते कामासक्तनायकनायिकानाम् ।

अप्सरोमूर्त्तयोऽप्यत्र सुचारुरूपेण प्रदर्शिताः । तास्तु नानाविधासु मुद्रासु दृश्यन्ते ।

( क ) बाह्यदक्षिणजङ्घायां स्वमस्तके तिलकं रचयन्ती दृश्यते एकाप्सराः ।

( ख ) बाह्यदक्षिणजङ्घायां जृम्भमाणैकाप्सरा अस्मन्मते मन्दिरेऽस्मिन् मनोज्ञतमा वर्तते । त्रिभङ्गे स्थितैषा करण्डमुकुटकुण्डलवैकक्षकहारकेयूरकङ्कणनूपुराणि धारयति । तस्या वामस्कन्धादेकमुत्तरीयं प्रलम्बमानं दृश्यते । अस्या अधोवस्त्रं मेखलया सुदृढं बद्धमस्ति । मेखलायाः पाशाः प्रलम्बन्ते ।

**७—चित्रगुप्तमन्दिरम्—**

एतन्मन्दिरं तु देवीजगदम्बीमन्दिरस्य समकालीनमेव मन्यते ।

(क) बाह्यजङ्घायां दक्षिणपूर्वकोणे सर्वोच्चपङ्क्तौ वंशीवादनं कुर्वन्त्येकाप्सरोमूर्तिः प्रदर्शिता । सा तु करण्डमुकुटं धारयति । केशपाशोऽप्यस्या अतीव मनोहरः । विश्वनाथमन्दिरे वंशीवादनरताया अप्सरसः सदृशमस्या अपि मुखं भित्तिं प्रति वर्तते । वेशभूषा त्वस्याः 'खजुराहो' इत्यस्यानेकासामप्सरसां सदृशी वर्तते । अस्या आभूषणानि रत्नयुतानि न प्रतिभान्ति । सा हस्ताभ्यां वंश्याः एकं प्रान्तं गृह्णाति । वंश्या अपरप्रान्तोऽस्या मुखोपरि वर्तते । उत्तरीयमस्याः स्कन्धात्प्रलम्बमानं दृश्यते ।

(ख) अन्तरालस्य दक्षिणभागे स्वाधोवस्त्रं विमोचयन्त्या एकस्या अप्सरसः सुन्दरमूर्तिर्विद्यते । सा स्ववामहस्तेन स्वाधोवस्त्रमपसारयन्ती प्रदर्शिता । दक्षिणहस्तस्त्वस्याः शिरसि वर्तते । मुकुटमस्या भग्नं दृश्यते । आभूषणान्यस्या न तथा सुचारूपेण प्रदर्शितानि यथान्यासामप्सरसाम् । एषा त्रिगुणमेकं रत्नयुतं हारं धारयति ।

## ८. जवारीमन्दिरम्

उत्तरपूर्वजङ्घायामेकाप्सरा विद्यते । त्रिभङ्गे स्थितायास्तस्या कण्ठे वैकक्षकमेकं वर्तते । हस्तयोः सा कङ्कणे धारयति । दक्षिणहस्तेन स्वकेशान् गृहीत्वा सा जलं पातयति । वामहस्तस्तु तया स्वस्तनयोरुपरि धृतः । मुखमस्या अप्सरसो भग्नं दृश्यते । तस्याः शाटीसदृशमधोवस्त्रमपि कट्याः पतद् दृश्यते । सा तु पुरोमुखी वर्तते । सद्यः स्नातत्वादेषा कर्पूरमञ्जरीत्यभिधीयते ।

(ख) बाह्यदक्षिणजङ्घायां जृम्भमाणैकाप्सरा दृश्यते । सा तु त्रिभङ्गे स्थिता । तस्याः कृतप्रसाधनाः केशा अतीव रमणीयाः । तस्या नाभिसौन्दर्यं शिल्पिना सुचारुरूपेण प्रदर्शितम् । आभूषणानि तस्या रत्नयुतानि । सा तु दक्षिणमुखीना वर्तते ।

## ९. वामनमन्दिरम्—

(क) मन्दिरस्यास्य बाह्यजङ्घायां दक्षिणप्रतीच्यकोणे प्रदर्शिता जृम्भमाणैकाप्सराः । तस्या हस्तौ शिरस उपरि संयुतौ । तस्याः केशाः सुसंयमिताः वर्तन्ते । तस्या नाभिः सुचारुरूपेण प्रदर्शिता । तस्याः शिरसि मुकुटं न वर्तते । स्वकर्णयोः पद्मप्रतिमं सुन्दरं पुष्पं धारयति । सा स्वमुखं वामतः कृत्वा जृम्भते । आभूषणानि तस्या रत्नयुतानि सन्ति ।

(ख) मन्दिरेऽस्मिन् बाह्यदक्षिणपश्चिमजङ्घायां स्ववामहस्तेन नेत्रे पिदधती एकाप्सरोमूर्तिर्विद्यते । सा करण्डमुकुटं धारयति । कुण्डले तस्या अतीव मनोहरे । तस्या वामहस्तस्तु कटिसमीपं वर्तते । तस्या भ्रुवावतीव मनोहारिण्यौ ।

१०. दूलादेवमन्दिरम्—

(क) अस्मिन् मन्दिरे 'खजुराहो' इत्यस्य कतिचनातीव मनोहारिण्योऽप्सरसो दृश्यन्ते। मण्डपमहामण्डपयोर्मध्येऽन्तरालस्यैकस्य भित्तिस्तम्भस्योपरि नृत्यपरायणाया एकस्या अप्सरसः सुन्दरमूर्त्तिप्रदर्शिता। तस्या वामभागे एको विद्याधरो मृदङ्गं वादयन् दक्षिणभागे त्वन्यो विद्याधरो झल्लके वादयन् प्रदर्शितौ। सा स्वशिरसि मुकुटं धारयति। तस्याः पृष्ठभागे केशपाशो दृश्यते। दैवदुर्विपाकादस्या अप्सरसो दक्षिणश्चरणो भग्न अस्या वामचरणस्तु नृत्यमुद्रायां दृश्यते। कफोण्या घूर्णितस्तस्या वामहस्तो नृत्यमुद्रायामुपरि नीतः। नृत्यन्त्यास्तस्याः स्कन्धोपरि स्थितमुत्तरीयं वायुना कम्पते। सा तु कुण्डलवैकक्षकहारकेयूरवलयपादकटकादीन्याभूषणानि धारयति। कटिबन्धेन सुबद्धमेकमधोवस्त्रं तया ध्रियते। (पश्यन्तु भवन्तः ४ संख्यकं चित्रम्)।

(ख) अन्तरालस्य दक्षिणभित्तिस्तम्भस्योपरि नृत्यन्त्येकाप्सरोमूर्तिर्दृश्यते। दुर्भाग्यवशादस्या द्वयोर्हस्तयोः कश्चिदंशः, स्तनयोरुपरिभागः, जान्वोर्निम्नभागश्च भग्नाः। प्रतीयते यदस्या दक्षिणहस्तो नृत्यमुद्रायामुपरि स्थापितः वामहस्तश्चाधस्तादास्ताम्। मेखलादीन्यन्यान्याभूषणानि अनया धृतानि रत्नयुतानि सन्ति। केशपाशोऽप्यस्या अतीव सुन्दरोऽस्ति। एषा तु कुण्डलवैकक्षकहारान् धारयति। अस्या भुजयोरुपरि केयूरयोर्भग्नभागो दृश्यते। चरणयोः समीपेऽस्या एकः परिचारकोऽप्यस्ति।

(ग) महामण्डपस्य दक्षिणभागे एकोऽप्सरोयुतो नागदन्तो दृश्यते। अस्योपरि तिस्रोऽप्सरसस्त्रिभङ्गे स्थिताः। तासु प्रत्येकं पृथक-पृथगधिष्ठाने स्थितास्ति। प्रत्येकमेकस्य वृक्षस्याधस्तिष्ठति। एतेषां वृक्षाणां प्रत्येकं शिखरमेकेन शार्दूलमुखेन मण्डितमस्ति। एतास्तु शालभञ्जिकाः। आसु प्रत्येकमप्सरा मुकुटकुण्डलवैकक्षकहारकेयूरपादकटकनूपुराणि धारयति। प्रत्येकैकमधोवस्त्रं धारयति। तत्तु मेखलया सुबद्धमस्ति। प्रत्येकैकमुत्तरीयमपि धारयति। दक्षिणवर्तिन्या अप्सरसो दक्षिणहस्तो मुखोपरि निहितोऽस्ति वामहस्तस्तु कट्युपरि वर्तते। पूर्णरूपेण सुरक्षितेयमप्सराः। मध्यवर्तिन्या अप्सरसो हस्तौ पादौ च भग्नौ

तस्या रत्नयुता मेखला सुस्पष्टं प्रतिभाति। वामवर्तिन्यप्सराः पूर्णरूपेण सुरक्षितास्ति। तस्या वेशभूषा तु दक्षिणवर्तिन्या अप्सरसस्तुल्यास्ति। स्वदक्षिणहस्ते सा पुष्पगुच्छकमेकं गृह्णाति। तस्या वामहस्तो मेखलासमीपं लम्बमानो दृश्यते।

**११—चतुष्षष्ठियोगिनीमन्दिरम्—**

न दृश्यते काप्यप्सरोमूर्त्तिरस्मिन्मन्दिरे।

**१२—चतुर्भुजमन्दिरम्—**

अनेका अप्सरोमूर्त्तयोऽत्र विद्यन्ते परन्तु तास्तु सामान्या एव।

'लालगुआंमहादेव खाखरामठघण्टाई' इति ख्यातानि त्रीणि मन्दिराणि, अर्द्धभग्नावस्थायां वर्तन्ते खजुराहोक्षेत्रे। 'ब्रह्ममतङ्गेश्वर' इति ख्याते मन्दिरे साधारण एव। एतेषु पञ्चसु मन्दिरेषु न किमपि वैचित्र्यं दृश्यते। तानि तु साधारणान्येव। अप्सरोमूर्त्तीनामेषु मन्दिरेष्वभावः परिलक्ष्यते।

इत्थं वयमिदं कथयितुं शक्नुमो यदतीव रमणीयं वर्तते प्रदर्शनमप्सरोमूर्त्तीनां खजुराहोकलायाम्। यद्यपि भुवनेश्वरमन्दिरेष्वपि सम्भवत्प्रदर्शनमेतासां परं न दृश्येते तत्रैतादृशं वैचित्र्यं वैविध्यं च। सर्वैः कलासमीक्षकैरेता मूर्तयः सौन्दर्यस्यानुपमाः प्रतिमा मन्यन्ते। कलासौन्दर्येणाप्सरोमूर्तयः सर्वेषामेव दर्शकानां चेतो हरन्ति। भारतीयकलायामेतासां मूर्त्तीनां शाश्वतं महत्त्वं निर्विवादम्।

——

# सागरविश्वविद्यालये संस्कृतगवेषणम्

भूपतिभट्टः

सागरविश्वविद्यालयस्य संस्कृतविभागे विगतेऽस्मिन् वर्षे (१९६३–६४) शोधकर्मणो विशिष्टा प्रगतिः परिलक्षिता। चत्वारो विद्यार्थिनः पीएच् डीत्युपाधये स्वस्वशोधनिबन्धान् समर्पितवन्तः। सर्वेषामेव शोधकर्मरतानां च्छात्राणां महोत्साहकरं वृत्तमिदं विद्यार्थिनां विदुषां च प्रमोदाय स्यादिति संस्कृतसाहित्यजगति तद्विवरणं प्रस्तुमः।

प्रोफेसर—डा० रामजीउपाध्यायस्याध्यक्षे विभागस्य शोधप्रवृत्तिरुत्तरोत्तरमुपचीयमाना प्रस्थानद्वयमनुसरति। तथा ह्येका प्रवृत्तिः सर्वविश्वविद्यालयसामान्या प्राचीनसाहित्यतत्त्वादिसमीक्षणपरा, अपरा पुनः संस्कृतसाहित्यस्य भृशं समुपेक्षितस्य सद्योऽतीतकालस्य कविनिबन्धकदार्शनिकानां कीर्तिसमीक्षया तन्मर्यादानिरूपणपरा। सन्ति बहवो विद्वांसो यन्मते अर्वाचीनसंस्कृतसाहित्यस्य तात्त्विकमध्ययनं वैयर्थ्यावहम्। ईदृशं मतं नैवास्माभिः समर्थयितुं शक्यते। स्वदेशस्य यदैतिह्यं तस्य सम्यग्ज्ञानं विना नैव सम्भाव्यते नृणामुत्कर्षः। अतः प्रशस्योऽयं मार्गः संस्कृतकवीनामर्वाचीनकालभवानामनुसन्धानात्मकः।

प्राचीनविषयेषु विभागस्य दृश्यते महाभारते विशेषो भरः। डा० उपाध्यायस्य निर्देशने महाभारतमवलम्ब्य प्रथमं शोधकर्म विभागप्राध्यापिकया श्रीवनमालाभवालकरदेव्या 'महाभारते नारी'ति ग्रन्थं निबध्य कृतम्। डा० वनमालाभवालकरदेव्या निर्देशने द्वितीयो महाभारतीयः शोधनिबन्धः कामेश्वरनाथमिश्रेण 'महाभारते लोककल्याणस्य राजकीया योजना' नाम समर्पित आसीत्। वर्षेऽस्मिन् कुमारीशशिबालाश्रीवास्तवेन डा० उपाध्यायस्य निर्देशने 'महाभारतीयो धर्मविमर्श' इति तृतीयं महाभारतीयं शोधकर्म उपाध्यर्थं समर्पितम्। अन्ये च बहवश्छात्रा एवमेव महाभारतीयतत्त्वानि गवेषमाणाः कर्मनिरताः सन्ति।

नवीनविषयेषु वर्षेऽस्मिन् द्वौ शोधनिबन्धौ समर्पितौ। श्रीरामगोपालमिश्रः संस्कृतपत्रकारितेति विषयमवलम्ब्य स्वकीयं शोधनिबन्धं परीक्षार्थमुपहृतवान्। श्रीहीरालालशुक्लश्च अप्पाशास्त्री राशिवडेकरमहाभागस्य जीवनं तत्कृतीश्चाधिकृत्य शोधनिबन्धमुपाहरत्।

ऊनविंशविंशशतकयोः संस्कृतसाहित्यस्याभूद् बहुमुखी गतिः। तासु संस्कृत-पत्रिकाप्रकाशनं विशिष्य महत्त्वं भजते। १८७० ई० वर्षाद् विद्योदयादिपत्राणां प्रकाशनं भारतस्य सर्वेषु क्षेत्रेषु संस्कृतानुरागिणां विदुषां प्रयासेन समारब्धम्। तस्मात् कालादारभ्य संस्कृतपत्रिका अद्यावधि प्रकाश्यन्त एव। एतासां पत्रिकाणां विषये संस्कृतज्ञाः संस्कृतानुरागिणश्च जना अज्ञप्रायाः, यच्च महदुद्देश्यं पत्रपत्रि-काभिः साधितं तदपि न जनमनोयोगविषयमिति सत्यमेवेयं स्थितिर्दुःखावहा। बहूनां विदुषां वैदुष्यप्रकर्षोऽद्यापि पत्रिकाणां पत्रेष्वेव निगूढं स्थितः संस्कृतस्य क्षेत्रविस्तारं प्रमाणयितुं नेष्टे। वस्तुतस्तु पत्रिकाणामेतासामवलोकनेन स्पष्टं प्रतिभासते मिथ्यात्वं संस्कृतं मृतभाषेति प्रवादस्य।

संस्कृतस्य युगोपयोगित्वं सार्वकालिकत्वं च स्फुटं प्रमाणीक्रियेते पत्रिकाभिः। आसां न केवलं महत्त्वमपि तु इयत्तया परिगणनमपि नासीदद्यावधि परिज्ञातम्। श्रीमता मिश्रेण स्वकीये शोधनिबन्धे तत्तेषां पत्राणां विषये सर्वविधं ज्ञातव्यं समीक्षणपूर्वं संस्थापितम्। एतस्मिन्नद्यावधि प्रकाशितानां संस्कृतपत्राणां काला-नुक्रमिकैका सूची संख्यावैपुल्येन ध्रुवं प्रमोदयिष्यति चेतः संस्कृतानुरागिणाम्। वर्तमानयुगीनसंस्कृतसाहित्यस्य प्रमुखस्यास्याङ्गस्यैतिहासिकपर्यालोचनेन श्रीमान् मिश्रः सुदीर्घकालादनुभूतस्याभावस्य निराकरणं कृतवान्।

द्वितीयं शोधकर्मापि महत्त्वपूर्णम्। महाराष्ट्राभिजनः स आसीद् राशिवडे-कराह्वोऽप्पाशास्त्री(१८७३–१९१३)येन संस्कृतसाहित्यस्य सम्पादितोमहानभ्युदयः। संस्कृतपत्रसम्पादकेषु महाभागस्यास्य नाम प्रथमस्थानमर्हति। संस्कृतचन्द्रिका-सुनृतवादिनीति पत्रद्वयं सम्पादयतानेनासंख्यैः काव्यनिबन्धनाटकसमालोचनादिभिः समृद्धतरीकृतः संस्कृतसाहित्यकोशः। समकालिकैर्विद्वद्भिः विद्यावाचस्पत्युपाधिना भूषितोऽसावाजीवनं संस्कृतचन्द्रिकां प्रकाशयन् स्वस्यानुपमं संस्कृतानुरागं

प्रमाणीकृत्य चिरस्थायि यशः प्राप्तवान् । श्रीहीरालालशुक्लोऽस्य विदुषो जीवनं साहित्यकर्म चाधिकृत्य निबद्धवान् समीक्षापूर्वं निबन्धम् ।

एतद्वर्षीयस्तुरीयः शोधनिबन्ध ओम्प्रकाशहर्षेण समर्पितः । अनेन डा० भवालकरदेव्या निर्देशने 'कथासरित्सागरस्य सांस्कृतिकमध्ययनं' शोधनिबन्धरूपेण समर्पितम् ।

ये केचन विद्यार्थिनो गवेषमाणाः सन्ति तेषामपि विषयाणां संक्षिप्तः परिचयः प्रस्तूयते । प्राचीनसंस्कृतसाहित्यमधिकृत्य विभागेऽस्मिन् श्रीमतीपद्माभार्गवः पौराणिकोत्सवानां स्वरूपवैचित्र्यादिकमवलम्ब्य डा० उपाध्यायस्य निर्देशने निबन्धरचनायां तत्परास्ते । एवमेव डा० भवालकरदेव्या निर्देशने प्रेमनारायणद्विवेदी वैष्णवपुराणेषु आचारसमीक्षेति विषयं गवेषयते । डा० उपाध्यायस्याध्यक्षे गौतमप्रसादमिश्रः 'संस्कृतसाहित्ये पारिजातहरणकथाया विकास' इति, कुमारीसाधनागुप्त 'उपनिषदां संस्कृतिरिति, महावीरप्रसादजैनः 'सेतुबन्धकाव्यमि'ति च विषयानधिकृत्य स्वस्वनिबन्धरचनायां व्यापृताः सन्ति । ऋग्वेदीयद्वितीयमण्डलस्य सायणभाष्यस्य समीक्षणकर्मणि सिद्धनाथशुक्लो डा० योगेश्वरपाण्डेयस्य निर्देशने संलग्नः ।

खृष्टीयसप्तदशशतकादारभ्य संस्कृतसाहित्यस्य विकासक्रमः कीदृगासीदित्यस्य साहित्यदृशा, ऐतिहासिकसरणिमनुसृत्य समीक्षणमस्मिन् विभागे शोधकर्मविषयरूपेण समारब्धम् । डा० रामजी उपाध्याय-विश्वनाथभट्टाचार्ययोर्निर्देशने कतिपये विद्यार्थिनः प्रतिशतकमेतत् समीक्षणकर्म प्रारब्धवन्तः । संस्कृतनाट्यमवलम्ब्य प्रवृत्तमधुना गवेषणम् । तत्र सप्तदशविंशशतकयोः संस्कृतनाटकस्य प्रकृतिप्रवृत्तिनिरूपणे यथाक्रमं संलग्नौ डा० उपाध्यायनिरीक्ष्यमाणौ शङ्करलालस्वर्णकारो गुलाबचन्द्रजैनश्च । अष्टादशोनविंशशतकयोस्तन्निरूपणे डा० भट्टाचार्यस्य निर्देशमनुसरन्तौ यथाक्रमं कार्यरतौ विहारीलालनागार्चः शिवदर्शनतिवारी च ।

दुःसम्पादमेतत् कर्म स्वीकृत्य विभागेनानेन ध्रुवं प्रादर्शि संस्कृतानुरागस्य पराकाष्ठा । विदितचरमेव संस्कृतज्ञानां यन्न वयं संस्कृतसाहित्ये दृढादरा विशेषतोऽर्वाचीनकालभवे । असंख्येया ग्रन्थाः शतकेष्वेषु विरचिताः, ग्रन्थकर्तुः

प्रयासेन मुद्रिताश्च बहवः परमौदासीन्येन समाजस्य न तेऽद्यत्वे सुखमासाद्यन्ते। संस्कृतलेखकाश्च नैव प्रान्तीयाः, यथार्थतो हि ते भारतीयाः। भारतस्य सर्वत्र प्रोदभवन् परःसहस्राः कवयितारो येषां संस्तवमपि प्राप्तुमपेद्यते महानायासः। बहूनि सन्ति काव्यनाट्यानि येषां नामोल्लेखमात्रमेव प्राप्यते, बहूनां पुनर्मुद्रितासु पुस्तकसूचीष्वपि न दृश्यते समुल्लेखः। ईदृशे व्यतिकरे ध्रुवमनुभूयन्ते गवेषकैर्महान्तोऽन्तरायाः। तथापि संस्कृतसाहित्यस्य पूर्णाङ्गेतिहासदिदृक्षूणामस्माकं सानुरागेयं प्रणोदना गवेषकेभ्यः—न विघ्नैर्हतोत्साहा भवन्तु भवन्तः, संस्कृतभारत्याः प्रसादेनावश्यं सफलीभविष्यन्ति भवतां श्रम इति। सर्वे च संस्कृतप्रणयिनोऽनुरुध्यन्ते सप्रश्रयम्—श्रीमद्भिः सर्वैः स्वपरिचितानां संस्कृतकविनिबन्धकृन्नाट्यकाराणां वृत्तान्तं विज्ञापयद्भिः कर्मण्यस्मिन् साहायकमाचरणीयमिति। विज्ञापनमेतत् सादरमङ्गीकरिष्यति विभागोऽयम्। काव्यनाट्यग्रन्थाः कुत आसादनीया इति ज्ञानमपि नितरामपेद्यते।

यथा हि नाट्यमवलम्ब्य प्रवृत्तं गवेषणकर्म तथैव गद्यपद्यदर्शनज्योतिषादिविषयानप्यवलम्ब्य प्रतिशतकं गवेषणं प्रारभ्यतामिति सप्रत्याशमनुरुध्यतेऽस्माभिः संस्कृतविभागः सागरविश्वविद्यालयस्य।

एवमेवान्येऽपि आधुनिककालसम्बद्धा विषया गवेष्यन्तेऽत्रत्यैर्गवेषकैः। तथा हि बृहस्पतिकल्पस्य महामहोपाध्यायरामावतारशर्मणो जीवनं तत्कृतीश्चाधिकृत्य झा-अच्युतानन्दशर्मा निबन्धरचनायां व्यापृतः। रमेशवाजपेयी 'संस्कृतसाहित्ये गान्धिवादस्य प्रवृत्तिं' निरूपयन्नास्ते। महदिदमाश्चर्यकरं यत्संस्कृतभाषायामेव गान्धिचरितमाश्रित्य निबद्धमिदं प्रथमतया महाकाव्यम्। हिन्दीभाषायामपि न दृश्यते महाकाव्यमीदृशम्। एवं हि नवीनविषयैरेभिः संस्कृतसाहित्यस्य सार्वभौमत्वं सार्वकालिकत्वमसामान्यता च स्फुटं प्रमाणयिष्यन्ते।

बहूनां रामायणानामन्योन्यं सम्पर्कसादृश्यादीन्निरूपयितुं श्रीमत्या भवालकरदेव्या निर्देशने कर्मनिरता श्रीमत्यम्लाडी नूनमधिरामायणं नवीनं तथ्यादिकमुपाहरिष्यति। 'वाल्मीकेः काव्यदर्शन'मिति विषयं गवेषमाणा श्रीमती निर्मलोपाध्याया डा॰ भट्टाचार्यस्य निर्देशमनुसरन्ती कथमादिकवेः काव्याल्लौकिक-

साहित्यस्यालङ्कारादिविषयाणां च विकासो जात इति निरूपयति । किशोरीशरण-त्रिपाठी 'भागवतस्य सांस्कृतिकमध्ययनं' निबध्नन्नास्ते ।

इत्थं संस्कृतविभागोऽयं प्राचीननवीनोभयमार्गयोर्गवेषणबुद्धिं नियोज्य संस्कृतानुरागिणां प्रशस्यतां भजते । कालत्रयेषु भूतकालस्य ज्ञानं वर्तमानस्य प्रकर्षं सम्पादयति, तस्मिंश्च प्रकृष्टे भविष्यं मनुजानां कल्याणमावहति । मन्ये, अनयैव भावनया भूतभवतोः कालयोरनुसन्धाने युगपदियं स्तुत्या प्रवृत्ति-र्विभागस्येति ।

—

# संस्कृतवृत्तम्

डा० विश्वनाथभट्टाचार्यः

## स्वागतं नवीनराष्ट्रनायकानाम्

कालहतकेन समपहृते मनस्विनि प्रधानमन्त्रिणि जवाहरलालनेहरुमहाभागे राष्ट्रियमहासभया तत्स्थाने श्रीमान् लालबहादुरशास्त्री प्रधानमन्त्रित्वेन वृतः। शास्त्रिमहाभागस्य सर्वसम्मत्या निर्वाचनं प्रजातन्त्रविधेर्भारते दृढमूलत्वं तथा च तस्य योग्यतानुगुणत्वं प्रमाणयति। राष्ट्रशासने प्रजातन्त्रविधिरेव सर्वानन्यविधीनतिशेते इति तु प्रजातान्त्रिकराष्ट्रैर्ब्रिटेनामेरिकादिदेशैर्नित्यमुत्कर्षवद्भिः सुस्पष्टं प्रदर्शितम्। प्रजातन्त्रविधेस्त्रीणि मूलानि—वाक्स्वातन्त्र्यम्, सङ्घस्वातन्त्र्यम्, वैधानिकशासनं चेति। भारते त्रीण्येतानि स्वातन्त्र्यप्राप्तेरनन्तरमुत्तरोत्तरं प्रकर्षवन्तीति सामान्यतो राष्ट्रियमहासभा, विशेषतश्च स्वर्गता नेहरुमहाभागाः सर्वेषां भारतीयानां कृतज्ञतामर्हन्ति। सत्स्वपि विच्युतिप्रकरेषु प्रजातन्त्रस्य सिद्धान्ता रूढमूलाः स्थिरायतिकाश्च सञ्जाताः। प्रजातन्त्रस्य साफल्यं न केवलं मन्त्रिमण्डलाधीनमपि तु प्रजामात्रस्य बलवद्राष्ट्रानुरागनिर्भरम्। द्वितीयप्रधानमन्त्रिवरणे सोऽनुरागोऽस्माभिः प्रदर्शितः। स एवानुरागः प्रचीयतामस्माकम्।

एतदेव वयं नूतनप्रधानमन्त्रिणः कामयामहे। स्वातन्त्र्यसंग्रामस्याकैशोरं सैनिकोऽयं स्वराष्ट्रस्य दौर्बल्यं बलस्थानञ्चेत्युभयं विजानाति, अप्रतिमजननायकाभ्यां गान्धिनेहरुभ्यां सनाथीकृतः सर्वेषां भारतीयानामास्थाभाजनञ्च। पतनहेतुभूतानि भेदबीजानि समुन्मूल्य, दुर्नीतिप्रसरं निराकृत्य, ऐक्यभावनां दृढीकृत्य भारतस्य भौतिकीं समृद्धिमाध्यात्मिकीं समुन्नतिञ्च त्वरयितुं सन्नद्धोऽयं भविष्यतीत्यत्र नास्माकं सन्देहः। सर्वान्तःकरणेन सर्वेषामस्माकं प्रतिनिधीभूतस्य श्रीमतो लालबहादुरशास्त्रिणः साफल्यं सुस्वास्थ्यं च कामयामहे।

## मध्यप्रदेशे संस्कृतविश्वविद्यालयः

स्वतन्त्रे भारते भारतीयसंस्कृतेर्मूलाधारस्य संस्कृतस्य संरक्षणं सम्वर्धनं च विशेषतः काम्ये। अस्मिन् विषये केन्द्रशासनं कतिपयराज्यशासनानि च युक्त-चेष्टानि। केन्द्रशासनं संस्कृतशोधकर्मार्थं वृत्तीः, अभिनवसंस्कृतसाहित्यनिर्माणार्थं पुरस्कारांश्च परिकल्प्य संस्कृतानुरागिणां प्रशंसाभाजनं शिक्षाविदां च कृतज्ञतास्पदं सञ्जातम्। शिक्षायाः पूर्णाङ्गो विकास एव राष्ट्रसमुदयार्थं काम्यः स च संस्कृतशिक्षाया विकासं विना व्यर्थत्वमावहेदिति शिक्षानीतिज्ञैरवश्यं ज्ञातव्यम्। उत्तरप्रदेशबिहारराज्ययोश्च शासनाधिकारिभिः सत्यमेतद् बुद्ध्वं संस्कृतशिक्षार्थं चोभयत्र संस्कृतविश्वविद्यालयौ संस्थापितौ। उदारोऽयं कल्पः सर्वैं राज्यशासनैः साग्रहमविलम्बं च स्वीकरणीय इति नो मतिः।

अस्मिन् विषये कलिकातानगर्यां विगते संस्कृतसाहित्यसम्मेलने श्रीमता-लालबहादुरशास्त्रिणा यदुक्तं तत्पुनरपि स्मरणीयम्। उक्तमासीत्तदानीं शास्त्रिमहाशयेन यत्प्रतिराज्यमेकैकं संस्कृतविश्वविद्यालयं संस्थाप्य संस्कृतविद्यायाः संरक्षणं लोकप्रियतासम्पादनं च कर्तव्यमिति। आशास्महे वयं प्रधानमन्त्रिणः सा प्रेरणा राज्यमुख्यमन्त्रिभिः सोत्साहं स्वीकरिष्यते।

मध्यप्रदेशेऽविलम्बं कश्चित् संस्कृतविश्वविद्यालयः प्रदेशशासनेन संस्थाप्य इति नो हृद्गतम्। सद्य एव प्रदेशेऽस्मिन् त्रयो विश्वविद्यालया रायपुर-इन्दौर-ग्वालियरस्थानेषु संस्थापिताः। शिक्षाप्रसारार्थं शासनस्य कर्मेदं सर्वान्तः-करणैर्वयं समर्थयामः। परं प्रदेशमुख्यमन्त्रिणो डा० द्वारकाप्रसादमिश्रमहाभागात् संस्कृतप्रसारार्थमपि प्रयत्नविशेषः काम्यतेऽस्माभिः। ते हि महाशया भारतीय-संस्कृतिं प्रति दृढं बद्धानुरागाः संस्कृतस्याभ्युदयं कामयन्ते। तेषां प्रेरणया जबलपुरे वा भोपाले वा कश्चित् संस्कृतविश्वविद्यालयः संस्थापितः स्यादिति वयं कामयामहे। विश्वसिमो वयं मिश्रनेतृकं प्रदेशशासनं संस्कृतविश्वविद्यालयं संस्थाप्य यशोभाग् भविष्यतीति।

## संवर्धनम्—

नितरां मोदकरमस्माकं श्रीमतां डा० बाबूरामसक्सेनामहाभागानां नवीने रायपुरीयरविशंकरशुक्लविश्वविद्यालये उपकुलपतिपदारोहणम्। योग्यतमस्य समादरणेन प्रदेशशासनं स्वकीयं गुणपक्षपातं प्रमाणीकृत्य प्रशस्यतां गतम्।

डा० सक्सेनामहाभागो नापेक्ष्यते परिचयः संस्कृतजगति। इलाहाबाद-विश्वविद्यालये संस्कृताध्यक्षपदं चिरमलंकुर्वन् विद्वानयं वस्तुतः संस्कृतविदुषा-मद्यतनीयानां गुरुस्थानीयः। समकालिकसंस्कृतज्ञेषु केचन तस्य प्रत्यक्षं शिष्याः, अन्ये पुनः शिष्यशिष्याः, अपरे च तज्ज्ञानानुगृहीताः शिष्यकल्पाः। ईदृशस्य संस्कृतविदुषः विश्वविद्यालयोपकुलपतिपदप्राप्तौ संस्कृतज्ञा वयं नितरां गौरविता-स्तस्य प्रतिपदं साफल्यं कामयामहे। स्वकीयवैदुष्येण चारित्रेण च डा० सक्सेना-महाभागो नवीनं विश्वविद्यालयमेनमवश्यमेव तथा संवर्धयिष्यति यथायमन्येषा-मनुकरणीयो भवेत्। श्रीमतां सक्सेनामहाभागानां चिरायुष्यं साफल्यं च वयमर्थामहे।

———

## मध्यप्रदेशे संस्कृतस्य दुःस्थितिः

मध्यप्रदेशे संस्कृतविश्वविद्यालयस्थापनार्थं प्रदेशशासनस्योद्योगोऽस्माभिः प्रार्थितः। परं प्रदेशस्यास्य माध्यमिकशिक्षाव्यवस्थायां संस्कृतस्य विलोपेन नितरामुत्कण्ठिता वयम्। कति वर्षाणि संस्कृतमस्मिन् प्रदेशे प्रायोऽवश्य-पाठ्यतां गतमिति यदास्माभिस्तस्य चिरस्थायित्वमाशास्यते स्म तदैव उच्चतर-माध्यमिककक्षासु संस्कृतस्य वैकल्पिकविषयत्वेन संनिवेशं दृष्ट्वा भृशं दुःखिता वयम्। संस्कृतस्य महत्त्वं सर्व एव जानन्ति, अधिकारिपुरुषाः स्वस्वभाषणेषु भारतीयाधुनिकभाषासु संस्कृतस्य मूलभूतत्वमधिकृत्य युक्तिविन्यासमपि कुर्वन्ति तथापि शिक्षाविधौ कथं संस्कृताय स्थानं न कल्पत इति नास्माभिर्बोद्धुं शक्यते।

प्रदेशेऽस्मिन् संस्कृतस्येदृशीं स्थितिं विलोक्य सागरविश्वविद्यालयस्य संस्कृतविभागाध्यक्षेण प्रोफेसर डा० रामजी उपाध्यायेन कियत्कालात्पूर्वं समाचार-पत्रेषु यत्पत्रं प्रेषितमासीत्तस्याविकलं संस्कृतरूपान्तरमस्माभिरत्र प्रकाश्यते। युक्ति-पूर्णेऽस्मिन् लेखे विदुषाध्यक्षेण वास्तविकी स्थितिः संस्कृतस्य प्रदर्शिता।

'प्राचीनमार्गानुयायिनः संस्कृतज्ञान् संस्कृतोपाधींश्च प्रति योऽयं हीनव्यवहारो मध्यप्रदेशे प्रवर्तते तेन नितरां पीडामनुभवामो वयम्। अतश्च नात्र कस्यापि विस्मयो युज्यते यत् केन्द्रशासनेन उत्तरप्रदेशबिहारराजस्थानदिल्लीराज्य-शासनैश्च शास्त्रि-आचार्योपाध्योः बी० ए०-एम० ए०-उपाधिभ्यां सर्वविध-नियोगार्थं समत्वे स्वीकृतेऽपि मध्यप्रदेश एव भारतराष्ट्रेऽद्वितीयं राज्यं यत्र प्राथमिकेष्वपि विद्यालयेषु शिक्षकपदनियोगेऽपि वाराणसेयसंस्कृतविश्वविद्यालयो-पाधीनां काप्यर्घता नाङ्गीकृता।

'सद्य एवास्माभिरवगतं यदितः प्रभृति संस्कृतं पाठ्यक्रमे नैवापरिहार्यं भविष्यतीति सिद्धान्तितं मध्यप्रदेशमाध्यमिकशिक्षामण्डलेन। मण्डलस्यायं नितरां कुफलप्रसूः सिद्धान्तः प्रदेशेऽस्मिन् भाषागतोत्कर्षस्य शुभायतिं नैव सूचयति। अपरिहार्यसंस्कृतेन सामान्यतः सर्वभाषाशिक्षणे साहायकमाचर्येत इत्यस्माकमभिमतम्।

'सर्वथा वयमसमर्था ज्ञातुं के ते हेतवः का वा सा स्थितिर्यद्वशात्

सुप्रशस्तोऽयं शिक्षामार्गोऽधुना परिहीयते। संस्कृतस्य पाठ्यक्रमेऽपरिहार्यसन्निवेशेन समुपजातं सुफलं विचार्य, उच्चतरमाध्यमिकशिक्षाविधौ प्रशस्तमार्गमपरित्यज्य यथापूर्वं संस्कृतस्य संस्थापनार्थं राज्यशासनं सिद्धान्तमेनं पुनर्विचारयितुं प्रार्थयामहे। अविलम्बं यथायोग्यानुपायानवलम्ब्य प्राचीनतमैषा भाषा संरक्षणीया, नो चेद् भाषेयं समुचितसमर्थनाभावे परिक्षीणा भविष्यतीति राज्यशासनं प्रति निवेदनम्।'

पत्रमेतत्संक्षिप्तमपि याथार्थ्यप्रकाशकमतोऽस्माकमत्र भाष्योपन्यासो नापेक्ष्यते। आशास्महे वयं शासनाधिकारणो भारतीयताबीजभूतस्य राष्ट्रैक्यसाधकस्य संस्कृतस्यापरिहार्यत्वमनुभूय यथोचितं विधास्यन्तीति।

**निवेदनम्**

मान्याः पाठकमहाभागाः, तृतीयवर्षे कृतपदायाः सागरिकाया अभिनन्दनं गृह्णन्तु भवन्तः। भवतां समर्थनेन संस्कृतानुरागेण च श्लाघ्यजीवनेयं त्रैमासिकी निर्बाधं सञ्चरन्ती संस्कृताभ्युदयं संसाधयितुं प्रभविष्यतीति नो मतिः। यथेयं स्वोद्देश्यपूरणे समर्था भवेत्तथा भवद्भिः सहायभूतैः कर्तव्यमिति निवेदनमस्माकम्।

तथा हि लेखकाः शोधनिबन्धादीन् संप्रेष्य, ग्राहका वार्षिकशुल्कादिकं प्रदाय, संस्कृतपत्रसम्पादका विनिमयानुग्रहं स्वीकृत्य, शिक्षालयाधिकारिणो ग्राहकत्वमङ्गीकृत्य समनुगृह्णन्तु सागरिकाम्। सर्व एवैते महाभागा एतदर्थं सविनयं सप्रश्रयं च प्रार्थ्यन्ते।

——



## सप्रमोदमङ्गीकारः

समालोचनार्थमेते निम्नलिखिता ग्रन्था अस्माभिः सम्प्राप्ताः। यथाकालमेतेषां समीक्षणं सागरिकायां भविष्यति।

१. चिन्तनाश्च तदुन्मेषाः —श्रीअरविन्दः

२. पद्यमोदतरङ्गिनी —डा० हरिदत्तपालीवालः 'निर्भयः'

३. भृङ्गसन्देशः —मां० कृष्ण नम्पूतिरिपादः

४. श्रीकृष्णपञ्चाशिका „ „

—सम्पादकः।

## अस्याङ्कस्य नवीनलेखकाः

गुण्डेराव हर्करे—हैदराबादनिवासी गृहीतावकाशः दण्डाधिकरणिकः (Session Judge)।

शंकरलाल स्वर्णकारः—सागरविश्वविद्यालये संस्कृतविभागे शोधच्छात्रः।

पं० आर० डी० लड्डू— ... ... ...

विहारीलालनागार्चः—सागरविश्वविद्यालये संस्कृतविभागे शोधच्छात्रः।

पं० भूपतिभट्टः— ... ... ...

——

